जपेन्नित्यं प्रयत्नेन ललितोपास्तितत्परः ।
प्रातः स्नात्वा विधानेन सन्ध्याकर्म समाप्य च ।। ५

पूजागृहं ततो गत्वा चक्रराजं समर्चयेत् ।
विद्यां जपेत् सहस्रं वा त्रिशतं शतमेव वा ।। ६

रहस्यनामसाहस्रमिदं पश्चात्पठेन्नरः ।
जन्ममध्ये सकृच्चापि य एतत्पठते सुधीः ।। ७

तस्य पुण्यफलं वक्ष्ये शृणु त्वं कुम्भसम्भव ।
गङ्गादिसर्वतीर्थेषु यः स्नायात्कोटिजन्मसु ।। ८

कोटिलिङ्गप्रतिष्ठां च यः कुर्यादविमुक्तके ।
कुरुक्षेत्रे तु यो दद्यात्कोटिवारं रविग्रहे ।। ९

कोटिं सौवर्णभाराणां श्रोत्रियेषु द्विजन्मसु ।
यः कोटिं हयमेधानामाहरेद् गाङ्गरोधसि ।। १०

आचरेत्कूपकोटीर्यो निर्जले मरुभूतले ।
दुर्भिक्षे यः प्रतिदिनं कोटिब्राह्मणभोजनम् ।। ११

श्रद्धया परया कुर्यात्सहस्रपरिवत्सरान् ।
तत्पुण्यं कोटिगुणितं लभेत्पुण्यमनुत्तमम् ।। १२

रहस्यनामसाहस्रे नाम्नोऽप्येकस्य कीर्तनात् ।
रहस्यनामसाहस्रे नामैकमपि यः पठेत् ।। १३

तस्य पापानि नश्यन्ति महान्त्यपि न संशयः ।
नित्यकर्माननुष्ठानान्निषिद्धकरणादपि ।। १४

यत्पापं जायते पुंसां तत्सर्वं नश्यति ध्रुवम् ।
बहुनात्र किमुक्तेन शृणु त्वं कुम्भसम्भव ।। १५

अन्यैकनाम्नो या शक्तिः पातकानां निवर्तने ।
तन्निवर्त्यमघं कर्तुं नालं लोकाश्चतुर्दश ।। १६

यस्त्यक्त्वा नामसाहस्रं पापहानिमभीप्सति।
स हि शीतनिवृत्यर्थं हिमशैलं निषेवते ।। १७

भक्तो यः कीर्तयेन्नित्यमिदं नामसहस्रकम् ।
तस्मै श्रीललितादेवी प्रीताऽभीष्टं प्रयच्छति ।। १८

अकीर्तयन्निदं स्तोत्रं कथं भक्तो भविष्यति ।
नित्यं सङ्कीर्तनाशक्तः कीर्तयेत्पुण्यवासरे ।। १९

संक्रान्तौ विषुवे चैव स्वजन्मत्रितयेऽयने ।
नवम्यां वा चतुर्दश्यां सितायां शुक्रवासरे ।। २०

कीर्तयेन्नामसाहस्रं पौर्णमास्यां विशेषतः ।
पौर्णमास्यां चन्द्रबिम्बे ध्यात्वा श्रीललिताम्बिकाम् ।। २१

पञ्चोपचारैः सम्पूज्य पठेन्नामसहस्रकम् ।
सर्वे रोगाः प्रणश्यन्ति दीर्घमायुश्च विन्दति ।। २२

अयमायुष्करो नाम प्रयोगः कल्पचोदितः ।
ज्वरार्तं शिरसि स्पृष्ट्वा पठेन्नामसहस्रकम् ।। २३

तत्क्षणात्प्रशमं याति शिरस्तोदो ज्वरोऽपि च ।
सर्वव्याधिनिवृत्त्यर्थं स्पृष्ट्वा भस्म जपेदिदम् ।। २४

तद्भस्मधारणादेव नश्यन्ति व्याधयः क्षणात् ।
जलं सम्मन्त्र्य कुम्भस्थं नामसाहस्रतो मुने ।। २५

अभिषिञ्चेद्ग्रहग्रस्तान्ग्रहा नश्यन्ति तत्क्षणात् ।
सुधासागरमध्यस्थां ध्यात्वा श्रीललिताम्बिकाम् ।। २६

यः पठेन्नामसाहस्रं विषं तस्य विनश्यति ।
वन्ध्यानां पुत्रलाभाय नामसाहस्रमन्त्रितम् ।। २७

नवनीतं प्रदद्यात्तु पुत्रलाभो भवेद्ध्रुवम् ।
देव्याः पाशेन सम्बद्धामाकृष्टामङ्कुशेन च ।। २८

ध्यात्वाऽभीष्टां स्त्रियं रात्रौ जपेन्नामसहस्रकम् ।
आयाति स्वसमीपं सा यद्यप्यन्तःपुरं गता ।। २९

राजाकर्षणकामश्चेद्राजावसथदिङ्मुखः ।
त्रिरात्रं यः पठेदेतच्छ्रीदेवीध्यानतत्परः ।। ३०

स राजा पारवश्येन तुरङ्गं वा मतङ्गजम् ।
आरुह्यायाति निकटं दासवत्प्रणिपत्य च ।। ३१

तस्मै राज्यं च कोशं च ददात्येव वशं गतः ।
रहस्यनामसाहस्रं यः कीर्तयति नित्यशः ।। ३२

तन्मुखालोकमात्रेण मुह्येल्लोकत्रयं मुने ।
यस्त्विदं नामसाहस्रं सकृत्पठति भक्तिमान् ।। ३३

तस्य ये शत्रवस्तेषां निहन्ता शरभेश्वरः ।
यो वाऽभिचारं कुरुते नामसाहस्रपाठके ।। ३४

निवर्त्य तत्क्रियां हन्यात्तं वै प्रत्यङ्गिरा स्वयम् ।
ये क्रूरदृष्ट्या वीक्षन्ते नामसाहस्रपाठकम् ।। ३५

तानन्धान्कुरुते क्षिप्रं स्वयं मार्ताण्डभैरवः ।
धनं यो हरते चोरैर्नामसाहस्रजापिनः ।। ३६

यत्र कुत्र स्थितं वापि क्षेत्रपालो निहन्ति तम् ।
विद्यासु कुरुते वादं यो विद्वान्नामजापिना ।। ३७

तस्य वाक्स्तम्भनं सद्यः करोति नकुलेश्वरी।
यो राजा कुरुते वैरं नामसाहस्रजापिना ॥ ३८

चतुरङ्गबलं तस्य दण्डिनी संहरेत्स्वयम्।
यः पठेन्नामसाहस्रं षण्मासं भक्तिसंयुतः ॥ ३९

लक्ष्मीश्चाञ्चल्यरहिता सदा तिष्ठति तद्गृहे।
मासमेकं प्रतिदिनं त्रिवारं यः पठेन्नरः ॥ ४०

भारती तस्य जिह्वाग्रे रङ्गे नृत्यति नित्यशः।
यस्त्वेकवारं पठति पक्षमात्रमतन्द्रितः ॥ ४१

मुह्यन्ति कामवशगा मृगाक्ष्यस्तस्य वीक्षणात्।
यः पठेन्नामसाहस्रं जन्ममध्ये सकृन्नरः ॥ ४२

तद्दृष्टिगोचरास्सर्वे मुच्यन्ते सर्वकिल्बिषैः।
यो वेत्ति नामसाहस्रं तस्मै देयं द्विजन्मने ॥ ४३

अन्नं वस्त्रं धनं धान्यं नान्येभ्यस्तु कदाचन।
श्रीमन्त्रराजं यो वेत्ति श्रीचक्रं यः समर्चति ॥ ४४

यः कीर्तयति नामानि तं सत्पात्रं विदुर्बुधाः।
तस्मै देयं प्रयत्नेन श्रीदेवीप्रीतिमिच्छता ॥ ४५

न कीर्तयति नामानि मन्त्रराजं न वेत्ति यः।
पशुतुल्यः स विज्ञेयस्तस्मै दत्तं निरर्थकम् ॥ ४६

परीक्ष्य विद्याविदुषस्तेभ्यो दद्याद्विचक्षणः।
श्रीमन्त्रराजसदृशो यथा मन्त्रो न विद्यते ॥ ४७

देवता ललितातुल्या यथा नास्ति घटोद्भव।
रहस्यनामसाहस्रतुल्या नास्ति तथा स्तुतिः ॥ ४८

लिखित्वा पुस्तके यस्तु नामसाहस्रमुत्तमम्।
समर्चयेत्सदा भक्त्या तस्य तुष्यति सुन्दरी ।। ४९

बहुनात्र किमुक्तेन शृणु त्वं कुम्भसम्भव ।
नानेन सदृशं स्तोत्रं सर्वतन्त्रेषु दृश्यते ।। ५०

तस्मादुपासको नित्यं कीर्तयेदिदमादरात्।
एभिर्नामसहस्रैस्तु श्रीचक्रं योऽर्चयेत्सकृत्।। ५१

पद्मैर्वा तुलसीपुष्पैः कल्हारैर्वा कदम्बकैः ।
चम्पकैर्जातिकुसुमैः मल्लिकाकरवीरकैः ।। ५२

उत्पलैर्बिल्वपत्रैर्वा कुन्दकेसरपाटलैः ।
अन्यैः सुगन्धिकुसुमैः केतकीमाधवीमुखैः ।। ५३

तस्य पुण्यफलं वक्तुं न शक्नोति महेश्वरः ।
सा वेत्ति ललितादेवी स्वचक्रार्चनजं फलम्।। ५४

अन्ये कथं विजानीयुर्ब्रह्माद्याः स्वल्पमेधसः ।
प्रतिमासं पौर्णमास्यामेभिर्नामसहस्रकैः ।। ५५

रात्रौ यश्चक्रराजस्थामर्चयेत्परदेवताम्।
स एव ललितारूपस्तद्रूपा ललिता स्वयम्।। ५६

न तयोर्विद्यते भेदो भेदकृत्पापकृद्भवेत्।
महानवम्यां यो भक्तः श्रीदेवीं चक्रमध्यगाम्।। ५७

अर्चयेन्नामसाहस्रैस्तस्य मुक्तिः करे स्थिता ।
यस्तु नामसहस्रेण शुक्रवारे समर्चयेत्।। ५८

चक्रराजे महादेवीं तस्य पुण्यफलं शृणु ।
सर्वान्कामानवाप्येह सर्वसौभाग्यसंयुतः ।। ५९

पुत्रपौत्रादिसंयुक्तो भुक्त्वा भोगान्यथेप्सितान्।
अन्ते श्रीललितादेव्याः सायुज्यमतिदुर्लभम्॥ ६०

प्रार्थनीयं शिवाद्यैश्च प्राप्नोत्येव न संशयः।
यः सहस्रं ब्राह्मणानामेभिर्नामसहस्रकैः॥ ६१

समर्च्य भोजयेद्भक्त्या पायसापूपषड्रसैः।
तस्मै प्रीणाति ललिता स्वसाम्राज्यं प्रयच्छति॥ ६२

न तस्य दुर्लभं वस्तु त्रिषु लोकेषु विद्यते।
निष्कामः कीर्तयेद्यस्तु नामसाहस्रमुत्तमम्॥ ६३

ब्रह्मज्ञानमवाप्नोति येन मुच्येत बन्धनात्।
धनार्थी धनमाप्नोति यशोऽर्थी चाप्नुयाद्यशः॥ ६४

विद्यार्थी चाप्नुयाद्विद्यां नामसाहस्रकीर्तनात्।
नानेन सदृशं स्तोत्रं भोगमोक्षप्रदं मुने॥ ६५

कीर्तनीयमिदं तस्माद्भोगमोक्षार्थिभिर्नरैः।
चतुराश्रमनिष्ठैश्च कीर्तनीयमिदं सदा॥ ६६

स्वधर्मसमनुष्ठानवैकल्यपरिपूर्तये।
कलौ पापैकबहुले धर्मानुष्ठानवर्जिते॥ ६७

नामसङ्कीर्तनं मुक्त्वा नृणां नान्यत्परायणम्।
लौकिकाद्वचनान्मुख्यं विष्णुनामानुकीर्तनम्॥ ६८

विष्णुनामसहस्राच्च शिवनामैकमुत्तमम्।
शिवनामसहस्राच्च देव्या नामैकमुत्तमम्॥ ६९

देवीनामसहस्राणि कोटिशः सन्ति कुम्भज।
तेषु मुख्यं दशविधं नामसाहस्रमुच्यते॥ ७०

रहस्यनामसाहस्रमिदं शस्तं दशास्वपि।
तस्मात्सङ्कीर्तयेन्नित्यं कलिदोषनिवृत्तये।। ७१

मुख्यं श्रीमातृनामेति न जानन्ति विमोहिताः।
विष्णुनामपराः केचिच्छिवनामपराः परे।। ७२

न कश्चिदपि लोकेषु ललितानामतत्परः।
येनान्यदेवतानाम कीर्तितं जन्मकोटिषु।। ७३

तस्यैव भवति श्रद्धा श्रीदेवीनामकीर्तने।
चरमे जन्मनि यथा श्रीविद्योपासको भवेत्।। ७४

नामसाहस्रपाठश्च तथा चरमजन्मनि।
यथैव विरला लोके श्रीविद्याराजवेदिनः।। ७५

तथैव विरलो गुह्यनामसाहस्रपाठकः।
मन्त्रराजजपश्चैव चक्रराजार्चनं तथा।। ७६

रहस्यनामपाठश्च नाल्पस्य तपसः फलम्।
अपठन्नामसाहस्रं प्रीणयेद्यो महेश्वरीम्।। ७७

स चक्षुषा विना रूपं पश्येदेव विमूढधीः।
रहस्यनामसाहस्रं त्यक्त्वा यः सिद्धिकामुकः।।७८

स भोजनं विना नूनं क्षुन्निवृत्तिमभीप्सति।
स भक्तो ललितादेव्याः स नित्यं कीर्तयेदिदम्।। ७९

नान्यथा प्रीयते देवी कल्पकोटिशतैरपि।
तस्माद्रहस्यनामानि श्रीमातुः प्रयतः पठेत्।। ८०

इति ते कथितं स्तोत्रं रहस्यं कुम्भसम्भव।
नाविद्यावेदिने ब्रूयान्नाभक्ताय कदाचन।। ८१

यथैव गोप्या श्रीविद्या तथा गोप्यमिदं मुने।
पशुतुल्येषु न ब्रूयाज्जनेषु स्तोत्रमुत्तमम्।। ८२

यो ददाति विमूढात्मा श्रीविद्यारहिताय च।
तस्मै कुप्यन्ति योगिन्यः सोऽनर्थः सुमहान्स्मृतः।। ८३

रहस्यनामसाहस्रं तस्मात्सङ्गोपयेदिदम्।
स्वतन्त्रेण मया नोक्तं तवापि कलशोद्भव।। ८४

ललिताप्रेरणेनैव मयोक्तं स्तोत्रमुत्तमम्।
तेन तुष्टा महादेवी तवाभीष्टं प्रदास्यति।। ८५

श्रीसूत उवाच—

इत्युक्त्वा श्रीहयग्रीवो ध्यात्वा श्रीललिताम्बिकाम्।
आनन्दमग्नहृदयः सद्यः पुलकितोऽभवत्।। ८६

श्री ब्रह्माण्डपुराणतः

—*—

पाशाङ्कुशेक्षुसुमराजितपञ्चशाखां
पाटल्यशालिसुषुमाञ्चित गात्रवल्लीम्।
प्राचीनवाक्स्तुतपदां परदेवतां त्वां
पञ्चायुधार्चितपदां प्रणमामि देवीम्।।

॥ श्रीः ॥

# ॥ श्रीललितासहस्रनामावलिः ॥

ओं-ऐं-ह्रीं-श्रीं ओं । श्रीमात्रे नमः । श्रीमहाराज्ञ्यै । श्रीमत्सिंहासनेश्वर्यै । चिदग्निकुण्डसंभूतायै । देवकार्यसमुद्यतायै । उद्यद्भानुसहस्राभायै । चतुर्बाहुसमन्वितायै । रागस्वरूपपाशाढ्यायै । क्रोधाकाराङ्कुशोज्ज्वलायै । मनोरूपेक्षुकोदण्डायै । पञ्चतन्मात्रसायकायै । निजारुणप्रभापूरमज्जद्ब्रह्माण्डमण्डलायै । चम्पकाशोकपुन्नागसौगन्धिकलसत्कचायै । कुरुविन्दमणिश्रेणीकनत्कोटीरमण्डितायै । अष्टमीचन्द्रविभ्राजदलिकस्थलशोभितायै । मुखचन्द्रकलङ्काभमृगनाभिविशेषकायै । वदनस्मरमाङ्गल्यगृहतोरणचिल्लिकायै । वक्त्रलक्ष्मीपरीवाहचलन्मीनाभलोचनायै । नवचम्पकपुष्पाभनासादण्डविराजितायै । ताराकान्तितिरस्कारिनासाभरणभासुरायै नमः । २०

ओं कदम्बमंजरीक्लृप्तकर्णपूरमनोहरायै नमः । ताटङ्कयुगलीभूत तपनोडुप मण्डलायै । पद्मरागशिलादर्शपरिभाविकपोलभुवे । नवविद्रुमबिंब श्रीन्यक्कारि दशन (रदन)-च्छदायै । शुद्धविद्याङ्कुराकारद्विजपङ्क्तिद्वयोज्ज्वलायै । कर्पूरवीटिकामोदसमाकर्षद्दि(र्षिदि)गन्तरायै । निजसल्लापमाधुर्यविनिर्भर्त्सितकच्छप्यै । मन्दस्मितप्रभापूरमज्जत्कामेशमानसायै । अनाकलितसादृश्यचुबुकश्रीविराजितायै । कामेशबद्धमाङ्गल्यसूत्रशोभितकन्धरायै । कनकाङ्गदकेयूरकमनीयभुजान्वितायै । रत्नग्रैवेयचिन्ताकलोलमुक्ताफलान्वितायै । कामेश्वरप्रेमरत्नमणिप्रतिपणस्तन्यै । नाभ्याल-

वालरोमालिलताफलकुचद्वय्यै । लक्ष्यरोमलताधारतास-मुन्नेयमध्यमायै । स्तनभारदलन्मध्यपट्टबन्धवलित्रयायै । अरुणारुणकौसुम्भवस्त्रभास्वत्कटीतट्यै । रत्नकिङ्किणिका-रम्यरशनादामभूषितायै । कामेशज्ञातसौभाग्यमार्दवोरु-द्वयान्वितायै । माणिक्य मकुटाकारजानुद्वय विराजितायै नमः । ४०

ओं इन्द्रगोपपरिक्षिप्तस्मरतूणाभजङ्घिकायै नमः । गूढगुल्फायै । कूर्मपृष्ठजयिष्णुप्रपदान्वितायै । नखदीधिति-सञ्छन्ननमज्जनतमोगुणायै । पदद्वयप्रभाजालपराकृतसरो-रुहायै । शिंजानमणिमञ्जीरमण्डितश्रीपदाम्बुजायै । मरा-लीमन्दगमनायै । महालावण्यशेवधये । सर्वारुणायै । अनवद्याङ्ग्यै । सर्वाभरणभूषितायै । शिवकामेश्वराङ्क-स्थायै । शिवायै । स्वाधीनवल्लभायै । सुमेरुमध्यशृङ्ग-स्थायै । श्रीमन्नगरनायिकायै । चिन्तामणिगृहान्तःस्थायै । पञ्चब्रह्मासनस्थितायै । महापद्माटवीसंस्थायै । कदम्बवन-वासिन्यै नमः । ६०

ओं सुधासागरमध्यस्थायै नमः । कामाक्ष्यै । कामदायिन्यै । देवर्षिगणसंघातस्तूयमानात्मवैभवायै । भण्डासुरवधोद्युक्तशक्तिसेनासमन्वितायै । सम्पत्करीस-मारूढसिन्धुरव्रजसेवितायै । अश्वारूढाधिष्ठिताश्वकोटि-कोटिभिरावृतायै । चक्रराजरथारूढसर्वायुधपरिष्कृतायै । गेयचक्ररथारूढमन्त्रिणीपरिसेवितायै । किरिचक्ररथारूढ-दण्डनाथापुरस्कृतायै । ज्वालामालिनिकाक्षिप्तवह्निप्राका-रमध्यगायै । भण्डसैन्यवधोद्युक्तशक्तिविक्रमहर्षितायै । नित्यापराक्रमाटोपनिरीक्षणसमुत्सुकायै । भण्डपुत्रवधो-

धुक्तबालाविक्रमनन्दितायै । मन्त्रिण्यंबाविरजित विषङ्ग-वधतोषितायै । विशुक्रप्राणहरण वाराहीवीर्यनन्दितायै । कामेश्वरमुखालोक कल्पित श्रीगणेश्वरायै । महागणेशनि-र्भिन्नविघ्नयन्त्रप्रहर्षितायै । भण्डासुरेन्द्रनिर्मुक्तशस्त्रप्रत्य-स्त्रवर्षिण्यै । कराङ्गुलिनखोत्पन्ननारायणदशाकृत्यै नमः । ८०

ओं महापाशुपतास्त्राग्निनिर्दग्धासुरसैनिकायै नमः । कामेश्वरास्त्रनिर्दग्धसभण्डासुरशून्यकायै । ब्रह्मोपेन्द्र-महेन्द्रादिदेवसंस्तुतवैभवायै । हरनेत्राग्निसंदग्धकाम-संजीवनौषध्यै । श्रीमद्वाग्भवकूटैकस्वरूपमुखपङ्कजायै । कण्ठाधः कटिपर्यन्तमध्यकूटस्वरूपिण्यै । शक्तिकूटैक-तापन्नकट्यधोभागधारिण्यै । मूलमन्त्रात्मिकायै । मूलकूटत्रयकलेबरायै । कुलामृतैकरसिकायै । कुलसंकेत-पालिन्यै । कुलाङ्गनायै । कुलान्तःस्थायै । कौलिन्यै । कुलयोगिन्यै । अकुलायै । समयान्तःस्थायै । समयाचार-तत्परायै । मूलाधारैकनिलयायै । ब्रह्मग्रन्थिविभेदिन्यै नमः । १००

ओं मणिपूरान्तरुदितायै नमः । विष्णुग्रन्थिविभेदिन्यै । आज्ञाचक्रान्तरालस्थायै । रुद्रग्रन्थिविभेदिन्यै । सहस्रारांबु-जारूढायै । सुधासाराभिवर्षिण्यै । तटिल्लतासमरुच्यै । षट्-चक्रोपरिसंस्थितायै । महासक्त्यै । कुण्डलिन्यै । बिसतन्तु-तनीयस्यै । भवान्यै । भावनागम्यायै । भवारण्यकुठारि-कायै । भद्रप्रियायै । भद्रमूर्तये । भक्तसौभाग्यदायिन्यै । भक्तिप्रियायै । भक्तिगम्यायै । भक्तिवश्यायै नमः । १२०

ओं भयापहायै नमः । शाम्भव्यै । शारदाराध्यायै । शर्वाण्यै । शर्मदायिन्यै । शाङ्कर्यै । श्रीकर्यै । साध्व्यै । शरच्चन्द्रनिभाननायै । शातोदर्यै । शान्तिमत्यै । निराधारायै । निरञ्जनायै । निर्लेपायै । निर्मलायै । नित्यायै । निराकारायै । निराकुलायै । निर्गुणायै । निष्कलायै नमः । १४०

ओं शान्तायै नमः । निष्कामायै । निरुपप्लवायै । नित्यमुक्तायै । निर्विकारायै । निष्प्रपञ्चायै । निराश्रयायै । नित्यशुद्धायै । नित्यबुद्धायै । निरवद्यायै । निरन्तरायै । निष्कारणायै । निष्कलङ्कायै । निरुपाधये । निरीश्वरायै । नीरागायै । रागमथन्यै । निर्मदायै । मदनाशिन्यै । निश्चिन्तायै नमः । १६०

ओं निरहङ्कारायै नमः । निर्मोहायै । मोहनाशिन्यै । निर्ममायै । ममताहन्त्र्यै । निष्पापायै । पापनाशिन्यै । निष्क्रोधायै । क्रोधशमन्यै । निर्लोभायै । लोभनाशिन्यै । निःसंशयायै । संशयघ्न्यै । निर्भवायै । भवनाशिन्यै । निर्विकल्पायै । निराबाधायै । निर्भेदायै । भेदनाशिन्यै । निर्नाशायै नमः । १८०

ओं मृत्युमथन्यै नमः । निष्क्रियायै । निष्परिग्रहायै । निस्तुलायै । नीलचिकुरायै । निरपायायै । निरत्ययायै । दुर्लभायै । दुर्गमायै । दुर्गायै । दुःखहन्त्र्यै । सुखप्रदायै । दुष्टदूरायै । दुराचारशमन्यै । दोषवर्जितायै । सर्वज्ञायै । सान्द्रकरुणायै । समानाधिकवर्जितायै । सर्वशक्तिमय्यै । सर्वमङ्गलायै नमः । २००

ओं सद्गतिप्रदायै नमः । सर्वेश्वर्यै । सर्वमय्यै । सर्वमन्त्रस्वरूपिण्यै । सर्वयन्त्रात्मिकायै । सर्वतन्त्ररूपायै । मनोन्मन्यै । माहेश्वर्यै । महादेव्यै । महालक्ष्म्यै । मृडप्रियायै । महारूपायै । महापूज्यायै । महापातकनाशिन्यै । महामायायै । महासत्त्वायै । महाशक्त्यै । महारत्यै । महाभोगायै । महैश्वर्यायै नमः । २२०

ओं महावीर्यायै नमः । महाबलायै । महाबुद्ध्यै । महासिद्ध्यै । महायोगेश्वरेश्वर्यै । महातन्त्रायै । महामन्त्रायै । महायन्त्रायै । महासनायै । महायागक्रमाराध्यायै । महाभैरवपूजितायै । महेश्वरमहाकल्पमहाताण्डवसाक्षिण्यै । महाकामेशमहिष्यै । महात्रिपुरसुन्दर्यै । चतुःषष्ट्युपचाराढ्यायै । चतुःषष्टिकलामय्यै । महाचतुःषष्टिकोटियोगिनीगणसेवितायै । मनुविद्यायै । चन्द्रविद्यायै । चन्द्रमण्डलमध्यगायै नमः । २४०

ओं चारुरूपायै नमः । चारुहासायै । चारुचन्द्रकलाधरायै । चराचरजगन्नाथायै । चक्रराजनिकेतनायै । पार्वत्यै । पद्मनयनायै । पद्मरागसमप्रभायै । पञ्चप्रेतासनासीनायै । पञ्चब्रह्मस्वरूपिण्यै । चिन्मय्यै । परमानन्दायै । विज्ञानघनरूपिण्यै । ध्यानध्यातृध्येयरूपायै । धर्माधर्मविवर्जितायै । विश्वरूपायै । जागरिण्यै । स्वपन्त्यै । तैजसात्मिकायै । सुप्तायै नमः । २६०

ओं प्राज्ञात्मिकायै नमः । तुर्यायै । सर्वावस्थाविवर्जितायै । सृष्टिकर्त्र्यै । ब्रह्मरूपायै । गोप्त्र्यै । गोविन्दरूपिण्यै । संहारिण्यै । रुद्ररूपायै । तिरोधानकर्यै । ईश्वर्यै । सदाशिवायै । अनुग्रहदायै । पञ्चकृत्यपरायणायै ।

भानुमण्डलमध्यस्थायै। भैरव्यै। भगमालिन्यै। पद्मासनायै। भगवत्यै। पद्मनाभसहोदर्यै नमः। २८०

ओं उन्मेषनिमिषोत्पन्नविपन्नभुवनावल्यै नमः। सहस्रशीर्षवदनायै। सहस्राक्ष्यै। सहस्रपदे। आब्रह्मकीटजनन्यै। वर्णाश्रमविधायिन्यै। निजाज्ञारूपनिगमायै। पुण्यापुण्यफलप्रदायै। श्रुति-सीमन्तसिन्दूरीकृतपादाब्जधूलिकायै। सकलागम-संदोहशुक्तिसंपुटमौक्तिकायै। पुरुषार्थप्रदायै। पूर्णायै। भोगिन्यै। भुवनेश्वर्यै। अम्बिकायै। अनादिनिधनायै। हरिब्रह्मेन्द्रसेवितायै। नारायण्यै। नादरूपायै। नामरूप-विवर्जितायै नमः। ३००

ओं ह्रींकार्यै नमः। ह्रीमत्यै। हृद्यायै। हेयोपादेयवर्जितायै। राजराजार्चितायै। राज्ञ्यै। रम्यायै। राजीवलोचनायै। रञ्जन्यै। रमण्यै। रस्यायै। रणत्किङ्किणिमेखलायै। रमायै। राकेन्दुवदनायै। रतिरूपायै। रतिप्रियायै। रक्षाकर्यै। राक्षसघ्न्यै। रामायै रमणलम्पटायै नमः। ३२०

ओं काम्यायै नमः। कामकलारूपायै। कदम्बकुसुमप्रियायै। कल्याण्यै। जगतीकन्दायै। करुणारससागरायै। कलावत्यै। कलालापायै। कान्तायै। कादम्बरीप्रियायै। वरदायै। वामनयनायै। वारुणीमद-विह्वलायै। विश्वाधिकायै। वेदवेद्यायै। विन्ध्याचल-निवासिन्यै। विधात्र्यै। वेदजनन्यै। विष्णुमायायै। विलासिन्यै नमः। ३४०

ओं क्षेत्रस्वरूपायै नमः । क्षेत्रेश्यै । क्षेत्रक्षेत्रज्ञपालिन्यै । क्षयवृद्धिविनिर्मुक्तायै । क्षेत्रपालसमर्चितायै । विजयायै । विमलायै । वन्द्यायै । वन्दारुजनवत्सलायै । वाग्वादिन्यै । वामकेश्यै । वह्निमण्डलवासिन्यै । भक्तिमत्कल्पलतिकायै । पशुपाशविमोचन्यै । संहृताशेषपाषण्डायै । सदाचारप्रवर्तिकायै । तापत्रयाग्निसन्तप्तसमाह्लादनचन्द्रिकायै । तरुण्यै । तापसाराध्यायै । तनुमध्यायै नमः। ३६०

ओं तमोपहायै नमः । चित्यै । तत्पदलक्ष्यार्थायै । चिदेकरसरूपिण्यै । स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसन्तत्यै । परायै । प्रत्यक्चितीरूपायै । पश्यन्त्यै । परदेवतायै । मध्यमायै । वैखरीरूपायै । भक्तमानसहंसिकायै । कामेश्वरप्राणनाड्यै । कृतज्ञायै । कामपूजितायै । शृङ्गाररससम्पूर्णायै । जयायै । जालन्धरस्थितायै । ओड्याणपीठनिलयायै । बिन्दुमण्डलवासिन्यै नमः । ३८०

ओं रहोयागक्रमाराध्यायै नमः । रहस्तर्पणतर्पितायै । सद्यःप्रसादिन्यै । विश्वसाक्षिण्यै । साक्षिवर्जितायै । षडङ्गदेवतायुक्तायै । षाड्गुण्यपरिपूरितायै । नित्यक्लिन्नायै । निरुपमायै । निर्वाणसुखदायिन्यै । नित्याषोडशिकारूपायै । श्रीकण्ठार्धशरीरिण्यै । प्रभावत्यै । प्रभारूपायै। प्रसिद्धायै । परमेश्वर्यै । मूलप्रकृत्यै । अव्यक्तायै । व्यक्ताव्यक्तस्वरूपिण्यै । व्यापिन्यै नमः । ४००

ओं विविधाकारायै नमः। विद्याविद्यास्वरूपिण्यै । महाकामेशनयनकुमुदाह्लादकौमुद्यै । भक्तहार्दतमोभेद-भानुमद्भानुसन्तत्यै। शिवदूत्यै। शिवाराध्यायै। शिवमूर्त्यै। शिवंकर्यै । शिवप्रियायै । शिवपरायै । शिष्टेष्टायै । शिष्टपूजितायै । अप्रमेयायै । स्वप्रकाशायै । मनोवाचामगोचरायै । चिच्छक्त्यै । चेतनारूपायै । जडशक्त्यै। जडात्मिकायै। गायत्र्यै नमः। ४२०

ओं व्याहृत्यै नमः। संध्यायै। द्विजबृन्दनिषेवितायै। तत्त्वासनायै। तस्मै। तुभ्यं। अय्यै। पञ्चकोशान्तरस्थितायै। निःसीममहिम्ने । नित्ययौवनायै । मदशालिन्यै । मदघूर्णितरक्ताक्ष्यै । मदपाटलगण्डभुवे । चन्दनद्रव-दिग्धाङ्ग्यै । चाम्पेयकुसुमप्रियायै । कुशलायै । कोमलाकारायै। कुरुकुल्लायै। कुलेश्वर्यै। कुलकुण्डालयायै नमः। ४४०

ओं कौलमार्गतत्परसेवितायै नमः । कुमार-गणनाथाम्बायै। तुष्ट्यै। पुष्ट्यै। मत्यै। धृत्यै। शान्त्यै। स्वस्तिमत्यै। कान्त्यै। नन्दिन्यै। विघ्ननाशिन्यै। तेजोवत्यै। त्रिनयनायै। लोलाक्षीकामरूपिण्यै। मालिन्यै। हंसिन्यै। मात्रे। मलयाचलवासिन्यै। सुमुख्यै। नलिन्यै नमः। ४६०

ओं सुभ्रुवे नमः । शोभनायै । सुरनायिकायै । कालकण्ठ्यै । कान्तिमत्यै । क्षोभिण्यै । सूक्ष्मरूपिण्यै । वज्रेश्वर्यै। वामदेव्यै। वयोऽवस्थाविवर्जितायै। सिद्धेश्वर्यै। सिद्धविद्यायै । सिद्धमात्रे । यशस्विन्यै । विशुद्धिचक्र-निलयायै। आरक्तवर्णायै । त्रिलोचनायै । खट्वाङ्गादि-

प्रहरणायै । वदनैकसमन्वितायै । पायसान्नप्रियायै नमः । ४८०

ओं त्वक्स्थायै नमः । पशुलोकभयङ्कर्यै । अमृतादि-महाशक्तिसंवृतायै । डाकिनीश्वर्यै । अनाहताब्जनिलयायै । श्यामाभायै । वदनद्वयायै । दंष्ट्रोज्ज्वलायै । अक्षमालादि-धरायै । रुधिरसंस्थितायै । कालरात्र्यादिशक्त्योघवृतायै । स्निग्धौदनप्रियायै । महावीरेन्द्रवरदायै । राकिण्यम्बा-स्वरूपिण्यै । मणिपूराब्जनिलयायै । वदनत्रयसंयुतायै । वज्रादिकायुधोपेतायै । डामर्यादिभिरावृतायै । रक्तवर्णायै । मांसनिष्ठायै नमः । ५००

ओं गुडान्नप्रीतमानसायै नमः । समस्तभक्तसुखदायै । लाकिन्यम्बास्वरूपिण्यै । स्वाधिष्ठानाम्बुजगतायै । चतुर्वक्त्रमनोहरायै । शूलाद्यायुधसम्पन्नायै । पीतवर्णायै । अतिगर्वितायै । मेदोनिष्ठायै । मधुप्रीतायै । बन्धिन्यादि-समन्वितायै । दध्यन्नासक्तहृदयायै । काकिनीरूपधारिण्यै । मूलाधाराम्बुजारूढायै । पञ्चवक्त्रायै । अस्थिसंस्थितायै । अङ्कुशादिप्रहरणायै । वरदादिनिषेवितायै । मुद्गौदना-सक्तचित्तायै । साकिन्यम्बास्वरूपिण्यै नमः । ५२०

ओं आज्ञाचक्राब्जनिलयायै नमः । शुक्लवर्णायै । षडाननायै । मज्जासंस्थायै । हंसवतीमुख्यशक्तिस-मन्वितायै । हरिद्रान्नैकरसिकायै । हाकिनीरूपधारिण्यै । सहस्रदलपद्मस्थायै । सर्ववर्णोपशोभितायै । सर्वायुधधरायै । शुक्लसंस्थितायै । सर्वतोमुख्यै । सर्वौदनप्रीतचित्तायै । याकिन्यम्बास्वरूपिण्यै । स्वाहा । स्वधा । अमत्यै । मेधायै । श्रुत्यै । स्मृत्यै नमः । ५४०

ओं अनुत्तमायै नमः । पुण्यकीर्त्यै । पुण्यलभ्यायै । पुण्यश्रवणकीर्तनायै । पुलोमजार्चितायै । बन्धमोचन्यै । बर्बरालकायै । विमर्शरूपिण्यै । विद्यायै । वियदादिजगत्प्रसवे । सर्वव्याधिप्रशमन्यै । सर्वमृत्युनिवारिण्यै । अग्रगण्यायै । अचिन्त्यरूपायै । कलिकल्मषनाशिन्यै । कात्यायन्यै । कालहन्त्र्यै । कमलाक्षनिषेवितायै । ताम्बूलपूरितमुख्यै । दाडिमीकुसुमप्रभायै नमः । ५६०

ओं मृगाक्ष्यै नमः । मोहिन्यै । मुख्यायै । मृडान्यै । मित्ररूपिण्यै । नित्यतृप्तायै । भक्तनिधये । नियन्त्र्यै । निखिलेश्वर्यै । मैत्र्यादिवासनालभ्यायै । महाप्रलयसाक्षिण्यै । परायै शक्त्यै । परायै निष्ठायै । प्रज्ञानघनरूपिण्यै । माध्वीपानालसायै । मत्तायै । मातृकावर्णरूपिण्यै । महाकैलासनिलयायै । मृणालमृदुदोर्लतायै । महनीयायै नमः । ५८०

ओं दयामूर्त्यै नमः । महासाम्राज्यशालिन्यै । आत्मविद्यायै । महाविद्यायै । श्रीविद्यायै । कामसेवितायै । श्रीषोडशाक्षरीविद्यायै । त्रिकूटायै । कामकोटिकायै । कटाक्षकिङ्करीभूतकमलाकोटिसेवितायै । शिरःस्थितायै । चन्द्रनिभायै । भालस्थायै । इन्द्रधनुःप्रभायै । हृदयस्थायै । रविप्रख्यायै । त्रिकोणान्तरदीपिकायै । दाक्षायण्यै । दैत्यहन्त्र्यै । दक्षयज्ञविनाशिन्यै नमः । ६००

ओं दरान्दोलितदीर्घाक्ष्यै नमः । दरहासोज्ज्वलन्मुख्यै । गुरुमूर्त्यै । गुणनिधये । गोमात्रे । गुहजन्मभुवे । देवेश्यै । दण्डनीतिस्थायै । दहराकाशरूपिण्यै । प्रतिपन्मुख्यरा-

कान्ततिथिमण्डलपूजितायै। कलात्मिकायै। कलानाथायै। काव्यालापविनोदिन्यै । सचामररमावाणीसव्यदक्षिण-सेवितायै । आदिशक्त्यै । अमेयायै । आत्मने । परमायै । पावनाकृतये। अनेककोटिब्रह्माण्डजनन्यै नमः। ६२०

ओं दिव्यविग्रहायै नमः । क्लींकार्यै । केवलायै । गुह्यायै । कैवल्यपददायिन्यै । त्रिपुरायै । त्रिजगद्वन्द्यायै । त्रिमूर्त्यै । त्रिदशेश्वर्यै । त्र्यक्षर्यै । दिव्यगन्धाढ्यायै । सिन्दूरतिलकाञ्चितायै । उमायै । शैलेन्द्रतनयायै । गौर्यै । गन्धर्वसेवितायै । विश्वगर्भायै । स्वर्णगर्भायै । अवरदायै । वागधीश्वर्यै नमः। ६४०

ओं ध्यानगम्यायै नमः। अपरिच्छेद्यायै। ज्ञानदायै। ज्ञानविग्रहायै । सर्ववेदान्तसंवेद्यायै । सत्यानन्दस्व-रूपिण्यै। लोपामुद्रार्चितायै। लीलाक्लृप्तब्रह्माण्डमण्डलायै। अदृश्यायै । दृश्यरहितायै । विज्ञात्र्यै । वेद्यवर्जितायै । योगिन्यै। योगदायै। योग्यायै। योगानन्दायै। युगन्धरायै। इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिस्वरूपिण्यै । सर्वा-धारायै। सुप्रतिष्ठायै नमः। ६६०

ओं सदसद्रूपधारिण्यै नमः। अष्टमूर्त्यै। अजाजेत्र्यै। लोकयात्राविधायिन्यै। एकाकिन्यै। भूमरूपायै। निर्द्वैतायै। द्वैतवर्जितायै । अन्नदायै । वसुदायै । वृद्धायै । ब्रह्मात्मैक्यस्वरूपिण्यै । बृहत्यै । ब्राह्मण्यै । ब्राह्म्यै । ब्रह्मानन्दायै । बलिप्रियायै । भाषारूपायै । बृहत्सेनायै । भावाभावविवर्जितायै नमः। ६८०

ओं सुखाराध्यायै नमः । शुभकर्यै । शोभनायै सुलभायै गत्यै । राजराजेश्वर्यै । राज्यदायिन्यै । राज्यवल्लभायै । राजत्कृपायै । राजपीठनिवेशितनिजाश्रितायै । राज्य-लक्ष्म्यै । कोशनाथायै । चतुरङ्गबलेश्वर्यै । साम्राज्यदायिन्यै । सत्यसन्धायै । सागरमेखलायै । दीक्षितायै । दैत्यशमन्यै । सर्वलोकवशंकर्यै । सर्वार्थदात्र्यै । सावित्र्यै । सच्चिदानन्दरूपिण्यै नमः । ७००

ओं देशकालापरिच्छिन्नायै नमः । सर्वगायै । सर्वमोहिन्यै । सरस्वत्यै । शास्त्रमय्यै । गुहाम्बायै । गुह्यरूपिण्यै । सर्वोपाधिविनिर्मुक्तायै । सदाशिवपति-व्रतायै । सम्प्रदायेश्वर्यै । साधुने । यै । गुरुमण्डलरूपिण्यै । कुलोत्तीर्णायै । भगाराध्यायै । मायायै । मधुमत्यै । मह्यै । गणाम्बायै । गुह्यकाराध्यायै नमः । ७२०

ओं कोमलाङ्ग्यै नमः । गुरुप्रियायै । स्वतन्त्रायै । सर्वतन्त्रेश्यै । दक्षिणामूर्तिरूपिण्यै । सनकादिसमा-राध्यायै । शिवज्ञानप्रदायिन्यै । चित्कलायै । आनन्द-कलिकायै । प्रेमरूपायै । प्रियङ्कर्यै । नामपारायणप्रीतायै । नन्दिविद्यायै । नटेश्वर्यै । मिथ्याजगदधिष्ठानायै । मुक्तिदायै । मुक्तिरूपिण्यै । लास्यप्रियायै । लयकर्यै । लज्जायै नमः । ७४०

ओं रम्भादिवन्दितायै नमः । भवदावसुधावृष्ट्यै । पापारण्यदवानलायै । दौर्भाग्यतूलवातूलायै । जराध्वान्तर-विप्रभायै । भाग्याब्धिचन्द्रिकायै । भक्तचित्तकेकिघ-नाघनायै । रोगपर्वतदम्भोलये । मृत्युदारुकुठारिकायै ।

महेश्वर्यै । महाकाल्यै । महाग्रासायै । महाशनायै । अपर्णायै । चण्डिकायै । चण्डमुण्डासुरनिषूदिन्यै । क्षराक्षरात्मिकायै । सर्वलोकेश्यै । विश्वधारिण्यै । त्रिवर्गदात्र्यै नमः । ७६०

ओं सुभगायै नमः । त्र्यम्बकायै । त्रिगुणात्मिकायै । स्वर्गापवर्गदायै । शुद्धायै । जपापुष्पनिभाकृतये । ओजोवत्यै । द्युतिधरायै । यज्ञरूपायै । प्रियव्रतायै । दुराराध्यायै । दुराधर्षायै । पाटलीकुसुमप्रियायै । महत्यै । मेरुनिलयायै । मन्दारकुसुमप्रियायै । वीराराध्यायै । विराड्रूपायै । विरजायै । विश्वतोमुख्यै नमः । ७८०

ओं प्रत्यग्रूपायै नमः । पराकाशायै । प्राणदायै । प्राणरूपिण्यै । मार्तण्डभैरवाराध्यायै । मन्त्रिणीन्यस्तराज्यधुरे । त्रिपुरेश्यै । जयत्सेनायै । निस्त्रैगुण्यायै । परापरायै । सत्यज्ञानानन्दरूपायै । सामरस्यपरायणायै । कपर्दिन्यै । कलामालायै । कामदुघे । कामरूपिण्यै । कलानिधये । काव्यकलायै । रसज्ञायै । रसशेवधये नमः । ८००

ओं पुष्टायै नमः । पुरातनायै । पूज्यायै । पुष्करायै । पुष्करेक्षणायै । परस्मै ज्योतिषे । परस्मै धाम्ने । परमाणवे । परात्परायै । पाशहस्तायै । पाशहन्त्र्यै । परमन्त्रविभेदिन्यै । मूर्तायै । अमूर्तायै । अनित्यतृप्तायै । मुनिमानसहंसिकायै । सत्यव्रतायै । सत्यरूपायै । सर्वान्तर्यामिण्यै । सत्यै नमः । ८२०

ओं ब्रह्माण्यै नमः । ब्रह्मणे । जनन्यै । बहुरूपायै । बुधार्चितायै । प्रसवित्र्यै । प्रचण्डायै । आज्ञायै । प्रतिष्ठायै ।

प्रकटाकृतये। प्राणेश्वर्यै। प्राणदात्र्यै। पञ्चाशत्पीठरूपिण्यै। विशृङ्खलायै । विविक्तस्थायै । वीरमात्रे । वियत्प्रसुवे । मुकुन्दायै। मुक्तिनिलयायै। मूलविग्रहरूपिण्यै नमः। ८४०

ओं भावज्ञायै नमः। भवरोगघ्न्यै। भवचक्रप्रवर्तिन्यै। छन्दःसारायै । शास्त्रसारायै । मन्त्रसारायै । तलोदर्यै । उदारकीर्तये। उद्दामवैभवायै। वर्णरूपिण्यै। जन्ममृत्युजरा-तप्तजनविश्रान्तिदायिन्यै। सर्वोपनिषदुद्घुष्टायै। शान्त्यतीतकलात्मिकायै। गम्भीरायै। गगनान्तःस्थायै। गर्वितायै। गानलोलुपायै । कल्पनारहितायै । काष्ठायै । अकान्तायै नमः। ८६०

ओं कान्तार्धविग्रहायै नमः । कार्यकारणनिर्मुक्तायै । कामकेलितरङ्गितायै । कनत्कनकताटङ्कायै । लीला-विग्रहधारिण्यै। अजायै। क्षयविनिर्मुक्तायै। मुग्धायै। क्षिप्र-प्रसादिन्यै । अन्तर्मुखसमाराध्यायै । बहिर्मुखसुदुर्लभायै । त्रय्यै । त्रिवर्गनिलयायै । त्रिस्थायै । त्रिपुरमालिन्यै । निरामयायै । निरालम्बायै । स्वात्मारामायै । सुधासृत्यै । संसारपङ्कनिर्मग्न समुद्धरणपण्डितायै नमः। ८८०

ओं यज्ञप्रियायै नमः । यज्ञकर्त्र्यै । यजमान-स्वरूपिण्यै। धर्माधारायै । धनाध्यक्षायै । धनधान्य-विवर्धिन्यै। विप्रप्रियायै। विप्ररूपायै। विश्वभ्रमणकारिण्यै। विश्वग्रासायै । विद्रुमाभायै । वैष्णव्यै । विष्णुरूपिण्यै । अयोनये । योनिनिलयायै । कूटस्थायै । कुलरूपिण्यै । वीरगोष्ठीप्रियायै। वीरायै। नैष्कर्म्यायै नमः। ९००

नादरूपिण्यै नमः । विज्ञानकलनायै । कल्यायै । विदग्धायै । बैन्दवासनायै । तत्त्वाधिकायै । तत्त्वमय्यै । तत्त्वमर्थस्वरूपिण्यै । सामगानप्रियायै । सोम्यायै । सदाशिवकुटुम्बिन्यै । सव्यापसव्यमार्गस्थायै । सर्वापद्विनिवारिण्यै । स्वस्थायै । स्वभावमधुरायै । धीरायै । धीरसमर्चितायै । चैतन्यार्घ्यसमाराध्यायै । चैतन्यकुसुमप्रियायै । सदोदितायै नमः ।९२०

ओं सदातुष्टायै नमः । तरुणादित्यपाटलायै । दक्षिणादक्षिणाराध्यायै । दरस्मेरमुखाम्बुजायै । कौलिनीकेवलायै । अनर्घ्यकैवल्यपददायिन्यै । स्तोत्रप्रियायै । स्तुतिमत्यै । श्रुतिसंस्तुतवैभवायै । मनस्विन्यै । मानवत्यै । महेश्यै । मङ्गलाकृत्यै । विश्वमात्रे । जगद्धात्र्यै । विशालाक्ष्यै । विरागिण्यै । प्रगल्भायै । परमोदारायै । परामोदायै नमः । ९४०

ओं मनोमय्यै नमः। व्योमकेश्यै । विमानस्थायै । वज्रिण्यै । वामकेश्वर्यै । पञ्चयज्ञप्रियायै । पञ्चप्रेतमञ्चाधिशायिन्यै । पञ्चम्यै । पञ्चभूतेश्यै । पञ्चसङ्ख्योपचारिण्यै । शाश्वत्यै । शाश्वतैश्वर्यायै । शर्मदायै । शंभुमोहिन्यै । धरायै । धरसुतायै । धन्यायै । धर्मिण्यै । धर्मवर्धिन्यै । लोकातीतायै नमः । ९६०

ओं गुणातीतायै नमः । सर्वातीतायै । शमात्मिकायै । बन्धूककुसुमप्रख्यायै । बालायै । लीलाविनोदिन्यै । सुमङ्गल्यै । सुखकर्यै । सुवेषाढ्यायै । सुवासिन्यै । सुवासिन्यर्चनप्रीतायै । आशोभनायै । शुद्धमानसायै । बिन्दुतर्पण-

सन्तुष्टायै । पूर्वजायै । त्रिपुराम्बिकायै । दशमुद्रासमाराध्यायै । त्रिपुराश्रीवशंकर्यै । ज्ञानमुद्रायै । ज्ञानगम्यायै नमः ।९८०

ओं ज्ञानज्ञेयस्वरूपिण्यै नमः । योनिमुद्रायै । त्रिखण्डेश्यै । त्रिगुणायै । अम्बायै । त्रिकोणगायै । अनघायै । अद्भुतचारित्रायै । वाञ्छितार्थप्रदायिन्यै । अभ्यासातिशयज्ञातायै । षडध्वातीतरूपिण्यै । अव्याजकरुणामूर्तये । अज्ञानध्वान्तदीपिकायै । आबालगोपविदितायै । सर्वानुल्लङ्घ्यशासनायै । श्रीचक्रराजनिलयायै । श्रीमत्त्रिपुरसुन्दर्यै । श्रीशिवायै । शिवशक्त्यैक्यरूपिण्यै । ललिताम्बिकायै नमः । १०००

*इति श्री ललितासहस्रनामावलिः सम्पूर्णा ॥*

* * *

॥ श्रीरस्तु ॥

# श्रीललिताष्टोत्तरशतनामावलिः

ओं-ऐं-ह्रीं-श्रीं।

ओं इक्षुकोदण्डपुष्पेषुपाशाङ्कुशलसत्कराम्।
उद्यत्सूर्यनिभां वन्दे महात्रिपुरसुन्दरीम्॥

ओं-ऐं-ह्रीं-श्रीं।

रजताचलशृंगाग्रमध्यस्थायै नमो नमः ।
हिमाचलमहावंशपावनायै नमो नमः ।
शङ्करार्धाङ्गसौन्दर्यशरीरायै नमो नमः ।
लसन्मरकतस्वच्छविग्रहायै नमो नमः ।

महातिशयसौन्दर्यलावण्यायै नमो नमः।
शशाङ्कशेखरप्राणवल्लभायै नमो नमः।
सदापञ्चदशात्मैक्यस्वरूपायै नमो नमः।
वज्रमाणिक्यकटककिरीटायै नमो नमः।
पारिजातगुणाधिक्यपदाब्जायै नमो नमः।
सुपद्मरागसङ्काशचरणायै नमो नमः। १०
कामकोटिमहापद्मपीठस्थायै नमो नमः।
श्रीकण्ठनेत्रकुमुदचन्द्रिकायै नमो नमः।
सचामररमावाणीवीजितायै नमो नमः।
भक्तरक्षणदाक्षिण्यकटाक्षायै नमो नमः।
भूतेशालिङ्गनोद्भूतपुलकाङ्ग्यै नमो नमः।
अनङ्गजनकापाङ्गवीक्षणायै नमो नमः।
ब्रह्मोपेन्द्रशिरोरत्नरञ्जितायै नमो नमः।
शचीमुख्यामरवधूसेवितायै नमो नमः।
लीलाकल्पितब्रह्माण्डमण्डलायै नमो नमः।
अमृतादिमहाशक्तिसंवृतायै नमो नमः। २०
एकातपत्रसाम्राज्यदायिकायै नमो नमः।
सनकादिसमाराध्यपादुकायै नमो नमः।
देवर्षिभिस्स्तूयमानवैभवायै नमो नमः।
कलशोद्भवदुर्वासःपूजितायै नमो नमः।
मत्तेभवक्त्रषड्वक्त्रवत्सलायै नमो नमः।
चक्रराजमहायन्त्रमध्यवर्त्यै नमो नमः।
कस्तूरीतिलकोल्लासिनिटिलायै नमो नमः।
भस्मरेखाङ्कितलसन्मस्तकायै नमो नमः।
विकचाम्भोरुहदळलोचनायै नमो नमः।
शरच्चाम्पेयपुष्पाभनासिकायै नमो नमः। ३०

लसत्काञ्चनताटङ्कयुगलायै नमो नमः ।
मणिदर्पणसङ्काशकपोलायै नमो नमः ।
ताम्बूलपूरितस्मेरवदनायै नमो नमः ।
सुपक्वदाडिमीबीजरदनायै नमो नमः ।
कम्बुपूगसमच्छायकन्धरायै नमो नमः ।
स्थूलमुक्ताफलोदारसुहारायै नमो नमः ।
गिरीशबद्धमाङ्गल्यमङ्गलायै नमो नमः ।
पद्मपाशाङ्कुशलसत्कराब्जायै नमो नमः ।
पद्मकैरवमन्दारसुमालिन्यै नमो नमः ।
सुवर्णकुम्भयुग्माभसुकुचायै नमो नमः । ४०
रमणीयचतुर्बाहुसंयुक्तायै नमो नमः ।
कनकाङ्गदकेयूरभूषितायै नमो नमः ।
बृहत्सौवर्णसौन्दर्यवसनायै नमो नमः ।
बृहन्नितम्बविलसज्जघनायै नमो नमः ।
सौभाग्यजातशृङ्गारमध्यमायै नमो नमः ।
दिव्यभूषणसन्दोहरञ्जितायै नमो नमः ।
चिदग्निकुण्डसम्भूतसुदेहायै नमो नमः ।
शशाङ्कखण्डसम्भूतसुदेहायै नमो नमः ।
मत्तहंसवधूमन्दगमनायै नमो नमः ।
वन्दारुजनसन्दोहवन्दितायै नमो नमः । ५०
अन्तर्मुखजनानन्दफलदायै नमो नमः ।
पतिव्रताङ्गनाभीष्टफलदायै नमो नमः ।
अव्याजकरुणापूरपूरितायै नमो नमः ।
नितान्तसच्चिदानन्दसंयुक्तायै नमो नमः ।
सहस्रसूर्यसंयुक्तप्रकाशायै नमो नमः ।
रत्नचिन्तामणिगृहमध्यस्थायै नमो नमः ।

हानिवृद्धिगुणाधिक्यरहितायै नमो नमः ।
महापद्माटवीमध्यनिवासायै नमो नमः ।
जाग्रत्स्वप्नसुषुप्तीनां साक्षिभूत्यै नमो नमः ।
महापापौघपापानां विनाशिन्यै नमो नमः । ६०
दुष्टभीतिमहाभीतिभञ्जनायै नमो नमः ।
समस्तदेवदनुजप्रेरकायै नमो नमः ।
समस्तहृदयाम्भोजनिलयायै नमो नमः ।
अनाहतमहापद्ममन्दिरायै नमो नमः ।
सहस्रारसरोजातवासितायै नमो नमः ।
पुनरावृत्तिरहितपुरस्थायै नमो नमः ।
वाणीगायत्रीसावित्रीसन्नुतायै नमो नमः ।
रमाभूमिसुताराध्यपदाब्जायै नमो नमः ।
लोपामुद्रार्चितश्रीमच्चरणायै नमो नमः ।
सहस्ररतिसौन्दर्यशरीरायै नमो नमः । ७०
भावनामात्रसन्तुष्टहृदयायै नमो नमः ।
सत्यसम्पूर्णविज्ञानसिद्धिदायै नमो नमः ।
श्रीलोचनकृतोल्लासफलदायै नमो नमः ।
श्री सुधाब्धिमणिद्वीपमध्यगायै नमो नमः ।
दक्षाध्वरविनिर्भेदसाधनायै नमो नमः ।
श्रीनाथसोदरीभूतशोभितायै नमो नमः ।
चन्द्रशेखरभक्तार्तिभञ्जनायै नमो नमः ।
सर्वोपाधिविनिर्मुक्तचैतन्यायै नमो नमः ।
नामपारायणाभीष्टफलदायै नमो नमः ।
सृष्टिस्थितितिरोधानसङ्कल्पायै नमो नमः । ८०
श्रीषोडशाक्षरीमन्त्रमध्यगायै नमो नमः ।
अनाद्यन्तस्वयम्भूतदिव्यमूर्त्यै नमो नमः ।

भक्तहंसपरीमुख्यवियोगायै नमो नमः ।
मातृमण्डलसंयुक्तललितायै नमो नमः ।
भण्डदैत्यमहासत्वनाशनायै नमो नमः।
क्रूरभण्डशिरश्छेदनिपुणायै नमो नमः ।
धात्रच्युतसुराधीशसुखदायै नमो नमः ।
चण्डमुण्डनिशुम्भादिखण्डनायै नमो नमः ।
रक्ताक्षरक्तजिह्वादिशिक्षणायै नमो नमः ।
महिषासुरदोर्वीर्यनिग्रहायै नमो नमः । ९०
अभ्रकेशमहोत्साहकारणायै नमो नमः ।
महेशयुक्तनटनतत्परायै नमो नमः ।
निजभर्तृमुखाभोजचिन्तनायै नमो नमः ।
वृषभध्वजविज्ञानभावनायै नमो नमः ।
जन्ममृत्युजरारोग-भञ्जनायै नमो नमः ।
विधेयमुक्तविज्ञानसिद्धिदायै नमो नमः ।
राजराजार्चितपदसरोजायै नमो नमः ।
सर्ववेदान्तसंसिद्धसुतत्वायै नमो नमः ।
श्रीवीरभक्तविज्ञाननिधानायै नमो नमः ।
अशेषदुष्टदनुजसूदनायै नमो नमः ।
साक्षाच्छ्रीदक्षिणामूर्तिमनोज्ञायै नमो नमः ।
हयमेधाग्रसम्पूज्यमहिमायै नमो नमः ।
दक्षप्रजापतिसुतावेषाढ्यायै नमो नमः ।
सुमबाणेक्षुकोदण्डमण्डितायै नमो नमः ।
नित्ययौवनमाङ्गल्यमङ्गलायै नमो नमः ।
महादेवसमायुक्तशरीरायै नमो नमः ।
महादेवरतौत्सुक्यमहादेव्यै नमो नमः । १०८

* * *

॥ श्रीरस्तु ॥

# श्रीललितात्रिशतीस्तोत्रम्

(सर्वपूर्तिकरस्तवः)

सकुङ्कुमविलेपनामलिकचुम्बिकस्तूरिकां
समन्दहसितेक्षणां सशरचापपाशाङ्कुशाम्।
अशेषजनमोहिनीमरुणमाल्यभूषाम्बरां
जपाकुसुमभासुरां जपविधौ स्मराम्यम्बिकाम् ॥

अगस्त्य उवाच—

हयग्रीव दयासिन्धो भगवन् भक्तवत्सल।
त्वत्तः श्रुतमशेषेण श्रोतव्यं यद्यदस्ति तत् ॥ १

रहस्यनामसाहस्रमपि तत्संश्रुतं मया।
इतः परं च मे नास्ति श्रोतव्यमिति निश्चयः ॥ २

तथापि मम चित्तस्य पर्याप्तिर्नैव जायते।
कार्त्स्न्यार्थः प्राप्य इत्येव शोचयिष्याम्यहं प्रभो ॥ ३

किमिदं कारणं ब्रूहि ज्ञातव्यांशोऽपि वा पुनः।
अस्ति चेन्मम तं ब्रूहि ब्रूहीत्युक्त्वा प्रणम्य तम् ॥ ४

समाललम्बे तत्पादयुगलं कलशोद्भवः।
हयाननो भीतभीतः किमिदं किमिदं त्विति ॥ ५

मुञ्च मुञ्चेति तं चोक्त्वा चिन्ताक्रान्तो बभूव सः।
चिरं विचार्य निश्चिन्वन् वक्तव्यं न मयेत्यसौ ॥ ६

तूष्णीं स्थितः स्मरन्नाज्ञां ललिताम्बाकृतां पुरा।
प्रणम्य विप्रं स मुनिस्तत्पादावत्यजन् स्थितः ॥ ७

वर्षत्रयावधि तथा गुरुशिष्यौ तथा स्थितौ।
तच्छृण्वन्तश्च पश्यन्तः सर्वलोकास्सुविस्मिताः ॥ ८

तत्र श्रीललिता देवी कामेश्वरसमन्विता।
प्रादुर्भूय हयग्रीवं रहस्येवमचोदयत्॥ ९

अश्वाननावयोः प्रीतिश्शास्त्रविश्वासिने त्वया।
राज्यं देयं शिरो देयं न देया षोडशाक्षरी॥ १०

स्वमातृजारवद्गोप्या विद्यैषेत्यागमा जगुः।
ततोऽतिगोपनीया मे सर्वपूर्तिकरी स्तुतिः॥ ११

मया कामेश्वरेणापि कृत्वा संगोपिता भृशम्।
मदाज्ञया वचो देव्यश्चक्रुर्नामसहस्रकम्॥ १२

आवाभ्यां कथिता मुख्या सर्वपूर्तिकरी स्तुतिः।
सर्वक्रियाणां वैकल्यपूर्तिर्यज्जपतो भवेत्॥ १३

सर्वपूर्तिकरं तस्मादिदं नाम कृतं मया।
तद्ब्रूहि त्वमगस्त्याय पात्रभूतो न संशयः॥ १४

पत्न्यस्य लोपामुद्राख्या मामुपास्तेऽतिभक्तितः।
अयं च नितरां भक्तस्तस्मादस्य वदस्व तत्॥ १५

अमुञ्चमानस्त्वत्पादौ वर्षत्रयमसौ स्थितः।
एतत् ज्ञातुमतो भक्त्या हीदमेव निदर्शनम्॥ १६

चित्तपर्याप्तिरेतस्य नान्यथा सम्भविष्यति।
सर्वपूर्तिकरं तस्मादनुज्ञातो मया वद॥ १७

इत्युक्त्वाऽन्तर्दधादम्बा कामेश्वरसमन्विता।
अथोत्थाप्य हयग्रीवः पाणिभ्यां कुम्भसम्भवम्॥ १८

संस्थाप्य निकटे वाचमुवाच भृशविस्मितः।
श्रीहयग्रीव उवाच—
कृतार्थोऽसि कृतार्थोऽसि कृतार्थोऽसि घटोद्भव॥ १९

त्वत्समो ललिताभक्तो नास्ति नास्ति जगत्त्रये ।
येनागत्य स्वयं देवी तव वक्तव्यमन्वशात् ।। २०

सच्छिष्येण त्वयाहं च दृष्टवानस्मि तां शिवाम् ।
यतन्ते यद्दर्शनाय ब्रह्मविष्ण्वीशपूर्वकाः ।। २१

अतः परं ते वक्ष्यामि सर्वपूर्तिकरं स्तवम् ।
यस्य स्मरणमात्रेण पर्याप्तिस्ते भवेद्धृदि ।। २२

रहस्यनामसाहस्रादपि गुह्यतमं मुने ।
आवश्यकं ततोऽप्येतल्ललितां समुपासितुम् ।। २३

तदहं ते प्रवक्ष्यामि ललिताम्बानुशासनात् ।
श्रीमत्पञ्चदशाक्षर्याः कादिवर्णक्रमान्मुने ।। २४

पृथग्विंशतिनामानि कथितानि घटोद्भव ।
आहत्य नाम्नां त्रिशती सर्वसम्पूर्तिकारिणी ।। २५

रहस्यातिरहस्यैषा गोपनीया प्रयत्नतः ।
तां शृणुष्व महाभाग सावधानेन चेतसा ।। २६

केवलं नामबुद्धिस्ते न कार्या तेषु कुम्भज ।
मन्त्रात्मकत्वमेतेषां नाम्नां नामात्मतापि च ।। २७

तस्मादेकाग्रमनसा श्रोतव्यं भवता मुने ।
इत्युक्त्वा तु हयग्रीवः प्रोचे नामशतत्रयम् ।। २८

अस्य श्रीललितात्रिशतीस्तोत्रमहामन्त्रस्य भगवान् हयग्रीव ऋषिः - अनुष्टुप् छन्दः - श्रीललितामहेश्वरी देवता- ऐं बीजं, सौः शक्तिः क्लीं कीलकं, मम चतुर्विध-फलपुरुषार्थसिद्ध्यर्थे जपे विनियोगः ।

ऐं अङ्गुष्ठाभ्यां नमः। क्लीं तर्जनीभ्यां नमः। सौः मध्यमाभ्यां नमः। ऐं अनामिकाभ्यां नमः। क्लीं कनिष्ठिकाभ्यां नमः। सौः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। भूर्भुवस्सुवरोमिति दिग्बन्धः। ध्यानम्—

अतिमधुरचापहस्तामपरिमितामोदबाणसौभाग्याम्।
अरुणामतिशयकरुणामभिनवकुलसुन्दरीं वन्दे॥

लमित्यादिपञ्चपूजा।

ओं ककाररूपा कल्याणी कल्याणगुणशालिनी।
कल्याणशैलनिलया कमनीया कलावती॥ १

कमलाक्षी कल्मषघ्नी करुणामृतसागरा।
कदम्बकाननावासा कदम्बकुसुमप्रिया॥ २

कन्दर्पविद्या कन्दर्पजनकापाङ्गवीक्षणा।
कर्पूरवीटीसौरभ्यकल्लोलितककुसटा॥ ३

कलिदोषहरा कञ्जलोचना कम्रविग्रहा।
कर्मादिसाक्षिणी कारयित्री कर्मफलप्रदा॥ ४

एकाररूपा चैकाक्षर्येकानेकाक्षराकृतिः।
एतत्तदित्यनिर्देश्या चैकानन्दचिदाकृतिः॥ ५

एवमित्यागमाबोध्या चैकभक्तिमदर्चिता।
एकाग्रचित्तनिर्ध्याता चैषणारहितादृता॥ ६

एलासुगन्धिचिकुरा चैनःकूटविनाशिनी।
एकभोगा चैकरसा चैकैश्वर्यप्रदायिनी॥ ७

एकातपत्रसाम्राज्यप्रदा चैकान्तपूजिता।
एधमानप्रभा चैजदनेकजगदीश्वरी॥ ८

एकवीरादिसंसेव्या चैकप्राभवशालिनी।
ईकाररूपा चेशित्री चेप्सितार्थप्रदायिनी॥ ९

ईदृगित्यविनिर्देश्या चेश्वरत्वविधायिनी।
ईशानादिब्रह्ममयी चेशित्वाद्यष्टसिद्धिदा॥ १०

ईक्षित्रीक्षणसृष्टाण्डकोटिरीश्वरवल्लभा।
ईडिता चेश्वरार्धाङ्गशरीरेशाधिदेवता॥ ११

ईश्वरप्रेरणकरी चेशताण्डवसाक्षिणी।
ईश्वरोत्सङ्गनिलया चेतिबाधाविनाशिनी॥ १२

ईहाविरहिता चेशशक्तिरीषत्स्मितानना।
लकाररूपा ललिता लक्ष्मीवाणीनिषेविता॥ १३

लाकिनी ललनारूपा लसद्दाडिमपाटला।
ललन्तिकालसत्फाला ललाटनयनार्चिता॥ १४

लक्षणोज्ज्वलदिव्याङ्गी लक्षकोट्यण्डनायिका।
लक्ष्यार्था लक्षणागम्या लब्धकामा लतातनुः॥ १५

ललामराजदळिका लम्बिमुक्तालताञ्चिता।
लम्बोदरप्रसूर्लभ्या लज्जाढ्या लयवर्जिता॥ १६

ह्रींकाररूपा ह्रींकारनिलया ह्रींपदप्रिया।
ह्रींकारबीजा ह्रींकारमन्त्रा ह्रींकारलक्षणा॥ १७

ह्रींकारजपसुप्रीता ह्रींमतिर्ह्रींविभूषणा।
ह्रींशीला ह्रींपदाराध्या ह्रींगर्भा ह्रींपदाभिधा॥ १८

ह्रींकारवाच्या ह्रींकारपूज्या ह्रींकारपीठिका।
ह्रींकारवेद्या ह्रींकारचिंत्या ह्रीं ह्रींशरीरिणी॥ १९

हकाररूपा हलधृत्पूजिता हरिणेक्षणा।
हरप्रिया हराराध्या हरिब्रह्मेन्द्रसेविता॥ २०

हयारूढासेविताङ्घ्रिर्हयमेधसमर्चिता।
हर्यक्षवाहना हंसवाहना हतदानवा॥ २१

हत्यादिपापशमनी हरिदश्वादिसेविता।
हस्तिकुम्भोत्तुङ्गकुचा हस्तिकृत्तिप्रियाङ्गना॥ २२

हरिद्राकुङ्कुमादिग्धा हर्यश्वाद्यमरार्चिता।
हरिकेशसखी हादिविद्या हालामदालसा॥ २३

सकाररूपा सर्वज्ञा सर्वेशी सर्वमङ्गला।
सर्वकर्त्री सर्वभर्त्री सर्वहन्त्री सनातनी॥ २४

सर्वानवद्या सर्वाङ्गसुन्दरी सर्वसाक्षिणी।
सर्वात्मिका सर्वसौख्यदात्री सर्वविमोहिनी॥ २५

सर्वाधारा सर्वगता सर्वावगुणवर्जिता।
सर्वारुणा सर्वमाता सर्वभूषणभूषिता॥ २६

ककारार्था कालहन्त्री कामेशी कामितार्थदा।
कामसञ्जीविनी कल्या कठिनस्तनमण्डला॥ २७

करभोरुः कलानाथमुखी कचजिताम्बुदा।
कटाक्षस्यन्दिकरुणा कपालिप्राणनायिका॥ २८

कारुण्यविग्रहा कान्ता कान्तिधूतजपावलिः।
कलालापा कम्बुकण्ठी करनिर्जितपल्लवा॥ २९

कल्पवल्लीसमभुजा कस्तूरीतिलकाञ्चिता।
हकारार्था हंसगतिर्हाटकाभरणोज्ज्वला॥ ३०

हारहारिकुचाभोगा हाकिनी हल्यवर्जिता।
हरित्पतिसमाराध्या हठात्कारहतासुरा ॥ ३१

हर्षप्रदा हविर्भोक्त्री हार्दसन्तमसापहा।
हल्लीसलास्यसन्तुष्टा हंसमन्त्रार्थरूपिणी ॥ ३२

हानोपादाननिर्मुक्ता हर्षिणी हरिसोदरी।
हाहाहूहूमुखस्तुत्या हानिवृद्धिविवर्जिता ॥ ३३

हय्यङ्गवीनहृदया हरिगोपारुणांशुका।
लकाराख्या लतापूज्या लयस्थित्युद्भवेश्वरी ॥ ३४

लास्यदर्शनसन्तुष्टा लाभालाभविवर्जिता।
लङ्घ्येतराज्ञा लावण्यशालिनी लघुसिद्धिदा ॥ ३५

लाक्षारससवर्णाभा लक्ष्मणाग्रजपूजिता।
लभ्येतरा लब्धभक्तिसुलभा लाङ्गलायुधा ॥ ३६

लग्नचामरहस्तश्रीशारदापरिवीजिता।
लज्जापदसमाराध्या लम्पटा लकुळेश्वरी ॥ ३७

लब्धमाना लब्धरसा लब्धसम्पत्समुन्नतिः।
ह्रींकारिणी च ह्रींकारी ह्रींमध्या ह्रींशिखामणिः ॥ ३८

ह्रींकारकुण्डाग्निशिखा ह्रींकारशशिचन्द्रिका।
ह्रींकारभास्कररुचिः ह्रींकाराम्भोदचञ्चला ॥ ३९

ह्रींकारकन्दाङ्कुरिका ह्रींकारैकपरायणा।
ह्रींकारदीर्घिकाहंसी ह्रींकारोद्यानकेकिनी ॥ ४०

ह्रींकारारण्यहरिणी ह्रींकारावालवल्लरी।
ह्रींकारपंजरशुकी ह्रींकाराङ्गणदीपिका ॥ ४१

ह्रींकारकन्दरासिंही ह्रींकाराम्भोजभृङ्गिका।
ह्रींकारसुमनोमाध्वी ह्रींकारतरुमञ्जरी।। ४२

सकाराख्या समरसा सकलागमसंस्तुता।
सर्ववेदान्ततात्पर्यभूमिः सदसदाश्रया।। ४३

सकला सच्चिदानन्दा साध्या सद्गतिदायिनी।
सनकादिमुनिध्येया सदाशिवकुटुम्बिनी।। ४४

सकलाधिष्ठानरूपा सत्यरूपा समाकृतिः।
सर्वप्रपञ्चनिर्मात्री समानाधिकवर्जिता।। ४५

सर्वोत्तुङ्गा सङ्गहीना सगुणा सकलेष्टदा।
ककारिणी काव्यलोला कामेश्वरमनोहरा।। ४६

कामेश्वरप्राणनाडी कामेशोत्सङ्गवासिनी।
कामेश्वरालिङ्गिताङ्गी कामेश्वरसुखप्रदा।। ४७

कामेश्वरप्रणयिनी कामेश्वरविलासिनी।
कामेश्वरतपस्सिद्धिः कामेश्वरमनःप्रिया।। ४८

कामेश्वरप्राणनाथा कामेश्वरविमोहिनी।
कामेश्वरब्रह्मविद्या कामेश्वरगृहेश्वरी।। ४९

कामेश्वराह्लादकरी कामेश्वरमहेश्वरी।
कामेश्वरी कामकोटिनिलया कांक्षितार्थदा।। ५०

लकारिणी लब्धरूपा लब्धधीर्लब्धवाञ्छिता।
लब्धपापमनोदूरा लब्धाहङ्कारदुर्गमा।। ५१

लब्धशक्तिर्लब्धदेहा लब्धैश्वर्यसमुन्नतिः।
लब्धवृद्धिर्लब्धलीला लब्धयौवनशालिनी।। ५२

लब्धातिशयसर्वाङ्गसौन्दर्या लब्धविभ्रमा।
लब्धरागा लब्धपतिर्लब्धनानागमस्थितिः ॥ ५३

लब्धभोगा लब्धसुखा लब्धहर्षाभिपूरिता।
ह्रींकारमूर्तिर्ह्रींकारसौधशृङ्गकपोतिका ॥ ५४

ह्रींकारदुग्धाब्धिसुधा ह्रींकारकमलेन्दिरा।
ह्रींकारमणिदीपार्चिर्ह्रींकारतरुशारिका ॥ ५५

ह्रींकारपेटकमणिर्ह्रींकारादर्शबिम्बिता।
ह्रींकारकोशासिलता ह्रींकारास्थाननर्तकी ॥ ५६

ह्रींकारशुक्तिकामुक्तामणिर्ह्रींकारबोधिता।
ह्रींकारमयसौवर्णस्तम्भविद्रुमपुत्रिका ॥ ५७

ह्रींकारवेदोपनिषद्ध्रींङ्काराध्वरदक्षिणा।
ह्रीङ्कारनन्दनारामनवकल्पकवल्लरी ॥ ५८

ह्रींकारहिमवद्गङ्गा ह्रींङ्कारार्णवकौस्तुभा।
ह्रींकारमन्त्रसर्वस्वा ह्रींकारपरसौख्यदा ॥ ५९

श्रीहयग्रीव उवाच—

इतीदं ते मयाऽख्यातं दिव्यनाम्नां शतत्रयम्।
रहस्यातिरहस्यत्वाद् गोपनीयं महामुने ॥ ६०

शिववर्णानि नामानि श्रीदेवीकथितानि वै।
शक्त्यक्षराणि नामानि कामेशकथितानि हि ॥ ६१

उभयाक्षरनामानि ह्युभाभ्यां कथितानि वै।
तदन्यैर्ग्रथितं स्तोत्रमेतस्य सदृशं किमु ॥ ६२

नानेन सदृशं स्तोत्रं श्रीदेवीप्रीतिदायकम्।
लोकत्रयेऽपि कल्याणं सम्भवेन्नात्र संशयः ॥ ६३

इति हयमुखगीतं स्तोत्रराजं निशम्य
प्रगळितकलुषोऽभूच्चित्तपर्यासिमेत्य।
निजगुरुमथ नत्वा कुम्भजन्मा तदुक्तेः
पुनरधिकरहस्यं ज्ञातुमेवं जगाद।। ६४

अगस्त्य उवाच—

अश्वानन महाभाग रहस्यमपि मे वद।
शिववर्णानि कान्यत्र शक्तिवर्णानि कानि हि।
उभयोरपि वर्णानि कानि मे वद देशिक।। ६५

इति पृष्टः कुम्भजेन हयग्रीवोऽवदत्पुनः।
तव गोप्यं किमस्तीह साक्षादम्बानुशासनात्।। ६६

इदं त्वतिरहस्यं ते वक्ष्यामि शृणु कुम्भज।
एतद्विज्ञानमात्रेण श्रीविद्या सिद्धिदा भवेत्।। ६७

कत्रयं हद्वयं चैव शैवो भागः प्रकीर्तितः।
शक्त्यक्षराणि शेषाणि ह्रींकार उभयात्मकः।। ६८

एवं विभागमज्ञात्वा श्रीविद्याजपशीलिनः।
न तेषां सिद्धिदा विद्या कल्पकोटिशतैरपि।। ६९

चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः।
नवचक्रैस्तु संसिद्धं श्रीचक्रं शिवयोर्वपुः।। ७०

त्रिकोणमष्टकोणं च दशकोण द्वयं तथा।
चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च वै।। ७१

बिन्दुश्चाष्टदलं पद्मं पद्मं षोडशपत्रकम्।
चतुरश्रं च चत्वारि शिवचक्राण्यनुक्रमात्।। ७२

त्रिकोणे बैन्दवं श्लिष्टमष्टारेऽष्टदलाम्बुजम्।

दशारयोष्षोडशारं भूपुरं भुवनाश्रके।
शैवानामपि शाक्तानां चक्राणां च परस्परम् ॥ ७३

अविनाभावसंबन्धं यो जानाति स चक्रवित्।
त्रिकोणरूपिणी शक्तिः बिन्दुरूपपरः शिवः ॥ ७४
अविनाभावसम्बन्धस्तस्माद्बिन्दुत्रिकोणयोः ।
एवं विभागमज्ञात्वा श्रीचक्रं यस्समर्चयेत् ॥ ७५

न तत्फलमवाप्नोति ललिताम्बा न तुष्यति।
ये च जानन्ति लोकेऽस्मिन् श्रीविद्याचक्रवेदिनः ॥ ७६

सामान्यवेदिनस्ते वै विशेषज्ञोऽतिदुर्लभः ।
स्वयं विद्याविशेषज्ञो विशेषज्ञं समर्चयेत् ॥ ७७

तस्मै देयं ततो ग्राह्यं श्रीविद्याचक्रवेदिना।
अन्धंतमः प्रविशन्ति ये ह्यविद्यामुपासते ॥ ७८

इति श्रुतिरपाहैतानविद्योपासकान्पुनः ।
विद्यान्योपासकानेव निन्दत्यारुणिकी श्रुतिः ॥ ७९

अश्रुतासः श्रुतासश्च यज्वानो येऽप्ययज्वनः ।
स्वर्यन्तो नापेक्षन्त इन्द्रमग्निं च ये विदुः ॥ ८०

सिकता इव संयन्ति रश्मिभिस्समुदीरिताः ।
अस्माल्लोकादमुष्माच्चेत्यपाहारुणिकी श्रुतिः ॥ ८१

यः प्राप्तः पृश्निभावं वा यदि वा शङ्करस्स्वयम्।
तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरी ॥ ८२

इति तन्त्रेषु बहुधा विद्याया महिमोच्यते।
मोक्षैकहेतुविद्या तु श्रीविद्यैव न संशयः ॥ ८३

न शिल्पादिज्ञानयुक्ते विद्वच्छब्दः प्रयुज्यते।
मोक्षैकहेतुविद्या सा श्रीविद्यैव न संशयः ॥ ८४

(तस्माद्विद्याविदेवात्र विद्वान्विद्वानितीर्यते।)

तस्माद्विद्याविदे दद्यात् ख्यापयेत्तद्गुणान्सुधीः।
स्वयं विद्याविशेषज्ञो विद्यामाहात्म्यवेद्यपि॥ ८५

विद्याविदं नार्चयेच्चेत् को वा तं पूजयेज्जनः।
प्रसङ्गादेतदुक्तं ते प्रकृतं शृणु कुम्भज॥ ८६

यः कीर्तयेत्सकृद्भक्त्या दिव्यं नाम्नां शतत्रयम्।
तस्य पुण्यफलं वक्ष्ये विस्तरेण घटोद्भव॥ ८७

रहस्यनामसाहस्रपाठे यत्फलमीरितम्।
तत्फलं कोटिगुणितमेकनामजपाद् भवेत्॥ ८८

कामेश्वराभ्यां तदितं कृतं नामशतत्रयम्।
नान्येन तुलयेदेतत्स्तोत्रेणान्यकृतेन तु॥ ८९

श्रियः परम्परा यस्य भाविनी तूत्तरोत्तरम्।
तेनैव लभ्यते नाम्नां त्रिशती सर्वकामदा॥ ९०

अस्या नाम्नां त्रिशत्यास्तु महिमा केन वर्ण्यते।
या स्वयं शिवयोर्वक्त्रपद्माभ्यां परिनिस्सृता॥ ९१

नित्याषोडशिकारूपान्विप्रानादौ तु भोजयेत्।
अभ्यक्तान् गन्धतैलेन स्नातानुष्णेन वारिणा॥ ९२

अभ्यर्च्य वस्त्रगन्धाद्यैः कामेश्वर्यादिनामभिः।
अपूपैश्शर्कराज्यैश्च फलैः पुष्पैस्सुगन्धिभिः॥ ९३

विद्याविदो विशेषेण भोजयेत्षोडश द्विजान्।
एवं नित्यबलिं कुर्यादादौ ब्राह्मणभोजने॥ ९४

पश्चात्त्रिशत्या नाम्नां तु ब्राह्मणान् क्रमशोऽर्चयेत्।
तैलाभ्यंगादिकं दद्याद्विभवे सति भक्तितः॥ ९५

शुक्लप्रतिपदारभ्य पौर्णमास्यवधि क्रमात्।
दिवसे दिवसे विप्रा भोज्या विंशतिसंख्यया ॥ ९६

दशभिः पञ्चभिर्वापि त्रिभिरेकेन वा दिनैः।
त्रिंशत्षष्टिं शतं विप्रान् भोजयेत् त्रिशतं क्रमात् ॥ ९७

एवं यः कुरुते भक्त्या जन्ममध्ये सकृन्नरः।
तस्यैव सफलं जन्म मुक्तिस्तस्य करे स्थिता ॥ ९८

रहस्यनामसाहस्रैरर्चनेऽप्येवमेव हि।
आदौ नित्यबलिं कुर्यात् पश्चाद् ब्राह्मणभोजनम् ॥ ९९

रहस्यनामसाहस्रमहिमा यो मयोदितः।
स शीकराणुरत्रैकनाम्नो महिमवारिधेः ॥ १००

वाग्देवीरचिते नामसाहस्रे यद्यदीरितम्।
तत्तत्फलमवाप्नोति नाम्नोऽप्येकस्य कीर्तनात् ॥ १०१

एतदन्यैर्जपैस्स्तोत्रैरर्चनैर्यत्फलं भवेत्।
तत्फलं कोटिगुणितं भवेन्नामशतत्रयात् ॥ १०२

रहस्यनामसाहस्रकोट्यावृत्त्यास्तु यत्फलम्।
तद्भवेत्कोटिगुणितं नामत्रिशतकीर्तनात् ॥ १०३

वाग्देवीरचिते स्तोत्रे तादृशो महिमा यदि।
साक्षात्कामेशकामेशीकृतेऽस्मिन् गृह्यतामिति ॥ १०४

सकृत्सङ्कीर्तनादेव नाम्नामस्मिन् शतत्रये।
भवेच्चित्तस्य पर्याप्तिर्नूनमन्यानपेक्षिणी ॥ १०५

न ज्ञातव्यमितस्त्वन्यज्जप्यं सर्वं च कुम्भज।
यद्यत्साध्यतमं कार्यं तत्तदर्थमिदं जपेत् ॥ १०६

तत्तत्सिद्धिमवाप्नोति पश्चात्कार्यं परीक्षयेत्।
ये ये प्रयोगास्तन्त्रेषु तैस्तैर्यत्साध्यते फलम्॥ १०७

तत्सर्वं सिद्ध्यति क्षिप्रं नामत्रिशतकीर्तनात्।
आयुष्करं पुष्टिकरं पुत्रदं वश्यकारकम्॥ १०८

विद्याप्रदं कीर्तिकरं सुकवित्वप्रदायकम्।
सर्वसम्पत्प्रदं सर्वभोगदं सर्वसौख्यदम्॥ १०९

सर्वाभीष्टप्रदं चैव देवीनामशतत्रयम्।
एतज्जपपरो भूयान्नान्यदिच्छेत्कदाचन॥ ११०

एतत्कीर्तनसन्तुष्टा श्रीदेवी ललिताम्बिका।
भक्तस्य यद्यदिष्टं स्यात्तत्तत्पूरयते ध्रुवम्॥ १११

तस्मात्कुम्भोद्भव मुने! कीर्तय त्वमिदं सदा।
अपरं किञ्चिदपि ते बोद्धव्यं नावशिष्यति॥ ११२

इति ते कथितं स्तोत्रं ललिताप्रीतिदायकम्।
नाविद्यावेदिने ब्रूयान्नाभक्ताय कदाचन॥ ११३

न शठाय न दुष्टाय नाविश्वासाय कर्हिचित्।
यो ब्रूयात्त्रिशतीं नाम्नां तस्यानर्थो महान् भवेत्॥ ११४

इत्याज्ञा शाङ्करी प्रोक्ता तस्माद् गोप्यमिदं त्वया।
ललिताप्रेरितेनैव मयोक्तं स्तोत्रमुत्तमम्॥ ११५

रहस्यनामसाहस्रादतिगोप्यमिदं मुने।
एवमुक्त्वा हयग्रीवः कुम्भजं तापसोत्तमम्॥ ११६

स्तोत्रेणानेन ललितां स्तुत्वा त्रिपुरसुन्दरीम्।
आनन्दलहरीमग्नमानसस्समवर्तत॥ ११७

—श्री ब्रह्माण्डपुराणे

॥ श्रीरस्तु ॥

॥ श्रीललिताम्बिकायै नमः ।

# श्रीललितात्रिशतीनामावलिः

ओं ऐं ह्रीं श्रीं । ककाररूपायै नमः । कल्याण्यै । कल्याणगुणशालिन्यै । कल्याणशैलनिलयायै । कमनीयायै । कलावत्यै । कमलाक्ष्यै । कल्मषघ्न्यै । करुणामृतसागरायै । कदम्बकाननावासायै । कदम्बकुसुमप्रियायै । कन्दर्पविद्यायै । कन्दर्पजनकापाङ्गवीक्षणायै । कर्पूरवीटीसौरभ्यकल्लोलितककुप्तटायै । कलिदोषहरायै । कञ्जलोचनायै । कम्रविग्रहायै । कर्मादिसाक्षिण्यै । कारयित्र्यै । कर्मफलप्रदायै नमः । २०

ओं एकाररूपायै नमः । एकाक्षर्यै । एकानेकाक्षराकृत्यै । एतत्तदित्यनिर्देश्यायै । एकानन्दचिदाकृत्यै । एवमित्यागमाबोध्यायै । एकभक्तिमदर्चितायै । एकाग्रचित्त-निर्ध्यातायै । एषणारहितादृतायै । एलासुगन्धिचिकुरायै । एनः-कूटविनाशिन्यै । एकभोगायै । एकरसायै । एकैश्वर्यप्रदायिन्यै । एकातपत्रसाम्राज्यप्रदायै । एकान्तपूजितायै । एधमानप्रभायै । एजदनेकजगदीश्वर्यै । एकवीरादिसंसेव्यायै । एकप्राभवशालिन्यै नमः । ४०

ओं ईकाररूपायै नमः । ईशित्र्यै । ईप्सितार्थप्रदायिन्यै । ईदृगित्यविनिर्देश्यायै । ईश्वरत्वविधायिन्यै । ईशानादिब्रह्ममय्यै । ईशित्वाद्यष्टसिद्धिदायै । ईक्षित्र्यै । ईक्षणसृष्टाण्डकोट्यै । ईश्वरवल्लभायै । ईडितायै । ईश्वरार्धाङ्गशरीरायै । ईशाधिदेवतायै । ईश्वरप्रेरणकर्यै । ईशताण्डवसाक्षिण्यै । ईश्वरोत्सङ्गनिलयायै । ईतिबाधा-

विनाशिन्यै । ईहाविरहितायै । ईशशक्त्यै । ईषत्स्मितानननायै नमः । ६०

ओं लकाररूपायै नमः । ललितायै । लक्ष्मीवाणीनिषेवितायै । लाकिन्यै । ललनारूपायै । लसद्दाडिमपाटलायै । ललन्तिकालसत्फालायै । ललाटनयनार्चितायै । लक्षणोज्ज्वलदिव्याङ्ग्यै । लक्षकोट्यण्डनायिकायै । लक्ष्यार्थायै । लक्षणागम्यायै । लब्धकामायै । लतातनवे । ललामराजदळिकायै । लंबिमुक्तालताञ्चितायै । लम्बोदरप्रसवे । लभ्यायै । लज्जाढ्यायै । लयवर्जितायै नमः । ८०

ओं ह्रींकाररूपायै नमः । ह्रींकारनिलयायै । ह्रींपदप्रियायै । ह्रींकारबीजायै । ह्रींकारमन्त्रायै । ह्रींकारलक्षणायै । ह्रींकारजपसुप्रीतायै । ह्रींमत्यै । ह्रींविभूषणायै । ह्रींशीलायै । ह्रींपदाराध्यायै । ह्रींगर्भायै । ह्रींपदाभिधायै । ह्रींकारवाच्यायै । ह्रींकारपूज्यायै । ह्रींकारपीठिकायै । ह्रींकारवेद्यायै । ह्रींकारचिन्त्यायै । ह्रीं । ह्रींशरीरिण्यै नमः । १००

ओं हकाररूपायै नमः । हलधृत्पूजितायै । हरिणेक्षणायै । हरप्रियायै । हराराध्यायै । हरिब्रह्मेन्द्रसेवितायै । हयारूढासेवितांघ्र्यै । हयमेधसमर्चितायै । हर्यक्षवाहनायै । हंसवाहनायै । हतदानवायै । हत्यादिपापशमन्यै । हरिदश्वादिसेवितायै । हस्तिकुम्भोत्तुङ्गकुचायै । हस्तिकृत्तिप्रयाङ्गनायै । हरिद्राकुङ्कुमादिग्धायै । हर्यश्वाद्यमरार्चितायै । हरिकेशसख्यै । हादिविद्यायै हालामदालसायै नमः । १२०

ओं सकाररूपायै नमः । सर्वज्ञायै । सर्वेश्यै । सर्वमङ्गलायै । सर्वकर्त्र्यै । सर्वभर्त्र्यै । सर्वहन्त्र्यै । सनातन्यै । सर्वानवद्यायै । सर्वाङ्गसुन्दर्यै । सर्वसाक्षिण्यै । सर्वात्मिकायै । सर्वसौख्यदात्र्यै । सर्वविमोहिन्यै । सर्वाधारायै । सर्वगतायै । सर्वावगुणवर्जितायै । सर्वारुणायै । सर्वमात्रे । सर्वभूषणभूषितायै नमः । १४०

ओं ककारार्थायै नमः । कालहन्त्र्यै । कामेश्यै । कामितार्थदायै । कामसञ्जीविन्यै । कल्यायै । कठिनस्तनमण्डलायै । करभोरवे । कलानाथमुख्यै । कचजिताम्बुदायै । कटाक्षस्यन्दिकरुणायै । कपालिप्राणनायिकायै । कारुण्यविग्रहायै । कान्तायै । कान्तिधूतजपावल्यै । कलालापायै । कम्बुकुण्ठ्यै । करनिर्जितपल्लवायै । कल्पवल्लीसमभुजायै । कस्तूरीतिलकाञ्चितायै नमः । १६०

ओं हकारार्थायै नमः । हंसगत्यै । हाटकाभरणोज्ज्वलायै । हारहारिकुचाभोगायै । हाकिन्यै । हल्यवर्जितायै । हरित्पतिसमाराध्यायै । हठात्कारहतासुरायै । हर्षप्रदायै । हविर्भोक्त्र्यै । हार्दसन्तमसापहायै । हल्लीसलास्य सन्तुष्टायै । हंसमन्त्रार्थरूपिण्यै । हानोपादाननिर्मुक्तायै । हर्षिण्यै । हरिसोदर्यै । हाहाहूहूमुखस्तुत्यायै । हानिवृद्धिविवर्जितायै । हय्यङ्गवीनहृदयायै । हरिगोपारुणांशुकायै नमः । १८०

ओं लकाराख्यायै नमः । लतापूज्यायै । लयस्थित्युद्भवेश्वर्यै । लास्यदर्शनसन्तुष्टायै । लाभालाभविवर्जितायै । लङ्घ्येतराज्ञायै । लावण्यशालिन्यै ।

लघुसिद्धिदायै । लाक्षारससवर्णाभायै । लक्ष्मणाग्रज-पूजितायै । लभ्येतरायै । लब्धभक्तिसुलभायै । लाङ्गलायुधायै । लग्नचामरहस्तश्रीशारदापरिवीजितायै । लज्जापदसमाराध्यायै । लम्पटायै । लकुळेश्वर्यै । लब्धमानायै । लब्धरसायै । लब्धसम्पत्समुन्नत्यै नमः । २००

ओं ह्रींकारिण्यै नमः । ह्रींकार्यै । ह्रींमध्यायै । ह्रींशिखामणये । ह्रींकारकुण्डाग्निशिखायै । ह्रींकार-शशिचन्द्रिकायै । ह्रींकारभास्कररुच्यै । ह्रींकाराम्भोद-चञ्चलायै । ह्रींकारकन्दाङ्कुरिकायै । ह्रींकारैकपरायणायै । ह्रींकारदीर्घिकाहंस्यै । ह्रींकारोद्यानकेकिन्यै । ह्रींकारा-रण्यहरिण्यै । ह्रींकारावालवल्लर्यै । ह्रींकारपञ्जरशुक्यै । ह्रींकाराङ्गणदीपिकायै । ह्रींकारकन्दरासिंह्यै । ह्रींकाराम्भोजभृङ्गिकायै । ह्रींकारसुमनोमाध्व्यै । ह्रींकारतरुमञ्जर्यै नमः । २२०

ओं सकाराख्यायै नमः । समरसायै । सकला-गमसंस्तुतायै । सर्ववेदान्ततात्पर्यभूम्यै । सदसदाश्रयायै । सकलायै । सच्चिदानन्दायै । साध्यायै । सद्गतिदायिन्यै । सनकादिमुनिध्येयायै । सदाशिवकुटुम्बिन्यै । सकला-धिष्ठानरूपायै । सत्यरूपायै । समाकृत्यै । सर्वप्रपञ्च-निर्मात्र्यै । समानाधिकवर्जितायै । सर्वोत्तुङ्गायै । सङ्गहीनायै । सद्गुणायै । सकलेष्टदायै नमः । २४०

ओं ककारिण्यै नमः । काव्यलोलायै । कामेश्वर-मनोहरायै । कामेश्वरप्राणनाड्यै । कामेशोत्संगवासिन्यै । कामेश्वरालिंगिताङ्ग्यै । कामेश्वरसुखप्रदायै । कामेश्वर-

प्रणयिन्यै । कामेश्वरविलासिन्यै । कामेश्वरतपस्सिद्ध्यै । कामेश्वरमनःप्रियायै । कामेश्वरप्राणनाथायै । कामेश्वर-विमोहिन्यै । कामेश्वरब्रह्मविद्यायै । कामेश्वरगृहेश्वर्यै । कामेश्वराह्लादकर्यै । कामेश्वरमहेश्वर्यै । कामेश्वर्यै । कामकोटिनिलयायै । कांक्षितार्थदायै नमः । २६०

ओं लकारिण्यै नमः । लब्धरूपायै । लब्धधिये । लब्धवाञ्छितायै । लब्धपापमनोदूरायै । लब्धाहंकारदुर्ग-मायै । लब्धशक्त्यै । लब्धदेहायै । लब्धैश्वर्यसमुन्नत्यै । लब्ध-वृद्ध्यै । लब्धलीलायै । लब्धयौवनशालिन्यै । लब्धा-तिशयसर्वाङ्गसौन्दर्यायै । लब्धविभ्रमायै । लब्धरागायै । लब्धपत्यै । लब्धनानागमस्थित्यै । लब्धभोगायै । लब्धसुखायै । लब्धहर्षाभिपूरितायै नमः । २८०

ओं ह्रींकारमूर्तये नमः । ह्रींकारसौधशृङ्गकपोतिकायै । ह्रींकारदुग्धाब्धिसुधायै । ह्रींकारकमलेन्दिरायै । ह्रींकार-मणिदीपार्चिषे । ह्रींकारतरुशारिकायै । ह्रींकारपेटकमणये । ह्रींकारादर्शबिंबितायै । ह्रींकारकोशासिलतायै । ह्रींकारा-स्थाननर्तक्यै । ह्रींकारशुक्तिकामुक्तामणये । ह्रींकारबोधि-तायै । ह्रींकारमयसौवर्णस्तम्भविद्रुमपुत्रिकायै । ह्रींकार-वेदोपनिषदे । ह्रींकाराध्वरदक्षिणायै । ह्रींकारनन्दनाराम नवकल्पकवल्लर्यै । ह्रींकारहिमवद्गङ्गायै । ह्रींकारार्ण-वकौस्तुभायै । ह्रींकारमन्त्रसर्वस्वायै । ह्रींकारपरसौख्यदायै नमः । ३००

ओं ऐं ह्रीं श्रीं श्रीमद्राजराजेश्वर्यै नमः ।

## खड्गमालानामावलिः

अस्य श्रीखड्गमालामन्त्रस्य उपस्थाधिष्ठायिने वरुणादित्यऋषये नमः शिरसि, गायत्रीच्छन्दसे नमः मुखे, ललितादेवतायै नमः हृदये, कएईलह्रीं बीजाय नमः गुह्ये, हसकलह्रीं शक्तये नमः पादयोः, सकलह्रीं कीलकाय नमः नाभौ, श्री ललिताप्रसादसिद्ध्यर्थे पाठे विनियोगः । कूटत्रयद्विरावृत्या करहृदयादिन्यासः । ध्यानम्—

बालार्कारुणतेजसं त्रिनयनां रक्ताम्बरोल्लासिनीं
नानालङ्कृतिराजमानवपुषं बालोडुराट्शेखराम् ।
हस्तैरिक्षुधनुःसृणी सुमशरान् पाशं मुदा बिभ्रतीं
श्रीचक्रस्थितसुन्दरीं त्रिजगतामाधारभूतां भजे ॥

ओं ऐं ह्रीं श्रीं ओं । त्रिपुरसुन्दर्यै नमः । हृदयदेव्यै नमः । शिरोदेव्यै । शिखादेव्यै । कवचदेव्यै । नेत्रदेव्यै । अस्त्रदेव्यै । कामेश्वर्यै । भगमालिन्यै । नित्यक्लिन्नायै । भेरुण्डायै । वह्निवासिन्यै । महावज्रेश्वर्यै । शिवदूत्यै । त्वरितायै । कुलसुन्दर्यै । नित्यायै । नीलपताकायै । विजयायै । सर्वमङ्गलायै नमः । २०

ओं ज्वालामालिन्यै नमः । चित्रायै । महानित्यायै । परमेश्वरपरमेश्वर्यै । मित्रीशमय्यै । षष्ठीशमय्यै । उड्डीशमय्यै । चर्यानाथमय्यै । लोपामुद्रामय्यै । अगस्त्यमय्यै । कालतापनमय्यै । धर्माचार्यमय्यै । मुक्तकेशीश्वरमय्यै । दीपकलानाथमय्यै । विष्णुदेवमय्यै । प्रभाकरदेवमय्यै । तेजोदेवमय्यै । मनोजदेवमय्यै । कल्याणदेवमय्यै । रत्नदेवमय्यै नमः । ४०

ओं वासुदेवमय्यै नमः । श्रीरामानन्दमय्यै । अणिमासिद्ध्यै । लघिमासिद्ध्यै । महिमासिद्ध्यै । ईशित्वसिद्ध्यै । वशित्वसिद्ध्यै । प्राकाम्यसिद्ध्यै । भुक्तिसिद्ध्यै । इच्छासिद्ध्यै । प्राप्तिसिद्ध्यै । सर्वकामसिद्ध्यै । ब्राह्म्यै । माहेश्वर्यै । कौमार्यै । वैष्णव्यै । वाराह्यै । माहेन्द्र्यै । चामुण्डायै । महालक्ष्म्यै नमः । ६०

सर्वसंक्षोभिण्यै नमः । सर्वविद्राविण्यै । सर्वाकर्षिण्यै । सर्ववशङ्कर्यै । सर्वोन्मादिन्यै । सर्वमहाङ्कुशायै । सर्वखेचर्यै । सर्वबीजायै । सर्वयोन्यै । सर्वत्रिखण्डायै । त्रैलोक्यमोहनचक्रस्वामिन्यै । प्रकटयोगिन्यै । कामाकर्षिण्यै । बुद्ध्याकर्षिण्यै । अहङ्काराकर्षिण्यै । शब्दाकर्षिण्यै । स्पर्शाकर्षिण्यै । रूपाकर्षिण्यै । रसाकर्षिण्यै । गन्धाकर्षिण्यै नमः । ८०

ओं चित्ताकर्षिण्यै नमः । धैर्याकर्षिण्यै । स्मृत्याकर्षिण्यै । नामाकर्षिण्यै । बीजाकर्षिण्यै । आत्माकर्षिण्यै । अमृताकर्षिण्यै । शरीराकर्षिण्यै । सर्वाशापरिपूरकचक्रस्वामिन्यै । गुप्तयोगिन्यै । अनङ्गकुसुमायै । अनङ्गमेखलायै । अनङ्गमदनायै । अनङ्गमदनातुरायै । अनङ्गरेखायै । अनङ्गवेगिन्यै । अनङ्गाङ्कुशायै । अनङ्गमालिन्यै । सर्वसंक्षोभणचक्रस्वामिन्यै । गुप्ततरयोगिन्यै नमः । १००

ओं सर्वसंक्षोभिण्यै नमः । सर्वविद्राविण्यै । सर्वाकर्षिण्यै । सर्वाह्लादिन्यै । सर्वसम्मोहिन्यै । सर्वस्तम्भिन्यै । सर्वजृम्भिण्यै । सर्ववशङ्कर्यै । सर्वरञ्जिन्यै । सर्वोन्मादिन्यै । सर्वार्थसाधिन्यै । सर्वसम्पत्तिपूरण्यै । सर्वमन्त्रमय्यै । सर्वद्वन्द्वक्षयङ्कर्यै । सर्वसौभाग्यदायक-

चक्रस्वामिन्यै । सम्प्रदाययोगिन्यै । सर्वसिद्धिप्रदायै । सर्वसम्पत्प्रदायै । सर्वप्रियङ्कर्यै । सर्वमङ्गलकारिण्यै नमः । १२०

ओं सर्वकामप्रदायै । सर्वदुःखविमोचिन्यै । सर्वमृत्युप्रशमिन्यै । सर्वविघ्ननिवारिण्यै । सर्वाङ्गसुन्दर्यै । सर्वसौभाग्यदायिन्यै । सर्वार्थसाधकचक्रस्वामिन्यै । कुलोत्तीर्णयोगिन्यै । सर्वज्ञायै । सर्वशक्त्यै । सर्वैश्वर्यप्रदायै । सर्वज्ञानमय्यै । सर्वव्याधिविनाशिन्यै । सर्वाधारस्वरूपायै । सर्वपापहरायै । सर्वानन्दमय्यै । सर्वरक्षास्वरूपिण्यै । सर्वेप्सितफलप्रदायै । सर्वरक्षाकरचक्रस्वामिन्यै । निगर्भयोगिन्यै नमः । १४०

ओं वशिन्यै नमः । कामेश्वर्यै । मोदिन्यै । विमलायै । अरुणायै । जयिन्यै । सर्वेश्वर्यै । कौलिन्यै । सर्वरोगहरचक्रस्वामिन्यै । रहस्ययोगिन्यै । बाणिन्यै । चापिन्यै । पाशिन्यै । अङ्कुशिन्यै । महाकामेश्वर्यै । महावज्रेश्वर्यै । महाभगमालिन्यै । महात्रिपुरसुन्दर्यै । सर्वसिद्धिप्रदचक्रस्वामिन्यै । अतिरहस्ययोगिन्यै नमः ॥ १६०

श्री श्रीमहाभट्टारिकायै नमः । सर्वानन्दमयचक्रस्वामिन्यै । परापररहस्ययोगिन्यै । त्रिपुरायै । त्रिपुरेश्यै । त्रिपुरसुन्दर्यै । त्रिपुरवासिन्यै । त्रिपुराश्रियै । त्रिपुरमालिन्यै । त्रिपुरासिद्धायै । त्रिपुराम्बमहात्रिपुरसुन्दर्यै । महामहेश्वर्यै । महामहाराज्ञ्यै । महामहाशक्त्यै । महामहागुप्तायै । महामहाज्ञप्तायै । महामहानन्दायै । महामहास्पन्दायै । महामहाशयायै । महामहाश्रीचक्रनगरसाम्राज्ञ्यै नमस्ते नमस्ते नमस्ते स्वाहा । १८०

# देवीवैभवाश्चर्याष्टोत्तरशतनामावलिः

ओं ऐं ह्रीं श्रीं परमानन्दलहर्यै नमः । परचैतन्यदीपिकायै । स्वयंप्रकाशकिरणायै । नित्यवैभवशालिन्यै । विशुद्धकेवलाखण्डसत्यकालात्मरूपिण्यै । आदिमध्यान्तरहितायै । महामायाविलासिन्यै । गुणत्रयपरिच्छेत्र्यै । सर्वतत्वप्रकाशिन्यै । स्त्रीपुंसभावरसिकायै । जगत्सर्गादिलम्पटायै । अशेषनामरूपादिभेदच्छेदरविप्रभायै । अनादिवासनारूपायै । वासनोद्यत्प्रपञ्चिकायै । प्रपञ्चोपशमप्रौढायै । चराचरजगन्मय्यै । समस्तजगदाधारायै । सर्वसंजीवनोत्सुकायै । भक्तचेतोमयानन्तस्वार्थवैभवविभ्रमायै । सर्वाकर्षणवश्यादिसर्वकर्मधुरन्धरायै नमः । २०

ओं विज्ञानपरमानन्दविद्यायै नमः । संतानसिद्धिदायै । आयुरारोग्यसौभाग्यबलश्रीकीर्तिभाग्यदायै । धनधान्यमणीवस्त्रभूषालेपनमाल्यदायै । गृहग्राममहाराज्यसाम्राज्यसुखदायिन्यै । सप्ताङ्गशक्तिसंपूर्णसार्वभौमफलप्रदायै । ब्रह्मविष्णुशिवेन्द्रादिपदविश्राणनक्षमायै । भुक्तिमुक्तिमहाभक्तिविरक्त्यद्वैतदायिन्यै । निग्रहानुग्रहाध्यक्षायै । ज्ञाननिर्द्वैतदायिन्यै । परकायप्रवेशादियोगसिद्धिप्रदायिन्यै । शिष्टसंजीवनप्रौढायै । दुष्टसंहारसिद्धिदायै । लीलाविनिर्मितानेककोटिब्रह्माण्डमण्डलायै । एकस्यै । अनेकात्मिकायै । नानारूपिण्यै । अर्धाङ्गिनेश्वर्यै । शिवशक्तिमय्यै । नित्यशृङ्गारैकरसप्रियायै नमः । ४०

ओ तुष्टायै नमः । पुष्टायै । अपरिच्छिन्नायै । नित्ययौवनमोहिन्यै । समस्तदेवतारूपायै । सर्वदेवाधिदेवतायै । देवर्षिपितृसिद्धादियोगिनीभैरवात्मिकायै । निधिसिद्धिमणीमुद्रायै । शस्त्रास्त्रायुधभासुरायै । छत्रचामरवादित्रपताकाव्यजनाञ्चितायै । हस्त्यश्वरथपादातामात्यसेनासुसेवितायै । पुरोहितकुलाचार्यगुरुशिष्यादिसेवितायै । सुधासमुद्रमध्योद्यत्सुरद्रमनिवासिन्यै । मणिद्वीपान्तरप्रोद्यत्कदंबवनवासिन्यै । चिन्तामणिगृहान्तःस्थायै । मणिमण्टपमध्यगायै । रत्नसिंहासनप्रोद्यच्छिवमञ्चाधिशायिन्यै । सदाशिवमहालिङ्गमूलसंघट्टयोनिकायै । अन्योन्यालिङ्गसंघर्षकण्डूसंक्षुब्धमानसायै । कळोद्यद्बिन्दुकाळिन्यातुर्यनादपरम्परायै नमः । ६०

ओं नादानन्तानन्दसंदोहस्वयंव्यक्तवचोऽमृतायै नमः । कामराजमहातन्त्ररहस्याचारदक्षिणायै । मकारपञ्चकोद्भूतप्रौढान्तोल्लाससुन्दर्यै । श्रीचक्रराजनिलयायै । श्रीविद्यामन्त्रविग्रहायै । अखण्डसच्चिदानन्दशिव-शक्त्यैक्यरूपिण्यै । त्रिपुरायै । त्रिपुरेशान्यै । महात्रिपुरसुन्दर्यै । त्रिपुरावासरसिकायै । त्रिपुराश्रीस्वरूपिण्यै । महापद्मवनान्तस्थायै । श्रीमत् त्रिपुरमालिन्यै । महात्रिपुरसिद्धाम्बायै । श्रीमहात्रिपुराम्बिकायै । नवचक्रक्रमादेव्यै । महात्रिपुरभैरव्यै । श्रीमात्रे । ललितायै । बालायै नमः । ८०

ओं राजराजेश्वर्यै नमः । शिवायै । उत्पत्तिस्थितिसंहारक्रमचक्रनिवासिन्यै । अर्धमेर्वात्मचक्रस्थायै । सर्वलोकमहेश्वर्यै । वल्मीकपुरमध्यस्थायै । जम्बूवननिवासिन्यै । अरुणाचलशृङ्गस्थायै । व्याघ्रालयनिवासिन्यै ।

श्रीकालहस्तिनिलयायै । काशीपुरनिवासिन्यै । श्रीमत् कैलासनिलयायै । द्वादशान्तमहेश्वर्यै । श्रीषोडशान्त-मध्यस्थायै । सर्ववेदान्तलक्षितायै । श्रुतिस्मृतिपुराणेति-हासागमकलेश्वर्यै । भूतभौतिकतन्मात्रदेवताप्राणहृन्मय्यै । जीवेश्वरब्रह्मरूपायै । श्रीगुणाढ्यायै । गुणात्मिकायै नमः । १००

ओं अवस्थात्रयनिर्मुक्तायै । वाग्रमोमामहीमय्यै । गायत्रीभुवनेशानीदुर्गाकाल्यादिरूपिण्यै । मत्स्यकूर्म-वराहादिनानारूपविलासिन्यै । महायोगीश्वराराध्यायै । महावीरवरप्रदायै । सिद्धेश्वरकुलाराध्यायै । श्रीमच्चरण-वैभवायै नमः । १०८

## वाराहीद्वादशनामावलिः

ओं पञ्चम्यै नमः । दण्डनाथायै । संकेतायै । समयेश्वर्यै । समयसङ्केतायै । वाराह्यै । पोत्रिण्यै । शिवायै । वार्ताल्यै । महासेनायै । आज्ञाचक्रेश्वर्यै । अरिघ्न्यै नमः । १२

## श्रीललितापञ्चविंशतिनामावलिः

ओं सिंहासनेश्यै नमः । ललितायै । महाराज्ञ्यै । वराङ्कुशायै । चापिन्यै । त्रिपुरायै । महात्रिपुरसुन्दर्यै । सुन्दरीचक्रनाथायै । सम्राज्ञ्यै । चक्रिण्यै । चक्रेश्वर्यै । महादेव्यै । कामेश्यै । परमेश्वर्यै । कामराजप्रियायै । काम-कोटिकायै । चक्रवर्तिन्यै । महाविद्यायै । शिवायै । अनङ्गवल्लभायै । सर्वपाटलायै । कुलनाथायै । आम्नाय-नाथायै । सर्वाम्नायनिवासिन्यै । शृङ्गारनायिकायै नमः ॥ (२५)

## सौभाग्याष्टोत्तरशतनामस्तोत्रम् ।

(त्रिपुरारहस्ये माहात्म्यखण्डतः)

(दत्तात्रेय - परशुरामसंवादः)

परशुराम उवाच—

अष्टोत्तरशतं नाम्नां श्रीदेव्या यत्प्रसादतः ।
कामः संप्राप्तवान् लोके सौभाग्यं सर्वमोहनम् ॥ १

सौभाग्यविद्यावर्णानामुद्धारो यत्र संस्थितः ।
तन्ममाचक्ष्व भगवन् कृपया मयि सेवके ॥ २

निशम्यैवं भार्गवोक्तिं दत्तात्रेयो दयानिधिः ।
प्रोवाच भार्गवं रामं मधुराक्षरपूर्वकम् ॥ ३

शृणु भार्गव यत्पृष्टं नाम्नामष्टोत्तरं शतम् ।
श्रीविद्यावर्णरत्नानां निधानमिव संस्थितम् ॥ ४

श्रीदेव्या बहुधा सन्ति नामानि शृणु भार्गव ।
सहस्रशतसंख्यानि पुराणेष्वागमेषु च ॥ ५

तेषु सारतमं ह्येतत्सौभाग्याष्टोत्तरं शतम् ।
यदुवाच शिवः पूर्वं भवान्यै बहुधार्थितः ॥ ६

सौभाग्याष्टोत्तरशतनामस्तोत्रस्य भार्गव ।
ऋषिरुक्तः शिवः छन्दोऽनुष्टुप् श्रीललिताम्बिका ॥ ७

देवता विन्यसेत्कूटत्रयेणावर्त्य सर्वतः ।
ध्यात्वा संपूज्य मनसा स्तोत्रमेतदुदीरयेत् ॥ ८

ओं ऐंह्रींश्रीं

कामेश्वरी कामशक्तिः कामसौभाग्य- दायिनी ।
कामरूपा कामकला कामिनी कमलासना ॥ ९

कमला कल्पनाहीना कमनीयकलावती।
कमलाभारतीसेव्या कल्पिताशेषसंस्थितिः ॥ १०

अनुत्तराऽनघाऽनन्ताऽद्भुतरूपाऽनलोद्भवा।
अतिलोकचरित्राऽतिसुन्दर्यतिशुभप्रदा॥ ११

अघहन्त्र्यतिविस्ताराऽर्चनतुष्टाऽमितप्रभा।
एकरूपैकवीरैकनाथैकान्तार्चनप्रिया॥ १२

एकैकभावतुष्टैकरसैकान्तजनप्रिया।
एधमानप्रभावैधद्भक्तपातकनाशिनी॥ १३

एलामोदलसन्मुख्येनोऽद्रिशक्रायुधस्थितिः।
ईहाशून्येप्सितेशादिसेव्येशानवराङ्गना॥ १४

ईश्वराज्ञापिकेकारभाव्येप्सितफलप्रदा।
ईशानेतिहरेक्षेषदरुणाक्षीश्वरेश्वरी॥ १५

ललिता ललनारूपा लयहीना लसत्तनुः।
लयसर्वा लयक्षोणिर्लयकर्त्री लयात्मिका॥ १६

लघिमा लघुमध्याढ्या ललमाना लघुद्रुता।
हयारूढा हतामित्रा हरकान्ता हरिस्तुता॥ १७

हयग्रीवेष्टदा हालाप्रिया हर्षसमुद्धता।
हर्षणा हल्लकाभाङ्गी हस्त्यन्तैश्वर्य दायिनी॥ १८

हलहस्तार्चितपदा हविर्दानप्रसादिनी।
रामा रामार्चिता राज्ञी रम्या रवमयी रतिः ॥ १९

रक्षिणी रमणी राका रमणीमण्डलप्रिया।
रक्षिताखिललोकेशा रक्षोगणनिषूदिनी॥ २०

अम्बाऽन्तकारिण्यंभोजप्रियाऽन्तकभयङ्करी।
अम्बुरूपाऽम्बुजकराऽम्बुजजातवरप्रदा॥ २१

अन्तः पूजाप्रियाऽन्तः स्वरूपिण्यन्तर्वचोमयी।
अन्तकारातिवामाङ्क स्थिताऽन्तः सुखरूपिणी ।। २२

सर्वज्ञा सर्वगा सारा समा समसुखा सती।
सन्ततिः सन्तता सोमा सर्वा सांख्या सनातनी ।। ओं २३

एतत्ते कथितं राम नाम्नामष्टोत्तरं शतम्।
अतिगोप्यमिदं नाम्नः सर्वतः सारमुद्धृतम् ।। २४

एतस्य सदृशं स्तोत्रं त्रिषु लोकेषु दुर्लभम्।
अप्रकाश्यमभक्तानां पुरतो देवताद्विषाम् ।। २५

एतत्सदाशिवो नित्यं पठत्यन्ये हरादयः।
एतत्प्रभावात्कन्दर्पः त्रैलोक्यं जयति क्षणात् ।। २६

सौभाग्याष्टोत्तरशतनामस्तोत्रं मनोहरम्।
यस्त्रिसन्ध्यं पठेन्नित्यं न तस्य भुवि दुर्लभम् ।। २७

श्रीविद्यावासनवतामेतदावश्यकं मतम्।
सकृदेतत्प्रपठतां नान्यत्कर्म विलुप्यते ।। २८

अपठित्वा स्तोत्रमिदं नित्यं नैमित्तिकं कृतम्।
व्यर्थीभवति नग्नेन कृतं कर्म यथा तथा ।। २९

सहस्रनामपाठादशक्तस्त्वेतदुदीरयेत्।
सहस्रनामपाठस्य फलं शतगुणं भवेत् ।। ३०

सहस्रधा पठित्वा तु वीक्षणान्नाशयेद्रिपून्।
सुवासिनीर्ब्राह्मणान्वा भोजयेद्यस्तु नामभिः ।। ३१

यश्च पुष्पैः फलैर्वाऽपि पूजयेत्प्रतिनामभिः।
चक्रराजेऽथवाऽन्यत्र स वसेच्छ्रीपुरे चिरम् ।। ३२

यः सदाऽऽवर्तयन्नास्ते नामाष्टशतमुत्तमम्।
तस्य श्रीललिता राज्ञी प्रसन्ना वाञ्छितप्रदा ।। ३३

—*—

# सौभाग्याष्टोत्तरशतनामावलिः

ओं ऐं ह्रीं श्रीं । क । कामेश्वर्यै नमः । कामशक्त्यै । कामसौभाग्यदायिन्यै । कामरूपायै । कामकलायै । कामिन्यै । कमलासनायै । कमलायै । कल्पनाहीनायै । कमनीयकलावत्यै । कमलाभारतीसेव्यायै । कल्पिताशेषसंसृत्यै नमः । १२

अ । अनुत्तरायै नमः । अनघायै । अनन्तायै । अद्भुतरूपायै । अनलोद्भवायै । अतिलोकचरित्रायै । अतिसुन्दर्यै । अतिशुभप्रदायै । अघहन्त्र्यै । अतिविस्तारायै । अर्चनतुष्टायै । अमितप्रभायै नमः । २४

ए । एकरूपायै नमः । एकवीरायै । एकनाथायै । एकान्तार्चनप्रियायै । एकायै । एकभावतुष्टायै । एकरसायै । एकान्तजनप्रियायै । एधमानप्रभावायै । एधद्भक्तपातकनाशिन्यै । एलामोदमुख्यै । एनोऽद्रिशक्रायुधस्थित्यै नमः । ३६

ई । ईहाशून्यायै । ईप्सितायै । ईशादिसेव्यायै । ईशानवराङ्गनायै । ईश्वराज्ञापिकायै । ईकारभाव्यायै । ईप्सितफलप्रदायै । ईशानायै । ईतिहरायै । ईक्षायै । ईषदरुणाक्ष्यै । ईश्वरेश्वर्यै नमः । ४८

ल । ललितायै नमः । ललनारूपायै । लयहीनायै । लसत्तनवे । लयसर्वायै । लयक्षोण्यै । लयकर्त्र्यै । लयात्मिकायै । लघिमायै । लघुमध्याढ्यायै । ललमानायै । लघुद्रुतायै नमः । ६०

ह । हयारूढायै नमः । हतामित्रायै । हरकान्तायै । हरिस्तुतायै । हयग्रीवेष्टदायै । हालाप्रियायै । हर्षसमुद्धतायै । हर्षणायै । हल्लकाभाङ्ग्यै । हस्त्यन्तैश्वर्यदायिन्यै । हलहस्तार्चितपदायै । हविर्दानप्रसादिन्यै नमः । ७२

र । रामायै नमः । रामार्चितायै । राज्ञ्यै । रम्यायै । रवमय्यै । रत्यै । रक्षिण्यै । रमण्यै । राकायै । रमणी-मण्डलप्रियायै । रक्षिताखिललोकेशायै । रक्षोगणनिषूदिन्यै नमः । ८४

अं । अम्बायै नमः । अन्तकारिण्यै । अम्भोजप्रियायै । अन्तकभयंकर्यै । अंबुरूपायै । अंबुजकरायै । अंबुज-जातवरप्रदायै । अन्तःपूजाप्रियायै । अन्तःस्वरूपिण्यै । अन्तर्वचोमय्यै । अन्तकाराति-वामाङ्क-स्थितायै । अन्तः सुखरूपिण्यै नमः । ९६

स । सर्वज्ञायै नमः । सर्वगायै । सारायै । समायै । समसुखायै । सत्यै । सन्तत्यै । सन्ततायै । सोमायै । सर्वायै । सांख्यायै । सनातन्यै नमः । १०८

(श्री विद्यापञ्चदशाक्षरीमन्त्रः क् अ ए ई ल ह् र् म् (बिन्दुः) स् इति नववर्णघटितः । द्वादशभिर्नामभिः एकैको वर्णः प्रकाशते । अतोऽस्य नामगणस्य सौभाग्याष्टोत्तरशतनामेति प्रथा ।)

—*—

# श्रीबालामूलमन्त्रनामत्रिशतीस्तोत्रम्

ओं अस्य श्री बालात्रिशतीस्तोत्रमहामन्त्रस्य, भगवान् महेश्वर ऋषिः । गायत्री छन्दः । श्री बालात्रिपुरसुन्दरी देवता। ऐं बीजं, क्लीं शक्तिः, सौः कीलकं, श्रीबालात्रिपुरसुन्दरीप्रीत्यर्थे नामपारायणे विनियोगः । ओं ऐं ह्रीं अङ्गुष्ठाभ्यां नमः । ओं क्लीं ह्रीं तर्जनीभ्यां नमः । सौः ह्रीं मध्यमाभ्यां नमः । सौः ह्रीं अनामिकाभ्यां नमः । क्लीं ह्रीं कनिष्ठिकाभ्यां नमः । ऐं ह्रीं करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । ध्यानम्—

पीतां पद्ममुखीं समन्दहसितां कारुण्यपूर्णेक्षणां
ताटङ्कोज्वलरत्नहारतरलस्रङ्मेखलाद्यावृताम्।
हस्तैरक्षवटाब्जपुस्तकशुकां स्वर्णाम्बरालङ्कृतां
वन्दे मङ्गलदां शशाङ्कमकुटां श्रीबालगौरीं पराम्।।

लमित्यादिपञ्चपूजा—

ऐंकारपरचिद्रूपा ऐंकारा ऐन्द्रभोगदा।
ऐंकारपरमाकाशा ऐंकाराद्भुतमारुता।। १
ऐंकारश्री महातेजा ऐंकारपरमामृता।
ऐंकारपरमापृथ्वी ऐंकारश्रीदिवाकरा।। २
ऐंकारपूर्णिमाचन्द्रा ऐंकारयजमानिका।
ऐंकारामृतमाधुर्यमहासागरमध्यगा।। ३
ऐंकारादित्रिकोणान्तरतिप्रीत्यादिपूजिता।
ऐंकारबहिः षट्कोण डाकिन्यंबादिसेविता।। ४

ऐंकारकोणाष्टदले रमाब्राह्मयादिसंयुता।
ऐंकारादिमन्वनङ्गमालिन्यादिभिरर्चिता॥ ५

ऐन्द्रयाद्यष्टदलाग्रेषु असितांगादिसेविता।
ऐंकारादिमहामन्त्राद्वशिन्यादिप्रपूजिता॥ ६

ऐन्द्रादिभूपुरान्तस्थबहिरष्टदलावृता।
ऐन्द्रोपेन्द्रविधीशादि देवसंस्तुतवैभवा॥ ७

ऐङ्कारार्णमहाभानुमण्डलालयमध्यगा।
ऐंकारबीजमकुटदिव्यरत्नमहाद्युतिः॥ ८

ऐंकारदिव्यश्रीवेणीबद्धालङ्कृतमञ्जरी।
ऐंकारमस्तकाग्रस्थ चूडालङ्कृतभूषणा॥ ९

ऐंकारदिव्यश्रीफालकस्तूरीतिलकोज्ज्वला।
ऐंकारदिव्यभ्रुकुटी चैन्द्रचापशुभाकृतिः॥ १०

ऐंकारनासिकापार्श्वे शुक्राकारविभूषणा।
ऐंकारमनुकर्णाग्ररविताटङ्कमण्डला॥ ११

ऐंकार श्रीविशालाक्षिनिष्यन्दकरुणामृता।
ऐंकारमन्त्रजिह्वाग्रभाषणामृतसागरा॥ १२

ऐंकाराधरबिम्बान्तर्दन्तपंक्तिसुमौक्तिका।
ऐंकारमन्त्रवदन दिव्यसंपूर्णसुन्दरा॥ १३

ऐंकार शुभकण्ठान्तर्बद्धमांगल्यशोभिता।
ऐंकारालकसौगन्धिरैंकारभ्रमरस्वना॥ १४

ऐंकारमञ्जरीगन्धा चैंकाराब्जसुधाप्लुता।
ऐंकारवीणासंगीता ऐंकारवचनामृता॥ १५

ऐंकारगीतरसिका ऐंकाराद्रिसुधाझरी।
ऐंकारमन्त्रसर्वाङ्गदिव्यसंपूर्णसुन्दरा॥ १६

ऐंकारपंजरशुकी ऐंकारोद्यानकोकिला।
ऐंकारारण्यहरिणी ऐंकारस्वर्णपङ्कजा॥ १७

ऐंकारवसुधावृष्टिः ऐंकारभुवनेश्वरी।
ऐंकारस्वर्णमञ्जूषामणिरैंकारविग्रहा॥ १८

क्लींकाररूपा क्लींमूर्तिः क्लींकारहृदयान्तरा।
क्लींकारहृदयानन्दा क्लीं मनाः क्लीं महासुधा॥ १९

क्लीं कारस्तन्यपुलका क्लींकारकुचकोमला।
क्लींकारकुचकुम्भाग्रमुक्तालंकृतमालिका॥ २०

क्लींकारभुजलावण्या क्लींकारभुजमालिका।
क्लींकारबाहुवलया क्लींकारस्तनकञ्चुका॥ २१

क्लींकारहस्तकटका क्लींकारकरपुस्तका।
क्लींकाररत्नवलया क्लींकारशुकभाषिणी॥ २२

क्लींकारमञ्जरीगन्धा क्लींकारमालतीमधुः।
क्लींकारोदरमध्यस्था क्लींकारोदरपट्टिका॥ २३

क्लींकारकट्यंम्बरा च तथा क्लींकारमेखला।
क्लींकारकाञ्चीसुमणिः क्लींकारारवमेखला॥ २४

क्लींकार हारश्रीरत्ना क्लींकारमणितेजसी।
क्लींकारगन्धरसिका क्लींसुगन्धानुलेपनी॥ २५

क्लींकारसोमकिरणा क्लींकाररवितेजसी।
क्लींकारतारकानाथा क्लींकारचन्द्रिकामृता॥ २६

क्लींकारामृतमाधुर्या क्लींकारकलशामृता।
क्लींकारहृदिसन्तुष्टा क्लींचित्ता क्लींमनोहरा।। २७

क्लींकाराखसुप्रीता क्लींकारकरमुद्रिका।
क्लींकारोद्यानहरिणी क्लींकारवरकल्पका।। २८

क्लींकारवृक्षसुफला क्लींकारवरमारुता।
क्लींकारसुमसौगन्धा क्लींकारसुममञ्जरी।। २९

क्लींकारकटिलावण्या क्लींमानन्दनितम्बिनी।
क्लींकारवनितालोला क्लींमानन्दविलासिनी।। ३०

सौःकाररूपा सौःकारी सौःपरा सौर्दराधिका।
सौन्दरी सौःकला सौःम्या सौर्बीजा सौःकृपानिधिः।। ३१

सौर्भगा सौर्भगानन्दा सौःकारानन्दविग्रहा।
सौः कारकमलारूढा सौः काराब्जसुधामयी।। ३२

सौः कारमेरुमध्यस्था सौः कारमलयानिला।
सौः कारमन्त्रोरुबला सौःकारपटशायिनी।। ३३

सौः पदा सौःपादजाला सौः कारपदनूपुरा।
सौःकारकमलाधारा सौःकारकमलेन्दिरा।। ३४

सौःकारहंसिकारूढा सौःकारालयविग्रहा।
सौःकारालयमध्यस्था सौःकारालयदीपिका।। ३५

सौःकाराकाशपूर्णेन्दुः सौःकाराब्जदिवाकरा।
सौःकारान्दोलिकारूढा सौःकारोत्सवकौतुका।।३६

सौः कार कल्पक शुकी सौःप्रभामण्डलस्थिता।
सौःकारसिंहगमना सौःकारवृषवाहना।। ३७

सौरित्यैरावतारूढा सौःकारशुकवाहना।
सौःकारतुरगारूढा सौःकाररथशेखरा॥ ३८

सौःकाररथमध्यस्था सौःकाररथकेतना।
सौःकारानुग्रहकरा सौःकारवरदायिनी॥ ३९

सौःकारतीर्थफलदा सौः काराब्धिमहामणिः।
सौःकारहिमवद्बाला सौःकारग्रहमङ्गला॥ ४०

सौःकारग्रहमूलस्था सौःकारमूलविग्रहा।
सौःकारभुवनाधीशा सौःह्रींकारसदाशिवा॥ ४१

सौन्दर्यरूपा सौःबाला सौन्दर्यानन्दलक्षणा।
सौन्दर्यगिरिसंभूता सौन्दर्यकरुणमृता॥ ४२

सौन्दर्यविद्रुमलता सौन्दर्यश्रीपयोनिधिः।
सौन्दर्यक्षीरमधुरा सौन्दर्यपयसां घृता॥ ४३

सौन्दर्यार्णवकल्लोला सौन्दर्यार्णवचन्द्रिका।
सौन्दर्यानन्दनिलया सौन्दर्यानन्दविग्रहा॥ ४४

सौन्दर्यकरुणासिन्धुः सौन्दर्यकरुणामयी।
सौन्दर्याज्यमहादीपा सौन्दर्यदीपिकाप्रभा॥ ४५

सौन्दर्यमेघसलिला सौन्दर्यामृतशीतला।
सौन्दर्यगंगावेगाब्धिः सौन्दर्यार्णवविद्रुमा॥ ४६

सौन्दर्यमणिसंकाशा सौन्दर्यमणिमालिका।
सौन्दर्यरत्नमकुटा सौन्दर्यतिलकाञ्चिता॥ ४७

सौन्दर्यगलमाङ्गल्या सौन्दर्यानन्दभूषणा।
सौन्दर्यमेरुशिखरा सौन्दर्यशशिभूषणा॥ ४८

सौन्दर्यपूर्णिमाचन्द्रा सौन्दर्यकल्पकद्रुमा।
सौन्दर्यकल्पकफला सौन्दर्यतटपङ्कजा॥ ४९

सौन्दर्यवापिकाहंसा सौन्दर्यारण्यचम्पका।
सौन्दर्य तटकल्हारा सौन्दर्योत्पलमालिका॥ ५०

सौन्दर्यनीपकुसुमा सौन्दर्यगिरिचन्दना।
सौन्दर्यतरुणीलीला सौन्दर्याङ्किक यौवना॥ ५१

सौन्दर्यारण्यहरिणी सौन्दर्यकोकिलस्वरा।
सौन्दर्यकल्पकशुका सौन्दर्यवनमञ्जरी॥ ५२

सौन्दर्ययुवतीलोला सौन्दर्यवरकन्यका।
सौन्दर्यसागरक्षीरनवनीतरसामृता॥ ५३

सौः क्लीं ह्रीं मातृकामूर्तिः क्लीं ऐं अच्युतसोदरी।
क्लीं ह्रीं आदिपराशक्तिः क्लीं श्रीं इष्टफलप्रदा॥ ५४

क्लीं ऐं ईशमनोरम्या क्लीं सौरुत्कृष्टपादुका।
क्लीं ह्रीं ऊर्जितविज्ञाता क्लीं श्रीं रुद्रगणार्चिता॥ ५५

क्लीं ऐं रू(ॠ)पगुणातीता क्लीं सौः लु(ऌ)ब्धविदूरका।
क्लीं ह्रीं लू(ॡ)ताहिविषघ्नी क्लीं श्रीं एकान्तपूजिता॥ ५६

क्लीं ऐं ऐश्वर्यफलदा क्लीं सौः ओजःस्वरूपिणी।
क्लीं ह्रीं औदार्यसच्चित्ता क्लीं श्रीं अम्बुजलोचना॥ ५७

क्लीं ऐं अ(ः) क्रमपापघ्नी क्लीं सौः कल्याणसंपदा।
क्लीं ह्रीं खड्गगदाहस्ता क्लीं श्रीं गन्धर्वसेविता॥ ५८

क्लीं ऐं घनलसद्वेणी क्लीं ङवर्णात्मरूपिणी।
क्लीं ऐं चांपेयसुप्रीता क्लीं सौः छन्दःकलामयी॥ ५९

क्लीं ह्रीं जयरमानाथा क्लीं झलंझलनूपुरा ।
क्लीं सौः ज्ञानपरज्योतिः क्लीं ह्रीं टङ्कमृगीधरा ॥ ६०

क्लीं ह्रीं ठं सोमपीठस्था क्लीं एं डंभविवर्जिता ।
क्लीं सौः ढक्कादिनादस्था क्लीं ह्रीं णं नन्दिवाहना ॥ ६१

क्लीं ह्रीं तत्वार्थविज्ञाना क्लीं ऐं स्थाणुविमोहिनी ।
क्लीं ह्रीं दमनसुप्रीता क्लीं श्रीं धर्मविवर्धिनी ॥ ६२

क्लीं नवग्रहदोषघ्नी क्लीं सौः परसुखप्रदा ।
क्लीं ह्रीं फालाक्षसार्धाङ्गी क्लीं श्रीं ह्रीं बर्बरालका ॥ ६३

क्लीं ऐं भक्तभयार्तिघ्नी क्लीं सौः मन्त्रार्थविग्रहा ।
क्लीं ह्रीं यन्त्रेश्वरी देवी क्लीं श्रीं राजसुखप्रदा ॥ ६४

क्लीं ऐं लक्ष्म्यादिनमिता क्लीं सौः वाण्यादिपूजिता ।
क्लीं ह्रीं शशिकलाचूडा क्लीं सौः श्रीषण्मुखप्रसूः ॥ ६५

क्लीं ऐं समस्तलोकेशी क्लीं सौः हंसमहारथा ।
क्लीं श्रीं ह्रीं ळमिदं जप्यक्षमापूर्णमहोदधिः ॥ ६६

ऐं क्लीं ओं भूस्तत्वरूपा ऐं भुवः सर्वसंपदा ।
ऐं श्रीं सुवरिति ज्ञाता ऐं ह्रीं भूर्भुवतृप्तिदा ॥ ६७

ऐं भूर्भुवस्स्वरवरा ऐं भूरेणुमहान्तवित् ।
ऐं भुववाणि निगमा ऐं सुवर्यजुषांपतिः ॥ ६८

ऐं भूर्भुवादिभूमूर्तिः ऐं भूः गोविन्दरूपिणी ।
ऐं भुवर्देवदेवेशी ऐं ह्रीं सुवर्वरानना ॥ ६९

ऐं भूरादिस्यन्दिनी ऐं भुवस्सुवरधीमता ।
ऐं ह्रीं स्वरमहादेवी ऐं ह्रीं भूः हिमशैलजा ॥ ७०

ऐं भुवर्धीरसंस्तुत्या ऐं सुवर्योगपीठिका।
ऐं भूर्भुवस्स्वरज्योत्स्ना ओं भूर्नारायणार्चिता ॥ ७१
ऐं भुवः प्रणवप्राणा ऐं सुवश्चोरभञ्जिनी।
ऐं भूरादिदयामूर्तिः ऐं ओं ह्रीं यज्ञपुण्यदा ॥ ७२
ऐं ह्रीं नं नवशक्त्यात्मा ऐं ह्रीं मं मन्त्रनायिका।
ऐं ह्रीं शिं शिववामाङ्गा ऐं ह्रीं वं वामपूजिता ॥ ७३
ऐं ह्रीं यं यज्ञगंगादिस्नानदानफलप्रदा।
ऐं श्रीं शं शङ्करानन्दा ऐं क्लीं रं राजवल्लभा ॥ ७४
ऐं ह्रीं वं वामनयना ऐं क्लीं णं नयनत्रया।
ऐं सौः भं भवरोगघ्नी ऐं ईं वं वरकल्पका ॥ ७५
ऐं क्लीं कनकशैलस्था ऐं सौः एकाक्षरात्मिका।
ऐं क्लीं ईश्वरसुप्रीता ऐं सौः श्री ललितांबिका ॥ ७६
ऐं क्लीं ह्रीं मन्त्रनिलया ऐं सौः श्रीहरवल्लभा।
ऐं सौः सदाशिवब्रह्म ऐं क्लीं करुणविग्रहा ॥ ७७
ऐं सौः हत्यादिदोषघ्नी ऐं क्लीं लंबोदर प्रसूः।
ऐं सौः श्रीं ह्रीं परब्रह्म ऐं क्लीं सर्वसुरार्चिता ॥ ७८
ऐं क्लीं सौः कलिदोषघ्नी ऐं क्लीं लक्षाण्डनायिका।
ऐं क्लीं सौः ह्रीं मनुजपात्सद्यः परमसौख्यदा ॥ ७९

—भैरवयामलतः

—*—

# श्री बालामूलमन्त्रत्रिशतीनामावलिः

ओं ऐं ह्रीं श्रीं । ऐंकारपरचिद्रूपायै नमः । ऐंकारायै । ऐन्द्रभोगदायै । ऐंकारपरमाकाशायै । ऐंकाराद्भुतमारुतायै । ऐंकारश्रीमहातेजसे । ऐं कारपरामृतायै । ऐं कारपरमायै पृथ्व्यै । ऐंकारश्रीदिवाकरायै । ऐंकारपूर्णिमाचन्द्रायै । ऐंकारयजमानिकायै । ऐंकारामृतमाधुर्यमहासागरमध्यगायै । ऐंकारादित्रिकोणान्तररतिप्रीत्यादिपूजितायै । ऐंकारबहिः षट्कोणडाकिन्यम्बादिसेवितायै । ऐंकारकोणाष्टदले रमाब्राह्म्यादि संयुतायै । ऐंकारादिमन्वनङ्गमालिन्यादिभिरर्चितायै । ऐन्द्राद्यष्टदलाग्रेषु असिताङ्गादिसेवितायै । ऐंकारादिमहामन्त्राद्धशिन्यादिप्रपूजितायै । ऐन्द्रादिभूपुरान्तस्थबहिरष्टदलावृतायै । ऐन्द्रोपेन्द्रविधीशादिदेवसंस्तुतवैभवायै नमः । २०

ऐंकारार्णमहाभानुमण्डलालयमध्यगायै नमः । ऐंकारबीजमकुटदिव्यरत्नमहाद्युतये । ऐंकारदिव्यश्रीवेणीबद्धालङ्कारमञ्जर्यै । ऐंकारमस्तकाग्रस्थचूडालङ्कृतभूषणायै । ऐंकारदिव्यश्रीफालकस्तूरीतिलकोज्ज्वलायै । ऐंकारदिव्यभ्रुकुट्यै । ऐन्द्रचापशुभाकृत्यै । ऐंकारनासिकापार्श्वशुक्राकारविभूषणायै । ऐंकारमनुकर्णाग्ररविताटङ्कमण्डलायै । ऐंकारश्रीविशालाक्षिनिष्यन्दिकरुणामृतायै । ऐंकारमन्त्रजिह्वाग्रभाषणामृतसागरायै । ऐंकाराधरबिंबान्तर्दन्तपंक्तिसुमौक्तिकायै । ऐंकारमन्त्रवदनदिव्यसंपूर्णसुन्दरायै । ऐंकारशुभकण्ठान्तर्बद्धमाङ्गल्यशोभितायै । ऐंकारालकसौगन्धये । ऐंकारभ्रमरस्वनायै ।

ऐंकारमञ्जरीगन्धायै । ऐंकाराब्जसुधाप्लुतायै । ऐंकार-वीणासंगीतायै। ऐंकारवचनामृतायै नमः। ४०

ऐंकारगीतरसिकायै नमः । ऐंकाराद्रिसुधाझर्यै । ऐंकारमन्त्रसर्वाङ्गदिव्यसंपूर्णसुन्दरायै। ऐंकारपञ्जरशुक्यै। ऐंकारोद्यानकोकिलायै । ऐंकारारण्यहरिण्यै । ऐंकार-स्वर्णपङ्कजायै । ऐंकारवसुधावृष्ट्यै । ऐंकारभुवनेश्वर्यै । ऐंकारस्वर्णमञ्जूषामणये । ऐंकारविग्रहायै । क्लींकार-रूपायै। क्लींमूर्त्यै । क्लींकारहृदयान्तरायै । क्लींकार-हृदयानन्दायै । क्लींमनसे । क्लींमहासुधायै । क्लींकार-स्तन्यपुलकायै । क्लींकारकुचकोमलायै । क्लींकार-कुचकुम्भाग्रमुक्तालङ्कृतमालिकायै नमः। ६०

क्लींकारभुजलावण्यायै नमः। क्लींकारभुजमालिकायै। क्लींकारबाहुवलयायै । क्लींकारस्तनकञ्चुकायै । क्लींकार-हस्तकटकायै। क्लींकारकरपुस्तकायै। क्लींकाररत्नवलयायै। क्लींकारशुकभाषिण्यै । क्लींकारमञ्जरीगन्धायै । क्लींकार-मालतीमधवे । क्लींकारोदरमध्यस्थायै । क्लींकारोदर-पट्टिकायै । क्लींकारकट्यम्बरायै । क्लींकारकटिमेखलायै । क्लींकारकाञ्चीसुमणये । क्लींकाररवमेखलायै । क्लींकार-हारश्रीरत्नायै। क्लींकारमणितेजस्यै। क्लींकारगन्धरसिकायै। क्लीं सुगन्धानुलेनायै नमः। ८०

क्लींकारसोमकिरणायै नमः । क्लींकाररवितेजस्यै । क्लींकारतारकानाथायै। क्लींकारचन्द्रिकामृतायै। क्लींकारा-मृतमाधुर्यायै । क्लींकारकलशामृतायै । क्लींकारहृदि-सन्तुष्टायै । क्लींचित्तायै । क्लींमनोहरायै । क्लींकारारवसु-प्रीतायै । क्लींकारकरमुद्रिकायै । क्लींकारोद्यानहरिण्यै ।

क्लींकारवरकल्पकायै । क्लींकारवृक्षसुफलायै । क्लींकारवरमारुतायै । क्लींकारसुमसौगन्धायै । क्लींकारसुममञ्जर्यै । क्लींकारकटिलावण्यायै । क्लीं आनन्दनितंबिन्यै । क्लींकारवनितालोलायै नमः । १००

क्लीमानन्दविलासिन्यै नमः । सौःकाररूपायै । सौःकार्यै । सौः परायै । सौर्दराधिकायै । सौन्दर्यै । सौः कलायै । सौःम्यायै । सौः बीजायै । सौः कृपानिधये । सौः भगायै । सौः भगानन्दायै । सौः कारानन्दविग्रहायै । सौःकारकमलारूढायै । सौः काराब्जसुधामय्यै । सौः कारमेरुमध्यस्थायै । सौःकारमलयानिलायै । सौःकारमन्त्रोरुबलायै । सौःकारपटशायिन्यै । सौःपदायै नमः । १२०

सौः पादजालायै नमः । सौःकारपदनूपुरायै । सौःकार कमलाधारायै । सौःकारकमलेन्दिरायै । सौःकार हंसिकारूढायै । सौःकारालयविग्रहायै । सौःकारालयमध्यस्थायै । सौःकारालयदीपिकायै । सौःकाराकाशपूर्णेन्दवे । सौःकाराब्जदिवाकरायै । सौःकारान्दोलिकारूढायै । सौःकारोत्सवकौतुकायै । सौःकारकल्पकशुक्यै । सौःप्रभामण्डलस्थितायै । सौःकारसिंहगमनायै । सौःकारवृषवाहनायै । सौरित्यैरावतारूढायै । सौःकारशुकवाहनायै । सौःकारतुरगारूढायै । सौःकाररथशेखरायै नमः । १४०

ओं सौःकाररथमध्यस्थायै नमः । सौःकाररथकेतनायै । सौःकारानुग्रहकरायै । सौःकारवरदायिन्यै । सौःकारतीर्थफलदायै । सौःकाराब्धिमहामणये । सौःकार-

हिमवद्बालायै । सौःकारग्रहमङ्गलायै । सौःकारग्रह-मूलस्थायै। सौःकारमूलविग्रहायै। सौःकारभुवनाधीशायै। सौः ह्रींकारसदाशिवायै । सौन्दर्यरूपायै । सौःबालायै । सौन्दर्यानन्दलक्षणायै । सौन्दर्यगिरिसंभूतायै । सौन्दर्य-करुणामृतायै। सौन्दर्यविद्रुमलतायै। सौन्दर्यश्रीपयोनिधये। सौन्दर्यक्षीरमधुरायै नमः १६०

ओं सौन्दर्यपयसां घृतायै नमः । सौन्दर्यार्णव-कल्लोलायै । सौन्दर्यार्णवचन्द्रिकायै । सौन्दर्यानन्द-निलयायै। सौन्दर्यानन्दविग्रहायै। सौन्दर्यकरुणासिन्धवे। सौन्दर्यकरुणामय्यै । सौन्दर्याज्यमहादीपायै । सौन्दर्य-दीपिकाप्रभायै । सौन्दर्यमेघसलिलायै । सौन्दर्यामृतशी-तलायै । सौन्दर्यगंगावेगाब्धये । सौन्दर्यार्णवविद्रुमायै । सौन्दर्यमणिसंकाशायै । सौन्दर्यमणिमलिकायै । सौन्दर्य-रत्नमकुटायै । सौन्दर्यतिलकाञ्चितायै । सौन्दर्यगल-मांगल्यायै । सौन्दर्यानन्दभूषणायै । सौन्दर्यमेरुशिखरायै नमः । १८०

ओं सौन्दर्यशशिभूषणायै नमः । सौन्दर्यपूर्णिमा-चन्द्रायै । सौन्दर्यकल्पकद्रुमायै । सौन्दर्यकल्पकफलायै । सौन्दर्यतटपंकजायै । सौन्दर्यवापिकाहंसायै । सौन्दर्या-रण्यचम्पकायै । सौन्दर्यतटकल्हारायै । सौन्दर्योत्पल-मालिकायै। सौन्दर्यनीपकुसुमायै। सौन्दर्यगिरिचन्दनायै। सौन्दर्यतरुणीलीलायै। सौन्दर्याङ्कयौवनायै। सौन्दर्या-रण्यहरिण्यै । सौन्दर्यकोकिलस्वरायै । सौन्दर्यकल्प-कशुकायै । सौन्दर्यवनमञ्जर्यै । सौन्दर्ययुवतीलोलायै । सौन्दर्यवरकन्यकायै । सौन्दर्यसागरक्षीरवनीतरसामृतायै नमः । २००

सौः क्लीं ह्रीं मातृकामूर्त्यै नमः । क्लीं ऐं अच्युत सोदर्यै । क्लीं ह्रीं आदिपराशक्त्यै । क्लीं श्रीं इष्टफलप्रदायै । क्लीं ऐं ईशमनोरम्याय । क्लीं सौः उत्कृष्टपादुकायै । क्लीं ह्रीं ऊर्जितविज्ञातायै । क्लीं श्रीं रु(ऋ)द्रगणार्च्चितायै । क्लीं ऐं रू(ॠ)पगुणातीतायै । क्लीं सौः लु(लृ)ब्धविदूरकायै । क्लीं ह्रीं लू(ॡ)ताहिविषघ्न्यै । क्लीं श्रीं एकान्तपूजितायै । क्लीं ऐं ऐश्वर्यफलदायै । क्लीं सौः ओजःस्वरूपिण्यै । क्लीं ह्रीं औदार्यसच्चित्तायै । क्लीं श्रीं अम्बुजलोचनायै । क्लीं ऐं अ(ः)क्रमपापघ्न्यै । क्लीं सौः कल्याणसंपदायै । क्लीं ह्रीं खड्गगदाहस्तायै । क्लीं श्रीं गन्धर्वसेवितायै नमः । २२०

क्लीं ऐं घनलसद्वेण्यै नमः । क्लीं ङवर्णात्मरूपिण्यै । क्लींऐं चाम्पेयसुप्रीतायै । क्लीं सौः छन्दःकलामय्यै । क्लीं ह्रीं जयरमानाथायै । क्लीं झलंझलन्नूपुरायै । क्लीं सौः ज्ञानपरज्योतिषे । क्लीं ह्रीं टंकमृगीधरायै । क्लीं ह्रीं ठं सोमपीठस्थायै । क्लीं ऐं डम्भविवर्जितायै । क्लींसौः ढक्कादिनादस्थायै । क्लीं ह्रीं णं नन्दिवाहनायै । क्लीं ह्रीं तत्वार्थविज्ञानायै । क्लीं ऐं स्थाणुविमोहिन्यै । क्लीं ह्रीं दमनसुप्रीतायै । क्लीं श्रीं धर्मविवर्धिन्यै । क्लीं नवग्रहदोषघ्न्यै । क्लीं सौः परसुखप्रदायै । क्लीं ह्रीं फालाक्षसार्धाङ्ग्यै । क्लीं ह्रीं श्रीं बर्बरालकायै नमः । २४०

क्लीं ऐं भक्तभयार्तिघ्न्यै नमः । क्लीं सौः मन्त्रार्थविग्रहायै । क्लीं ह्रीं यन्त्रेश्वर्यै । क्लीं श्रीं राजसुखप्रदायै । क्लीं ऐं लक्ष्म्यादिनमितायै । क्लीं सौः वाण्यादिपूजितायै । क्लीं ह्रीं शशिकलाचूडायै । क्लीं सौः श्रीषण्मुखप्रसुवे । क्लीं ऐं समस्तलोकेश्यै । क्लीं सौः हंसमहारथायै । क्लींश्रीं ह्रीं ळमिदं

जप्यक्षमापूर्णमहोदधये ।ऐं क्लीं भूस्तत्त्वरूपायै । ऐं भुवः सर्वसंपदायै। ऐं श्रीं सुवरितिज्ञातायै। ऐं ह्रीं भूर्भुवस्तृप्तिदायै। ऐं भूर्भुवस्स्वरवरायै । ऐं भूरेणुमहान्तविदे । ऐं भुववाणि-निगमायै । ऐं सुवर्यजुषां पत्ये । ऐं भूर्भुवादिभूमूर्त्यै नमः। २६०

ऐं भूर्गोविन्दरूपिण्यै नमः । ऐं भुवर्देवदेवेश्यै। ऐं ह्रीं सुवर्वरानानायै। ऐं भूरादिस्यन्दिन्यै। ऐं भुवस्सुवरधीमतायै। ऐं ह्रीं स्वरमहादेव्यै । ऐं ह्रीं भूः हिमशैलजायै । ऐं भुवर्धीरसंस्तुत्यायै । ऐं सुवर्योगपीठिकायै । ऐं भूर्भुवः-स्वरज्योत्स्नायै । ओं भूर्नारायणार्च्चितायै । ओं भुवः प्रणवप्राणायै। ऐं सुवश्चोरभञ्जिन्यै। ऐं भूरादिदयामूर्त्यै। ऐं ओं ह्रीं यज्ञपुण्यदायै । ऐं ह्रीं नं नवशक्त्यात्मने । ऐं ह्रीं मं मन्त्रनायिकायै । ऐं ह्रीं शिं शिववामाङ्गायै । ऐं ह्रीं वं वामपूजितायै । ऐं ह्रीं यं यज्ञगङ्गादिस्नानदानफलप्रदायै नमः ।२८०

ऐं श्रीं शं शङ्करानन्दायै नमः । ऐं क्लीं रं राजवल्लभायै। ऐं ह्रीं वं वामनयनायै । ऐं ह्रीं णं नयनत्रयायै । ऐं सौः भं भवरोगघ्न्यै । ऐं ईं वं वरकल्पकायै। ऐं क्लीं कनकशैलस्थायै। ऐं सौः एकाक्षरात्मिकायै । ऐं क्लीं ईश्वरसुप्रीतायै । ऐं सौः श्रीललिताम्बिकायै । ऐं क्लीं ह्रीं मन्त्रनिलयायै । ऐं सौः श्रीहरवल्लभायै । ऐं सौः सदाशिवब्रह्मणे । ऐं क्लीं करुणविग्रहायै । ऐंसौः हत्यादिदोषघ्न्यै । ऐं क्लीं लम्बोदरप्रसुवे । ऐं सौः श्रीं ह्रीं परब्रह्मणे । ऐं क्लीं सर्वसुरार्च्चितायै । ऐं क्लीं सौः कलिदोषघ्न्यै । ऐं क्लीं

लक्षाण्डनायिकायै । ऐं क्लीं सौः ह्रीं मनुजपात्सद्यः परमसौख्यदायै नमः । ३०१ श्री बालाम्बायै नमः ।

(बालायाः षडक्षर्या ऐं क्लीं सौः सौः क्लीं ऐं इत्यैकैकाक्षरघटितपञ्चदशनामभिः घटितेयं त्रिशती, ऐं ह्रीं श्रीं इति त्र्यक्षर्या नमः शिवायेति पञ्चाक्षर्या, अकारादिक्षकारान्तमातृकाभिः शरवणभवेति षडक्षर्या पञ्चदशाक्षर्या च मध्ये योजिता हृद्या अमितफलदेति वृद्धाः ।)

## श्री श्यामलासहस्रनामस्तोत्रम्

(नामसारस्तवः)

सर्वशृङ्गारशोभाढ्यां तुङ्गपीनपयोधराम् ।
गङ्गाधरप्रियां देवीं मातङ्गीं नौमि सन्ततम् ।। १

श्रीमद्वैकुण्ठनिलयं श्रीपतिं सिद्धसेवितम् ।
कदाचित्स्वप्रियं लक्ष्मीर्नारायणमपृच्छत ।। २

लक्ष्मीरुवाच—

किं जप्यं परमं नृणां भोगमोक्षफलप्रदम् ।
सर्ववश्यकरं चैव सर्वैश्वर्यप्रदायकम् ।। ३

सर्वरक्षाकरं चैव सर्वत्र विजयप्रदम् ।
ब्रह्मज्ञानप्रदं पुंसां तन्मे ब्रूहि जनार्दन ।। ४

भगवानुवाच—

नामसारस्तवं पुण्यं पठेन्नित्यं प्रयत्नतः ।
तेन प्रीता श्यामलाम्बा त्वद्वशं कुरुते जगत् ।। ५

तन्त्रेषु ललितादीनां शक्तीनां नामकोशतः ।
सारमुद्धृत्य रचितो नामसारस्तवो ह्ययम् ॥ ६

नामसारस्तवं मह्यं दत्तवान् परमेश्वरः ।
तव नामसहस्रं तत् श्यामलाया वदाम्यहम् ॥ ७

अस्य श्रीश्यामलापरमेश्वरीनामसाहस्रस्तोत्रमाला-मन्त्रस्य, सदाशिव ऋषिः । अनुष्टुप्छन्दः । श्रीराजराजेश्वरी श्यामला परमेश्वरी देवता । चतुर्विधपुरुषार्थसिद्ध्यर्थे नामपारायणे विनियोगः । ध्यानम्—

ध्यायेऽहं रत्नपीठे शुककलपठितं शृण्वतीं श्यामगात्रीं
न्यस्तैकांघ्रिं सरोजे शशिशकलधरां वल्लकीं वादयन्तीम् ।
कल्हाराबद्धमौलिं नियमितलसच्चूलिकां रक्तवस्त्रां
मातङ्गीं भूषिताङ्गीं मधुमदमुदितां चित्रकोद्भासिफालाम् ॥

पञ्चपूजा ।

ओं । सौभाग्यलक्ष्मीः सौन्दर्यनिधिः समरसप्रिया ।
सर्वकल्याणनिलया सर्वेशी सर्वमङ्गला ॥ १

सर्ववश्यकरी सर्वा सर्वमङ्गलदायिनी ।
सर्वविद्यादानदक्षा संगीतोपनिषत्प्रिया ॥ २

सर्वभूतहृदावासा सर्वगीर्वाणपूजिता ।
समृद्धा सङ्गमुदिता सर्वलोकैकसंश्रया ॥ ३

सप्तकोटिमहामन्त्रस्वरूपा सर्वसाक्षिणी ।
सर्वाङ्गसुन्दरी सर्वगता सत्यस्वरूपिणी ॥ ४

समा समयसंवेद्या समयज्ञा सदाशिवा ।
सङ्गीतरसिका सर्वकलामयशुकप्रिया ॥ ५

चन्दनालेपदिग्धाङ्गी सच्चिदानन्दरूपिणी।
कदम्बवाटीनिलया कमलाकान्तसेविता ।। ६

कटाक्षोत्पन्नकन्दर्पा कटाक्षितमहेश्वरा।
कल्याणी कमलासेव्या कल्याणाचलवासिनी ।। ७

कान्ता कन्दर्पजननी करुणारससागरा।
कलिदोषहरा काम्या कामदा कामवर्धिनी ।। ८

कदम्बकलिकोत्तंसा कदम्बकुसुमप्रिया।
कदम्बमूलरसिका कामाक्षी कमलानना ।। ९

कम्बुकण्ठी कलालापा कमलासनपूजिता।
कात्यायनी केलिपरा कमलाक्षसहोदरी ।। १०

कमलाक्षी कलारूपा कोकाकारकुचद्वया।
कोकिला कोकिलारावा कुमारजननी शिवा ।। ११

सर्वज्ञा सन्ततोन्मत्ता सर्वैश्वर्यप्रदायिनी।
सुधाप्रिया सुराराध्या सुकेशी सुरसुन्दरी ।। १२

शोभना शुभदा शुद्धा शुद्धचित्तैकवासिनी।
वेदवेद्या वेदमयी विद्याधरगणार्चिता ।। १३

वेदान्तसारा विश्वेशी विश्वरूपा विरूपिणी।
विरूपाक्षप्रिया विद्या विन्ध्याचलनिवासिनी ।। १४

वीणावादविनोदज्ञा वीणागानविशारदा।
वीणावती बिन्दुरूपा ब्रह्माणी ब्रह्मरूपिणी ।। १५

पार्वती परमाऽचिन्त्या पराशक्तिः परात्परा।
परानन्दा परेशानी परविद्या परापरा ।। १६

भक्तप्रिया भक्तिगम्या भक्तानां परमा गतिः ।
भव्या भवप्रिया भीरुर्भवसागरतारिणी ॥ १७

भयघ्नी भावुका भव्या भामिनी भक्तपालिनी ।
भेदशून्या भेदहन्त्री भावना मुनिभाविता ॥ १८

माया महेश्वरी मान्या मातङ्गी मलयालया ।
महनीया मदोन्मत्ता मन्त्रिणी मन्त्रनायिका ॥ १९

महानन्दा मनोगम्या मतङ्गकुलमण्डना ।
मनोज्ञा मानिनी माध्वी सिन्धुमध्यकृतालया ॥ २०

मधुप्रीता नीलकचा माध्वीरसमदालसा ।
पूर्णचन्द्राभवदना पूर्णा पुण्यफलप्रदा ॥ २१

पुलोमजार्चिता पूज्या पुरुषार्थप्रदायिनी ।
नारायणी नादरूपा नादब्रह्मस्वरूपिणी ॥ २२

नित्या नवनवाकारा नित्यानन्दा निराकुला ।
निटिलाक्षप्रिया नेत्री नीलेन्दीवरलोचना ॥ २३

तमालकोमलाकारा तरुणी तनुमध्यमा ।
तटित्पिशंगवसना तटित्कोटिसमद्युतिः ॥ २४

मधुरा मङ्गला मेध्या मधुपानप्रिया सखी ।
चित्कला चारुवदना सुखरूपा सुखप्रदा ॥ २५

कूटस्था कौलिनी कूर्मपीठस्था कुटिलालका ।
शान्ता शान्तिमती शान्तिः श्यामला श्यामलाकृतिः ॥२६

शंखिनी शङ्करी शैवी शंखकुण्डलमण्डिता ।
कुन्ददन्ता कोमलाङ्गी कुमारी कुलयोगिनी ॥ २७

निगर्भयोगिनीसेव्या निरन्तररतिप्रिया।
शिवदूती शिवकरी जटिला जगदाश्रया॥ २८

शांभवी योगिनिलया परचैतन्यरूपिणी।
दहराकाशनिलया दण्डिनीपरिपूजिता॥ २९

संपत्करीगजारूढा सान्द्रानन्दा सुरेश्वरी।
चंपकोद्भासितकचा चन्द्रशेखरवल्लभा॥ ३०

चारुरूपा चारुदती चन्द्रिका शम्भुमोहिनी।
विमला विदुषी वाणी कमला कमलासना॥ ३१

करुणापूर्णहृदया कामेशी कंबुकन्धरा।
राजराजेश्वरी राजमातङ्गी राजवल्लभा॥ ३२

सचिवा सचिवेशानी सचिवत्वप्रदायिनी।
पञ्चबाणार्चिता बाला पञ्चमी परदेवता॥ ३३

उमा महेश्वरी गौरी संगीतज्ञा सरस्वती।
कविप्रिया काव्यकला कलौ सिद्धिप्रदायिनी॥ ३४

ललितामन्त्रिणी रम्या ललिताराज्यपालिनी।
ललितासेवनपरा ललिताज्ञावशंवदा॥ ३५

ललिताकार्यचतुरा ललिताभक्तपालिनी।
ललितार्धासनारूढा लावण्यरसशेवधिः॥ ३६

रञ्जनी लालितशुका लसच्चूलीवरान्विता।
रागिणी रमणी रामा रती रतिसुखप्रदा॥ ३७

भोगदा भोग्यदा भूमिप्रदा भूषणशालिनी।
पुण्यलभ्या पुण्यकीर्तिः पुरन्दरपुरेश्वरी॥ ३८

भूमानन्दा भूतिकरी क्लींकारी क्लिन्नरूपिणी।
भानुमण्डलमध्यस्था भामिनी भारती धृतिः ॥ ३९

नारायणार्चिता नाथा नादिनी नादरूपिणी।
पञ्चकोणस्थिता लक्ष्मीः पुराणी पुररूपिणी ॥ ४०

चक्रस्थिता चक्ररूपा चक्रिणी चक्रनायिका।
षट्चक्रमण्डलान्तःस्था ब्रह्मचक्रनिवासिनी ॥ ४१

अन्तरभ्यर्चनप्रीता बहिरर्चनलोलुपा।
पञ्चाशत्पीठमध्यस्था मातृकावर्णरूपिणी ॥ ४२

महादेवी महाशक्तिः महामाया महामतिः।
महारूपा महादीप्तिः महालावण्यशालिनी ॥ ४३

माहेन्द्री मदिरादृप्ता मदिरासिन्धुवासिनी।
मदिरामोदवदना मदिरापानमन्थरा ॥ ४४

दुरितघ्नी दुःखहन्त्री दूती दूतरतिप्रिया।
वीरसेव्या विघ्नहरा योगिनी गणसेविता ॥ ४५

निजवीणारवानन्दनिमीलितविलोचना।
वज्रेश्वरी वश्यकरी सर्वचित्तविमोहिनी ॥ ४६

शबरी शम्बराराध्या शाम्बरी सामसंस्तुता।
त्रिपुरामन्त्रजपिनी त्रिपुरार्चनतत्परा ॥ ४७

त्रिलोकेशी त्रयीमाता त्रिमूर्तिस्त्रिदिवेश्वरी।
ऐंकारी सर्वजननी सौःकारी संविदीश्वरी ॥ ४८

बोधा बोधकरी बोध्या बुधाराध्या पुरातनी।
भण्डसोदरसंहर्त्री भण्डसैन्यविनाशिनी ॥ ४९

गेयचक्ररथारूढा गुरुमूर्तिः कुलाङ्गना।
गान्धर्वशास्त्रमर्मज्ञा गन्धर्वगणपूजिता ॥ ५०

जगन्माता जयकरी जननी जनदेवता।
शिवाराध्या शिवार्धाङ्गी शिञ्जन्मञ्जीरमण्डिता ॥ ५१

सर्वात्मिका हृषीकेशी सर्वपापविनाशिनी।
सर्वरोगहरा साध्या धर्मिणी धर्मरूपिणी॥ ५२

आचारलभ्या स्वाचारा खेचरी योनिरूपिणी।
पतिव्रता पाशहन्त्री परमार्थ स्वरूपिणी ॥ ५३

पण्डिता परिवाराढ्या पाषण्डमतभञ्जनी।
श्रीकरी श्रीमती देवी बिन्दुनादस्वरूपिणी ॥ ५४

अपर्णा हिमवत्पुत्री दुर्गा दुर्गतिहारिणी।
व्यालोलशंखताटङ्का विलसद्गण्डपालिका ॥ ५५

सुधामधुरसालापा सिन्दूरतिलकोज्ज्वला।
अलक्तकारक्तपादा नन्दनोद्यानवासिनी ॥ ५६

वासन्तकुसुमापीडा वसन्तसमयप्रिया।
ध्याननिष्ठा ध्यानगम्या ध्येया ध्यानस्वरूपिणी ॥ ५७

दारिद्र्यहन्त्री दौर्भाग्यशमनी दानवान्तका।
तीर्थरूपा त्रिनयना तुरीया दोषवर्जिता ॥ ५८

मेधाप्रदायिनी मेध्या मेदिनी मदशालिनी।
मधुकैटभसंहर्त्री माधवी माधवप्रिया ॥ ५९

महिला महिमासारा शर्वाणी शर्मदायिनी।
रुद्राणी रुचिरा रौद्री रुक्मभूषणभूषिता ॥ ६०

अंबिका जगतां धात्री जटिनी धूर्जटिप्रिया ।
सूक्ष्मस्वरूपिणी सौम्या सुरुचिः सुलभा शुभा ।। ६१

विपञ्चीकलनिक्वाणविमोहितजगत्त्रया ।
भैरवप्रेमनिलया भैरवी भासुराकृतिः ।। ६२

पुष्पिणी पुण्यनिलया पुण्यश्रवणकीर्तना ।
कुरुकुल्ला कुण्डलिनी वागीशी नकुलेश्वरी ।। ६३

वामकेशी गिरिसुता वार्तालीपरिपूजिता ।
वारुणीमदरक्ताक्षी वन्दारुवरदायिनी ।। ६४

कटाक्षस्यन्दिकरुणा कन्दर्पमदवर्धिनी ।
दूर्वाश्यामा दुष्टहन्त्री दुष्टग्रहविभेदिनी ।। ६५

सर्वशत्रुक्षयकरी सर्वसंपत्प्रवर्धिनी ।
कबरीशोभिकल्हारा कलशिञ्जितमेखला ।। ६६

मृणालीतुल्यदोर्वल्ली मृडानी मृत्युवर्जिता ।
मृदुला मृत्युसंहर्त्री मञ्जुला मञ्जुभाषिणी ।। ६७

कर्पूरवीटीकबला कमनीयकपोलभूः ।
कर्पूरक्षोददिग्धाङ्गी कर्त्री कारणवर्जिता ।। ६८

अनादिनिधना धात्री धात्रीधरकुलोद्भवा ।
स्तोत्रप्रिया स्तुतिमयी मोहिनी मोहहारिणी ।। ६९

जीवरूपा जीवकारी जीवन्मुक्तिप्रदायिनी ।
भद्रपीठस्थिता भद्रा भद्रदा भर्गभामिनी ।। ७०

भगानन्दा भगमयी भगलिङ्गा भगेश्वरी ।
मत्तमातङ्गगमना मातङ्गकुलमञ्जरी ।। ७१

राजहंसगती राज्ञी राजराज समर्चिता।
भवानी पावनी काली दक्षिणा दक्षकन्यका ।। ७२

हव्यवाहा हविर्भोक्त्री हारिणी दुःखहारिणी।
संसारतारिणी सौम्या सर्वेशी समरप्रिया ।। ७३

स्वप्नवती जागरिणी सुषुप्ता विश्वरूपिणी।
तैजसी प्राज्ञकलना चेतना चेतनावती ।। ७४

चिन्मात्रा चिद्घना चेत्या चिच्छाया चित्स्वरूपिणी।
निवृत्तिरूपिणी शान्तिः प्रतिष्ठा नित्यरूपिणी ।। ७५

विद्यारूपा शान्त्यतीता कलापञ्चकरूपिणी।
ह्रींकारी ह्रीमती हृद्या ह्रीच्छाया हरिवाहना ।। ७६

मूलप्रकृतिरव्यक्ता व्यक्ताव्यक्तविनोदिनी।
यज्ञरूपा यज्ञभोक्त्री यज्ञाङ्गी यज्ञरूपिणी ।। ७७

दीक्षिता क्षमणा क्षामा क्षितिः क्षान्तिः श्रुतिः स्मृतिः।
एकाऽनेका कामकला कल्या कालस्वरूपिणी ।। ७८

दक्षा दाक्षायणी दीक्षा दक्षयज्ञविनाशिनी।
गायत्री गगनाकारा गीर्देवी गरुडासना ।। ७९

सावित्री सकलाध्यक्षा ब्रह्माणी ब्राह्मणप्रिया।
जगन्नाथा जगन्मूर्तिः जगन्मृत्युनिवारिणी ।। ८०

दृग्रूपा दृश्यनिलया द्रष्ट्री मन्त्री चिरन्तनी।
विज्ञात्री विपुला वेद्या वृद्धा वर्षीयसी मही ।। ८१

आर्या कुहरिणी गुह्या गौरी गौतमपूजिता।
नन्दिनी नलिनी नित्या नीतिर्नयविशारदा ।। ८२

गतागतज्ञा गन्धर्वी गिरिजा गर्वनाशिनी ।
प्रियव्रता प्रमा प्राणा प्रमाणज्ञा प्रियंवदा ।। ८३

अशरीरा शरीरस्था नामरूपविवर्जिता ।
वर्णाश्रमविभागज्ञा वर्णाश्रमविवर्जिता ।। ८४

नित्यमुक्ता नित्यतृप्ता निर्लेपा निरवग्रहा ।
इच्छाज्ञानक्रियाशक्तिः इन्दिरा बन्धुराकृतिः ।। ८५

मनोरथप्रदा मुख्या मानिनी मानवर्जिता ।
नीरागा निरहङ्कारा निर्नाशा निरुपप्लवा ।। ८६

विचित्रा चित्रचारित्रा निष्कला निगमालया ।
ब्रह्मविद्या ब्रह्मनाडी बन्धहन्त्री बलिप्रिया ।। ८७

सुलक्षणा लक्षणज्ञा सुन्दरभ्रूलताञ्चिता ।
सुमित्रा मालिनी सीमा मुद्रिणी मुद्रिकाञ्चिता ।। ८८

रजस्वला रम्यमूर्तिर्जया जन्मविवर्जिता ।
पद्मालया पद्मपीठा पद्मिनी पद्मवर्णिनी ।। ८९

विश्वंभरा विश्वगर्भा विश्वेशी विश्वतोमुखी ।
अद्वितीया सहस्राक्षी विराड्रूपा विमोचिनी ।। ९०

सूत्ररूपा शास्त्रकरी शास्त्रज्ञा शस्त्रधारिणी ।
वेदविद्वेदकृद्वेद्या वित्तज्ञा वित्तशालिनी ।। ९१

विशदा वैष्णवी ब्राह्मी वैरिञ्ची वाक्प्रदायिनी ।
व्याख्यात्री वामना वृद्धिः विश्वनाथा विशारदा ।। ९२

मुद्रेश्वरी मुण्डमाला काली कंकालरूपिणी ।
महेश्वरप्रीतिकरी महेश्वर पतिव्रता ।। ९३

ब्रह्माण्डमालिनी बुध्या मतङ्गमुनिपूजिता।
ईश्वरी चण्डिका चण्डी नियन्त्री नियमस्थिता।। ९४

सर्वान्तर्यामिणी सेव्या सन्ततिः सन्ततिप्रदा।
तमालपल्लवश्यामा ताम्रोष्ठी ताण्डवप्रिया।। ९५

नाट्यलास्यकरी रम्भा नटराजप्रियाङ्गना।
अनङ्गरूपाऽनङ्गश्रीरनङ्गेशी वसुन्धरा।। ९६

साम्राज्यदायिनी सिद्धा सिद्धेशी सिद्धिदायिनी।
सिद्धमाता सिद्धपूज्या सिद्धार्था वसुदायिनी।। ९७

भक्तिमत्कल्पलतिका भक्तिदा भक्तवत्सला।
पञ्चशक्त्यर्चितपदा परमात्मस्वरूपिणी।। ९८

अज्ञानतिमिरज्योत्स्ना नित्याह्लादा निरञ्जना।
मुग्धा मुग्धस्मिता मैत्री मुग्धकेशी मधुप्रिया।। ९९

कलापिनी कामकला कामकेलिः कलावती।
अखण्डा निरहङ्कारा प्रधानपुरुषेश्वरी।। १००

रहःपूज्या रहःकेली रहःस्तुत्या हरप्रिया।
शरण्या गहना गुह्या गुहान्तःस्था गुहप्रसूः।। १०१

स्वसंवेद्या स्वप्रकाशा स्वात्मस्था स्वर्गदायिनी।
निष्प्रपञ्चा निराधारा नित्यानित्यस्वरूपिणी।। १०२

निर्मदा नर्तकी कीर्तिः निष्कामा निष्कला कला।
अष्टमूर्तिरमोघोमा नन्द्यादिगणपूजिता।। १०३

यन्त्ररूपा तन्त्ररूपा मन्त्ररूपा मनोन्मनी।
शिवकामेश्वरी देवी चिद्रूपा चित्तरङ्गिणी।। १०४

चित्स्वरूपा चित्प्रकाशा चिन्मूर्तिश्चिन्मयी चितिः ।
मूर्खदूरा मोहहन्त्री मुख्या क्रोडमुखी सखी ।। १०५

ज्ञानज्ञातृज्ञेयरूपा व्योमाकारा विलासिनी ।
विमर्शरूपिणी वश्या विधानज्ञा विजृंभिता ।। १०६

केतकीकुसुमापीडा कस्तूरीतिलकोज्ज्वला ।
मृग्या मृगाक्षी रसिका मृगनाभिसुगन्धिनी ।। १०७

यक्षकर्दमलिप्ताङ्गी यक्षिणी यक्षपूजिता ।
लसन्माणिक्यकटका केयूरोज्ज्वलदोर्लता ।। १०८

सिन्दूरराजत्सीमन्ता सुभ्रूवल्ली सुनासिका ।
कैवल्यदा कान्तिमती कठोरकुचमण्डला ।। १०९

तलोदरी तमोहन्त्री त्रयस्त्रिंशत्सुरात्मिका ।
स्वयंभूः कुसुमामोदा स्वयंभुकुसुमप्रिया ।। ११०

स्वाध्यायिनी सुखाराध्या वीरश्रीर्वीरपूजिता ।
द्राविणी विद्रुमाभोष्ठी वेगिनी विष्णुवल्लभा ।। १११

हालामदा लसद्वाणी लोला लीलावती रतिः ।
लोपामुद्रार्चिता लक्ष्मीरहल्यापरिपूजिता ।। ११२

आब्रह्मकीटजननी कैलासगिरिवासिनी ।
निधीश्वरी निरातङ्का निष्कलङ्का जगन्मयी ।। ११३

आदिलक्ष्मीरनन्तश्रीरच्युता तत्वरूपिणी ।
नामजात्यादिरहिता नरनारायणार्चिता ।। ११४

गुह्योपनिषदुद्गीता लक्ष्मीवाणीनिषेविता ।
मतङ्गवरदा सिद्धा महायोगीश्वरी गुरुः ।। ११५

गुरुप्रिया कुलाराध्या कुलसंकेतपालिनी ।
चिच्चन्द्रमण्डलान्तःस्था चिदाकाशस्वरूपिणी ॥ ११६

अनङ्गशास्त्रतत्वज्ञा नानाविधरसप्रिया ।
निर्मला निरवद्यांगी नीतिज्ञा नीतिरूपिणी ॥ ११७

व्यापिनी विबुधश्रेष्ठा कुलशैलकुमारिका ।
विष्णुप्रसूर्वीरमाता नासामणिविराजिता ॥ ११८

नायिका नगरीसंस्था नित्यतुष्टा नितम्बिनी ।
पञ्चब्रह्ममयी प्राञ्ची ब्रह्मात्मैक्यस्वरूपिणी ॥ ११९

सर्वोपनिषदुद्गीता सर्वानुग्रहकारिणी ।
पवित्रा पावना पूता परमात्मस्वरूपिणी ॥ १२०

सूर्येन्दुवह्निनयना सूर्यमण्लमध्यगा ।
गायत्री गात्ररहिता सुगुणा गुणवर्जिता ॥ १२१

रक्षाकरी रम्यरूपा सात्विका सत्वदायिनी ।
विश्वातीता व्योमरूपा सदाऽर्चनजपप्रिया ॥ १२२

आत्मभूरजिता जिष्णुरजा स्वाहा स्वधा सुधा ।
नन्दिताशेषभुवना नामसंकीर्तनप्रिया ॥ १२३

गुरुमूर्तिर्गुरुमयी गुरुपादार्चनप्रिया ।
गोब्राह्मणात्मिका गुर्वी नीलकण्ठी निरामया ॥ १२४

मानवी मन्त्रजननी महाभैरवपूजिता ।
नित्योत्सवा नित्यपुष्टा श्यामा यौवनशालिनी ॥ १२५

महनीया महामूर्तिर्महती सौख्यसन्ततिः ।
पूर्णोदरी हविर्धात्री गणाराध्या गणेश्वरी ॥ १२६

गायना गर्वरहिता स्वेदबिन्दूल्लसन्मुखी।
तुङ्गस्तनी तुलाशून्या कन्या कमलवासिनी।। १२७

शृङ्गारिणी श्रीः श्रीविद्या श्रीप्रदा श्रीनिवासिनी।
त्रैलोक्यसुन्दरी बाला त्रैलोक्यजननी सुधीः ।। १२८

पञ्चक्लेशहरा पाशधारिणी पशुमोचनी।
पाषण्डहन्त्री पापघ्नी पार्थिवश्रीकरी धृतिः ।। १२९

निरपाया दुरापा या सुलभा शोभनाकृतिः।
महाबला भगवती भवरोगनिवारिणी।। १३०

भैरवाष्टकसंसेव्या ब्राह्मयादिपरिवारिता।
वामादिशक्तिसहिता वारुणीमदविह्वला।। १३१

वरिष्ठावश्यदा वश्या भक्तार्तिदमना शिवा।
वैराग्यजननी ज्ञानदायिनी ज्ञानविग्रहा।। १३२

सर्वदोषविनिर्मुक्ता शङ्करार्धशरीरिणी।
सर्वेश्वरप्रियतमा स्वयंज्योतिस्स्वरूपिणी।। १३३

क्षीरसागरमध्यस्था महाभुजगशायिनी।
कामधेनुर्बृहद्गर्भा योगनिद्रा युगन्धरा।। १३४

महेन्द्रोपेन्द्रजननी मातङ्गकुलसंभवा।
मतङ्गजातिसंपूज्या मतङ्गकुलदेवता।। १३५

गुह्यविद्या वश्यविद्या सिद्धविद्या शिवाङ्गना।
सुमङ्गला रत्नगर्भा सूर्यमाता सुधाशना।। १३६

खड्गमण्डल संपूज्या सालग्रामनिवासिनी।
दुर्जया दुष्टदमना दुर्निरीक्ष्या दुरत्यया।। १३७

शङ्खचक्रगदाहस्ता विष्णुशक्तिर्विमोहिनी।
योगमाता योगगम्या योगनिष्ठा सुधास्रवा।। १३८

समाधिनिष्ठैः संवेद्या सर्वभेदविवर्जिता।
साधारणा सरोजाक्षी सर्वज्ञा सर्वसाक्षिणी ।। १३९

महाशक्तिर्महोदारा महामङ्गलदेवता।
कलौ कृतावतरणा कलिकल्मषनाशिनी ।। १४०

सर्वदा सर्वजननी निरीशा सर्वतोमुखी।
सुगूढा सर्वतो भद्रा सुस्थिता स्थाणुवल्लभा ।। १४१

चराचरजगद्रूपा चेतनाचेतनाकृतिः।
महेश्वर प्राणनाडी महाभैरवमोहिनी ।। १४२

मञ्जुला यौवनोन्मत्ता महापातकनाशिनी।
महानुभावा माहेन्द्री महामरकतप्रभा ।। १४३

सर्वशक्त्यासना शक्तिर्निराभासा निरिन्द्रिया।
समस्तदेवतामूर्तिः समस्तसमयार्चिता ।। १४४

सुवर्चला वियन्मूर्तिः पुष्कला नित्यपुष्पिणी।
नीलोत्पलदलश्यामा महाप्रलयसाक्षिणी ।। १४५

सङ्कल्पसिद्धा सङ्गीतरसिका रसदायिनी।
अभिन्ना ब्रह्मजननी कालक्रमविवर्जिता ।। १४६

अजपा जाड्यरहिता प्रसन्ना भगवत्प्रिया।
इन्दिरा जगतीकन्दा सच्चिदानन्दकन्दली ।।
श्रीचक्रनिलया देवी श्रीविद्या श्रीप्रदायिनी ।। १४७

फलश्रुतिः—

इति ते कथितो लक्ष्मि नामसारस्तवो मया।
श्यामलाया महादेव्याः सर्ववश्यप्रदायकः ।। १४८

य इमं पठते नित्यं नामसारस्तवं परम्।
तस्य नश्यन्ति पापानि महान्त्यपि न संशयः ।। १४९

त्रिसन्ध्यं यः पठेन्नित्यं वर्षमेकमतन्द्रितः ।
सार्वभौमो महीपालस्तस्य वश्यो भवेद्ध्रुवम् ।। १५०

मूलमन्त्रजपान्ते यः पठेन्नामसहस्रकम् ।
मन्त्रसिद्धिर्भवेत्तस्य शीघ्रमेव वरानने ।। १५१

जगत्त्रयं वशीकृत्य साक्षात्कामसमो भवेत् ।
दिने दिने दशावृत्त्या मण्डलं यो जपेन्नरः ।। १५२

सचिवः स भवेद्देवि सार्वभौमस्य भूपतेः ।
षण्मासं यो जपेन्नित्यं एकवारं दृढव्रतः ।। १५३

भवन्ति तस्य धान्यानां धनानां च समृद्धयः ।
चन्दनं कुङ्कुमं वापि भस्म वा मृगनाभिकम् ।। १५४

अनेनैव त्रिरावृत्त्या नामसारेण मन्त्रितम् ।
यो ललाटे धारयते तस्य वक्त्रावलोकनात् ।। १५५

हन्तुमुद्यतखड्गोऽपि शत्रुर्वश्यो भवेद्ध्रुवम् ।
अनेन नामसारेण मन्त्रितं प्राशयेज्जलम् ।। १५६

मासमात्रं वरारोहे गान्धर्वनिपुणो भवेत् ।
सङ्गीते कविलायां च नास्ति तत्सदृशो भुवि ।। १५७

ब्रह्मज्ञानमवाप्नोति मोक्षं चाप्यधिगच्छति ।
प्रीयते श्यामला नित्यं प्रीताऽभीष्टं प्रयच्छति ।। १५८

– सौभाग्यलक्ष्मीकल्पतः ।

*

मातङ्गि मातरीशे मधुमथनासधिते महामाये ।
मोहिनि मोहप्रमथिनि मन्मथमथनप्रिये वराङ्गि मातङ्गि ।।

यतिजन हृदयनिवासे वासववरदे वराङ्गि मातङ्गि ।
वीणावाद विनोदिनि नारदगीते नमो देवि ।।

# श्री श्यामलासहस्रनामावलिः

ओं ऐं ह्रीं श्रीं । सौभाग्यलक्ष्म्यै नमः । सौन्दर्यनिधये । समरसप्रियायै । सर्वकल्याणनिलयायै । सर्वेश्यै । सर्वमङ्गलायै । सर्ववश्यकर्यै । सर्वायै । सर्वमङ्गलदायिन्यै । सर्वविद्यादानदक्षायै । संगीतोपनिषत्प्रियायै । सर्वभूत-हृदावासायै । सर्वगीर्वाणपूजितायै । समृद्धायै । सङ्गमुदि-तायै । सर्वलोकैक संश्रयायै । सप्तकोटिमहामन्त्रस्वरूपायै । सर्वसाक्षिण्यै । सर्वाङ्गसुन्दर्यै । सर्वगतायै नमः । २०

सत्यस्वरूपिण्यै नमः । समायै । समयसंवेद्यायै । समयज्ञायै । सदाशिवायै । संगीतरसिकायै । सर्वकलामय शुकप्रियायै । चन्दनालेपदिग्धाङ्ग्यै । सच्चिदानन्दरूपिण्यै । कदम्बवाटीनिलयायै । कमलाकान्तसेवितायै । कटाक्षोत्पन्नकन्दर्पायै । कटाक्षितमहेश्वरायै । कल्याण्यै । कमलासेव्यायै । कल्याणाचलवासिन्यै । कान्तायै । कन्दर्पजनन्यै । करुणारससागरायै । कलिदोषहरायै नमः । ४०

काम्यायै नमः । कामदायै । कामवर्धिन्यै । कदम्ब-कलिकोत्तंसायै । कदम्बकुसुमप्रियायै । कदम्बमूलरसिकायै । कामाक्ष्यै । कमलाननायै । कम्बुकण्ठ्यै । कलालापायै । कमलासनपूजितायै । कात्यायन्यै । केलिपरायै । कमलाक्ष-सहोदर्यै । कमलाक्ष्यै । कलारूपायै । कोकाकारकुचद्वयायै । कोकिलायै । कोकिलारावायै । कुमारजनन्यै नमः । ६०

ओं शिवायै नमः । सर्वज्ञायै । सन्ततोन्मत्तायै । सर्वैश्वर्य प्रदायिन्यै । सुधाप्रियायै । सुराराध्यायै । सुकेश्यै ।

सुरसुन्दर्यै । शोभनायै । शुभदायै । शुद्धायै । शुद्धचित्तैकवासिन्यै । वेदवेद्यायै । वेदमय्यै । विद्याधर-गणार्चितायै । वेदान्तसारायै । विश्वेश्यै । विश्वरूपायै । विरूपिण्यै । विरूपाक्षप्रियायै नमः । ८०

ओं विद्यायै नमः । विन्ध्याचलनिवासिन्यै । वीणावादविनोदज्ञायै । वीणागानविशारदायै । वीणावत्यै । बिन्दुरूपायै । ब्रह्माण्यै । ब्रह्मरूपिण्यै । पार्वत्यै । परमायै । अचिन्त्यायै । परायै शक्त्यै । परात्परायै । परानन्दायै । परेशान्यै । परविद्यायै । परापरायै । भक्तप्रियायै । भक्तिगम्यायै । भक्तानां परमायै गत्यै नमः । १००

ओं भव्यायै नमः । भवप्रियायै । भीरवे । भवसागर तारिण्यै । भयघ्न्यै । भावुकायै । भव्यायै । भामिन्यै । भक्तपालिन्यै । भेदशून्यायै । भेदहन्त्र्यै । भावनायै । मुनिभावितायै । मायायै । महेश्वर्यै । मान्यायै । मातङ्ग्यै । मलयालयायै । महनीयायै । मदोन्मत्तायै नमः । १२०

ओं मन्त्रिण्यै नमः । मन्त्रनायिकायै । महानन्दायै । मनोगम्यायै । मतङ्गकुलमण्डनायै । मनोज्ञायै । मानिन्यै । माध्वीसिन्धुमध्यकृतालयायै । मधुप्रीतायै । नीलकचायै । माध्वीरसमदालसायै । पूर्णचन्द्राभवदनायै । पूर्णायै । पूर्णफलप्रदायै । पुलोमजार्चितायै । पूज्यायै । पुरुषार्थप्रदायिन्यै । नारायण्यै । नादरूपायै । नादब्रह्म-स्वरूपिण्यै नमः । १४०

ओं नित्यायै नमः । नवनवाकारायै । नित्यानन्दायै । निराकुलायै । निटिलाक्षप्रियायै । नेत्र्यै । नीलेन्दीवर-

लोचनायै। तमालकोमलाकारायै। तरुण्यै। तनुमध्यमायै। तटित्पिशंगवसनायै । तटित्कोटिसमद्युतये । मधुरायै । मङ्गलायै । मेध्यायै । मधुपानप्रियासख्यै । चित्कलायै । चारुवदनायै। सुखरूपायै। सुखप्रदायै नमः। १६०

ॐ कूटस्थायै नमः । कौलिन्यै । कूर्मपीठस्थायै । कुटिलालकायै । शान्तायै । शान्तिमत्यै । शान्त्यै । श्यामलायै । श्यामलाकृत्यै । शङ्खिन्यै । शङ्कर्यै । शैव्यै । शङ्खकुण्डलमण्डितायै । कुन्ददन्तायै । कोमलाङ्ग्यै । कुमार्यै । कुलयोगिन्यै । निगर्भयोगिनीसेव्यायै । निरन्तररतिप्रियायै। शिवदूत्यै नमः। १८०

ओं शिवकर्यै नमः । जटिलायै । जगदाश्रयायै । शाम्भव्यै । योगिनिलयायै । परचैतन्यरूपिण्यै । दहराकाशनिलयायै । दण्डिनीपरिपूजितायै । संपत्करी-गजारूढायै । सान्द्रानन्दायै । सुरेश्वर्यै । चम्पकोद्भासित-कचायै । चन्द्रशेखरवल्लभायै । चारुरूपायै । चारुदत्यै । चन्द्रिकायै । शम्भुमाहिन्यै । विमलायै । विदुष्यै । वाण्यै नमः। २००

ओं कमलायै नमः । कमलासनायै । करुणा-पूर्णहृदयायै । कामेश्यै । कम्बुकन्धरायै । राजराजेश्वर्यै । राजमातङ्ग्यै । राजवल्लभायै । सचिवायै । सचिवेशान्यै । सचिवत्वप्रदायिन्यै। पञ्चबाणार्चितायै। बालायै। पञ्चम्यै। परदेवतायै। उमायै। महेश्वर्यै। गौर्यै। संगीतज्ञायै। सरस्वत्यै नमः। २२०

ओं कविप्रियायै नमः । काव्यकलायै । कलौ सिद्धिप्रदायिन्यै । ललितामन्त्रिण्यै । रम्यायै । ललिता-राज्यपालिन्यै । ललितासेवनपरायै । ललिताज्ञावशंवदायै । ललिताकार्यचतुरायै । ललिताभक्तपालिन्यै । ललितार्धासनारूढायै । लावण्यरसशेवधये । रञ्जन्यै । लालितशुकायै । लसच्चूलीवरान्वितायै । रागिण्यै । रमण्यै । रामायै । रत्यै । रतिसुखप्रदायै नमः । २४०

ओं भोगदायै नमः । भोग्यदायै । भूमिप्रदायै । भूषणशालिन्यै । पुण्यलभ्यायै । पुण्यकीर्त्यै । पुरन्दरपुरेश्वर्यै । भूमानन्दायै । भूतिकर्यै । क्लींकार्यै । क्लिन्नकारिण्यै । भानुमण्डलमध्यस्थायै । भामिन्यै । भारत्यै । धृत्यै । नारायणार्चितायै । नाथायै । नादिन्यै । नादरूपिण्यै । पञ्चकोणस्थितायै नमः । २६०

ओं लक्ष्म्यै नमः । पुराण्यै । पुररूपिण्यै । चक्रस्थितायै । चक्ररूपायै । चक्रिण्यै । चक्रनायिकायै । षट्चक्रमण्डलान्तःस्थायै । ब्रह्मचक्रनिवासिन्यै । अन्तरभ्यर्चनप्रीतायै । बहिरर्चनलोलुपायै । पञ्चाशत्पीठमध्यस्थायै । मातृकावर्णरूपिण्यै । महादेव्यै । महाशक्त्यै । महामायायै । महामत्यै । महारूपायै । महादीप्त्यै । महालावण्यशालिन्यै नमः । २८०

ओं माहेन्द्र्यै नमः । मदिरादृप्तायै । मदिरासिन्धु-वासिन्यै । मदिरामोदवदनायै । मदिरापानमन्थरायै । दुरितघ्न्यै । दुःखहन्त्र्यै । दूत्यै । दूतरतिप्रियायै । वीरसेव्यायै । विघ्नहरायै । योगिन्यै । गणसेवितायै । निजवीणारवानन्द-निमीलितविलोचनायै । वज्रेश्वर्यै । वश्यकर्यै । सर्वचित्त-विमोहिन्यै । शबर्यै । शम्बराराध्यायै । शाम्बर्यै नमः । ३००

ओं सामसंस्तुतायै नमः । त्रिपुरामन्त्रजपिन्यै । त्रिपुरार्चनतत्परायै । त्रिलोकेश्यै । त्रयीमात्रे । त्रिमूर्त्यै । त्रिदिवेश्वर्यै । ऐंकार्यै । सर्वजनन्यै । सौःकार्यै । संविदीश्वर्यै । बोधायै । बोधकर्यै । बोध्यायै । बुधाराध्यायै । पुरातन्यै । भण्डसोदरसंहर्त्र्यै । भण्डसैन्यविनाशिन्यै । गेयचक्ररथारूढायै । गुरुमूर्त्यै नमः । ३२०

ओं कुलाङ्गनायै नमः । गान्धर्वशास्त्रमर्मज्ञायै । गन्धर्वगणपूजितायै । जगन्मात्रे । जयकर्यै । जनन्यै । जनदेवतायै । शिवाराध्यायै । शिवार्धाङ्ग्यै । शिञ्जन् मञ्जीर मण्डितायै । सर्वात्मिकायै । हृषीकेश्यै । सर्वपापविनाशिन्यै । सर्वरोगहरायै । साध्यायै । धर्मिण्यै । धर्मरूपिण्यै । आचारलभ्यायै । स्वाचारायै । खेचर्यै नमः । ३४०

ओं योनिरूपिण्यै नमः । पतिव्रतायै । पाशहन्त्र्यै । परमार्थस्वरूपिण्यै । पण्डितापरिवाराढ्यायै । पाषण्डमतभञ्जन्यै । श्रीकर्यै । श्रीमत्यै । देव्यै । बिन्दुनादस्वरूपिण्यै । अपर्णायै । हिमवत्पुत्र्यै । दुर्गायै । दुर्गतिहारिण्यै । व्यालोलशङ्खताटङ्कायै । विलसद्गण्डपालिकायै । सुधामधुरसालापायै । सिन्दूरतिलकोज्ज्वलायै । अलक्तकारक्तपादायै । नन्दनोद्यानवासिन्यै नमः । ३६०

ओं वासन्तकुसुमापीडायै नमः । वसन्तसमयप्रियायै । ध्याननिष्ठायै । ध्यानगम्यायै । ध्येयायै । ध्यानस्वरूपिण्यै । दारिद्र्यहन्त्र्यै । दौर्भाग्यशमन्यै । दानवान्तकायै । तीर्थरूपायै । त्रिनयनायै । तुरीयायै । दोषवर्जितायै ।

मेधाप्रदायिन्यै । मेध्यायै । मेदिन्यै । मदशालिन्यै । मधुकैटभसंहर्त्र्यै । माधव्यै । माधवप्रियायै नमः । ३८०

ओं महिलायै नमः । महिमासारायै । शर्वाण्यै । शर्मदायिन्यै । रुद्राण्यै । रुचिरायै । रौद्र्यै । रुक्मभूषण-भूषितायै । अम्बिकायै । जगतां धात्र्यै । जटिन्यै । धूर्जटिप्रियायै । सूक्ष्मस्वरूपिण्यै । सौम्यायै । सुरुचये । सुलभायै । शुभायै । विपञ्चीकलनिक्वाणविमोहित-जगत्त्रयायै । भैरवप्रेमनिलयायै । भैरव्यै नमः । ४००

ओं भासुराकृत्यै नमः । पुष्पिण्यै । पुण्यनिलयायै । पुण्यश्रवणकीर्तनायै । कुरुकुल्लायै । कुण्डलिन्यै । वागीश्व्यै । नकुलेश्वर्यै । वामकेश्व्यै । गिरिसुतायै । वार्तालीपरि-पूजितायै । वारुणीमदरक्ताक्ष्यै । वन्दारुवरदायिन्यै । कटाक्षस्यन्दिकरुणायै । कन्दर्पमदवर्धन्यै । दूर्वाश्यामायै । दुष्टहन्त्र्यै । दुष्टग्रहविभेदिन्यै । सर्वशत्रुक्षयकर्यै । सर्वसंपत्प्रवर्धिन्यै नमः । ४२०

ओं कबरीशोभिकल्हारायै नमः । कलशिञ्जित-मेखलायै । मृणालीतुल्यदोर्वल्ल्यै ।मृडान्यै। मृत्युवर्जितायै । मृदुलायै । मृत्युसंहर्त्र्यै । मञ्जुलायै । मञ्जुभाषिण्यै । कर्पूरवीटिकबलायै । कमनीयकपोलभुवे । कर्पूरक्षोद-दिग्धांग्यै । कर्त्र्यै । कारणवर्जितायै । अनादिनिधनायै । धात्र्यै । धात्रीधरकुलोद्भवायै । स्तोत्रप्रियायै । स्तुतिमय्यै । मोहिन्यै नमः । ४४०

ओं मोहहारिण्यै नमः । जीवरूपायै । जीवकार्यै । जीवन्मुक्तिप्रदायिन्यै । भद्रपीठस्थितायै । भद्रायै । भद्रदायै । भर्गभामिन्यै । भगानन्दायै । भगमय्यै । भगलिङ्गायै ।

भगेश्वर्यै । मत्तमातङ्गगमनायै । मातङ्गकुलमञ्जर्यै । राजहंसगत्यै । राज्ञ्यै । राजराजसमर्चितायै । भवान्यै । पावन्यै । काल्यै नमः । ४६०

ओं दक्षिणायै नमः । दक्षकन्यकायै । हव्यवाहायै । हविर्भोक्त्र्यै । हारिण्यै । दुःखहारिण्यै । संसारतारिण्यै । सौम्यायै । सर्वेश्यै । समरप्रियायै । स्वप्नवत्यै । जागरिण्यै । सुषुप्तायै । विश्वरूपिण्यै । तैजस्यै । प्राज्ञकलनायै । चेतनायै । चेतनावत्यै । चिन्मात्रायै । चिद्घनायै नमः । ४८०

ओं चेत्यायै नमः । चिच्छायायै । चित्स्वरूपिण्यै । निवृत्तिरूपिण्यै । शान्त्यै । प्रतिष्ठायै । नित्यरूपिण्यै । विद्यारूपायै । शान्त्यतीतायै । कलापञ्चकरूपिण्यै । ह्रींकार्यै । ह्रीमत्यै । हृद्यायै । ह्रीच्छायायै । हरिवाहनायै । मूलप्रकृत्यै । अव्यक्तायै । व्यक्ताव्यक्तविनोदिन्यै । यज्ञरूपायै । यज्ञभोक्त्र्यै नमः । ५००

ओं यज्ञाङ्ग्यै नमः । यज्ञरूपिण्यै । दीक्षितायै । क्षमणायै । क्षामायै । क्षित्यै । क्षान्त्यै । श्रुत्यै । स्मृत्यै । एकस्यै । अनेकस्यै । कामकलायै । कल्यायै । कालस्वरूपिण्यै । दक्षायै । दाक्षायण्यै । दीक्षायै । दक्षयज्ञविनाशिन्यै । गायत्र्यै । गगनाकारायै नमः । ५२०

ओं गीर्देव्यै नमः । गरुडासनायै । सावित्र्यै । सकलाध्यक्षायै । ब्रह्माण्यै । ब्राह्मणप्रियायै । जगन्नाथायै । जगन्मूर्त्यै । जगन्मृत्युनिवारिण्यै । दृग्रूपायै । । दृश्यनिलयायै । द्रष्ट्र्यै । मन्त्र्यै । चिरन्तन्यै । विज्ञात्र्यै । विपुलायै । वेद्यायै । वृद्धायै । वर्षीयस्यै । मह्यै नमः । ५४०

ओं आर्यायै नमः । कुहरिण्यै । गुह्यायै । गौर्यै । गौतमपूजितायै । नन्दिन्यै । नलिन्यै । नित्यायै । नीत्यै । नयविशारदायै । गतागतज्ञायै । गन्धर्व्यै । गिरिजायै । गर्वनाशिन्यै । प्रियव्रतायै । प्रमायै । प्राणायै । प्रमाणज्ञायै । प्रियंवदायै । अशरीरायै नमः । ५६०

ओं शरीरस्थायै नमः । नामरूपविवर्जितायै । वर्णाश्रमविभागज्ञायै । वर्णाश्रमविवर्जितायै । नित्य-मुक्तायै । नित्यतृप्तायै । निर्लेपायै । निरवग्रहायै । इच्छाज्ञानक्रियाशक्त्यै । इन्दिरायै । बन्धुराकृत्यै । मनोरथप्रदायै । मुख्यायै । मानिन्यै । मानवर्जितायै । नीरागायै । निरहङ्कारायै । निर्नाशायै । निरुपप्लवायै । विचित्रायै नमः । ५८०

ओं चित्रचारित्रायै नमः । निष्कलायै । निगमालयायै । ब्रह्मविद्यायै । ब्रह्मनाड्यै । बन्धहन्त्र्यै । बलिप्रियायै । सुलक्षणायै । लक्षणज्ञायै । सुन्दरभ्रूलताञ्चितायै । सुमित्रायै । मालिन्यै । सीमायै । मुद्रिण्यै । मुद्रिकाञ्चितायै । रजस्वलायै । रम्यमूर्त्यै । जयायै । जन्मविवर्जितायै । पद्मालयायै नमः । ६००

पद्मपीठायै नमः । पद्मिन्यै । पद्मवर्णिन्यै । विश्वंभरायै । विश्वगर्भायै । विश्वेश्यै । विश्वतोमुख्यै । अद्वितीयायै । सहस्राक्ष्यै । विराड्रूपायै । विमोचिन्यै । सूत्ररूपायै । शास्त्रकर्त्र्यै । शास्त्रज्ञायै । शस्त्रधारिण्यै । वेदविदे । वेदकृते । वेद्यायै । वित्तज्ञायै । वित्तशालिन्यै नमः । ६२०

विशदायै नमः । वैष्णव्यै । ब्राह्म्यै । वैरिञ्च्यै । वाक्प्रदायिन्यै । व्याख्यात्र्यै । वामनायै । वृद्ध्यै । विश्वनाथायै। विशारदायै। मुद्रेश्वर्यै। मुण्डमालायै। काल्यै। कङ्कालरूपिण्यै । महेश्वरप्रीतिकर्यै । महेश्वरपतिव्रतायै । ब्रह्माण्डमालिन्यै । बुध्न्यायै । मतङ्गमुनिपूजितायै । ईश्वर्यै नमः। ६४०

ओं चण्डिकायै नमः । चण्ड्यै । नियन्त्र्यै । नियमस्थितायै । सर्वान्तर्यामिण्यै । सेव्यायै । सन्तत्यै । सन्ततिप्रदायै । तमालपल्लवश्यामायै । ताम्रोष्ठ्यै । ताण्डवप्रियायै । नाट्यलास्यकर्यै । रंभायै । नटराजप्रियाङ्गनायै। अनङ्गरूपायै। अनङ्गश्रियै। अनङ्गेश्यै। वसुन्धरायै। साम्राज्यदायिन्यै। सिद्धायै नमः। ६६०

ओं सिद्धेश्यै नमः । सिद्धिदायिन्यै । सिद्धमात्रे । सिद्धपूज्यायै । सिद्धार्थायै । वसुदायिन्यै । भक्तिमत्कल्पलतिकायै । भक्तिदायै । भक्तवत्सलायै । पञ्चशक्त्यर्चितपदायै । परमात्मस्वरूपिण्यै । अज्ञानतिमिरज्योत्स्नायै । नित्याह्लादायै । निरञ्जनायै । मुग्धायै। मुग्धस्मितायै। मैत्र्यै। मुग्धकेश्यै। मधुप्रियायै। कलापिन्यै नमः। ६८०

ओं कामकलायै नमः । कामकेल्यै । कलावत्यै । अखण्डायै। निरहङ्कारायै। प्रधानपुरुषेश्वर्यै। रहः पूज्यायै। रहःकेल्यै। रहःस्तुत्यायै। हरप्रियायै। शरण्यायै। गहनायै। गुह्यायै । गुहान्तःस्थायै । गुहप्रसवे । स्वसंवेद्यायै । स्वप्रकाशायै। स्वात्मस्थायै। स्वर्गदायिन्यै। निष्प्रपञ्चायै नमः। ७००

ओं निराधारायै नमः । नित्यानित्यस्वरूपिण्यै । निर्मदायै । नर्तक्यै । कीर्त्यै । निष्कामायै । निष्कलायै । कलायै । अष्टमूर्त्यै । अमोघायै । उमायै । नन्द्यादिगण-पूजितायै । यन्त्ररूपायै । तन्त्ररूपायै । मन्त्ररूपायै । मनोन्मन्यै । शिवकामेश्वर्यै । देव्यै । चिद्रूपायै । चित्तरङ्गिण्यै नमः । ७२०

ओं चित्स्वरूपायै नमः । चित्प्रकाशायै । चिन्मूर्त्यै । चिन्मय्यै । चित्यै । मूर्खदूरायै । मोहहन्त्र्यै । मुख्यायै । क्रोडमुखीसख्यै । ज्ञानज्ञातृज्ञेयरूपायै । व्योमाकारायै । विलासिन्यै । विमर्शरूपिण्यै । वश्यायै । विधानज्ञायै । विजृम्भितायै । केतकीकुसुमापीडायै । कस्तूरीतिल-कोज्ज्वलायै । मृग्यायै । मृगाक्ष्यै नमः ।। ७४०

ओं रसिकायै नमः । मृगनाभिसुगन्धिन्यै । यक्षकर्दमलिप्ताङ्ग्यै । यक्षिण्यै । यक्षपूजितायै । लसन्माणिक्यकटकायै । केयूरोज्ज्वलदोर्लतायै । सिन्दूर-राजत्सीमन्तायै । सुभ्रूवल्ल्यै । सुनासिकायै । कैवल्यदायै । कान्तिमत्यै । कठोरकुचमण्डलायै । तलोदर्यै । तमोहन्त्र्यै । त्रयस्त्रिंशत्सुरात्मिकायै । स्वयंभुवे । कुसुमामोदायै । स्वयंभुकुसुमप्रियायै । स्वाध्यायिन्यै नमः । ७६०

ओं सुखाराध्यायै नमः । वीरश्रियै । वीरपूजितायै । द्राविण्यै । विद्रुमाभोष्ठ्यै । वेगिन्यै । विष्णुवल्लभायै । हालामदालसद्वाण्यै । लोलायै । लीलावत्यै । रत्यै । लोपामुद्रार्चितायै । लक्ष्म्यै । अहल्यापरिपूजितायै । आब्रह्मकीटजनन्यै । कैलासगिरिवासिन्यै । निधीश्वर्यै । निरातङ्कायै । निष्कलङ्कायै । जगन्मय्यै नमः । ७८०

ओं आदिलक्ष्म्यै नमः । अनन्तश्रियै । अच्युतायै । तत्वरूपिण्यै । नामजात्यादिरहितायै । नरनारायणार्चितायै । गुह्योपनिषदुद्गीतायै । लक्ष्मीवाणीनिषेवितायै । मतङ्गवरदायै । सिद्धायै । महायोगीश्वर्यै । गुरवे । गुरुप्रियायै । कुलाराध्यायै । कुलसंकेतपालिन्यै । चिच्चन्द्रमण्डलान्तःस्थायै । चिदाकाशस्वरूपिण्यै । अनङ्गशास्त्रतत्वज्ञायै । नानाविधरसप्रियायै । निर्मलायै नमः । ८००

निरवद्याङ्ग्यै नमः । नीतिज्ञायै । नीतिरूपिण्यै । व्यापिन्यै । विबुधश्रेष्ठायै । कुलशैलकुमारिकायै । विष्णुप्रस्वे । वीरमात्रे । नासामणिविराजितायै । नायिकानगरीसंस्थायै । नित्यतुष्टायै । नितम्बिन्यै । पञ्चब्रह्ममय्यै । प्राञ्च्यै । ब्रह्मात्मैक्यस्वरूपिण्यै । सर्वोपनिषदुद्गीतायै । सर्वानुग्रहकारिण्यै । पवित्रायै । पावनायै । पूतायै नमः । ८२०

ओं परमात्मस्वरूपिण्यै नमः । सूर्येन्दुवह्निनयनायै । सूर्यमण्डलमध्यगायै । गायत्र्यै । गात्ररहितायै । सुगुणायै । गुणवर्जितायै । रक्षाकर्यै । रम्यरूपायै । सात्विकायै । सत्वदायिन्यै । विश्वातीतायै । व्योमरूपायै । सदार्चनजपप्रियायै । आत्मभुवे । अजितायै । जिष्णवे । अजायै । स्वाहायै । स्वधायै नमः । ८४०

ओं सुधायै नमः । नन्दिताशेषभुवनायै । नामसङ्कीर्तनप्रियायै । गुरुमूर्त्यै । गुरुमय्यै । गुरुपादार्चनप्रियायै । गोब्राह्मणात्मिकायै । गुर्व्यै । नीलकण्ठ्यै । निरामयायै । मानव्यै । मन्त्रजनन्यै । महाभैरवपूजितायै । नित्योत्सवायै । नित्यपुष्टायै । श्यामायै । यौवनशालिन्यै । महनीयायै । महामूर्त्यै । महत्यै सौख्यसन्तत्यै नमः । ८६०

ओं पूर्णोदर्यै नमः । हविर्धात्र्यै । गणाराध्यायै । गणेश्वर्यै । गायनायै । गर्वरहितायै । स्वेदबिन्दूल्लसन्मुख्यै । तुङ्गस्तन्यै । तुलाशून्यायै । कन्यायै । कमलवासिन्यै । शृङ्गारिण्यै । श्रियै । श्रीविद्यायै । श्रीप्रदायै । श्रीनिवासिन्यै । त्रैलोक्यसुन्दर्यै । बालायै । त्रैलोक्यजनन्यै । सुधियै नमः । ८८०

ओं पञ्चक्लेशहरायै नमः । पाशधारिण्यै । पशुमोचिन्यै । पाषण्डहन्त्र्यै । पापघ्न्यै । पार्थिवश्रीकर्यै । धृत्यै । निरपायायै । दुरापायै । यस्यै । सुलभायै । शोभनाकृत्यै । महाबलायै । भगवत्यै । भवरोगनिवारिण्यै । भैरवाष्टकसंसेव्यायै । ब्राह्म्यादिपरिवारितायै । वामादिशक्तिसहितायै । वारुणीमदविह्वलायै । वरिष्ठायै नमः । ९००

ओं वश्यदायै नमः । वश्यायै । भक्तार्तिदमनायै । शिवायै । वैराग्यजनन्यै । ज्ञानदायिन्यै । ज्ञानविग्रहायै । सर्वदोषविनिर्मुक्तायै । शङ्करार्धशरीरिण्यै । सर्वेश्वर-प्रियतमायै । स्वयंज्योतिःस्वरूपिण्यै । क्षीरसागर-मध्यस्थायै । महाभुजगशायिन्यै । कामधेन्वै । बृहद्गर्भायै । योगनिद्रायै । युगन्धरायै । महेन्द्रोपेन्द्रजनन्यै । मातङ्गकुलसंभवायै । मतङ्गजातिसंपूज्यायै नमः । ९२०

ओं मतङ्गकुलदेवतायै नमः । गुह्यविद्यायै । वश्यविद्यायै । सिद्धविद्यायै । शिवाङ्गनायै । सुमङ्गलायै । रत्नगर्भायै । सूर्यमात्रे । सुधाशनायै । खड्गमण्डल-संपूज्यायै । सालग्रामनिवासिन्यै । दुर्जयायै । दुष्टदमनायै । दुर्निरीक्षायै । दुरत्ययायै । शङ्खचक्रगदाहस्तायै ।

विष्णुशक्त्यै । विमोहिन्यै । योगमात्रे । योगगम्यायै नमः । ९४०

ओं योगनिष्ठायै नमः । सुधास्रवायै । समाधिनिष्ठैः संसेव्यायै । सर्वभेदविवर्जितायै । साधारणायै । सरोजाक्ष्यै । सर्वज्ञायै । सर्वसाक्षिण्यै । महाशक्त्यै । महोदारायै । महामङ्गलदेवतायै । कलौ कृतावतरणायै । कलिकल्मष-नाशिन्यै । सर्वदायै । सर्वजनन्यै । निरीशायै । सर्वतोमुख्यै । सुगूढायै । सर्वतोभद्रायै । सुस्थितायै नमः । ९६०

ओं स्थाणुवल्लभायै नमः । चराचरजगद्रूपायै । चेतनाचेतनाकृत्यै । महेश्वरप्राणनाड्यै । महाभैरवमोहिन्यै । मञ्जुलायै । यौवनोन्मत्तायै । महापातकनाशिन्यै । महानुभावायै । माहेन्द्र्यै । महामरकतप्रभायै । सर्वशक्त्यासनायै । शक्त्यै । निराभासायै । निरिन्द्रियायै । समस्तदेवतामूर्त्यै । समस्तसमयार्चितायै । सुवर्चलायै । वियन्मूर्त्यै । पुष्कलायै नमः । ९८०

ओं नित्यपुष्पिण्यै नमः । नीलोत्पलदलश्यामायै । महाप्रलयसाक्षिण्यै । संकल्पसिद्धायै । संगीतरसिकायै । रसदायिन्यै । अभिन्नायै । ब्रह्मजनन्यै । कालक्रमविवर्जि-तायै । अजपायै । जाड्यरहितायै । प्रसन्नायै । भगवत्प्रियायै । इन्दिरायै । जगतीकन्दायै । सच्चिदानन्दकन्दल्यै । श्रीचक्रनिलयायै । देव्यै । श्रीविद्यायै । श्रीप्रदायिन्यै नमः । १०००

—*—

## श्यामलाष्टोत्तरशतनामस्तोत्रम् ।

जय मातङ्गतनये जय नीलोत्पलयुते ।
जय संगीतरसिके जय लीलाशुकप्रिये ।। १

मातङ्गी विजया श्यामा सचिवेशी शुकप्रिया ।
नीपप्रिया कदम्बेशी मदाघूर्णितलोचना ।। २

भक्तानुरक्ता मन्त्रेशी पुष्पिणी मन्त्रिणी शिवा ।
कलावती रक्तवस्त्राऽभिरामा च सुमध्यमा ।। ३

त्रिकोणमध्यनिलया चारुचन्द्रावतंसिनी ।
रहःपूज्या रहः केलिः योनिरूपा महेश्वरी ।। ४

भगप्रिया भगाराध्या सुभगा भगमालिनी ।
रतिप्रिया चतुर्बाहुः सुवेणी चारुहासिनी ।। ५

मधुप्रिया श्रीजननी शर्वाणी च शिवात्मिका ।
राज्यलक्ष्मीप्रदा नित्या नीपोद्यानविवासिनी ।। ६

वीणावती कम्बुकण्ठी कामेशी यज्ञरूपिणी ।
सङ्गीतरसिका नादप्रिया नीलोत्पलद्युतिः ।। ७

मतङ्गतनया लक्ष्मीः व्यापिनी सर्वरञ्जिनी ।
दिव्यचन्दनदिग्धाङ्गी यावकार्द्रपदाम्बुजा ।। ८

कस्तूरीतिलका सुभ्रूर्बिंबोष्ठी च मदालसा ।
विद्याराज्ञी भगवती सुधापानानुमोदिनी ।। ९

शङ्खताटङ्किनी गुह्या योषित्पुरुषमोहिनी ।
किङ्करीभूतगीर्वाणी कौलिन्यक्षररूपिणी ।। १०

विद्युत्कपोलफलिका मुक्तारत्नविभूषिता ।
सुनासा तनुमध्या च श्रीविद्या भुवनेश्वरी ।। ११
पृथुस्तनी ब्रह्मविद्या सुधासागरवासिनी ।
गुह्यविद्याऽनवद्याङ्गी यन्त्रिणी रतिलोलुपा ।। १२
त्रैलोक्यसुन्दरी रम्या स्रग्विणी कीरधारिणी ।
आत्मैक्यसुमुखीभूतजगदाह्लादकारिणी ।। १३
कल्पातीता कुण्डलिनी कलाधारा मनस्विनी ।
अचिन्त्यानन्तविभवा रत्नसिंहासनेश्वरी ।। १४
पद्मासना कामकला स्वयंभूकुसुमप्रिया ।
कल्याणी नित्यपुष्पा च शाम्भवी वरदायिनी ।। १५
सर्वविद्याप्रदा वाच्या गुह्योपनिषदुत्तमा ।
नृपवश्यकरी भोक्त्री जगत्प्रत्यक्षसाक्षिणी ।। १६
ब्रह्मविष्ण्वीशजननी सर्वसौभाग्यदायिनी ।
गुह्यातिगुह्यगोप्त्री च नित्यक्लिन्नाऽमृतोद्भवा ।। १७
कैवल्यदात्री वशिनी सर्वसंपत्प्रदायिनी ।
श्यामलाया नामशतं साष्टकं पठतो वशे ।
श्रीः कीर्तिर्वाक्पटुत्वं च विद्वत्संमाननं जयः ।। १८

—*—

## श्री श्यामलाष्टोत्तरशतनामावलिः ।

ओं ऐं ह्रीं श्रीं । मातङ्ग्यै नमः । विजयायै । श्यामायै । सचिवेश्यै । शुकप्रियायै । नीपप्रियायै । कदम्बेश्यै । मदाघूर्णित लोचनायै । भक्तानुरक्तायै । मन्त्रेश्यै ।

पुष्पिण्यै । मन्त्रिण्यै । शिवायै । कलावत्यै । रक्तवस्त्रायै । अभिरामायै । सुमध्यमायै । त्रिकोणमध्यनिलयायै । चारुचन्द्रावतंसिन्यै । रहः पूज्यायै नमः । २०

ओं रहः केलये नमः । योनिरूपायै । महेश्वर्यै । भगप्रियायै । भगाराध्यायै । सुभगायै । भगमालिन्यै । रतिप्रियायै । चतुर्बाहवे । सुवेण्यै । चारुहासिन्यै । मधुप्रियायै । श्रीजनन्यै । शर्वाण्यै । शिवात्मिकायै । राज्यलक्ष्मीप्रदायै । नित्यायै । नीपोद्याननिवासिन्यै । वीणावत्यै । कम्बुकण्ठ्यै नमः । ४०

ओं कामेश्यै नमः । यज्ञरूपिण्यै । सङ्गीतरसिकायै । नादप्रियायै । नीलोत्पलद्युतये । मतङ्गतनयायै । लक्ष्म्यै । व्यापिन्यै । सर्वरञ्जिन्यै । दिव्यचन्दनदिग्धाङ्ग्यै । यावकार्द्रपदाम्बुजायै । कस्तूरीतिलकायै । सुभ्रुवे । बिम्बोष्ठ्यै । मदालसायै । विद्याराज्ञ्यै । भगवत्यै । सुधापानानुमोदिन्यै । शङ्खताटङ्किन्यै । गुह्यायै नमः । ६०

ओं योषित्पुरुषमोहिन्यै नमः । किङ्करीभूतगीर्वाण्यै । कौलिन्यै । अक्षररूपिण्यै । विद्युत्कपोलफलिकायै । मुक्तारत्नविभूषितायै । सुनासायै । तनुमध्यायै । श्रीविद्यायै । भुवनेश्वर्यै । पृथुस्तन्यै । ब्रह्मविद्यायै । सुधासागरवासिन्यै । गुह्यविद्यायै । अनवद्याङ्ग्यै । यन्त्रिण्यै । रतिलोलुपायै । त्रैलोक्यसुन्दर्यै । रम्यायै । स्रग्विण्यै नमः । ८०

कीरधारिण्यै नमः । आत्मैक्यसुमुखीभूतजगदाह्लादकारिण्यै । कल्पातीतायै । कुण्डलिन्यै । कलाधारायै । मनस्विन्यै । अचिन्त्यानन्तविभवायै ।

रत्नसिंहासनेश्वर्यै । पद्मासनायै । कामकलायै । स्वयंभू-कुसुमप्रियायै । कल्याण्यै । नित्यपुष्पायै । शाम्भवी वरदायिन्यै । सर्वविद्याप्रदायै । वाच्यायै । गुह्योपनिषदुत्तमायै । नृपवश्यकर्यै । भोक्त्र्यै । जगत्प्रत्यक्षसाक्षिण्यै नमः । १००

ओं ब्रह्मविष्ण्वीशजनन्यै नमः । सर्वसौभाग्यदायिन्यै । गुह्यातिगुह्यगोप्त्र्यै । नित्यक्लिन्नायै । अमृतोद्भवायै । कैवल्यदात्र्यै । वशिन्यै । सर्वसम्पत्प्रदायिन्यै नमः । १०८

—*—

## श्यामलाषोडशनामस्तोत्रम्

संगीतयोगिनी श्यामा श्यामला मन्त्रनायिका ।
मन्त्रिणी सचिवेशानी प्रधानेशी शुकप्रिया ॥ १
वीणावती वैणिकी च मुद्रिणी प्रियकप्रिया ।
नीपप्रिया कदम्बेशी कदम्बवनवासिनी ॥ २
सदामदेति मन्त्रिण्या नामषोडशकं जपेत् ।
विद्यास्मृतियशोमेधावाक्पटुत्वप्रदायकम् ॥ ४

## श्यामलाषोडशनामावलिः

संगीतयोगिन्यै नमः । श्यामायै । श्यामलायै । मन्त्रनायिकायै । मन्त्रिण्यै । सचिवेशान्यै । प्रधानेश्यै । शुकप्रियायै । वीणावत्यै । वैणिक्यै । मुद्रिण्यै । प्रियकप्रियायै । नीपप्रियायै । कदम्बेश्यै । कदम्बवनवासिन्यै । सदामदायै नमः । १६

## श्री वाराहीध्यानम्

नमोऽस्तु देवि वाराहि जयैंकारस्वरूपिणि।
जय वाराहि विश्वेशि मुख्यवाराहि ते नमः ॥।

वराहमुखि वन्दे त्वां अन्धे अन्धिनि ते नमः।
सर्वदुष्टप्रदुष्टानां वाक्स्तम्भनकरे नमः ॥ २

नमः स्तम्भिनि स्तम्भे त्वां जृम्भे जृम्भिणि ते नमः।
रुन्धे रुन्धिनि वन्दे त्वां नमो देवेशि मोहिनि ॥ ३

स्वभक्तानां हि सर्वेषां सर्वकामप्रदे नमः।
बाह्वोः स्तम्भकरीं वन्दे जिह्वास्तम्भनकारिणीम् ॥ ४

स्तम्भनं कुरु शत्रूणां कुरु मे शत्रुनाशनम्।
शीघ्रं वश्यं च कुरु मे याऽग्नौ वागात्मिका स्थिता ॥ ५

ठचतुष्टयरूपे त्वां शरणं सर्वदा भजे।
हुमात्मिके फड्रूपेण जय आद्यानने शिवे ॥ ६

देहि मे सकलान्कामान् वाराहि जगदीश्वरि।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः ॥ ७

—*—

## आदिवाराहीसहस्रनामस्तोत्रम्

देव्युवाच—

श्रीकण्ठ करुणासिन्धो दीनबन्धो जगत्पते।
भूतिभूषितसर्वाङ्ग परात्परतर प्रभो ॥ १

कृताञ्जलिपुटा भूत्वा पृच्छाम्येकं दयानिधे।
आद्या या चित्स्वरूपा या निर्विकारा निरञ्जना ॥ २

बोधातीता ज्ञानगम्या कूटस्थाऽऽनन्दविग्रहा।
अग्राह्याऽतीन्द्रिया शुद्धा निरीहा स्वावभासिका॥ ३

गुणातीता निष्प्रपञ्चा ह्यवाङ्मनसगोचरा।
प्रकृतिर्जगदुत्पत्तिस्थितिसंहारकारिणी॥ ४

रक्षार्थे जगतां देवकार्यार्थं वा सुरद्विषाम्।
नाशाय धत्ते सा देहं तत्तत्कार्यैकसाधनम्॥ ५

तत्र भूधरणार्थाय यज्ञविस्तारहेतवे।
विद्युत्केशहिरण्याक्षबलाकादिवधाय च॥ ६

आविर्बभूव या शक्तिर्घोरा भूदाररूपिणी।
वाराही विकटाकारा दानवासुरनाशिनी॥ ७

सद्यः सिद्धिकरी देवी घोरा घोरतरा शिवा।
तस्याः सहस्रनामाख्यं स्तोत्रं मे समुदीरय॥ ८

कृपालेशोऽस्ति मयि चेद्भाग्यं मे यदि वा भवेत्।
अनुग्राह्या यद्यहं स्यां तदा वद दयानिधे॥ ९

ईश्वर उवाच।

साधु साधु वरारोहे धन्या बहुमतासि मे।
शुश्रूषादिसमुत्पन्ना भक्तिश्रद्धान्विता तव॥ १०

सहस्रनाम वाराह्याः सर्वसिद्धिविधायि च।
तव चेन्न प्रवक्ष्यामि प्रिये कस्य वदाम्यहम्॥ ११

किन्तु गोप्यं प्रयत्नेन संरक्ष्यं प्राणतोऽपि च।
विशेषतः कलियुगे न देयं यस्य कस्यचित्॥
सर्वेऽन्यथा सिद्धिभाजो भविष्यन्ति वरानने॥ १२

ओं अस्य श्रीवाराहीसहस्रनामस्तोत्रस्य महादेव ऋषिः । अनुष्टुप्छन्दः । वाराही देवता । ऐं बीजम् । क्रों शक्तिः । हुं कीलकम् । मम सर्वार्थसिद्ध्यर्थे जपे विनियोगः ।

ओं वाराही वामनी वामा बगला वासवी वसुः ।
वैदेही वीरसूर्बाला वरदा विष्णुवल्लभा ॥ १३

वन्दिता वसुदा वश्या व्यात्तास्या वञ्चिनी बला ।
वसुन्धरा वीतिहोत्रा वीतरागा विहायसी ॥ १४

सर्वा खनिप्रिया काम्या कमला काञ्चनी रमा ।
धूम्रा कपालिनी वामा कुरुकुल्या कलावती ॥ १५

याम्याऽऽग्नेयी धरा धन्या धर्मिणी ध्यानिनी ध्रुवा ।
धृतिर्लक्ष्मीर्जया तुष्टिः शक्तिर्मेधा तपस्विनी ॥ १६

वेधा जया कृतिः कान्तिः स्वाहा शान्तिर्दमा रतिः ।
लज्जा मतिः स्मृतिर्निद्रा तन्द्रा गौरी शिवा स्वधा ॥ १७

चण्डी दुर्गाऽभया भीमा भाषा भामा भयानका ।
भूदारा भयहा भीरुर्भैरवी भङ्गरा भटी ॥ १८

घुर्घुरा घोषणा घोरा घोषिणी घोणसंयुता ।
घनाघना घर्घरा च घोणयुक्ताऽघनाशिनी ॥ १९

पूर्वाग्नेयी पातु याम्या वायव्युत्तरवारुणी ।
ऐशान्यूर्ध्वाधः स्थिता च पृष्ठं दक्षाग्रवामगा ॥ २०

हृन्नाभिब्रह्मरन्ध्रार्कस्वर्गपातालभूमिगा ।
ऐं श्रीः ह्रीः क्लीं तीर्थगतिः प्रीतिर्धीर्गीः कलाऽव्यया ॥ २१

ऋग्यजुः सामरूपा च परा यात्रिण्युदुम्बरा ।
गदासिशक्तिचापेषुशूलचक्रर्ष्टिधारिणी ॥ २२

जरती युवती बाला चतुरङ्गबलोत्कटा।
सत्याक्षरा चाधिभेत्री धात्री पात्री परा पटुः ॥ २३

क्षेत्रज्ञा कंपिनी ज्येष्ठा दुराधर्षा धुरन्धरा।
मालिनी मानिनी माता माननीया मनस्विनी ॥ २४

महोत्कटा मन्युकरी मनुरूपा मनोजवा।
मेदस्विनी मद्यरता मधुपा मङ्गलाऽमरा ॥२५

माया माताऽऽमयहरी मृडानी महिला मृतिः।
महादेवी मोहहरी मञ्जुर्मृत्युञ्जयाऽमला ॥ २६

मांसला मानवा मूला महारात्रिर्महालसा।
मृगांका मीनकारी स्यान्महिषघ्नी मदन्तिका ॥ २७

मूर्च्छामोहमृषामोघामदमृत्युमलापहा।
सिंहर्क्षमहिषव्याघ्रमृगक्रोडानना धुनी ॥ २८

धरिणी धारिणी धेनुर्धरित्री धावनी धवा।
धर्मध्वना ध्यानपरा धनधान्यधराप्रदा ॥ २९

पापदोषरिपुव्याधिनाशिनी सिद्धिदायिनी।
कलाकाष्ठात्रपापक्षाऽहस्त्रुटिश्वासरूपिणी ॥ ३०

समृद्धा सुभुजा रौद्री राधा राका रमाऽरणिः।
रामा रतिः प्रिया रुष्टा रक्षिणी रविमध्यगा ॥ ३१

रजनी रमणी रेवा रङ्किनी रञ्जिनी रमा।
रोषा रोषवती रूक्षा करिराज्यप्रदा रता ॥ ३२

रूक्षा रूपवती रास्या रुद्राणी रणपण्डिता।
गङ्गा च यमुना चैव सरस्वतिस्वसूर्मधुः ॥ ३३

गण्डकी तुङ्गभद्रा च कावेरी कौशिकी पटुः ।
खट्वोरगवती चारा सहस्राक्षा प्रतर्दना ।। ३४

सर्वज्ञा शाङ्करी शास्त्री जटाधारिण्ययोरदा ।
यावनी सौरभी कुब्जा वक्रतुण्डा वधोद्यता ।। ३५

चन्द्रापीडा वेदवेद्या शङ्खिनी नीललोहिता ।
ध्यानातीताऽपरिच्छेद्या मृत्युरूपा त्रिवर्गदा ।। ३६

अरूपा बहुरूपा च नानारूपा नतानना ।
वृषाकपिर्वृषारूढा वृषेशी वृषवाहना ।। ३७

वृषप्रिया वृषावर्ता वृषपर्वा वृषाकृतिः ।
कोदण्डिनी नागचूडा चक्षुष्या परमार्थिका ।। ३८

दुर्वासा दुर्ग्रहा देवी सुरावासा दुरारिहा ।
दुर्गा राधा दुर्गहन्त्री दुराराध्या दवीयसी ।। ३९

दुरावासा दुःप्रहस्ता दुःप्रकम्पा दुरूहिणी ।
सुवेणी श्रमणी श्यामा मृगव्याधाऽर्कतापिनी ।। ४०

दुर्गा तार्क्षी पाशुपती कौणपी कुणपाशना ।
कपर्दिनी कामकामा कमनीया कलोज्ज्वला ।। ४१

कासावहृत्कारकानी कम्बुकण्ठी कृतागमा ।
कर्कशा कारणा कान्ता कल्पाऽकल्पा कटङ्कटा ।। ४२

श्मशाननिलया भिन्नी गजारूढा गजापहा ।
तत्प्रिया तत्परा राया स्वर्भानुः कालवंचिनी ।। ४३

शाखा विशाखा गोशाखा सुशाखा शेषशाखिनी ।
व्यङ्गा शुभाङ्गा वामाङ्गा नीलाङ्गाऽनङ्गरूपिणी ।। ४४

साङ्गोपाङ्गा च शारङ्गा सुभाङ्गा रङ्गरूपिणी।
भद्रा सुभद्रा भद्राक्षी सिंहिका विनताऽदितिः ॥ ४५

हृद्या वद्या सुपद्या च गद्यपद्यप्रिया प्रसूः।
चर्चिका भोगवत्यम्बा सारसी शबरी नटी ॥ ४६

योगिनी पुष्कलाऽनन्ता परा सांख्या शची सती।
निम्नगा निम्ननाभिश्च सहिष्णुर्जागृती लिपिः ॥ ४७

दमयन्ती दमी दण्डोद्दण्डिनी दारदायिका।
दीपिनी दाविनी दात्री दक्षकन्या दरिद्रती ॥ ४८

दाहिनी द्राविणी दर्वी दण्डिनी दण्डनायिका।
दानप्रिया दोषहन्त्री दुःखदारिद्र्यनाशिनी ॥ ४९

दोषदा दोषकृद्दोग्ध्री दोहदा देविकाऽदना।
दर्वीकरी दुर्वलिता दुर्युगाऽद्वयवादिनी ॥ ५०

चराचराऽनन्तवृष्टिरुन्मत्ता कमलालसा।
तारिणी तारकान्तारा परात्मा कुब्जलोचना ॥ ५१

इन्दुर्हिरण्यकवचा व्यवस्था व्यवसायिका।
ईशनन्दा नदी नागी यक्षिणी सर्पिणी वरी ॥ ५२

सुधा सुरा विश्वसहा सुवर्णाङ्गदधारिणी।
जननी प्रीतिपाकेरुः साम्राज्ञी संविदुत्तमा ॥ ५३

अमेयाऽरिष्टदमनी पिङ्गला लिङ्गधारिणी।
चामुण्डा प्लाविनी हाला बृहज्ज्योतिरुरुक्रमा ॥ ५४

सुप्रतीका च सुग्रीवा हव्यवाहा प्रलापिनी।
नभस्या माधवी ज्येष्ठा शिशिरा ज्वालिनी रुचिः ॥ ५५

शुक्ला शुक्रा शुचा शोका शुकी भेकी पिकी बकी।
पृषदश्वा नभोयोनिः सुप्रतीका विभावरी ॥ ५६

गर्विता गुर्विणी गण्या गुरुर्गुरुतरी गया।
गन्धर्वी गणिका गुन्द्रा गारुडी गोपिकाऽग्रगा ॥ ५७

गणेशी गामिनी गन्त्री गोपतिर्गन्धिनी गवी।
गर्जिता गा(वै)ननी गोना गोरक्षा गोविदां गतिः ॥ ५८

ग्राथिकी ग्रथिकृद्गोष्ठी गर्भरूपा गुणैषिणी।
पारस्करी पाञ्चनदा बहुरूपा विरूपिका ॥ ५९

ऊहा व्यूहा दुरूहा च सम्मोहा मोहहारिणी।
यज्ञविग्रहिणी यज्ञा यायजूका यशस्विनी ॥ ६०

अग्निष्टोमोऽत्यग्निष्टोमो वाजपेयश्च षोडशी।
पुण्डरीकोऽश्वमेधश्च राजसूयश्च नाभसः ॥ ६१

स्विष्टकृद्बहुसौवर्णो गोसवश्च महाव्रतः।
विश्वजिद्ब्रह्मयज्ञश्च प्राजापत्यः शिलायवः ॥ ६२

अश्वक्रान्तो रथक्रान्तो विष्णुक्रान्तो विभावसुः।
सूर्यक्रान्तो गजक्रान्तो बलिभिन्नागयज्ञकः ॥ ६३

सावित्री चार्धसावित्री सर्वतोभद्रवारुणः।
आदित्यामयगोदोहगवामयमृगामयाः ॥ ६४

सर्पमयः कालपिञ्जः कौडिन्योपनकाहलः।
अग्निविद्द्वादशाहः स्वोपांशुः सोम(वि)दोहनः ॥ ६५

अश्वप्रतिग्रहो बर्हिरथोऽभ्युदय ऋद्धिराट्।
सर्वस्वदक्षिणो दीक्षा सोमाख्यः समिदाह्वयः ॥ ६६

कठायनश्च गोदोहः स्वाहाकारस्तनूनपात्।
दण्डापुरुषमेधश्च श्येनो वज्र इषुर्यमः ॥ ६७

अङ्गिराः कङ्कभेरुण्डा चान्द्रायणपरायणः।
ज्योतिष्टोमः कुतो(थो) दर्शो नन्दयाख्यः पौर्णमासिकः॥

गजप्रतिग्रहो रात्रिः सौरभः शाङ्कलायनः।
सौभाग्यकृच्च कारीषो बैदलायनरामठौ॥ ६९

शोचिष्कारी नाचिकेतः शान्तिकृत्पुष्टिकृत्तथा।
वैनतेयोच्चाटनौ च वशीकरणमारणे॥ ७०

त्रैलोक्यमोहनो वीरः कन्दर्पबलशातनः।
शङ्खचूडो गजच्छायो रौद्राख्यो विष्णुविक्रमः॥ ७१

भैरवः कवहाख्यश्चावभृथोऽष्टाकपालकः।
श्रौषट् वौषट् वषट्कारः पाकसंस्था परिश्रुती॥ ७२

चयनो नरमेधश्च कारीरी रत्नदानिका।
सौत्रामणी च भारुन्दा बार्हस्पत्यो बलङ्गमः॥ ७३

प्रचेताः सर्वसत्रश्च गजमेधः करम्भकः।
हविःसंस्था सोमसंस्था पाकसंस्था गरुत्मती॥ ७४

सत्यसूर्यश्चमसः स्रुक् स्रुवोलूखलमेक्षणी।
चफलो मन्थनी मेढी यूपः प्राग्वंशकुब्जिका॥ ७५

रश्मिरंशुश्च दोभ्यश्च वारुणोदः पविः कुथा।
आप्तोर्यामो द्रोणकलशो मैत्रावरुण आश्विनः॥ ७६

पात्नीवतश्च मन्थी च हारियोजन एव च।
प्रतिप्रस्थानशुक्रौ च सामिधेनी समित्समा॥ ७७

होताऽध्वर्युस्तथोद्गाता नेता त्वष्टा च योत्रिका।
आग्नीध्रोऽच्छवगाष्टावग्रावस्तुत्प्रतर्दकः ।। ७८

स ुब्रह्मण्यो ब्राह्मणश्च मैत्रावरुणवारुणौ।
प्रस्तोता प्रतिप्रस्थाता यजमानो ध्रुवंत्रिका।। ७९

आमिक्षामीषदाज्यं च हव्यं कव्यं चरुः पयः।
जूहूदूध्रुणोभृत् ब्रह्मा च त्रयी त्रेता तरश्विनी।। ८०

पुरोडाशः पशूकर्षः प्रोक्षणी ब्रह्मयज्ञिनी।
अग्निजिह्वा दर्भरोमा ब्रह्मशीर्षा महोदरी।। ८१

अमृतप्राशिका नारायणी नग्ना दिगम्बरा।
ओंकारिणी चतुर्वेदरूपा श्रुतिरनुल्वणा।। ८२

अष्टादशभुजा रम्भा सत्या गगनचारिणी।
भीमवक्त्रा महावक्त्रा कीर्तिराकृष्णपिङ्गला।। ८३

कृष्णमूर्द्धा महामूर्द्धा घोरमूर्द्धा भयानना।
घोरानना घोरजिह्वा घोररावा महाव्रता।। ८४

दीप्तास्या दीप्तनेत्रा च चण्डप्रहरणा जटी।
सुरभी सौनभी वीची छाया सन्ध्या च मांसला।। ८५

कृष्णा कृष्णांबरा कृष्णशार्ङ्गिणी कृष्णवल्लभा।
त्रासिनी मोहिनी द्वेष्या मृत्युरूपा भयावहा।। ८६

भीषणा दानवेन्द्रघ्नी कल्पकर्त्री क्षयङ्करी।
अभया पृथिवी साध्वी केशिनी व्याधिजन्महा।। ८७

अक्षोभ्या ह्लादिनी कन्या पवित्रा रोपिणी शुभा।
कन्यादेवी सुरादेवी भीमादेवी मदन्तिका।। ८८

शाकम्भरी महाश्वेता धूम्रा धूम्रेश्वरीश्वरी।
वीरभद्रा महाभद्रा महादेवी महासुरी॥ ८९

श्मशानवासिनी दीप्ता चितिसंस्था चितिप्रिया।
कपालहस्ता खट्वाङ्गी खड्गिनी शूलिनी हली॥ ९०

कान्तारिणी महायोगी योगमार्गा युगग्रहा।
धूम्रकेतुर्महास्यायुर्युगानां परिवर्तिनी॥ ९१

अङ्गारिण्यंकुशकरा घण्टावर्णा च चक्रिणी।
वेताली ब्रह्मवेताली महावेतालिका तथा॥ ९२

विद्याराज्ञी मोहराज्ञी महाराज्ञी महोदरी।
भूतं भव्यं भविष्यं च सांख्यं योगस्तपो दमः॥ ९३

अध्यात्मं चाधिदैवं चाधिभूतांश एव च।
घण्टारवा विरूपाक्षी शिखिचिच्छ्रीचयप्रिया॥ ९४

खड्गशूलगदाहस्ता महिषासुरमर्दिनी।
मातङ्गी मत्तमातङ्गी कौशिकी ब्रह्मवादिनी॥ ९५

उग्रतेजा सिद्धसेना जृम्भिणी मोहिनी तथा।
जया च विजया चैव विनता कद्रुरेव च॥ ९६

धात्री विधात्री विक्रान्ता ध्वस्ता मूर्च्छा च मूर्च्छनी।
दमनी दामिनी दम्या छेदिनी तापिनी तपी॥ ९७

बन्धिनी बाधिनी बन्ध्या बोधातीता बुधप्रिया।
हरिणी हारिणी हन्त्री धरिणी धारिणी धरा॥ ९८

विसाधिनी साधिनी च सन्ध्या संगोपनी प्रिया।
रेवती कालकर्णी च सिद्धिर्लक्ष्मीररुन्धती॥ ९९

धर्मप्रिया धर्मरतिः धर्मिष्ठा धर्मचारिणी ।
व्युष्टिः ख्यातिः सिनीवाली कुहूः ऋतुमती मृतिः ॥ १००

त्वाष्ट्री वैरोचनी मैत्री नीरजा कैटभेश्वरी ।
भ्रमणी भ्रामणी भ्रामा भ्रमरी भ्रामरी भ्रमा ॥ १०१

निष्कला कलहा नीता कौलाकारा कलेवरा ।
विद्युज्जिह्वा वर्षिणी च हिरण्याक्षनिपातिनी ॥ १०२

जितकामा कामृगया कोला कल्पाङ्गिनी कला ।
प्रधाना तारका तारा हितात्मा हितभेदिनी ॥ १०३

दुरक्षरा परंब्रह्म महाताना महाहवा ।
वारुणी व्यरुणी वाणी वीणा वेणी विहंगमा ॥ १०४

मोदप्रिया मोदकिनी प्लवनी प्लाविनी प्लुतिः ।
अजरा लोहिता लाक्षा प्रतप्ता विश्वभोजिनी ॥ १०५

मनो बुद्धिरहङ्कारः क्षेत्रज्ञा क्षेत्रपालिका ।
च तुर्वेदा चतुर्भारा चतुरन्ता चरुप्रिया ॥१०६

चर्विणी चोरिणी चारी चाङ्करी चर्मभैरवी ।
निर्लेपा निष्प्रपञ्चा च प्रशान्ता नित्यविग्रहा ॥ १०७

स्तव्या स्तवप्रिया व्याला गुरुराश्रितवत्सला ।
निष्कलङ्का निरालम्बा निर्द्वन्द्वा निष्परिग्रहा ॥ १०८

निर्गुणा निर्मला नित्या निरीहा निरघा नवा ।
निरिन्द्रिया निराभासा निर्मोहा नीतिनायिका ॥ १०९

निरिन्धना निष्कला च लीलाकारा निरामया ।
मुण्डा विरूपा विकृता पिङ्गलाक्षी गुणोत्तरा ॥ ११०

पद्मगर्भा महागर्भा विश्वगर्भा विलक्षणा।
परमात्मा परेशानी परा पारा परन्तपा॥ १११

संसारसेतुः क्रूराक्षी मूर्च्छा मग्ना मनुप्रिया।
विस्मया दुर्जया दक्षा दनुहन्त्री दयालया॥ ११२

परब्रह्माऽऽनन्दरूपा सर्वसिद्धिविधायिनी। ओं।
एवमुड्डामरतन्त्रान्मयोद्धृत्य प्रकाशितम्॥ ११३

गोपनीयं प्रयत्नेन नाख्येयं यस्य कस्यचित्।
यदीच्छसि द्रुतं सिद्धिं ऐश्वर्यं चिरजीविताम्॥ ११४

आरोग्यं नृपसम्मानं तदा नामानि कीर्तयेत्।
नाम्नां सहस्रं वाराह्याः मया ते समुदीरितम्॥ ११५

यः पठेच्छृणुयाद्वापि सर्वपापैः प्रमुच्यते।
अश्वमेधसहस्रस्य वाजपेयशतस्य च॥ ११६

पुण्डरीकायुतस्यापि फलं पाठात् प्रजायते।
पठतः सर्वभावेन सर्वाः स्युः सिद्धयः करे॥ ११७

जायते महदैश्वर्य्यं सर्वेषां दयितो भवेत्।
घनसारायते वह्निरगाधोऽब्धिः कणायते॥ ११८

सिद्धयश्च तृणायन्ते विषमप्यमृतायते।
हारायन्ते महासर्पाः सिंहः क्रीडामृगायते॥ ११९

दासायन्ते महीपाला जगन्मित्रायतेऽखिलम्।
तस्मान्नाम्नां सहस्रेण स्तुता सा जगदम्बिका।
प्रयच्छत्यखिलान् कामान् देहान्ते परमां गतिम्॥ १२०

—उड्डामरतन्त्रतः

*

## आदिवाराहीसहस्रनामावलिः

ओं ऐं ग्लौं ऐं । वाराह्यै नमः । वामन्यै । वामायै । बगलायै । वासव्यै । वसवे । वैदेह्यै । वीरसुवे । बालायै । वरदायै । विष्णुवल्लभायै । वन्दितायै । वसुदायै । वश्यायै । व्यात्तास्यायै । वञ्चिन्यै । बलायै । वसुन्धरायै । वीतिहोत्रायै । वीतरागायै नमः । २०

ओं विहायस्यै नमः । सर्वायै । खनिप्रियायै । काम्यायै । कमलायै । काञ्चन्यै । रमायै । धूम्रायै । कपालिन्यै । वामायै । कुरुकुल्यायै । कलावत्यै । याम्यायै । आग्नेय्यै । धरायै । धन्यायै । धर्मिण्यै । ध्यानिन्यै । ध्रुवायै । धृत्यै नमः । ४०

ओं लक्ष्म्यै नमः । जयायै । तुष्ट्यै । शक्त्यै । मेधायै । तपस्विन्यै । वेधसे । जयायै । कृत्यै । कान्त्यै । स्वाहायै । शान्त्यै । दमायै । रत्यै । लज्जायै । मत्यै । स्मृत्यै । निद्रायै । तन्द्रायै । गौर्यै नमः । ६०

ओं शिवायै नमः । स्वधायै । चण्ड्यै । दुर्गायै । अभयायै । भीमायै । भाषायै । भामायै । भयानकायै । भूदारायै । भयहायै । भीरवे । भैरव्यै । भङ्गरायै । भट्यै । घुर्घुरायै । घोषणायै । घोरायै । घोषिण्यै । घोणसंयुतायै नमः । ८०

ओं घनाघनायै नमः । घर्घरायै । घोणयुक्तायै । अघनाशिन्यै । पूर्वायै । आग्नेय्यै । याम्यायै । वायव्यै । उत्तरवारुण्यै । ऐशान्यै । ऊर्ध्वाधः स्थितायै । दक्षाग्रवामगायै । हृन्नाभिब्रह्मरन्ध्रार्कस्वर्गपाताल-भूमिगायै । ऐं । श्रियै । ह्रियै । क्लीं । तीर्थगत्यै । प्रीत्यै । धियै नमः । १००

ओं गिरे नमः । कलायै । अव्ययायै । ऋग्यजुः सामरूपायै । परायै । यात्रिण्यै । उदुम्बरायै । गदासिशक्ति चापेषुशूल चक्रर्ष्टिधारिण्यै । जरत्यै । युवत्यै । बालायै । चतुरङ्गबलोत्कटायै । सत्याक्षरायै । आधिभेत्र्यै । धात्र्यै । पात्र्यै । परायै । पटवे । क्षेत्रज्ञायै । कम्पिन्यै नमः । १२०

ओं ज्येष्ठायै नमः । दुराधर्षायै । धुरन्धरायै । मालिन्यै । मानिन्यै । मात्रे । माननीयायै । मनस्विन्यै । महोत्कटायै । मन्युकार्यै । मनुरूपायै । मनोजवायै । मेदस्विन्यै । मद्यरतायै । मधुपायै । मङ्गलायै । अमरायै । मायायै । मात्रे । आमयहर्यै नमः । १४०

ओं मृडान्यै नमः । महिलायै । मृत्यै । महादेव्यै । मोहहर्यै । मञ्जवे । मृत्युञ्जयायै । अमलायै । मांसलायै। मानवायै । मूलायै । महाराज्यै । महालसायै । मृगांकायै । मीनकार्यै । महिषघ्न्यै । मदन्तिकायै । मूर्च्छामोहमृषामोघा-मदमृत्युमलापहायै । सिंहर्क्षमहिषव्याघ्रमृगक्रोडाननायै । धुन्यै नमः । १६०

ओं धरिण्यै नमः । धारिण्यै । धेनवे । धरित्र्यै । धावन्यै । धवायै । धर्मध्वनायै । ध्यानपरायै । धनधान्यधरा-प्रदायै । पापदोष रिपुव्याधिनाशिन्यै । सिद्धिदायिन्यै । कलाकाष्ठात्रपापक्षाहस्त्रुटिश्वासरूपिण्यै । समृद्धायै । सुभुजायै । रौद्र्यै । राधायै । राकायै । रमायै । अरण्यै । रामायै नमः । १८०

ओं रतिप्रियायै नमः । रुष्टायै । रक्षिण्यै । रविमध्यगायै । रजन्यै । रमण्यै । रेवायै । रङ्किन्यै । रञ्जिन्यै । रमायै । रोषायै । रोषवत्यै । रूक्षायै । करिराज्यप्रदायै । रतायै । रूक्षायै । रूपवत्यै । रास्यायै । रुद्राण्यै । रणपण्डितायै नमः । २००

ओं गङ्गायै नमः। यमुनायै। सरस्वतीस्वसुवे। मध्वै। गण्डक्यै। तुङ्गभद्रायै। कावेर्यै। कौशिक्यै। पटवे। खट्वायै। उरगवत्यै। चारायै। सहस्राक्षायै। प्रतर्दनायै। सर्वज्ञायै। शाङ्कर्यै। शास्त्र्यै। जटाधारिण्यै। अयोरदायै। यावन्यै नमः। २२०

ओं सौरभ्यै नमः। कुब्जायै। वक्रतुण्डायै। वधोद्यतायै। चन्द्रापीडायै। वेदवेद्यायै। शङ्खिन्यै। नीललोहितायै। ध्यानातीतायै। अपरिच्छेद्यायै। मृत्युरूपायै। त्रिवर्गदायै। अरूपायै। बहुरूपायै। नानारूपायै। नताननायै। वृषाकपये। वृषारूढायै। वृषेश्यै। वृषवाहनायै नमः। २४०

ओं वृषप्रियायै नमः। वृषावर्तायै। वृषपर्वायै। वृषाकृत्यै। कोदण्डिन्यै। नागचूडायै। चक्षुष्यायै। परमार्थिकायै। दुर्वासायै। दुर्ग्रहायै। देव्यै। सुरावासायै। दुरारिहायै। दुर्गायै। राधायै। दुर्गहन्त्र्यै। दुराराध्यायै। दवीयस्यै। दुरावासायै। दुःप्रहस्तायै नमः। २६०

ओं दुःप्रकम्पायै नमः। दुरूहिण्यै। सुवेण्यै। श्रमण्यै। श्यामायै। मृगव्याधायै। अर्कतापिन्यै। दुर्गायै। तार्क्ष्यै। पाशुपत्यै। कौणप्यै। कुणपाशनायै। कपर्दिन्यै। कामकामायै। कमनीयायै। कलायै। उज्ज्वलायै। कासाव-हृते। कारकान्यै। कम्बुकण्ठ्यै नमः। २८०

ओं कृतागमायै नमः। कर्कशायै। कारणायै। कान्तायै। कल्पायै। अकल्पायै। कटङ्कटायै। श्मशान-निलयायै। भिन्न्यै। गजारूढायै। गजापहायै। तत्प्रियायै। तत्परायै। रायायै। स्वर्भानवे। कालवञ्चिन्यै। शाखायै। विशाखायै। गोशाखायै। सुशाखायै नमः ३००

ओं शेषशाखिन्यै नमः । व्यङ्गायै । शुभाङ्गायै । वामाङ्गायै । नीलाङ्गायै । अनङ्गरूपिण्यै । साङ्गोपाङ्गायै । शारङ्गायै । सुभाङ्गायै । रङ्गरूपिण्यै । भद्रायै । सुभद्रायै । भद्राक्ष्यै । सिंहिकायै । विनतायै । अदित्यै । हृद्यायै । वद्यायै । सुपद्यायै । गद्यपद्यप्रियायै नमः । ३२०

ओं प्रसुवे नमः । चर्चिकायै । भोगवत्यै । अंबायै । सारस्यै । शबर्यै । नट्यै । योगिन्यै । पुष्कलायै । अनन्तायै । परायै । सांख्यायै । शच्यै । सत्यै । निम्नगायै । निम्ननाभ्यै । सहिष्णवे । जाग्रत्यै । लिप्यै । दमयन्त्यै नमः । ३४०

ओं दम्यै नमः । दण्डायै । उद्दण्डिन्यै । दारदायिकायै । दीपिन्यै । दाविन्यै । दात्र्यै । दक्षकन्यायै । दरिद्रत्यै । दाहिन्यै । द्राविण्यै । दर्व्यै । दण्डिन्यै । दण्डनायिकायै । दानप्रियायै । दोषहन्त्र्यै । दुःखदारिद्र्यनाशिन्यै । दोषदायै । दोषकृते । द्रोग्ध्र्यै नमः । ३६०

ओं दोहदायै नमः । देविकायै । अदनायै । दर्विकर्यै । दुर्वलितायै । दुर्युगायै । अद्वयवादिन्यै । चराचरायै । अनन्तवृष्ट्यै । उन्मत्तायै । कमलालसायै । तारिण्यै । तारकान्तारायै । परात्मने । कुब्जलोचनायै । इन्दवे । हिरण्यकवचायै । व्यवस्थायै। व्यवसायिकायै । ईशनन्दायै नमः । ३८०

ओं नद्यै नमः । नाग्यै । यक्षिण्यै । सर्पिण्यै । वर्यै । सुधायै । सुरायै । विश्वसहायै । सुवर्णाङ्गदधारिण्यै । जनन्यै । प्रीतिपाकायै । इरवे । साम्राज्यै । संविदे । उत्तमायै । अमेयायै । अरिष्टदमन्यै । पिङ्गलायै । लिङ्गधारिण्यै । चामुण्डायै नमः ४००

ओं प्लाविन्यै नमः । हालायै । बृहज्ज्योतिषे । उरुक्रमायै । सुप्रतीकायै । सुग्रीवायै । हव्यवाहायै । प्रलापिन्यै । नभस्यायै । माधव्यै । ज्येष्ठायै । शिशिरायै । ज्वालिन्यै । रुच्यै । शुक्लायै । शुक्रायै । शुचायै । शोकायै । शुक्यै । भेक्यै नमः । ४२०

ओं पिक्यै नमः । बक्यै । पृषदश्वायै । नभोयोन्यै । सुप्रतीकायै । विभावर्यै । गर्वितायै । गुर्विण्यै । गण्यायै । गुरवे । गुरुतर्यै । गयायै । गन्धर्व्यै । गणिकायै। गुन्द्रायै । गारुड्यै । गोपिकायै । अग्रगायै । गणेश्यै । गामिन्यै नमः । ४४०

ओं गन्त्र्यै नमः । गोपत्यै । गन्धिन्यै । गव्यै । गर्जितायै । गावे(वै)नन्यै । गोनायै । गोरक्षायै । गोविदाङ्गत्यै । ग्राथिक्यै । ग्रथिकृते । गोष्ठ्यै । गर्भरूपायै । गुणैषिण्यै । पारस्कर्यै । पाञ्चनदायै । बहुरूपायै । विरूपिकायै । ऊहायै । व्यूहायै नमः । ४६०

ओं दुरूहायै नमः । संमोहायै । मोहहारिण्यै । यज्ञविग्रहिण्यै । यज्ञायै । यायजूकायै । यशस्विन्यै । अग्निष्टोमाय । अत्यग्निष्टोमाय । वाजपेयाय । षोडश्यै । पुण्डरीकाय । अश्वमेधाय । राजसूयाय । नाभसाय । स्विष्टकृते । बहुसौवर्णाय । गोसवाय । महाव्रताय । विश्वजिते नमः । ४८०

ओं ब्रह्मयज्ञाय नमः । प्राजापत्याय । शिलायवाय । अश्वक्रान्ताय । रथक्रान्ताय । विष्णुक्रान्ताय । विभावसवे । सूर्यक्रान्ताय । गजक्रान्ताय । बलिभिदे । नागयज्ञकाय । सावित्र्यै । अर्धसावित्र्यै । सर्वतोभद्रवारुणाय ।

आदित्यामयाय । गोदोहाय । गवामयाय । मृगामयाय । सर्पमयाय । कालपिञ्जाय नमः । ५००

ओं कौण्डिन्योपलकाहलाय नमः । अग्निविदे । द्वादशाहाय । स्वोपांशवे । सोम(वि)दोहनाय । अश्वप्रतिग्रहाय । बर्हिरथाय । अभ्युदयाय । ऋद्धिराजे । सर्वस्वदक्षिणाय । दीक्षायै । सोमाख्याय । समिदाह्वयाय । कठायनाय । गोदोहाय । स्वाहाकाराय । तनूनपाते । दण्डापुरुषमेधाय । श्येनाय । वज्राय नमः । ५२०

ओं इषवे नमः । यमाय । अङ्गिरसे । कङ्कभेरुण्डायै । चान्द्रायणपरायणाय । ज्योतिष्टोमाय । कुताय । दर्शाय । नन्द्याख्याय । पौर्णमासिकाय । गजप्रतिग्रहाय । रात्र्यै । सौरभाय । शाङ्कलायनाय । सौभाग्यकृते । कारीषाय । बैदलायनाय । रामठाय । शोचिष्कारिणे । नाचिकेताय नमः । ५४०

ओं शान्तिकृते नमः । पुष्टिकृते । वैनतेयाय । उच्चाटनाय । वशीकरणाय । मारणाय । त्रैलोक्यमोहनाय । वीराय । कन्दर्पबलशातनाय । शङ्खचूडाय । गजच्छायाय । रौद्राख्याय । विष्णुविक्रमाय । भैरवाय । कवहाख्याय । अवभृथाय । अष्टाकपालकाय । श्रौषट् । वौषट् । वषट्काराय नमः । ५६०

ओं पाकसंस्थायै नमः । परिश्रुत्यै । चयनाय । नरमेधाय । कारीर्यै । रत्नदानिकायै । सौत्रामण्यै । भारुन्दायै । बार्हस्पत्याय । बलङ्गमाय । प्रचेतसे । सर्वसत्राय । गजमेधाय । करम्भकाय । हविःसंस्थायै । सोमसंस्थायै । पाकसंस्थायै । गरुत्मत्यै । सत्यसूर्याय । चमसाय नमः । ५८०

ओं स्रुचे। स्रुवाय। उलूखलाय। एक्षण्यै। चफलाय। मन्थन्यै। मेढ्यै। यूपाय। प्राग्वंशाय। कुश्विकायै। रश्मये। अंशवे। दोभ्याय। वारुणोदाय। पवये। कुथायै। आप्तोर्यामाय। द्रोणकलशाय। मैत्रावरुणाय। आश्विनाय नमः।६००

ओं पात्नीवताय नमः। मन्थिने। हारियोजनाय। प्रतिप्रस्थानाय। शुक्राय। सामिधेन्यै। समिधे। समायै। होत्रे। अध्वर्यवे। उद्गात्रे। नेत्रे। त्वष्ट्रे। योत्रिकायै। अग्नीध्राय। अच्छवाचे। अष्टावग्रावस्तुते। प्रतर्दकाय। सुब्रह्मण्याय। ब्राह्मणाय नमः।६२०

ओं मैत्रावरुणाय नमः। वारुणाय। प्रस्तोत्रे। प्रतिप्रस्थात्रे। यजमानाय। ध्रुवन्त्रिकायै। आमिक्षायै। ईषदाज्याय। हव्याय। कव्याय। चरवे। पयसे। जुहूदुध्रुणोभृते। ब्रह्मणे। त्रय्यै। त्रेतायै। तरश्विन्यै। पुरोडाशाय। पशूकर्षाय। प्रोक्षण्यै नमः।६४०

ओं ब्रह्मयज्ञिन्यै नमः। अग्निजिह्वायै। दर्भरोम्णे। ब्रह्मशीर्ष्णे। महोदर्यै। अमृतप्राशिकायै। नारायण्यै। नग्नायै। दिगम्बरायै। ओङ्कारिण्यै। चतुर्वेदरूपायै। श्रुत्यै। अनुल्बणायै। अष्टादशभुजायै। रम्भायै। सत्यायै। गगनचारिण्यै। भीमवक्त्रायै। महावक्त्रायै। कीर्त्यै नमः। ६६०

ओं आकृष्णपिङ्गलायै नमः। कृष्णमूर्ध्ने। महामूर्ध्ने। घोरमूर्ध्ने। भयाननायै। घोराननायै। घोरजिह्वायै। घोररावायै। महाव्रतायै। दीप्तास्यायै। दीप्तनेत्रायै। चण्डप्रहरणायै। जट्यै। सुरभ्यै। सौनभ्यै। वीच्यै। छायायै। सन्ध्यायै। मांसलायै। कृष्णायै नमः।६८०

ओं कृष्णांबरायै नमः । कृष्णशार्ङ्गिण्यै । कृष्णवल्लभायै । त्रासिन्यै । मोहिन्यै । द्वेष्यायै । मृत्युरूपायै । भयावहायै । भीषणायै । दानवेन्द्रघ्न्यै । कल्पकर्त्र्यै । क्षयंकर्यै । अभयायै । पृथिव्यै । साध्व्यै । केशिन्यै । व्याधिजन्महायै । अक्षोभ्यायै । आह्लादिन्यै । कन्यायै नमः । ७००

ओं पवित्रायै नमः । रोपिण्यै । शुभायै । कन्यादेव्यै । सुरादेव्यै । भीमादेव्यै । मदन्तिकायै । शाकम्भर्यै । महाश्वेतायै । धूम्रायै । धूम्रेश्वर्यै । ईश्वर्यै । वीरभद्रायै । महाभद्रायै । महादेव्यै । महासुर्यै । श्मशानवासिन्यै । दीप्तायै । चितिसंस्थायै । चितिप्रियायै नमः । ७२०

ओं कपालहस्तायै नमः । खट्वांग्यै । खड्गिन्यै । शूलिन्यै । हल्यै । कान्तारिण्यै । महायोग्यै । योगमार्गायै । युगग्रहायै । धूम्रकेतवे । महास्यायै । आयुषे । युगानां परिवर्तिन्यै । अंगारिण्यै । अङ्कुशकरायै । घण्टायै । वर्णायै । चक्रिण्यै । वेताल्यै । ब्रह्मवेताल्यै नमः ।। ७४०

महावेतालिकायै नमः । विद्याराज्ञ्यै । मोहराज्ञ्यै । महाराज्ञ्यै । महोदर्यै । भूताय । भव्याय । भविष्याय । सांख्याय । योगाय । तपसे । दमाय । अध्यात्माय । अधिदेवाय । अधिभूतांशाय । घण्टारवायै । विरूपाक्ष्यै । शिखिच्चिते । श्रीचयप्रियायै । खड्गशूलगदाहस्तायै नमः । ७६०

ओं महिषासुरमर्दिन्यै नमः । मातङ्ग्यै । मत्तमातङ्ग्यै । कौशिक्यै । ब्रह्मवादिन्यै । उग्रतेजसे । सिद्धसेनायै । जृम्भिण्यै । मोहिन्यै । जयायै । विजयायै । विनतायै । कद्रवे । धात्र्यै । विधात्र्यै । विक्रान्तायै । ध्वस्तायै । मूर्च्छायै । मूर्छन्यै । दमन्यै नमः । ७८०

ओं दामिन्यै नमः। दम्यायै। छेदिन्यै। तापिन्यै। तप्यै। बन्धिन्यै। बाधिन्यै। बन्ध्यायै। बोधातीतायै। बुधप्रियायै। हरिण्यै। हारिण्यै। हन्त्र्यै। धरिण्यै। धारिण्यै। धरायै। विसाधिन्यै। साधिन्यै। सन्ध्यायै। संगोपिन्यै नमः। ८००

ओं प्रियायै नमः। रेवत्यै। कालकर्ण्यै। सिद्ध्यै। लक्ष्म्यै। अरुन्धत्यै। धर्मप्रियायै। धर्मरत्यै। धर्मिष्ठायै। धर्मचारिण्यै। व्युष्ट्यै। ख्यात्यै। सिनीवाल्यै। कुह्वै। ऋतुमत्यै। मृत्यै। त्वाष्ट्र्यै। वैरोचन्यै। मैत्र्यै। नीरजायै नमः। ८२०

ओं कैटभेश्वर्यै नमः। भ्रमण्यै। भ्रामण्यै। भ्रामायै। भ्रमर्यै। भ्रामर्यै। भ्रमायै। निष्कलायै। कलहायै। नीतायै। कौलाकारायै। कलेवरायै। विद्युज्जिह्वायै। वर्षिण्यै। हिरण्याक्षनिपातिन्यै। जितकामायै। कामृगयायै। कोलायै। कल्पाङ्गिन्यै। कलायै नमः। ८४०

ओं प्रधानायै नमः। तारकायै। तारायै। हितात्मने। हितभेदिन्यै। दुरक्षरायै। परस्मै ब्रह्मणे। महातानायै। महाहवायै। वारुण्यै। व्यरुण्यै। वाण्यै। वीणायै। वेण्यै। विहंगमायै। मोदप्रियायै। मोदकिन्यै। प्लवन्यै। प्लावन्यै। प्लुत्यै नमः। ८६०

ओं अजरायै नमः। लोहितायै। लाक्षायै। प्रतप्तायै। विश्वभोजिन्यै। मनसे। बुद्ध्यै। अहंकाराय। क्षेत्रज्ञायै। क्षेत्रपालिकायै। चतुर्वेदायै। चतुर्भारायै। चतुरन्तायै। चरुप्रियायै। चर्विण्यै। चोरिण्यै। चार्यै। चांगर्यै। चर्मभैरव्यै। निर्लेपायै नमः। ८८०

ओं निष्प्रपञ्चायै नमः । प्रशान्तायै । नित्यविग्रहायै । स्तव्यायै । स्तवप्रियायै । व्यालायै । गुरवे । आश्रितवत्सलायै । निष्कलङ्कायै । निरालम्बायै । निर्द्वन्द्वायै । निष्परिग्रहायै । निर्गुणायै । निर्मलायै । नित्यायै । निरीहायै । निरघायै । नवायै । निरिन्द्रियायै । निराभासायै नमः । ९००

ओं निर्मोहायै नमः । नीतिनायिकायै । निरिन्धनायै । निष्कलायै । लीलाकारायै । निरामयायै । मुण्डायै । विरूपायै । विकृतायै । पिङ्गलाक्ष्यै । गुणोत्तरायै । पद्मगर्भायै । महागर्भायै । विश्वगर्भायै । विलक्षणायै । परमात्मने । परेशान्यै । परायै । पारायै । परन्तपायै नमः । ९२०

ओं संसारसेतवे नमः । क्रूराक्ष्यै । मूर्च्छायै । मग्नायै । मनुप्रियायै । विस्मयायै । दुर्जयायै । दक्षायै । दनुहन्त्र्यै । दयालयायै । परब्रह्मानन्दरूपायै । सर्वसिद्धिविधायिन्यै नमः । ९३२

(अपूर्णमिदं, मातृकान्तरालाभात् दुःशोधम् ।
मध्ये मध्ये यज्ञप्रकृति स्वरूपभेद नामभेद प्रयोग तदुपयोगि साधनजातादिपराणि नामानि परः शतानि वाराह्या नामतया संबद्धानि च ।)

——*——

# श्रीमहाराज्ञी श्रीराजराजेश्वरी सहस्रनामस्तोत्रम्

पार्वत्युवाच—

भगवन् वेदतत्वज्ञ मन्त्रतन्त्रविचक्षण।
शरण्य सर्वलोकेश शरणागतवत्सल॥ १

कथं श्रियमवाप्नोति लोके दारिद्र्यदुःखभाक्।
मान्त्रिको भैरवेशान तन्मे गदितुमर्हसि॥ २

श्री शिव उवाच—

या देवी निष्कला राज्ञी भगवत्यमलेश्वरी।
सा सृजत्यवति व्यक्तं संहरिष्यति तामसी॥ ३

तस्या नामसहस्रं ते वक्ष्ये स्नेहेन पार्वति।
अवाच्यं दुर्लभं लोके दुःखदारिद्र्यनाशनम्।
परमार्थप्रदं नित्यं परमैश्वर्यकारणम्।
सर्वागमरहस्याढ्यं सकलार्थप्रदीपकम्॥ ५

समस्तशोकशमनं महापातकनाशनम्।
सर्वयन्त्रमयं दिव्यं राज्ञीनामसहस्रकम्॥ ६

ओं अस्य श्रीमहाराज्ञी राजराजेश्वरी सहस्रनाम महामन्त्रस्य। ब्रह्मा ऋषिः। गायत्री छन्दः। सर्वभूतेश्वरी महाराज्ञी देवता। ह्रीं बीजम्। सौः शक्तिः। क्लीं कीलकम्। श्रीमहाराज्ञी सहस्रनामजपे नियोगः।

ओं ह्रां ह्रींमित्यादिना कर-हृदयादि-न्यासः।

ध्यानम्—

या द्वादशार्कपरिमण्डितमूर्तिरेका
सिंहासनस्थितिमती ह्युरगैर्वृता च।
देवीमनन्यगतिरीश्वरतां प्रपन्नां
तां नौमि भर्गवपुषीं परमार्थराज्ञीम्॥

चतुर्भुजां चन्द्रकलार्धशेखरां
सिंहासनस्थामुरगोपवीतिनीम्।
पाशाङ्कुशाम्भोरुहखड्गधारिणीं
राज्ञीं भजे चेतसि राज्यदायिनीम्॥

ओं ह्रीं श्रीं रां महाराज्ञी क्लीं सौः पञ्चदशाक्षरी।
ह्रीं स्वाहा त्र्यक्षरी विद्या परा भगवती विभा।
ओं भास्वती भद्रिका भीमा भर्गरूपा मनस्विनी।
माननीया मनीषा च मनोजा च मनोजवा॥ १

मानदा मन्त्रविद्या च महाविद्या षडक्षरी।
षट्कूटा च त्रिकूटा च त्रयी वेदत्रयी शिवा॥ २

शिवाकारा विरूपाक्षी शशिखण्डावतंसिनी।
महालक्ष्मीर्महोरस्का महौजस्का महोदया॥ ३

मातङ्गी मोदकाहारा मदिरारुणलोचना।
साध्वी शीलवती शाला सुधाकलशधारिणी॥ ४

खड्गिनी पद्मिनी पद्मा पद्मकिञ्जल्कराजिता।
हृत्पद्मवासिनी हृद्या पानपात्रधरा परा॥ ५

धराधरेन्द्रतनया दक्षिणा दशना दया।
दयावती महामेधा मोदिनी बोधिनी सदा॥ ६

गदाधरार्चिता गोधा गङ्गा गोदावरी गया।
महाप्रभावसहिता महोरगविभूषणा ।। ७

महामुनिकृतातिथ्या माध्वी मानवती मघा।
बाला सरस्वती लक्ष्मीर्दुर्गा दुर्गतिनाशिनी ।। ८

शारी शरीरमध्यस्था वैखरी खेचरेश्वरी।
शिवदा शिववक्षःस्था कालिका त्रिपुरेश्वरी ।। ९

पुरारिकुक्षिमध्यस्था पुरारिहृदयेश्वरी।
बलारिराज्यदा चण्डी चामुण्डा मुण्डधारिणी ।। १०

मुण्डमालाञ्चिता मुद्रा क्षोभणाकर्षणक्षमा।
ब्राह्मी नारायणी देवी कौमारी चापराजिता ।। ११

रुद्राणी च शचीन्द्राणी वाराही वीरसुन्दरी।
नारसिंही भैरवेशी भैरवाकारभीषणा ।। १२

नागालङ्कारशोभाढ्या नागयज्ञोपवीतिनी।
नागकङ्कणकेयूरा नागहारा सुरेश्वरी ।। १३

सुरारिघातिनी पूता पूतना डाकिनी क्रिया।
कूर्मी क्रियावती कृत्या डाकिनी शाकिनी लया ।। १४

लीलावती रसाकीर्णा नागकन्या मनोहरा।
हारकङ्कणशोभाढ्या सदानन्दा शुभङ्करी ।। १५

महासिनी मधुमती सरसी स्मरमोहिनी।
महोग्रवपुषी वार्ता वामाचारप्रिया सिरा ।। १६

सुधामयी वेणुकरा वैरिघ्नी वीरसुन्दरी।
वारिमध्यस्थिता वामा वामनेत्रा शशिप्रभा ।। १७

शाङ्करी शर्मदा सीता रवीन्दुशिखिलोचना।
मदिरा वारुणी वीणागीतिज्ञा मदिरावती॥ १८

वटस्था वारुणीशक्तिः वटजा वटवासिनी।
वटुकी वीरसूर्वन्द्या स्तम्भिनी मोहिनी चमूः॥ १९

मुद्गराङ्कुशहस्ता च वराभयकरा कुटी।
पाटीरद्रुमवल्ली च वटुका वटुकेश्वरी॥ २०

इष्टदा कृषिभूः कीरी रेवती रमणप्रिया।
रोहिणी रेवती रम्या रमणी रोमहर्षणा॥ २१

रसोल्लासा रसासारा सारिणी तारिणी तटित्।
तरी तरित्रहस्ता च तोतुला तरणिप्रभा॥ २२

रत्नाकरप्रिया रम्भा रत्नालङ्कारशोभिता।
रुक्माङ्गदा गदाहस्ता गदाधरवरप्रदा॥ २३

षड्रसा द्विरसा माला मालाभरणभूषिता।
मालती मल्लिकामोदा मोदकाहारवल्लभा॥ २४

वल्लभी मधुरा माया काशी काञ्ची ललन्तिका।
हसन्तिका हसन्ती च भ्रमन्ती च वसन्तिका॥ २५

क्षेमा क्षेमङ्करी क्षामा क्षौमवस्त्रा क्षणेश्वरी।
क्षणदा क्षेमदा क्षीरा सीरपाणिसमर्चिता॥ २६

क्रीता क्रीतातपा क्रूरा कमनीया कुलेश्वरी।
कूर्चबीजा कुठाराढ्या कूर्मिणी कूर्मसुन्दरी॥ २७

कारुण्यार्द्रा च काश्मीरी दूती द्वारवती ध्रुवा।
ध्रुवस्तुता ध्रुवगतिः पीठेशी बगलामुखी॥ २८

सुमुखी शोभना नीतिः रत्नज्वालामुखी नतिः ।
अलकोज्जयिनी भोग्या भंगी भोगवती बला ॥ २९

धर्मराजपुरी पूता पूर्णमालाऽमरावती ।
अयोध्या बोधनीया च युगमाता च यक्षिणी ॥ ३०

यज्ञेश्वरी योगगम्या योगिध्येया यशस्विनी ।
यशोवती च चार्वङ्गी चारुहासा चलालका ॥ ३१

हरीश्वरी हरेर्माया भामिनी वायुवेगिनी ।
अम्बालिकाऽम्बा भर्गेशी भृगुकूटा महामतिः ॥ ३२

कोशेश्वरी च कमला कीर्तिदा कीर्तिवर्धिनी ।
कठोरवाक् कुहूमूर्तिः चन्द्रबिम्बसमानना ॥ ३३

चन्द्रकुङ्कुमलिप्ताङ्गी कनकाचलवासिनी ।
मलयाचलसानुस्था हिमाद्रितनयातनूः ॥ ३४

हिमाद्रिकुक्षिदेशस्था कुब्जिका कोसलेश्वरी ।
कारैकनिगला गूढा गूढगुल्फाऽतिवेगिनी ॥ ३५

तनुजा तनुरूपा च बाणचापधरा नुतिः ।
धुरीणा धूम्रवाराही धूम्रकेशाऽरुणानना ॥ ३६

अरुणेशी द्युतिः ख्यातिः गरिष्ठा च गरीयसी ।
महानसी महाकारा सुरासुरभयङ्करी ॥ ३७

अणुरूपा बृहज्ज्योतिरनिरुद्धा सरस्वती ।
श्यामा श्याममुखी शान्ता श्रान्तसन्तापहारिणी ॥ ३८

गौर्गण्या गोमती गुह्या गोमयी गुरुवाग्रसा ।
गीतसन्तोषसंसक्ता गृहिणी ग्राहिणी गुहा ॥ ३९

गणप्रिया गणगतिः गान्धारी गन्धमोहिनी।
गन्धमादनसानुस्था सह्याचलकृतालया ॥ ४०

गजाननप्रिया गम्या ग्राहिका ग्राहवाहना।
गुहप्रसूर्गुहावासा गृहमालाविभूषणा ॥ ४१

कौबेरी कुहका भ्रान्तिस्तर्कविद्याप्रियङ्करी।
पीताम्बरा पटाकारा पताका सृष्टिजा सुधा ॥ ४२

दाक्षायणी दक्षसुता दक्षयज्ञविनाशिनी।
ताराचक्रस्थिता तारा तुरीतुर्या त्रुटिस्तुला ॥ ४३

सन्ध्यात्रयी सन्धिजरा सन्ध्या तारुण्यलालिता।
ललिता लोहिता लभ्या चम्पा कम्पाकला सृणिः ॥ ४४

सृतिः सत्यवती स्वस्थाऽसमाना मानवर्धिनी।
महोमयी मनस्तुष्टिः कामधेनुः सनातनी ॥ ४५

सूक्ष्मरूपा सूक्ष्ममुखी स्थूलरूपा कलावती।
तलातलाश्रया सिन्धुः त्र्यम्बिका लम्बिका जया ॥ ४६

सौदामिनी सुधादेवी सनकादिसमर्चिता।
मन्दाकिनी च यमुना विपाशा नर्मदानदी ॥ ४७

गण्डक्यैरावती सिप्रा वितस्ता च सरस्वती।
रेवा चेक्षुमती वेगवती सागरवासिनी ॥ ४८

देवकी देवमाता च देवेशी देवसुन्दरी।
दैत्येशी दमनी दात्री दितिर्दितिजसुन्दरी।
विद्याधरी च विद्येशी विद्याधरज सुन्दरी ॥ ४९

मेनका चित्रलेखा च चित्रिणी च तिलोत्तमा।
ऊर्वशी मोहिनी रम्भा चाप्सरोगणसुन्दरी ॥ ५०

यक्षिणी यक्षलोकेशी यक्षनायकसुन्दरी ।
गन्धवत्यर्च्चिता गन्धा सुगन्धा गीततत्परा ।। ५१

गन्धर्वतनया नम्रा गीतिर्गन्धर्वसुन्दरी ।
मन्दोदरी करालाक्षी मेघनादवरप्रदा ।। ५२

मेघवाहनसम्पूज्या मेघमूर्तिश्च राक्षसी ।
रक्षोहन्त्री केकसी च रक्षोनायकसुन्दरी ।। ५३

किन्नरी कम्बुकण्ठी च कलकण्ठस्वनाऽमृता ।
किंमुखी हयवक्त्रा च खेलाकिन्नरसुन्दरी ।। ५४

विपाशी राजमातङ्गी उच्छिष्टपदसंस्थिता ।
महापिशाचिनी चान्द्री पिशाचकुलसुन्दरी ।। ५५

गुह्येश्वरी गुह्यरूपा गुर्वी गुह्यकसुन्दरी ।
सिद्धिप्रदा सिद्धवधूः सिद्धेशी सिद्धसुन्दरी ।। ५६

भूतेश्वरी भूतलया भूतधात्री भयापहा ।
भूतभीतिहरी भव्या भूतजा भूतसुन्दरी ।। ५७

पृथ्वी पार्थिवलोकेशी प्रथा विष्णुसमर्च्चिता ।
वसुन्धरा वसुनता पार्थिवी भूमिसुन्दरी ।। ५८

अंभोधितनयाऽलुब्धा जलजाक्षी जलेश्वरी ।
अमूर्तिरम्मयी मारी जलस्था जलसुन्दरी ।। ५९

तेजस्विनी महोधात्री तैजसी सूर्यबिम्बगा ।
सूर्यकान्तिः सूर्यतेजाः तेजोरूपैकसुन्दरी ।। ६०

वायुवाहा वायुमुखी वायुलोकैकसुन्दरी ।
गगनस्था खेचरेशी शून्यरूपा निराकृतिः ।। ६१

निराभासा भासमाना द्युतिराकाशसुन्दरी।
क्षितिमूर्तिधराऽनन्ता क्षितिभृल्लोकसुन्दरी ॥ ६२

अब्धियाना रत्नशोभा वरुणेशी वरायुधा।
पाशहस्ता पोषणा च वरुणेश्वरसुन्दरी ॥ ६३

अनलैकरुचिर्ज्योतिः पञ्चानिलगतिस्थितिः।
प्राणापानसमानेच्छा चोदानव्यानरूपिणी ॥ ६४

पञ्चवातगतिर्नाडीरूपिणी वातसुन्दरी।
अग्निरूपा वह्निशिखा बडवानलसन्निभा ॥ ६५

हेतिर्हविर्हुतज्योतिरग्निजा वह्निसुन्दरी।
सोमेश्वरी सोमकला सोमपानपरायणा ॥ ६६

सौम्यानना सौम्यरूपा सोमस्था सोमसुन्दरी।
सूर्यप्रभा सूर्यमुखी सूर्यजा सूर्यसुन्दरी ॥ ६७

याज्ञिकी यज्ञभागेच्छा यजमानवरप्रदा।
याजकी यज्ञविद्या च यजमानैकसुन्दरी ॥ ६८

आकाशगामिनी वन्द्या शब्दजाऽऽकाशसुन्दरी।
मीनास्या मीननेत्रा च मीनस्था मीनसुन्दरी ॥ ६९

कूर्मपृष्ठता कूर्मी कूर्मजा कूर्मसुन्दरी।
वाराही वीरसूर्वन्द्या वरारोहा मृगेक्षणा ॥ ७०

वराहमूर्तिर्वाचाला वश्या वाराहसुन्दरी।
नरसिंहाकृतिर्देवी दुष्टदैत्यनिषूदिनी ॥ ७१

प्रद्युम्नवरदा नारी नरसिंहैकसुन्दरी।
वामजा वामनाकारा नारायणपरायणा ॥ ७२

बलिदानवदर्पघ्नी वाम्या वामनसुन्दरी ।
रामप्रिया रामकला रक्षोवंशभयङ्करी ।। ७३

भृगुपुत्री राजकन्या रामा परशुधारिणी ।
भार्गवी भार्गवेष्टा च जामदग्न्यवरप्रदा ।। ७४

कुठारधारिणी रात्रिर्जामदग्न्यैकसुन्दरी ।
सीतालक्ष्मणसेव्या च रक्षःकुलविनाशिनी ।। ७५

रामप्रिया च शत्रुघ्नी शत्रुघ्नभरतेष्टदा ।
लावण्यामृतधाराढ्या लवणासुरघातिनी ।। ७६

लोहितास्या प्रसन्नास्या स्वात्मारामैकसुन्दरी ।
कृष्णकेशा कृष्णमुखी यादवान्तकरी लया ।। ७७

यादोगणार्चिता योज्या राधा श्रीकृष्णसुन्दरी ।
सिद्धप्रसूः सिद्धदेवी जिनमार्गपरायणा ।। ७८

जितक्रोधा जितालस्या जिनसेव्या जितेन्द्रिया ।
जिनवंशधरोग्रा च नीलान्ता बुद्धसुन्दरी ।। ७९

काली कोलाहलप्रीता प्रेतवाहा सुरेश्वरी ।
कल्किप्रिया कम्बुधरा कलिकालैकसुन्दरी ।। ८०

विष्णुमाया ब्रह्ममाया शांभवी शिववाहना ।
इन्द्रावरजवक्षस्था स्थाणुपत्नी पलालिनी ।। ८१

जृम्भिणी जृम्भहन्त्री च जृम्भमाणालकाकुला ।
कुलाकुलफलेशानी पददानफलप्रदा ।। ८२

कुलवागीश्वरी कुल्या कुलजा कुलसुन्दरी ।
पुरन्दरेड्या तारुण्यालया पुण्यजनेश्वरी ।। ८३

पुण्योत्साहा पापहन्त्री पाकशासनसुन्दरी।
सूर्यकोटिप्रतीकाशा सूर्यतेजोमयी मतिः ।। ८४

लेखिनी भ्राजिनी रज्जुरूपिणी सूर्यसुन्दरी।
चन्द्रिका च सुधाधारा ज्योत्स्ना शीतांशुसुन्दरी ।। ८५

लोलाक्षी च शताक्षी च सहस्राक्षी सहस्रपात्।
सहस्रशीर्षा चेन्द्राणी सहस्रभुजवल्लिका ।। ८६

कोटिरत्नांशुशोभा च शुभवस्त्रा शुभानना।
शतानन्दा श्रुतिधरा पिङ्गला चोग्रनादिनी ।। ८७

सुषुम्ना हारकेयूरनूपुरारावसंकुला।
घोरनादाऽघोरमुखी उन्मुखी चोल्मुखायुधा ।। ८८

गोपिता गूर्जरी गोधा गायत्री वेदवल्लभा।
वल्लकीस्वननादा च नादविद्या नदीतटी ।। ८९

बिन्दुरूपा चक्रयोनिः बिन्दुनादस्वरूपिणी।
चक्रेश्वरी भैरवेशी महाभैरववल्लभा ।। ९०

कालभैरवभार्या च कल्पान्ते रङ्गनर्तकी।
प्रलयानलधूम्राभा योनिमध्यकृतालया ।। ९१

भूचरी खेचरी मुद्रा नवमुद्राविलासिनी।
वियोगिनी श्मशानस्था श्मशानार्चनतोषिता ।। ९२

भास्वराङ्गी भर्गशिखा भर्गवामाङ्कवासिनी।
भद्रकाली विश्वकाली श्रीकाली मेघकालिका ।। ९३

नीरकाली कालरात्रिः काली कामेशकालिका।
इन्द्रकाली पूर्वकाली पश्चिमाम्नायकालिका ।। ९४

श्यशानकालिका शुभ्रकाली श्रीकृष्णकालिका।
क्रींकारोत्तरकाली श्रीं हुं ह्रीं दक्षिणकालिका।। ९५

सुन्दरी त्रिपुरेशानी त्रिकूटा त्रिपुरार्च्चिता।
त्रिनेत्रा त्रिपुराध्यक्षा श्रीकूटा कूटभैरवी।। ९६

त्रिलोकजननी नेत्री महात्रिपुरसुन्दरी।
कामेश्वरी कामकला कालकामेशसुन्दरी।। ९७

त्र्यक्षर्येकाक्षरीदेवी भावना भुवनेश्वरी।
एकाक्षरी चतुःकूटा त्रिकूटेशी लयेश्वरी।। ९८

चतुर्वर्णा च वर्णेशी वर्णाढ्या वर्णसुन्दरी।
पञ्चाक्षरी च षड्वक्त्रा षट्कूटा च षडक्षरी।। ९९

सप्ताक्षरी नवार्णेशी परमाष्टाक्षरेश्वरी।
नवमी पञ्चमी षष्टिः नागेशी नवनायिका।। १००

दशाक्षरी दशास्येशी देविकैकादशाक्षरी।
द्वादशादित्यसङ्काशा द्वादशी द्वादशाक्षरी।। १०१

त्रयोदशी वेदगर्भा ब्राह्मी त्रयोदशाक्षरी।
चतुर्दशाक्षरीविद्या श्रीमत्पञ्चदशाक्षरी।। १०२

षोडशी सर्व विद्येशी महाश्रीषोडशाक्षरी।
महाश्रीषोषशीरूपा चिन्तामणिमनुप्रिया।। १०३

द्वाविंशत्यक्षरी श्यामा महाकालकुटुम्बिनी।
वज्रतारा कालतारा तारी तारोग्रतारिणी।। १०४

कामतारा स्पर्शतारा शब्दतारा रसाश्रया।
रूपतारा गन्धतारा महानीलसरस्वती।। १०५

कालज्वाला वह्निज्वाला ब्रह्मज्वाला जटाकुला।
विष्णुज्वाला जिष्णुशिखा भद्रज्वाला करालिनी ॥ १०६

विकरालमुखी देवी कराली भूतिभूषणा।
चिताशयासनाचिन्त्या चितामण्डलमध्यगा ॥ १०७

भूतभैरवसेव्या च भूतभैरवपालिनी।
बन्धकी बद्धसन्मुद्रा भवबन्धविनाशिनी ॥ १०८

भवानी देवदेवेशी दीक्षा दीक्षितपूजिता।
साधकेशी सिद्धिदात्री साधकानन्दवर्धिनी ॥ १०९

साधकाश्रयभूता च साधकेष्टफलप्रदा।
रजोवती राजसी च रंजकी च रजस्वला ॥ ११०

पुष्पप्रिया पुष्पपूर्णा स्वयम्भूपुष्पमालिका।
स्वयम्भूपुष्पगन्धाढ्या पुलस्त्यसुतनाशिनी ॥ १११

पात्रहस्ता परा पौत्री पीतास्या पीतभूषणा।
पिङ्गानना पिङ्गकेशी पिङ्गला पिङ्गलेश्वरी ॥ ११२

मङ्गला मङ्गलेशानी सर्वमङ्गलमङ्गला।
पुरूरवेश्वरी पाशधरा चापधराऽधुरा ॥ ११३

पुण्यधात्री पुण्यमयी पुण्यलोकनिवासिनी।
होतृसेव्या हकारस्था सकारस्था सुखेश्वरी ॥ ११४

सती शोभावती सत्या सत्याचारपरायणा।
साध्वीशानकलेशानी वामदेवकलाश्रिता ॥ ११५

सद्योजातकलेशानी शिवाऽघोरकलाकृतिः।
शर्वरी वीरसदृशी क्षीरनीरविवेचिनी ॥ ११६

वितर्कनिलया नित्या नित्यक्लिन्ना पराम्बिका।
पुरारिदयिता दीर्घा दीर्घनासाऽल्पभाषिणी ।। ११७

काशिका कौशिकी केश्या कोशदा कोशवर्धिनी।
तुष्टिः पुष्टिः प्रजाप्रीता पूजिता पूजकप्रिया ।। ११८

प्रजावती गर्भवती गर्भपोषणकारिणी।
शुक्लवासाः शुक्लरूपा शुचिवासा जयावहा ।। ११९

जानकी जन्मजनका जनतोषणतत्परा।
वादप्रिया वाद्यरता वादिनी वादसुन्दरी ।। १२०

वाक्स्तम्भिनी कीरपाणिः धीरधीरा धुरन्धरा।
स्तनन्धयी सामिधेनी निरानन्दा निरञ्जना ।। १२१

समस्तसुखदा सारा वारांनिधिवरप्रदा।
वालुका वीरपानेष्टा वसुदात्री वसुप्रिया ।। १२२

शुक्रानन्दा शुक्ररसा शुक्रपूज्या शुकप्रिया।
शुचिश्च शुकहस्ता च समस्तनरकान्तका ।। १२३

समस्ततत्वनिलया भगरूपा भगेश्वरी।
भगबिम्बा भगा हृद्या भवलिङ्गस्वरूपिणी ।। १२४

भवलिङ्गेश्वरी श्रीदा भवलिङ्गामृतस्रवा।
क्षीराशना क्षीररुचिः आज्यपानपरायणा ।। १२५

मधुपानपरा प्रौढा पीवरांसा परावरा।
पिलंपिला पटोलीशा पाटलारुणलोचना ।। १२६

क्षीराम्बुधिप्रिया क्षिप्रा सरला सरलायुधा।
संग्रामा सुनया स्रस्ता संसृतिः सनकेश्वरी ।। १२८

कन्या कनकरेखा च कान्यकुब्जनिवासिनी ।
काञ्चनाभतनूः काष्ठा कुष्ठरोगनिवारिणी ॥ १२८

कठोरमूर्धजा कुन्ती कुन्तायुधधरा धृतिः ।
चर्माम्बरा क्रूरनखा चकोराक्षी चतुर्भुजा ॥ १२९

चतुर्वेदप्रिया चाद्या चतुर्वर्गफलप्रदा ।
ब्रह्माण्डचारिणी स्फूर्तिः ब्रह्माणी ब्रह्मसम्मता ॥ १३०

सत्कारकारिणी सूतिः सूतिका लतिकालया ।
कल्पवल्ली कृपाङ्गी च कल्पपादपवासिनी ॥ १३१

कल्पशाखा महाविद्या विद्याराज्ञी सुखाश्रया।
भूतिराज्ञी विश्वराज्ञी लोकराज्ञी शिवाश्रया ॥ १३२

ब्रह्मराज्ञी विष्णुराज्ञी रुद्रराज्ञी जटाश्रया ।
नागराज्ञी वंशराज्ञी वीरराज्ञी रजःप्रिया ॥ १३३

सत्वराज्ञी तमोराज्ञी गुणराज्ञी चलाचला ।
वसुराज्ञी तपोराज्ञी सत्यराज्ञी जपप्रिया ॥ १३४

मन्त्रराज्ञी तन्त्रराज्ञी वेदराज्ञी श्रुतिप्रिया ।
सर्वराज्ञी मन्त्रराज्ञी दैत्यराज्ञी दयाकरा ॥ १३५

कालराज्ञी प्रजाराज्ञी तेजोराज्ञी हराश्रया ।
पृथ्वीराज्ञी पयोराज्ञी वायुराज्ञी मदालसा ॥ १३६

सुधाराज्ञी सुराराज्ञी भीमराज्ञी भयोज्झिता ।
तथ्यराज्ञी जयाराज्ञी महाराज्ञी महामतिः ॥ १३७

वामराज्ञी चीनराज्ञी हरिराज्ञी हरीश्वरी ।
पराराज्ञी यक्षराज्ञी भूतराज्ञी शिवाश्रया ॥ १३८

वटुराज्ञी प्रेतराज्ञी शेषराज्ञी शमप्रदा।
आकाशराज्ञी राजेशी राजराज्ञी रतिप्रिया॥ १३९

पातालराज्ञी भूराज्ञी पराराज्ञी विषापहा।
सिद्धराज्ञी प्रभाराज्ञी तेजोराज्ञी विभामयी॥ १४०

भास्वद्राज्ञी चन्द्रराज्ञी ताराराज्ञी सुवासिनी।
गृहराज्ञी वृक्षराज्ञी लताराज्ञी मतिप्रदा॥ १४१

वीरराज्ञी मनोराज्ञी मनुराज्ञी च काश्यपी।
मुनिराज्ञी रत्नराज्ञी मृगराज्ञी मणिप्रभा॥ १४२

सिन्धुराज्ञी नदीराज्ञी नदराज्ञी दरीस्थिता।
नादराज्ञी बिन्दुराज्ञी आत्मराज्ञी च सद्गतिः॥ १४३

पुत्रराज्ञी ध्यानराज्ञी लयराज्ञी सदेश्वरी।
ईशानराज्ञी राज्यश्रीः स्वाहाराज्ञी महत्तरा॥ १४४

वह्निराज्ञी योगराज्ञी यज्ञराज्ञी चिदाकृतिः।
जगद्राज्ञी तत्वराज्ञी वाग्राज्ञी विश्वरूपिणी।
पञ्चदशाक्षरीराज्ञी ओं ह्रीं भूतेश्वरेश्वरी॥ १४५

इतीदं मन्त्रसर्वस्वं राज्ञीनामसहस्रकम्।
पञ्चदशाक्षरीतत्वं मन्त्रसारं मनुप्रियम्॥ १४६

सर्वतत्वमयं पुण्यं महापातकनाशनम्।
सर्वसिद्धिप्रदं लोके सर्वरोगनिबर्हणम्॥ १४७

सर्वोत्पातप्रशमनं ग्रहशान्तिकरं शुभम्।
सर्वदेवप्रियं प्राज्यं सर्वशत्रुभयापहम्॥ १४८

सर्वदुःखौघशमनं सर्वशोकनिकृन्तनम्।
पठेद्वा पाठयेत् नाम्नां सहस्रं शक्तिसन्निधौ॥ १४९

दूरादेव पलायन्ते विपदः शत्रुभीतयः ।
राक्षसाः भूतवेतालाः पन्नगा हरिणद्विषः ।। १५०

पठनाद्विद्रवन्त्याशु महाकालादिव प्रजाः ।
श्रवणात् पातकं नश्येत् श्रावयेत् यः स भाग्यवान् ।। १५१

नानाविधानि भोगानि सम्भूय पृथिवीतले ।
गमिष्यति परां भूमिं त्वरितं नात्र संशयः ।। १५२

इदं रहस्यं परमं प्रीत्या तव मयोदितम् ।
अप्रकाश्यं अदातव्यं न देयं यस्य कस्यचित् ।। १५३

देयं शिष्याय शान्ताय भक्तायाद्वैतवादिने ।
दीक्षिताय कुलीनाय राज्ञीभक्तिपराय च ।
दत्वा भोगापवर्गे च लभेत् साधकसत्तमः ।। १५४

इति नामसहस्रं तु राज्ञ्याः शिवमुखोदितम् ।
अत्यन्तदुर्लभं गोप्यं गोपनीयं स्वयोनिवत् ।। १५५

अष्टाविंशतिनैजमान्यमुनिभिः भाव्यां महायोगिभिः
श्री वाणीकरवीजितां सुमकुटां श्रीचक्रबिन्दुस्थिताम् ।
पञ्चब्रह्मसुतत्वमञ्चनिलयां साम्राज्यसिद्धिप्रदां
श्रीसिंहासनसुन्दरीं भगवतीं राजेश्वरीमाश्रये ।। १५६

श्वेतछत्रसुवालवीजननुता मालाकिरीटोज्ज्वला
सन्मन्दस्मितसुन्दरी शशिधरा ताम्बूलपूर्णानना ।
श्रीसिंहासनसंस्थिता सुमशरा श्रीवीरवर्यासना
साम्राज्ञी मनुषोडशी भगवती मां पातु राजेश्वरी ।।

———*———

## श्रीमहाराज्ञी श्रीराजराजेश्वरी सहस्रनामावलिः

ओं श्रीमहाराज्ञ्यै श्रीमत्सिंहासनेश्वर्यै श्रीराजराजेश्वर्यै नमः ।

ओं ऐं ह्रीं श्रीं ओं

ओं भास्वत्यै नमः । भद्रिकायै । भीमायै ।भर्गरूपायै । मनस्विन्यै । माननीयायै । मनीषायै । मनोजायै । मनेजवायै । मानदायै ।मन्त्रविद्यायै । महाविद्यायै । षडक्षर्यै । षट्कूटायै । त्रिकूटायै । त्रय्यै । वेदत्रय्यै । शिवायै । शिवाकारायै । विरूपाक्ष्यै नमः । २०

ओं शशिखण्डावतंसिन्यै नमः । महालक्ष्म्यै महोरस्कायै । महौजस्कायै । महोदयायै । मातङ्ग्यै । मोदकाहारायै । मदिरारुणलोचनायै । साध्व्यै । शीलवत्यै । शालायै । सुधाकलशधारिण्यै । खड्गिन्यै । पद्मिन्यै । पद्मायै । पद्मकिञ्जल्कराजितायै । हृत्पद्मवासिन्यै । हृद्यायै ।पानपत्रधरायै । परायै नमः । ४०

ओं धराधरेन्द्रतनयायै नमः । दक्षिणायै । दशनायै । दयायै । दयावत्यै । महामेधायै । मोदिन्यै । सदा बोधिन्यै । गदाधरार्चितायै । गोधायै । गङ्गायै । गोदावर्यै । गयायै । महाप्रभावसहितायै । महोरगविभूषणायै । महामुनिकृता-तिथ्यायै । माध्व्यै । मानवत्यै । मघायै । बालायै नमः । ६०

ओं सरस्वत्यै नमः । लक्ष्म्यै । दुर्गायै । दुर्गतिनाशिन्यै । शार्यै नमः । शरीरमध्यस्थायै । वैखर्यै । खेचरेश्वर्यै । शिवदायै । शिववक्षःस्थायै । कालिकायै । त्रिपुरेश्वर्यै ।

पुरारिकुक्षिमध्यस्थायै। पुरारिहृदयेश्वर्यै। वलारिराज्यदायै। चण्डयै। चामुण्डायै। मुण्डधारिण्यै। मुण्डमालाञ्चितायै। मुद्रायै नमः। ८०

ओं क्षोभणाकर्षणक्षमायै नमः। ब्राह्मयै। नारायण्यै। देव्यै। कौमार्यै। अपराजितायै। रुद्राण्यै। शच्यै। इन्द्राण्यै। वाराह्यै। वीरसुन्दर्यै। नारसिंह्यै। भैरवेश्यै। भैरवाकारभीषणायै। नागालङ्कारशोभाढ्यायै। नाग-यज्ञोपवीतिन्यै। नागकङ्कणकेयूरायै। नागहारायै। सुरेश्वर्यै। सुरारिघातिन्यै नमः। १००

ओं पूतायै नमः। पूतनायै। डाकिन्यै। क्रियायै। कूर्म्यै। क्रियावत्यै। कृत्यायै। डाकिन्यै। शाकिन्यै। लयायै। लीलावत्यै। रसाकीर्णायै। नागकन्यायै। मनोहरायै। हारकङ्कणशोभाढ्यायै। सदानन्दायै। शुभंकर्यै। महासिन्यै। मधुमत्यै। सरस्यै नमः। १२०

ओं स्मरमोहिन्यै नमः। महोग्रवपुष्यै। वार्तायै। वामाचारप्रियायै। सिरायै। सुधामय्यै। वेणुकरायै। वैरिघ्न्यै। वीरसुन्दर्यै। वारिमध्यस्थितायै। वामायै। वामनेत्रायै। शशिप्रभायै। शाङ्कर्यै। शर्मदायै। सीतायै। रवीन्दुशिखि-लोचनायै। मदिरायै। वारुण्यै। वीणागीतिज्ञायै नमः। १४०

ओं मदिरावत्यै नमः। वटस्थायै। वारुणीशक्त्यै। वटजायै। वटवासिन्यै। वटुक्यै। वीरसुवे। वन्द्यायै। स्तम्भिन्यै। मोहिन्यै। चम्वै। मुद्गराङ्कुशहस्तायै। वराभयकरायै। कुट्यै। पाटीरद्रुमवल्ल्यै। वटुकायै। वटुकेश्वर्यै। इष्टदायै। कृषिभुवे। कीर्यै नमः। १६०

ओं रेवत्यै नमः । रमणप्रियायै । रोहिण्यै । रेवत्यै । रम्यायै । रमण्यै । रोमहर्षणायै । रसोल्लासायै । रसासारायै । सारिण्यै । तारिण्यै । तटिते । तर्यै । तरित्रहस्तायै । तोतुलायै । तरणिप्रभायै । रत्नाकरप्रियायै । रम्भायै । रत्नालङ्कारशोभितायै । रुक्माङ्गदायै नमः । १८०

ओं गदाहस्तायै नमः । गदाधरवरप्रदायै । षड्रसायै । द्विरसायै । मालायै । मालाभरणभूषितायै । मालत्यै । मल्लिकामोदायै । मोदकाहारवल्लभायै । वल्लभ्यै । मधुरायै । मायायै । काश्यै । काञ्च्यै । ललन्तिकायै । हसन्तिकायै । हसन्त्यै । भ्रमन्त्यै । वसन्तिकायै । क्षेमायै नमः । २००

ओं क्षेमङ्कर्यै नमः । क्षामायै । क्षौमवस्त्रायै । क्षणेश्वर्यै । क्षणदायै । क्षेमदायै । क्षीरायै । सीरपाणिसमर्चितायै । क्रीतायै । क्रीतालपायै । क्रूरायै । कमनीयायै । कुलेश्वर्यै । कूर्चबीजायै । कुठाराढ्यायै । कूर्मिण्यै । कूर्मसुन्दर्यै । कारुण्यार्द्रायै । काश्मीर्यै । दूत्यै नमः । २२०

ओं द्वारवत्यै नमः । ध्रुवायै । ध्रुवस्तुतायै । ध्रुवगत्यै । पीठेश्यै । बगलामुख्यै । सुमुख्यै । शोभनायै । नीत्यै । रत्नज्वालामुख्यै । नत्यै । अलकायै । उज्जयिन्यै । भोग्यायै । भङ्ग्यै । भगवत्यै । बलायै । धर्मराजपुर्यै । पूतायै । पूर्णमालायै नमः । २४०

ओं अमरावत्यै नमः । अयोध्यायै । बोधनीयायै । युगमात्रे । यक्षिण्यै । यज्ञेश्वर्यै । योगगम्यायै । योगिध्येयायै । यशस्विन्यै । यशोवत्यै । चार्वङ्ग्यै । चारुहासायै । चलालकायै । हरीश्वर्यै । हरेर्मायायै । भामिन्यै । वायुवेगिन्यै । अम्बालिकायै । अम्बायै । भर्गेश्यै नमः । २६०

ओं भृगुकूटायै नमः । महामत्यै । कोशेश्वर्यै । कमलायै । कीर्तिदायै । कीर्तिवर्धन्यै । कठोरवाचे । कुहूमूर्त्यै । चन्द्रबिम्बसमाननायै । चन्द्रकुङ्कुमलिप्ताङ्ग्यै । कनकाचलवासिन्यै । मलयाचलसानुस्थायै । हिमाद्रितनयातन्वै । हिमाद्रिकुक्षिदेशस्थायै । कुब्जिकायै । कोसलेश्वर्यै । कारिकनिगलायै । गूढायै । गूढगुल्फायै । अतिवेगिन्यै नमः २८०

ओं तनुजायै नमः । तनुरूपायै । बाणचापधरायै । नुत्यै । धुरीणायै । धूम्रवाराह्यै । धूम्रकेशायै । अरुणाननायै । अरुणेश्यै । द्युत्यै । ख्यात्यै । गरिष्ठायै । गरीयस्यै । महानस्यै । महाकारायै । सुरासुरभयङ्कर्यै । अणुरूपायै । बृहज्ज्योतिषे । अनिरुद्धायै । सरस्वस्यै नमः । ३००

ओं श्यामायै नमः । श्याममुख्यै । शान्तायै । श्रान्तसन्तापहारिण्यै । गवे । गण्यायै । गोमत्यै । गुह्यायै । गोमय्यै । गुरुवाचे । रसायै । गीतसन्तोषसंसक्तायै । गृहिण्यै । ग्राहिण्यै । गुहायै । गणप्रियायै । गणगत्यै । गान्धार्यै । गन्धमोहिन्यै । गन्धमादनसानुस्थायै नमः । ३२०

ओं सह्याचलकृतालयायै नमः । गजाननप्रियायै । गम्यायै । ग्राहिकायै । ग्राहवाहनायै । गृहप्रसुवे । गुहावासायै । गृहमालाविभूषणायै । कौबेर्यै । कुहकायै । भ्रान्त्यै । तर्कविद्याप्रियङ्कर्यै । पीताम्बरायै । पटाकारायै । पताकायै । सृष्टिजायै । सुधायै । दाक्षायण्यै । दक्षसुतायै । दक्षयज्ञविनाशिन्यै नमः । ३४०

ओं ताराचक्रस्थितायै नमः । तारायै । तुरीतुर्यायै । त्रुट्यै । तुलायै । सन्ध्यात्रय्यै । सन्धिजरायै । सन्ध्यायै । तारुण्यलालितायै । ललितायै । लोहितायै । लभ्यायै । चम्पायै । कम्पाकलायै । सृण्यै । स्मृत्यै । सत्यवत्यै । स्वस्थायै । असमानायै । मानवर्धिन्यै नमः । ३६०

ओं महोमय्यै नमः । मनस्तुष्ट्यै । कामधेनवे । सनातन्यै । सूक्ष्मरूपायै । सूक्ष्ममुख्यै । स्थूलरूपायै । कलावत्यै । तलातलाश्रयायै । सिन्धवे । त्र्यम्बिकायै । लम्बिकायै । जयायै । सौदामिन्यै । सुधादेव्यै । सनकादिसमर्चितायै । मन्दाकिन्यै । यमुनायै । विपाशायै । नर्मदानद्यै नमः । ३८०

ओं गण्डक्यै नमः । ऐरावत्यै । सिप्रायै । वितस्तायै । सरस्वत्यै । रेवायै । इक्षुमत्यै । वेगवत्यै । सागरवासिन्यै । देवक्यै । देवमात्रे । देवेश्यै । देवसुन्दर्यै । दैत्येश्यै । दमन्यै । दात्र्यै । दित्यै । दितिजसुन्दर्यै । विद्याधर्यै । विद्येश्यै नमः । ४००

ओं विद्याधरजसुन्दर्यै नमः । मेनकायै । चित्रलेखायै । चित्रिण्यै । तिलोत्तमायै । ऊर्वश्यै । मोहिन्यै । रम्भायै । अप्सरोगणसुन्दर्यै । यक्षिण्यै । यक्षलोकेश्यै । यक्षनायकसुन्दर्यै । गन्धवत्यर्चितायै । गन्धायै । सुगन्धायै । गीततत्परायै । गन्धर्वतनयायै । नम्रायै । गीत्यै । गन्धर्वसुन्दर्यै नमः ४२०

ओं मन्दोदर्यै नमः । करालाक्ष्यै । मेघनादवरप्रदायै । मेघवाहनसंपूज्यायै । मेघमूर्त्यै । राक्षस्यै । रक्षोहन्त्र्यै । केकस्यै । रक्षोनायकसुन्दर्यै । किन्नर्यै । कम्बुकण्ठ्यै ।

कलकण्ठस्वनायै । अमृतायै । किंमुख्यै । हयवक्त्रायै । खेलायै । किन्नरसुन्दर्यै । विपाश्यै । राजमातङ्ग्यै । उच्छिष्टपदसंस्थितायै नमः । ४४०

ओं महापिशाचिन्यै नमः । चान्द्र्यै । पिशाचकुल-सुन्दर्यै । गुह्येश्वर्यै । गुह्यरूपायै । गुर्व्यै । गुह्यकसुन्दर्यै । सिद्धिप्रदायै । सिद्धवध्वै । सिद्धेश्यै । सिद्धसुन्दर्यै । भूतेश्वर्यै । भूतलयायै । भूतधात्र्यै । भयापहायै । भूतभीतिहर्यै । भव्यायै । भूतजायै । भूतसुन्दर्यै । पृथ्व्यै नमः । ४६०

ओं पार्थिवलोकेश्यै नमः । प्रथायै । विष्णुसमर्चितायै । वसुन्धरायै । वसुनतायै । पार्थिव्यै । भूमिसुन्दर्यै । अम्भोधितनयायै । अलुब्धायै । जलजाक्ष्यै । जलेश्वर्यै । अम्मूर्तये । अम्मय्यै । मार्यै । जलस्थायै । जलसुन्दर्यै । तेजस्विन्यै । महोधात्र्यै । तैजस्यै । सूर्यबिम्बगायै नमः । ४८०

ओं सूर्यकान्त्यै नमः । सूर्यतेजसे । तेजोरूपैकसुन्दर्यै । वायुवाहायै । वायुमुख्यै । वायुलोकैकसुन्दर्यै । गगनस्थायै । खेचरेश्यै । शूररूपायै । निराकृतये । निराभासायै । भासमानायै । द्युत्यै । आकाशसुन्दर्यै । क्षितिमूर्तिधरायै । अनन्तायै । क्षितिभृल्लोकसुन्दर्यै । अब्धियानायै । रत्न-शोभायै । वरुणेश्यै नमः । ५००

ओं वरायुधायै नमः । पाशहस्तायै । पोषणायै । वरुणेश्वरसुन्दर्यै । अनलैकरुचये । ज्योतिषे । पञ्चानल-गतिस्थितये । प्राणापानसमानेच्छायै । उदानव्यान-रूपिण्यै । पञ्चवातगत्यै । नाडीरूपिण्यै । वातसुन्दर्यै । अग्निरूपायै । वह्निशिखायै । बडवानलसन्निभायै । हेत्यै । हविषे । हुतज्योतिषे । अग्निजायै । वह्निसुन्दर्यै नमः । ५२०

ओं सोमेश्वर्यै नमः । सोमकलायै । सोमपान-परायणायै । सौम्याननायै । सौम्यरूपायै । सोमस्थायै । सोमसुन्दर्यै । सूर्यप्रभायै । सूर्यमुख्यै । सूर्यजायै । सूर्यसुन्दर्यै । याज्ञिक्यै । यज्ञभागेच्छायै ।यजमानवरप्रदायै । याजक्यै । यज्ञविद्यायै । यजमानैकसुन्दर्यै । आकाशगामिन्यै । वन्द्यायै । शब्दजायै नमः । ५४०

ओं आकाशसुन्दर्यै नमः । मीनास्यायै । मीननेत्रायै । मीनस्थायै । मीनसुन्दर्यै । कूर्मपृष्ठगतायै । कूर्म्यै । कूर्मजायै । कूर्मसुन्दर्यै । वाराह्यै । वीरसुवै । वन्द्यायै । वरारोहायै । मृगेक्षणायै । वराहमूर्त्यै । वाचालायै । वश्यायै । वाराह-सुन्दर्यै ।नरसिंहाकृत्यै । देव्यै नमः । ५६०

ओं दुष्टदैत्यनिषूदिन्यै नमः । प्रद्युम्नवरदायै । नार्यै । नरसिंहैकसुन्दर्यै । वामजायै । वामनाकारायै । नारायण-परायणायै । बलिदानवदर्पघ्न्यै । वाम्यायै । वामनसुन्दर्यै । रामप्रियायै । रामकलायै । रक्षोवंशभयङ्कर्यै । भृगुपुत्र्यै । राजकन्यायै । रामायै । परशुधारिण्यै । भार्गव्यै । भार्गवेष्टायै ।जामदग्न्यवरप्रदायै नमः । ५८०

ओं कुठारधारिण्यै नमः ।रात्र्यै । जामदग्न्यैकसुन्दर्यै । सीतालक्ष्मणसेव्यायै । रक्षःकुलविनाशिन्यै । रामप्रियायै । शत्रुघ्न्यै । शत्रुघ्नभरतेष्टदायै । लावण्यामृतधाराढ्यायै । लवणासुरघातिन्यै । लोहितास्यायै । प्रसन्नास्यायै । स्वात्मारामैकसुन्दर्यै । कृष्णकेशायै । कृष्णमुख्यै । यादवान्तकर्यै । लयायै । यादोगणार्चितायै । योज्यायै । राधायै नमः । ६००

ओं श्रीकृष्णसुन्दर्यै नमः । सिद्धप्रसुवे । सिद्धदेव्यै । जिनमार्गपरायणायै । जितक्रोधायै । जितालस्यायै । जिनसेव्यायै । जितेन्द्रियायै । जिनवंशधरायै । उग्रायै । नीलान्तायै । बुद्धसुन्दर्यै । काल्यै । कोलाहलप्रीतायै । प्रेतवाहायै । सुरेश्वर्यै । कल्किप्रियायै । कम्बुधरायै । कलिकालैकसुन्दर्यै । विष्णुमायायै नमः ६२०

ओं ब्रह्ममायायै नमः । शांभव्यै । शिववाहनायै । इन्द्रावरजवक्षःस्थायै । स्थाणुपत्न्यै । पलालिन्यै । जृम्भिण्यै । जृंभहन्त्र्यै । जृम्भमाणालकाकुलायै । कुलाकुलफलेशान्यै । पददानफलप्रदायै । कुलवागीश्वर्यै । कुल्यायै । कुलजायै । कुलसुन्दर्यै । पुरन्दरेड्यायै । तारुण्यालयायै । पुण्यजनेश्वर्यै । पुण्योत्साहायै । पापहन्त्र्यै नमः । ६४०

ओं पाकशासनसुन्दर्यै नमः । सूर्यकोटिप्रतीकाशायै । सूर्यतेजोमय्यै । मत्यै । लेखिन्यै । भ्राजितायै । रज्जुरूपिण्यै । सूर्यसुन्दर्यै । चन्द्रिकायै । सुधाधारायै । ज्योत्स्नायै । शीतांशुसुन्दर्यै । लोलाक्ष्यै । शताक्ष्यै । सहस्राक्ष्यै । सहस्रपदे । सहस्रशीर्षायै । इन्द्राक्ष्यै । सहस्रभुजवल्लिकायै । कोटिरत्नांशुशोभायै नमः । ६६०

ओं शुभ्रवस्त्रायै नमः । शुभावहायै । शतानन्दायै । श्रुतिधरायै । पिङ्गलायै । उग्रनादिन्यै । सुषुम्नायै । हारकेयूरनूपुरारावसङ्कुलायै । घोरनादायै । अघोरमुख्यै । उन्मुख्यै । उल्मुखायुधायै । गोपितायै । गूर्जर्यै । गोधायै । गायत्र्यै । वेदवल्लभायै । वल्लकीस्वननादायै । नादविद्यायै । नदीतट्यै नमः । ६८०

ओं बिन्दुरूपायै नमः । चक्रयोनये । बिन्दुनादस्वरूपिण्यै । चक्रेश्वर्यै । भैरवेश्यै । महाभैरववल्लभायै । कालभैरवभार्यायै । कल्पान्ते रङ्गनर्तक्यै । प्रलयानलधूम्राभायै । योनिमध्यकृतालयायै । भूचर्यै । खेचरीमुद्रायै । नवमुद्राविलासिन्यै । वियोगिन्यै । श्मशानस्थायै । श्मशानार्चनतोषितायै । भास्वराङ्ग्यै । भर्गशिखायै । भर्गवामाङ्कवासिन्यै । भद्रकाल्यै नमः । ७००

ओं विश्वकाल्यै नमः । श्रीकाल्यै । मेघकालिकायै । नीरकाल्यै । कालरात्र्यै । काल्यै । कामेशकालिकायै । इन्द्रकाल्यै । पूर्वकाल्यै । पश्चिमाम्नायकालिकायै । श्मशानकालिकायै । शुभ्रकाल्यै । श्रीकृष्णकालिकायै । क्रींकारोत्तरकाल्यै । श्रीं हुं ह्रीं दक्षिणकालिकायै । सुन्दर्यै । त्रिपुरेशान्यै । त्रिकूटायै । त्रिपुरार्चितायै । त्रिनेत्रायै नमः । ७२०

ओं त्रिपुराध्यक्षायै नमः । श्रीकूटायै । कूटभैरव्यै । त्रिलोकजनन्यै । नेत्र्यै । महात्रिपुरसुन्दर्यै । कामेश्वर्यै । कामकलायै । कालकामेशसुन्दर्यै । त्र्यक्षर्यै । एकाक्षरीदेव्यै । भावनायै । भुवनेश्वर्यै । एकाक्षर्यै । चतुःकूटायै । त्रिकूटेश्यै । लयेश्वर्यै । चतुर्वर्णायै । वर्णेश्यै । वर्णाढ्यायै नमः । ७४०

ओं वर्णसुन्दर्यै नमः । पञ्चाक्षर्यै । षट्वक्त्रायै । षट्कूटायै । षडक्षर्यै । सप्ताक्षर्यै । नवार्णेश्यै । परमाष्टाक्षरेश्वर्यै । नवम्यै । पञ्चम्यै । षष्ठ्यै । नागेश्यै । नवनायिकायै । दशाक्षर्यै । दशास्येश्यै । देविकायै । एकादशाक्षर्यै । द्वादशादित्यसङ्काशायै । द्वादश्यै । द्वादशाक्षर्यै नमः । ७६०

ओं त्रयोदश्यै नमः । वेदगर्भायै । ब्राह्म्यै । त्रयोदशाक्षर्यै । चतुर्दशाक्षरीविद्यायै । श्रीमत्पञ्चदशाक्षर्यै । श्रीषोडश्यै । सर्वविद्येश्यै । महाश्रीषोडशाक्षर्यै । महाश्रीषोडशीरूपायै । चिन्तामणिमनुप्रियायै । द्वाविंशत्यक्षर्यै । श्यामायै । महाकालकुटुम्बिन्यै । वज्रतारायै । कालतारायै । नारीतारायै । उग्रतारिण्यै । कामतारायै । स्पर्शतारायै नमः । ७८०

ओं शब्दतारायै नमः । रसाश्रयायै । रूपतारायै । गन्धतारायै । महानीलसरस्वत्यै । कालज्वालायै । वह्निज्वालायै । ब्रह्मज्वालायै । जटाकुलायै । विष्णु-ज्वालायै । विष्णुशिखायै । भद्रज्वालायै । करालिन्यै । विकरालमुखीदेव्यै । कराल्यै । भूतिभूषितायै । चिताशयासनाचिन्त्यायै । चितामण्डलमध्यगायै । भूतभैरवसेव्यायै । भूतभैरवपालिन्यै नमः । ८००

ओं बन्धक्यै नमः । बद्धसन्मुद्रायै । भवबन्ध-विनाशिन्यै । भवान्यै । देवदेवेश्यै । दीक्षायै । दीक्षितपूजितायै । साधकेश्यै । सिद्धिदात्र्यै । साधकानन्द-वर्धिन्यै । साधकाश्रयभूतायै । साधकेष्टफलप्रदायै । रजोवत्यै । राजस्यै । रञ्जक्यै । रजस्वलायै । पुष्पप्रियायै । पुष्पपूर्णायै । स्वयम्भूपुष्पमालिकायै । स्वयंभूपुष्पगन्धा-ढ्यायै नमः । ८२०

ओं पुलस्त्यसुतनाशिन्यै नमः । पात्रहस्तायै । परायै । पौत्र्यै । पीतास्यायै । पीतभूषणायै । पिङ्गाननायै । पिङ्गकेश्यै । पिङ्गलायै । पिङ्गलेश्वर्यै । मङ्गलायै ।

मङ्गलेशान्यै । सर्वमङ्गलमङ्गलायै । पुरूरवेश्वर्यै । पाशधरायै । चापधरायै । अधुरायै । पुण्यधात्र्यै । पुण्यमय्यै । पुण्यलोकनिवासिन्यै नमः । ८४०

ओँ होतृसेव्यायै नमः । हकारस्थायै । सकारस्थायै । सुखेश्वर्यै । सत्यै । शोभावत्यै । सत्यायै । सत्याचारपरायणायै । साध्व्यै । ईशानकलेशान्यै । वामदेवकलाश्रितायै । सद्योजातकलेशान्यै । शिवायै । अघोरकलाकृतये । शर्वर्यै । वीरसदृश्यै । क्षीरनीर-विवेचिन्यै । वितर्कनिलयायै । नित्यायै । नित्यक्लिन्नायै नमः । ८६०

ओँ पराम्बिकायै नमः । पुरारिदयितायै । दीर्घायै । दीर्घनासायै । अल्पभाषिण्यै । काशिकायै । कौशिक्यै । केश्यायै । कोशदायै । कोशवर्धिन्यै । तुष्ट्यै । पुष्ट्यै । प्रजाप्रीतायै । पूजितायै । पूजकप्रियायै । प्रजावत्यै । गर्भवत्यै । गर्भपोषणकारिण्यै । शुक्लवाससे । शुक्लरूपायै नमः ८८०

ओँ शुचिवाससे नमः । जयावहायै । जानक्यै । जन्म-जनकायै । जनतोषणतत्परायै । वादप्रियायै । वाद्यरतायै । वादिन्यै । वादसुन्दर्यै । वाक्स्तम्भिन्यै । कीरपाणये । धीरधीरायै । धुरन्धरायै । स्तनन्धय्यै । सामिधेन्यै । निरानन्दायै । निरञ्जनायै । समस्तसुखदायै । सारायै । वाराब्धिधिवरप्रदायै नमः । ९००

ओँ वालुकायै नमः । वीरपानेष्टायै । वसुदात्र्यै । वसुप्रियायै । शुक्रानन्दायै । शुक्ररसायै । शुक्रपूज्यायै ।

शुकप्रियायै । शुच्यै । शुकहस्तायै । समस्तनरकान्तकायै । समस्ततत्वनिलयायै । भगरूपायै । भगेश्वर्यै । भगबिम्बायै । भगायै । ह्यद्यायै । भवलिङ्गस्वरूपिण्यै । भवलिङ्गेश्वर्यै । श्रीदायै नमः । ९२०

ओं भवलिङ्गामृतस्रवायै नमः । क्षीराशनायै । क्षीररुचये । आज्यपानपरायणायै । मधुपानपरायै । प्रौढायै । पीवरांसायै । परावरायै । पिलम्पिलायै । पटोलीशायै । पाटलारुणलोचनायै । क्षीराम्बुधिप्रियायै । क्षिप्रायै । सरलायै । सरलायुधायै । संग्रामायै । सुनयायै । स्रस्तायै । संस्मृत्यै । सनकेश्वर्यै नमः । ९४०

ओं कन्यायै नमः । करकरेखायै । कान्यकुब्ज-निवासिन्यै । काञ्चनाभतनवे । काष्ठायै । कुष्ठरोग-विनाशिन्यै । कठोरमूर्धजायै । कुन्त्यै । कुन्तायुधधरायै । धृत्यै । चर्माम्बरायै । क्रूरनखायै । चकोराक्ष्यै । चतुर्भुजायै । चतुर्वेदप्रियायै । आद्यायै । चतुर्वर्गफलप्रदायै । ब्रह्माण्डचारिण्यै । स्फूर्त्यै । ब्रह्माण्यै नमः । ९६०

ओं ब्रह्मसम्मतायै नमः । सत्कारकारिण्यै । सूत्यै । सूतिकायै । लतिकालयायै । कल्पवल्ल्यै । कृपाङ्ग्यै । कल्पपादपवासिन्यै । कल्पशाखायै । महाविद्यायै । विद्याराज्ञ्यै । सुखाश्रयायै । भूतिराज्ञ्यै । विश्वराज्ञ्यै । लोकराज्ञ्यै । शिवाश्रयायै । ब्रह्मराज्ञ्यै । विष्णुराज्ञ्यै । रुद्रराज्ञ्यै । जटाश्रयायै नमः ९८०

ओं नागराज्ञ्यै नमः । वंशराज्ञ्यै । वीरराज्ञ्यै । रजःप्रियायै । सत्वराज्ञ्यै। तमोराज्ञ्यै । गुणराज्ञ्यै ।

चलाचलायै। वसुराज्यै । तपोराज्यै । सत्यराज्यै । जपप्रियायै। मन्त्रराज्यै । तन्त्रराज्यै । वेदराज्यै । श्रुतिप्रियायै । सर्वराज्यै। मन्त्रिराज्यै । दैत्यराज्यै । दयाकरायै नमः १०००

ओं कालराज्यै नमः । प्रजाराज्यै । तेजोराज्यै । हराश्रयायै । पृथ्वीराज्यै । पयोराज्यै । वायुराज्यै । मदालसायै। सुधाराज्यै । सुराराज्यै । भीमराज्यै । भयोज्झितायै । तथ्यराज्यै । जयाराज्यै । महाराज्यै । महामत्यै । वामराज्यै । चीनराज्यै । हरिराज्यै । हरीश्वर्यै नमः । १०२०

ओं पराराज्यै नमः । यक्षराज्यै । भूतराज्यै । शिवाश्रयायै। वटुराज्यै। प्रेतराज्यै। शेषराज्यै। शमप्रदायै। आकाशराज्यै । राजेश्यै । राजराज्यै । रतिप्रियायै । पातालराज्यै । भूराज्यै । पराराज्यै । विषापहायै । सिद्धराज्यै। प्रभाराज्यै । तेजोराज्यै । विभामय्यै नमः । १०४०

ओं भास्वद्राज्यै नमः । चन्द्रराज्यै । ताराराज्यै । सुवासिन्यै। गृहराज्यै। वृक्षराज्यै। लताराज्यै। मतिप्रदायै। वीरराज्यै। मनोराज्यै। मनुराज्यै। काश्यप्यै। मुनिराज्यै। रत्नराज्यै। मृगराज्यै। मणिप्रभायै। सिन्धुराज्यै। नदीराज्यै। नदराज्यै। दरीस्थितायै नमः। १०६०

ओं नादराज्यै नमः । बिन्दुराज्यै । आत्मराज्यै । सद्गतये । पुत्रराज्यै । ध्यानराज्यै। लयराज्यै। सदेश्वर्यै । ईशानराज्यै । राजश्रियै । स्वाहाराज्यै । महत्तरायै ।

वह्निराज्यै । योगिराज्यै । यज्ञराज्यै । चिदाकृत्यै । जगद्राज्यै । तत्वराज्यै । वाग्राज्यै । विश्वरूपिण्यै । पञ्चदशाक्षरीराज्यै । ह्रीं भूतेश्वरेश्वर्यै नमः । १०८२ । श्री महाराज्ञी षोडशेश्वरी श्रीराजराजेश्वरी श्रीमात्रे नमो नमः

वीणां वामकुचे निधाय सरसं तन्त्रीषु नैजाङ्गुलीः
कृत्वा शम्भुयशो विजित्वरगुणान् गातुं प्रवृत्ता परा।
वीक्षामात्रत एव विश्वविजयं वाक्पाटवं तन्वती
सङ्गीतामृतमातृका भगवती मां पातु राजेश्वरी ॥

——*——

॥ श्रीः ॥

## महाराज्ञी राजराजेश्वरी अष्टोत्तरशतनामस्तोत्रम्

वामे चेक्षुधनुः मुदाऽभयकरं दक्षं वरं कौसुमं
बिभ्राणा स्मितमञ्जुला शशिधरा सिंहासनेशी परा।
श्रीवाणीकरवीजिता नतजने साम्राज्यदानोद्यता
सम्राज्ञी वरषोडशी भगवती मां पातु राजेश्वरी ॥

सदाशिव उवाच—

ओं उमा भगवती भद्रा शर्वाणी विजया जया।
वाणी सर्वगता गौरी वाराही कमलप्रिया ॥ १

सरस्वती कला माया मातङ्गी त्रिपुराऽम्बिका।
शाकम्भरी शिवा चण्डी कुण्डली वैष्णवी क्रिया ॥ २

श्रीचान्द्री श्रीः मधुमती गिरिजा सुभगा परा।
तारा पद्मवती हंसी पद्मनाभसहोदरी ॥ ३

अपर्णा ललिता धात्री कुमारी शिखिवाहिनी।
शाम्भवी सुमुखी मैत्री त्रिणेत्री विश्वरूपिणी ।। ४

आर्या मृडानी ह्रींकारी क्रोधिनी सुदिनाऽजपा।
सूक्ष्मा परापरा शोभा सर्ववर्णा हरिप्रिया ।। ५

महालक्ष्मीर्महासिद्धिः स्वधा स्वाहा मनोन्मनी।
त्रिलोकपालिनी भूता त्रिसन्ध्या त्रिपुरान्तकी ।।६

षोडशी च महाराज्ञी ब्राह्मी त्रैलोक्यमोहिनी।
पुष्कराक्षी लता गौरी त्रिवर्णा त्रिस्वराऽमृता ।। ७

त्रिगुणा निर्गुणा सत्या निर्विकल्पा निरञ्जनी।
ज्वालिनी मालिनी चार्या क्रव्यादोपनिबर्हिणी ।। ८

कामाक्षी कामिनी कान्तिः कामदा कलहंसिनी।
कल्पवल्ली च कुटिला प्राज्ञा प्रासादवासदा ।। ९

वागीश्वरी विशालाक्षी सर्वविद्या सुमङ्गला।
काली कामेश्वरी चण्डी भैरवी भुवनेश्वरी ।। १०

नित्या नित्यान्तविभवा सत्यज्ञाना तमोपहा।
माहेश्वरीप्रियकरी महात्रिपुरसुन्दरी ।। ११

राजराजेश्वरीभद्रा श्रीमत्सिंहासनेश्वरी।
नाम्नां अष्टोत्तरशतं सर्वसिद्धिप्रदं शुभम् ।। १२

यस्त्रिसन्ध्यं पठेत् विद्वान् स्तोत्रं शीघ्रफलप्रदम्।
तस्य पुण्यफलं वक्ष्ये शृणु मे प्राणवल्लभे ।। १३

कामार्थी लभते कामान् धनार्थी लभते धनम्।
विद्यार्थी लभते विद्याः सर्वसिद्धिं च सर्वदा ।। १४

विद्याप्रदं कीर्तिकरं सुकवित्वप्रदायकम्।
सर्वसम्पत्प्रदं सर्वसौख्यदं सर्वमङ्गलम्॥ १५

सर्वाभीष्टप्रदं चैव दीर्घायुष्यप्रदं भवेत्।
आयुराराग्यसन्तोष सुतसम्पद्विवर्धनम्॥ १६

सिद्धसारस्वतं नाम साम्राज्ञीप्रीतिदायकम्।
सर्वसाम्राज्यदं नाम महाराज्ञीशतं शुभम्॥ १७

– रुद्रयामले

—*—

# श्रीमहाराज्ञी श्रीराजराजेश्वरी अष्टोत्तरशतनामावलिः

ओं उमायै नमः । भगवत्यै । भद्रायै । शर्वाण्यै । विजयायै । जयायै । वाण्यै । सर्वगतायै । गौर्यै । वाराह्यै । कमलप्रियायै । सरस्वत्यै । कलायै । मायायै । मातङ्ग्यै । त्रिपुरायै । अम्बिकायै । शाकम्भर्यै । शिवायै । चण्ड्यै नमः । २०

ओं कुण्डल्यै नमः । वैष्णव्यै । क्रियायै । श्रीचान्द्र्यै । श्रियै । मधुमत्यै । गिरिजायै । सुभगायै । परायै । तारायै । पद्मवत्यै । हंस्यै । पद्मनाभसहोदर्यै । अपर्णायै । ललितायै । धात्र्यै । कुमार्यै । शिखिवाहिन्यै । शाम्भव्यै । सुमुख्यै नमः । ४०

ओं मैत्र्यै नमः । त्रिनेत्र्यै । विश्वरूपिण्यै । आर्यायै । मृडान्यै । ह्रींकार्यै । क्रोधिन्यै । सुदिनायै । अजपायै ।

सूक्ष्मायै । परापरायै । शोभायै । सर्ववर्णायै । हरिप्रियायै । महालक्ष्म्यै । महासिद्ध्यै । स्वधायै । स्वाहायै । मनोन्मन्यै । त्रिलोकपालिनी भूतायै नमः । ६०

ओं त्रिसन्ध्यायै नमः । त्रिपुरान्तक्यै । षोडश्यै । महाराज्यै । ब्राह्म्यै । त्रैलोक्यमोहिन्यै । पुष्कराक्ष्यै । लतायै । गौर्यै । त्रिवर्णायै । त्रिस्वरायै । अमृतायै । त्रिगुणायै । निर्गुणायै । सत्यायै । निर्विकल्पायै । निरञ्जन्यै । ज्वालिन्यै । मालिन्यै । आर्यायै नमः ।८०

ओं क्रव्यादोपनिबर्हिण्यै नमः । कामाक्ष्यै । कामिन्यै । कान्तायै । कामदायै । कलहंसिन्यै । कल्पवल्ल्यै । कुटिलायै । प्राज्ञायै । प्रासादवासदायै । वागीश्वर्यै । विशालाक्ष्यै । सर्वविद्यायै । सुमङ्गलायै । कन्यायै । कामेश्वर्यै । चण्ड्यै । भैरव्यै । भुवनेश्वर्यै । नित्यायै नमः । १००

ओं नित्यानन्तविभवायै नमः । सत्यज्ञानायै । तमोपहायै । माहेश्वरीप्रियकर्यै । महात्रिपुरसुन्दर्यै । राजराजेश्वर्यै । भद्रायै । श्रीमत्सिंहासनेश्वर्यै नमः । १०८

ओं श्रीमहाराज्ञीश्रीराजराजेश्वर्यै नमः

——*——

# श्री ज्वालामुखीसहस्रनामस्तोत्रम् ।

श्री भैरव्युवाच ।

भगवन् सर्वधर्मज्ञ देवानामभयङ्कर ।

पुरा मे यत् त्वया प्रोक्तं वरं कैलाससानुतः ।। १

कृपया परया नाथ तं मे दातुं क्षमो भव ।

श्री भैरव उवाच ।

सत्यमेतत् त्वया प्रोक्तं वरं वरय पार्वति ।। २

तं प्रयच्छामि संसिद्धयै मनसा यदभीप्सितम् ।

श्री भैरव्युवाच ।—

ज्वालामुख्यास्त्वया देव सहस्राणि च तत्त्वतः ।। ३

प्रोक्तानि ब्रूहि मे भक्त्या यदि मे त्वत्कृपा भवेत् ।

श्रीभैरव उवाच—

प्रवक्ष्यामि महादेवि ज्वालानामानि तत्त्वतः ।। ४

सहस्राणि कलौ नॄणां वरदानि यथेप्सितम् ।

अभक्ताय न दातव्यं दुष्टायासाधकाय च ।। ५

या सा ज्वालामुखी देवी त्रैलोक्यजननी स्मृता ।

तस्या नामानि वक्ष्यामि दुर्लभानि जगत्त्रये ।। ६

विना नित्यबलिं स्तोत्रं न रक्ष्यं साधकोत्तमैः ।

दुर्भिक्षे शत्रुभीतौ च मारणे स्तंभने पठेत् ।। ७

सहस्राख्यं स्तवं देव्याः सद्यः सिद्धिर्भविष्यति ।

विना गन्धाक्षतैः पुष्पैर्धूपैर्दीपैर्विना बलिम् ।। ८

न रक्ष्यं साधकेनैव देवीनामसहस्रकम् ।

दत्त्वा बलिं पठेद्देव्या मन्त्री नामसहस्रकम् ।

देवि सत्यं मया प्रोक्तं सिद्धिहानिस्ततोऽन्यथा ।। ९

अस्य श्रीज्वालामुखीसहस्रनामस्तवस्य, भैरव ऋषिः, अनुष्टुप् छन्दः, श्रीज्वालामुखी देवता, ह्रीं बीजं, श्रीं शक्तिः, ओं कीलकं, पाठे विनियोगः। भैरवऋषये नमः शिरसि। अनुष्टुप्छन्दसे नमो मुखे। श्रीज्वालामुखीदेवतायै नमो हृदि। ह्रीं बीजाय नमो नाभौ। श्रीं शक्तये नमो गुह्ये। ओं कीलकाय नमः पादयोः। विनियोगाय नमः सर्वाङ्गेषु। ओं ह्रामिति षड्दीर्घयुक्तमायया करषडङ्गानि विधाय ध्यायेत्—

उद्यच्चन्द्रमरीचिसंनिभमुखीमेकादशाराब्जगां
पाशाम्भोजवराभयान् करतलैः संबिभ्रतीं सादरात्।
अग्नीन्द्वर्कविलोचनां शशिकलाचूडां त्रिवर्गोज्ज्वलां
प्रेतस्थां ज्वलदग्निमण्डलशिखां ज्वालामुखीं नौम्यहम्॥

ओं ह्रीं ज्वालामुखी जैत्री श्रींज्योत्स्ना जयदा जया।
औदुम्बरा महानीला शुक्रलुप्ता शची श्रुतिः॥ १
स्मयदा स्मयहर्त्री च स्मरशत्रुप्रियङ्करी।
मानदा मोहिनी मत्ता माया बाला बलन्धरा॥ २
भगरूपा भगावासा भीरुण्डा भयघातिनी।
भीतिर्भयानकास्या च भ्रूः सुभ्रूः सुखिनी सती॥ ३
शूलिनी शूलहस्ता च शूलिवामाङ्गवासिनी।
शशाङ्कजननी शीता शीतला शारिका शिवा॥ ४
स्रुचिका मधुमन्मान्या त्रिवर्गफलदायिनी।
त्रेता त्रिलोचना दुर्गा दुर्गमा दुर्गतिर्गतिः॥ ५
पूता प्लुतिर्विमर्शा च सृष्टिकर्त्री सुखावहा।
सुखदा सर्वमध्यस्था लोकमाता महेश्वरी॥ ६
लोकेष्टा वरदा स्तुत्या स्तुतिर्द्रुतगतिर्नुतिः।
नयदा नयनेत्रा च नवग्रहनिषेविता॥ ७

अम्बा वरूथिनी वीरजननी वीरसुन्दरी।
वीरसूर्वारुणी वार्ता वराभयकरा वधूः ॥ ८

वानीरतलगा वाम्या वामाचारफलप्रदा।
वीरा शौर्यकरी शान्ता शार्दूलत्वक् च शर्वरी ॥ ९

शलभी शास्त्रमर्यादा शिवदा शम्बरान्तका।
शम्बरारिप्रिया शम्भुकान्ता शशिनिभानना ॥ १०

शस्त्रायुधधरा शान्तिर्ज्योतिर्दीप्तिर्जगत्प्रिया।
जगती जित्वरा जारी मार्जारी पशुपालिनी ॥ ११

मेरुमध्यगता मैत्री मुसलायुधधारिणी।
मान्या मन्त्रेष्टदा माध्वी माध्वीरसविघूर्णिता ॥ १२

मोदकाहारमत्ता च मत्तमातङ्गगामिनी।
महेश्वरप्रियोन्मत्ता दार्वी दैत्यविमर्दिनी ॥ १३

देवेष्टा साधकेष्टा च साध्वी सर्वत्रगाऽसमा।
सन्तानकतरुच्छायासन्तुष्टाऽध्वश्रमापहा ॥ १४

शारदा शरदब्जाक्षी वरदाऽब्जनिभानना।
नम्राङ्गी कर्कशाङ्गी च वज्राङ्गी वज्रधारिणी ॥ १५

वज्रेष्टा वज्रकङ्काला वानरी वायुवेगिनी।
वराकी कुलका काम्या कुलेष्टा कुलकामिनी ॥ १६

कुन्ता कामेश्वरी क्रूरा कुल्या कामान्तकारिणी।
कुन्ती कुन्तधरा कुब्जा कष्टहा बगलामुखी ॥ १७

मृडानी मधुरा मूका प्रमत्ता बैन्दवेश्वरी।
कुमारी कुलजाऽकामा कूबरी नडकूबरी ॥ १८

नगेश्वरी नगावासा नगपुत्री नगारिहा।
नागकन्या कुहूः कुण्ठी करुणा कृपयान्विता ॥ १९

ककारवर्णरूपाढ्या ह्रीर्लज्जा श्रीः शुभाशुभा।
खेचरी खगपत्नी च खगनेत्रा खगेश्वरी ॥ २०
खाता खनित्री खस्था च जप्या जाप्याऽजरा धृतिः।
जगती जन्मदा जम्भी जम्बुवृक्षतलस्थिता ॥ २१
जाम्बूनदप्रिया सत्या सात्त्विकी सत्त्ववर्जिता।
सर्वमाता समालोका लोका ख्यातिर्लयात्मिका ॥ २२
लूता लता रतिर्लज्जा वाजिगा वारुणी वशा।
कुटिला कुत्सिता ब्राह्मी ब्रह्माणी ब्रह्मदायिनी ॥ २३
व्रतेष्टा वाजिनी वस्तिर्वामनेत्रा वशङ्करी।
शङ्करी शङ्करेष्टा च शशाङ्ककृतशेखरा ॥ २४
कुम्भेश्वरी कुरुघ्नी च पाण्डवेष्टा परात्परा।
महिषासुरसंहर्त्री माननीया मनुप्रिया ॥ २५
दक्षिणा दक्षजा दक्षा द्राक्षा दूती द्युतिर्धरा।
धर्मदा धर्मराजेष्टा धर्मस्था धर्मपालिनी ॥ २६
धनदा धनिका धर्म्या पताका पार्वती प्रजा।
प्रजावती पुरी प्रज्ञा पूः पुत्री पत्रिवाहिनी ॥ २७
पत्रिहस्ता च मातङ्गी पत्रिका च पतिव्रता।
पुष्टिः प्लक्षा श्मशानस्था देवी धनदसेविता ॥ २८
दयावती दया दूरा दूता निकटवासिनी।
नर्मदाऽनर्मदा नन्दा नाकिनी नाकसेविता ॥ २९
नासासङ्क्रान्तिरीड्या च भैरवी च्छिन्नमस्तका।
श्यामा श्यामाम्बरा पीता पीतवस्त्रा कलावती ॥ ३०
कौतुकी कौतुकाचारा कुलधर्मप्रकाशिनी।
शाम्भवी गारुडी विद्या गरुडासनसंस्थिता ॥ ३१

विनता वैनतेयेष्टा वैष्णवी विष्णुपूजिता।
वार्तादा वालुका वेत्री वेत्रहस्ता वराङ्गना ॥ ३२

विवेकलोचना विज्ञा विशाला विमला ह्यजा।
विवेका प्रचुरा लुप्ता नौर्नारायणपूजिता ॥ ३३

नारायणी च सुमुखी दुर्जया दुःखहारिणी।
दौर्भाग्यहा दुराचारा दुष्टहन्त्री च द्वेषिणी ॥ ३४

वाङ्मयी भारती भाषा मषी लेखकपूजिता।
लेखपत्री च लोलाक्षी लास्या हास्या प्रियङ्करी ॥ ३५

प्रेमदा प्रणयज्ञा च प्रमाणा प्रत्ययाङ्किता।
वाराही कुब्जिका कारा काराबन्धनमोक्षदा ॥ ३६

उग्रा चोग्रतरोग्रेष्टा नृमान्या नरसिंहिका।
नरनारायणस्तुत्या नरवाहनपूजिता ॥ ३७

नृमुण्डा नूपुराढ्या च नृमाता त्रिपुरेश्वरी।
दिव्यायुधोग्रतारा च त्र्यक्षा त्रिपुरमालिनी ॥ ३८

त्रिनेत्रा कोटराक्षी च षट्चक्रस्था क्रिमीश्वरी।
क्रिमिहा क्रिमियोनिश्च कला चन्द्रकला चमूः ॥ ३९

चर्माम्बरा च चार्वङ्गी चञ्चलाक्षी च भद्रदा।
भद्रकाली सुभद्रा च भद्राङ्गी प्रेतवाहिनी ॥ ४०

सुषमा स्त्रीप्रिया कान्ता कामिनी कुटिलालका।
कुशब्दा कुगतिर्मेधा मध्यमाङ्का च काश्यपी ॥ ४१

दक्षिणाकालिका काली कालभैरवपूजिता।
क्रींकारी कुमतिर्वाणी बाणासुरनिसूदिनी ॥ ४२

निर्ममा निर्ममेष्टा च निरयो(यौ)निर्निराश्रया।
निर्विकारा निरीहा च निलया नृपपुत्रिणी ॥ ४३

नृपसेव्या विरिञ्चीष्टा विशिष्टा विश्वमातृका।
मातृकाऽर्णविलिप्ताङ्गी मधुस्नाता मधुद्रवा॥ ४४
शुक्रेष्टा शुक्रसन्तुष्टा शुक्रस्नाता कृशोदरी।
वृषा वृष्टिरनावृष्टिर्लभ्या लोभविवर्जिता॥ ४५
अब्धिश्च ललना लक्ष्या लक्ष्मी रामा रमा रतिः।
रेवा रम्भोर्वशी वश्या वासुकिप्रियकारिणी॥ ४६
शेषा शेषरता श्रेष्ठा शेषशायिनमस्कृता।
शय्या शर्वप्रिया शस्ता प्रशस्ता शम्भुसेविता॥ ४७
आशुशुक्षणिनेत्रा च क्षणदा क्षणसेविता।
क्षुरिका कर्णिका सत्या सचराचररूपिणी॥ ४८
चरित्री च धरित्री च दितिर्दैत्येन्द्रपूजिता।
गुणिनी गुणरूपा च त्रिगुणा निर्गुणा घृणा॥ ४९
घोषा गजाननेष्टा च गजाकारा गुणिप्रिया।
गीता गीतप्रिया तथ्या पथ्या त्रिपुरसुन्दरी॥ ५०
पीनस्तनी च रमणी रमणीष्टा च मैथुनी।
पद्मा पद्मधरा वत्सा धेनुर्मेरुधरा मघा॥ ५१
मालती मधुरालापा मातृजा मालिनी तथा।
वैश्वानरप्रिया वैद्या चिकित्सा वैद्यपूजिता॥ ५२
वेदिका वारपुत्री च वयस्या वाग्भवी प्रसूः।
क्रीता पद्मासना सिद्धा सिद्धलक्ष्मीः सरस्वती॥ ५३
सत्त्वश्रेष्ठा सत्त्वसंस्था सामान्या सामवायिका।
साधकेष्टा च सत्पत्नी सत्पुत्री सत्कुलाश्रया॥ ५४
समदा प्रमदा श्रान्ता परलोकगतिः शिवा।
घोररूपा घोररावा मुक्तकेशी च मुक्तिदा॥ ५५

मोक्षदा बलदा पुष्टिर्मुक्तिर्बलिप्रियाऽभया।
तिलप्रसूननासा च प्रसूना कुलशीर्षिणी ॥ ५६

परद्रोहकरी पान्था पारावारसुता भगा।
भर्गप्रिया भर्गशिखा हेला हैमवतीश्वरी ॥ ५७

हेरुकेष्टा वटुस्था च वटुमाता वटेश्वरी।
नटिनी त्रोटिनी त्राता स्वसा सारवती सभा ॥ ५८

सौभाग्या भाग्यदा भाग्या भोगदा भूः प्रभावती।
चन्द्रिका कालहर्त्री च ज्योत्स्नोल्काऽशनिराह्लिका ॥ ५९

ऐहिकी चौष्मिकी चोष्मा ग्रीष्मांशुद्युतिरूपिणी।
ग्रीवा ग्रीष्मानना गव्या कैलासाचलवासिनी ॥ ६०

मल्ली मार्तण्डरूपा च मानहर्त्री मनोरमा।
मानिनी मानकर्त्री च मानसी तापसी तु(त्रु)टिः ॥ ६१

पयःस्था तु परब्रह्मस्तुता स्तोत्रप्रिया तनुः।
तन्वी तनुतरा सूक्ष्मा स्थूला शूरप्रियाऽधमा ॥ ६२

उत्तमा मणिभूषाढ्या मणिमण्डपसंस्थिता।
माषा तीक्ष्णा त्रपा चिन्ता मण्डिका चर्चिका चला ॥ ६३

चण्डी चुल्ली चमत्कारकर्त्री हर्त्री हरीश्वरी।
हरिसेव्या कपिश्रेष्ठा चर्चिता चारुरूपिणी ॥ ६४

चण्डीश्वरी चण्डरूपा मुण्डहस्ता मनोगतिः।
पोता पूता पवित्रा च मज्जा मेध्या सुगन्धिनी ॥ ६५

सुगन्धा पुष्पिणी पुष्पा प्रेरिता पवनेश्वरी।
प्रीता क्रोधाकुला न्यस्ता न्यक्कारा सुरवाहिनी ॥ ६६

स्रोतस्वती मधुमती देवमाता सुधाम्बरा।
मत्स्या मत्स्येन्द्रपीठस्था वीरपाना मदातुरा ॥ ६७

पृथिवी तैजसी तृप्तिर्मूलाधारा प्रभा पृथुः ।
नागपाशधराऽनन्ता पाशहस्ता प्रबोधिनी ।। ६८
प्रसादना कलिङ्गाख्या मदनाशा मधुद्रवा ।
मधुवीरा मदान्धा च पावनी वेदना स्मृतिः ।। ६९
बोधिका बोधिनी पूषा काशी वाराणसी गया ।
कौशी चोज्जयिनी धारा काश्मीरी कुङ्कुमाकुला । ७०
भूमिः सिन्धुः प्रभासा च गङ्गा गौरी शुभाश्रया ।
नानाविद्यामयी वेत्रवती गोदावरी गदा ।। ७१
गदहर्त्री गजारूढा इन्द्राणी कुलकौलिनी ।
कुलाचारा कुरूपा च सुरूपा रूपवर्जिता ।। ७२
चन्द्रभागा च यमुना यामी यमक्षयङ्करी ।
काम्भोजी सरयूश्चित्रा वितस्तैरावती झषा ।। ७३
चषिका पथिका तन्त्री वीणा वेणुः प्रियंवदा ।
कुण्डलिनी निर्विकल्पा गायत्री नरकान्तका ।। ७४
कृष्णा सरस्वती तापी पयोर्णा शतरुद्रिका ।
कावेरी शतपत्राभा शतबाहुः शतह्रदा ।। ७५
रेवती रोहिणी क्षिप्प्या(प्रा) क्षीणा क्षोणी क्षमा क्षया ।
क्षान्तिर्भ्रान्तिर्गुरुर्गुर्वी गरिष्ठा गोकुला नदी ।। ७६
नादिनी कृषिणी कृष्या सत्कुटी भूमिका भ्रमा ।
विभ्राजमाना तीर्थ्या च तीर्था तीर्थफलप्रदा ।। ७७
तरुणी तामसी पाशा विपाशा पाशधारिणी ।
पशूपहारसन्तुष्टा कुक्कुटी हंसवाहना ।। ७८
मधुरा विपुलाऽकाङ्क्षा वेदकाण्डी विचित्रिणी ।
स्वप्नावती सरित् सीताधारिणी मत्सरी च मुत् ।। ७९

शतद्रूर्भारती कद्रूरनन्ताऽनन्तशाखिनी।
वेदना वासवी वेश्या पूतना पुष्पहासिनी॥ ८०
त्रिशक्तिः शक्तिरूपा चाक्षरमाता क्षुरी क्षुधा।
मन्दा मन्दाकिनी मुद्रा भूता भूतपतिप्रिया॥ ८१
भूतेष्टा पञ्चभूतघ्नी स्वक्षा कोमलहासिनी।
वासिनी कुहिका लम्भा लम्बकेशी सुकेशिनी॥ ८२
ऊर्ध्वकेशी विशालाक्षी घोरा पुण्यपतिप्रिया।
पांसुला पात्रहस्ता च खर्परी खर्परायुधा॥ ८३
केकरी काकिनी कुम्भी सुफला केकराकृतिः।
विफला विजया श्रीदा श्रीदसेव्या शुभङ्करी॥ ८४
शैत्या शीतालया शीधुपात्रहस्ता कृपावती।
कारुण्या विश्वसारा च करुणा कृपणा कृपा॥ ८५
प्रज्ञा ज्ञाना च षड्वर्गा षडास्या षण्मुखप्रिया।
क्रौञ्ची क्रौञ्चाद्रिनिलया दान्ता दारिद्र्यनाशिनी॥ ८६
शाला चाभासुरा साध्या साधनीया च सामगा।
सप्तस्वरा सप्तधरा सप्तसप्तिविलोचना॥ ८७
स्थितिः क्षेमङ्करी स्वाहा वाचाली विविधाम्बरा।
कलकण्ठी घोषधरा सुग्रीवा कन्धरा रुचिः॥ ८८
शुचिस्मिता समुद्रेष्टा शशिनी वशिनी सुदृक्।
सर्वज्ञा सर्वदा शारी सुनासा सुरकन्यका॥ ८९
सेना सेनासुता शृङ्गी शृङ्गिणी हाटकेश्वरी।
होटिका हारिणी लिङ्गा भगलिङ्गस्वरूपिणी॥ ९०
भगमाता च लिङ्गाख्या लिङ्गप्रीतिः कलिङ्गजा।
कुमारी युवती प्रौढा नवोढा प्रौढरूपिणी॥ ९१

रम्या रजोवती रज्जू रजोली राजसी घटी।
कैवर्ती राक्षसी रात्री रात्रिञ्चरक्षयङ्करी ॥ ९२
महोग्रा मुदिता भिल्ली भल्लहस्ता भयङ्करी।
तिलाभा दारिका द्वाःस्था द्वारिका मध्यदेशगा ॥ ९३
चित्रलेखा वसुमती सुन्दराङ्गी वसुन्धरा।
देवता पर्वतस्था च परभूः परमाकृतिः ॥ ९४
परमूर्तिर्मुण्डमाला नागयज्ञोपवीतिनी।
श्मशानकालिका श्मश्रुः प्रलयात्मा प्रलोपिनी ॥ ९५
प्रस्थस्था प्रस्थिनी प्रस्था धूम्रार्चिर्धूम्ररूपिणी।
धूम्राङ्गी धूम्रकेशा च कपिला कालनाशिनी ॥ ९६
कङ्काली कालरूपा च कालमाता मलिम्लुची।
शर्वाणी रुद्रपत्नी च रौद्री रुद्रस्वरूपिणी ॥ ९७
सन्ध्या त्रिसन्ध्या संपूज्या सर्वैश्वर्यप्रदायिनी।
कुलजा सत्यलोकेशा सत्यवाक् सत्यवादिनी ॥ ९८
सत्यस्वरा सत्यमयी हरिद्वारा हरिन्मयी।
हरिद्रत्नमयी राशिर्ग्रहताराततिथितनुः ॥ ९९
तुम्बुरुस्त्रुटिका त्रोटी भुवनेशी भयापहा।
राज्ञी राज्यप्रदा योग्या योगिनी भुवनेश्वरी ॥ १००
तुरी तारा महालक्ष्मीर्भीडा भार्गी भयानका।
कालरात्रिर्महारात्रिर्महाविद्या शिवालया ॥ १०१
शिवासङ्गा शिवस्था च समाधिरग्निवाहना।
अग्नीश्वरी महाव्याप्तिर्बलाका बालरूपिणी ॥ १०२
वटुकेशी विलासा च सदसत्पुरभैरवी।
विघ्नहा खलहा गाथा कथा कन्था शुभाम्बरा ॥ १०३

क्रतुहा क्रतुजा क्रान्ता माधवी चामरावती।
अरुणाक्षी विशालाक्षी पुण्यशीला विलासिनी॥ १०४

सुमाता स्कन्दमाता च कृत्तिका भरणी बलिः।
जिनेश्वरी सुकुशला गोपी गोपतिपूजिता॥ १०५

गुप्ता गोप्यतरा ख्याता प्रकटा गोपितात्मिका।
कुलाम्नायवती कीला पूर्णा स्वर्णाङ्गदोत्सुका॥ १०६

उत्कण्ठा कलकण्ठी च रक्तपा पानपाऽमला।
संपूर्णचन्द्रवदना यशोदा च यशस्विनी॥ १०७

आनन्दा सुन्दरी सर्वानन्दा नन्दात्मजा लया।
विद्युत् खद्योतरूपा च सादरा जविका जविः॥ १०८

जननी जनहर्त्री च खर्परा खञ्जनेक्षणा।
जीर्णा जीमूतलक्ष्या च जटिनी जयवर्धिनी॥ १०९

जलस्था च जयन्ती च जम्भारिवरदा तथा।
सहस्रनामसंपूर्णा देवी ज्वालामुखी स्मृता॥ ११०

इति नाम्नां सहस्रं तु ज्वालामुख्याः शिवोदितम्।
चतुर्वर्गप्रदं नित्यं बीजत्रयप्रकाशितम्॥ १११

मोक्षैकहेतुमतुलं भुक्तिमुक्तिप्रदं नृणाम्।
स्तुत्यं च साधनीयं च सर्वस्वं सारमुत्तमम्॥ ११२

महामन्त्रमयं विद्यामयं विद्याप्रदं परम्।
परब्रह्मस्वरूपं च साक्षादमृतरूपणम्॥ ११३

अद्वैतरूपणं नाम्नां सहस्रं भैरवोदितम्।
यः पठेत् पाठयेद्वापि शृणोति श्रावयेदपि॥ ११४

भक्त्या युतो महादेवि स भवेद्भैरवोपमः।
शिवरात्र्यां च संक्रान्तौ ग्रहणे जन्मवासरे॥ ११५

भैरवस्य बलिं दत्त्वा मूलमन्त्रेण मान्त्रिकः ।
पठेन्नामसहस्रं च ज्वालामुख्याः सुदुर्लभम् ।। ११६

अनन्तफलदं गोप्यं त्रिसन्ध्यं यः पठेत् सुधीः ।
अणिमादिविभूतीनामीश्वरो धार्मिको भवेत् ।। ११७

अर्धरात्रे समुत्थाय शून्यगेहे पठेदिदम् ।
नाम्नां सहस्रकं दिव्यं त्रिवारं साधकोत्तमः ।। ११८

कर्मणा मनसा वाचा ज्वालामुख्याः सुतो भवेत् ।
मध्याह्ने प्रत्यहं गत्वा प्रेतभूमिं विधानवित् ।। ११९

नरमांसबलिं दत्त्वा पठेत् सहस्रनामकम् ।
दिव्यदेहधरो भूत्वा विचरेद्भुवनत्रयम् ।। १२०

शनिवारे कुजेऽष्टम्यां पठेन्नामसहस्रकम् ।
दत्त्वा क्षीरबलिं तस्यै करस्थाः सर्वसिद्धयः ।। १२१

विना नैवेद्यमात्रेण न रक्ष्यं साधकोत्तमैः ।
कुजवारे सदा देवि दत्त्वाऽऽसवबलिं नरः ।। १२२

पठेत् साधक एवाशु लभेद् दर्शनमुत्तमम् ।
शनिवारे सदा विद्यां जप्त्वा दत्त्वा बलिं प्रिये ।। १२३

कपोतस्य महेशानि पठेन्नामसहस्रकम् ।
तद्गृहे वर्धते लक्ष्मीर्गोकर्णमिव नित्यशः ।। १२४

शतावर्तं चरेद्रात्रौ साधको दर्शनं लभेत् ।
वन्ध्या वा काकवन्ध्या वा कुङ्कुमेन लिखेदिदम् ।। १२५

स्वस्तन्येन च शुक्रेण भूर्जे नामसहस्रकम् ।
गले वा वामबाहौ वा धारयेत् प्रत्यहं प्रिये ।। १२६

वन्ध्याऽपि लभते पुत्राञ्शूरान् विद्याधरोपमान् ।
इदं धृत्वा सव्यबाहौ गत्वा रणधरां प्रति ।। १२७

निर्जित्य शत्रुसङ्घातान् सुखी याति स्वकं गृहम्।
वारत्रयं पठेन्नित्यं शत्रुनाशाय पार्वति ॥ १२८

वारद्वयं पठेल्लक्ष्म्यै मुक्त्यै तु शतधा पठेत्।
वश्यार्थे दशधा नित्यं मारणार्थे च विंशतिम् ॥ १२९

स्तम्भनार्थे पठेन्नित्यं सप्तधा मान्त्रिकोत्तमः।
भूम्यर्थे त्रिंशतिं देवि पठेन्नामसहस्रकम् ॥ १३०

प्रत्यहमेकवारं तु मृतो मोक्षमवाप्नुयात्।
अप्रकाश्यमदातव्यमवक्तव्यमभक्तिषु ॥ १३१

अशाक्तायाकुलीनाय कुपुत्राय दुरात्मने।
गुरुभक्तिविहीनाय दीक्षाहीनाय पार्वति ॥ १३२

दत्त्वा कुष्ठी भवेल्लोके परत्र नरकं व्रजेत्।
श्रद्धायुक्ताय भक्ताय साधकाय महात्मने।
साचाराय सुशीलाय दत्त्वा मोक्षमवाप्नुयात् ॥ १३३

(रुद्रयामलतः)

—*—

# श्री ज्वालामुखीसहस्रनामावलिः

ओं ओं ह्रीं नमः। ज्वालामुख्यै। जैत्र्यै। श्रीं। ज्योत्स्नायै। जयदायै। जयायै। औदुम्बरायै। महानीलायै। शुक्रलुप्तायै। शच्यै। श्रुतये। स्मयदायै। स्मयहर्त्र्यै। स्मरशत्रुप्रियङ्कर्यै। मानदायै। मोहिन्यै। मत्तायै। मायायै। बालायै नमः। २०

ओं बलन्धरायै नमः। भगरूपायै। भगावासायै। भीरुण्डायै। भयघातिन्यै। भीत्यै। भयानकास्यायै। भुवे। सुभ्रुवे। सुखिन्यै। सत्यै। शूलिन्यै। शूलहस्तायै। शूलिवामाङ्गवासिन्यै। शशाङ्कजनन्यै। शीतायै। शीतलायै। शारिकायै। शिवायै। स्रुचिकायै नमः। ४०

ओं मधुमन्मान्यायै नमः । त्रिवर्गफलदायिन्यै । त्रेतायै । त्रिलोचनायै । दुर्गायै । दुर्गमायै । दुर्गत्यै । गतये । पूतायै । प्लुतये । विमर्शायै । सृष्टिकर्त्र्यै । सुखावहायै । सुखदायै । सर्वमध्यस्थायै । लोकमात्रे । महेश्वर्यै । लोकेष्टायै । वरदायै । स्तुत्यायै नमः । ६०

ओं स्तुतये नमः । द्रुतगतये । नुत्यै । नयदायै । नयनेत्रायै । नवग्रहनिषेवितायै । अम्बायै । वरूथिन्यै । वीरजनन्यै । वीरसुन्दर्यै । वीरसुवे । वारुण्यै । वार्तायै । वराभयकरायै । वध्वै । वानीरतलगायै । वाम्यायै । वामाचारफलप्रदायै । वीरायै । शौर्यकर्यै नमः । ८०

ओं शान्तायै नमः । शार्दूलत्वचे । शर्वर्यै । शलभ्यै । शास्त्रमर्यादायै । शिवदायै । शम्बरान्तकायै । शम्बरारिप्रियायै । शम्भुकान्तायै । शशिनिभाननायै । शस्त्रायुधधरायै । शान्तये । ज्योतिषे । दीप्तये । जगत्प्रियायै । जगत्यै । जित्वरायै । जार्यै । मार्जार्यै । पशुपालिन्यै नमः । १००

ओं मेरुमध्यगतायै नमः । मैत्र्यै । मुसलायुधधारिण्यै । मान्यायै । मन्त्रेष्टदायै । माध्व्यै । माध्वीरसविघूर्णितायै । मोदकाहारमत्तायै । मत्तमातङ्गगामिन्यै । महेश्वरप्रियायै । उन्मत्तायै । दार्व्यै । दैत्यविमर्दिन्यै । देवेष्टायै । साधकेष्टायै । साध्व्यै । सर्वत्रगायै । असमायै । सन्तानकतरुच्छायासन्तुष्टायै । अध्वश्रमापहायै नमः । १२०

ओं शारदायै नमः । शरदब्जाक्ष्यै । वरदायै । अब्जनिभाननायै । नम्राङ्ग्यै । कर्कशाङ्ग्यै । वज्राङ्ग्यै । वज्रधारिण्यै । वज्रेष्टायै । वज्रकङ्कालायै । वानर्यै । वायुवेगिन्यै । वराक्यै । कुलकायै । काम्यायै । कुलेष्टायै । कुलकामिन्यै । कुन्तायै । कामेश्वर्यै । क्रूरायै नमः । १४०

ओं कुल्यायै नमः । कामान्तकारिण्यै । कुन्त्यै । कुन्तधरायै । कुब्जायै । कष्टहायै । बगलामुख्यै । मृडान्यै । मधुरायै । मूकायै ।

प्रमत्तायै । बैन्दवेश्वर्यै । कुमार्यै । कुलजायै । अकामायै । कूबर्यै । नडकूबर्यै । नगेश्वर्यै । नगावासायै । नगपुत्र्यै नमः । १६०

ओं नगारिहायै नमः । नागकन्यायै । कुह्वै । कुण्ढ्यै । करुणायै । कृपयान्वितायै । ककारवर्णरूपाढ्यायै । ह्रियै । लज्जायै । श्रियै । शुभाशुभायै । खेचर्यै । खगपत्न्यै । खगनेत्रायै । खगेश्वर्यै । खातायै । खनित्र्यै । खस्थायै । जप्यायै । जाप्यायै नमः । १८०

ओं अजरायै नमः । धृतये । जगत्यै । जन्मदायै । जम्भ्यै । जम्बुवृक्षतलस्थितायै । जाम्बूनदप्रियायै । सत्यायै । सात्विक्यै । सत्ववर्जितायै । सर्वमात्रे । समालोकायै । लोकायै । ख्यात्यै । लयात्मिकायै । लूतायै । लतायै । रत्यै । लज्जायै । वाजिगायै नमः । २००

ओं वारुण्यै नमः । वशायै । कुटिलायै । कुत्सितायै । ब्राह्म्यै । ब्रह्माण्यै । ब्रह्मदायिन्यै । व्रतेष्टायै । वाजिन्यै । वस्तये । वामनेत्रायै । वशाङ्कर्यै । शङ्कर्यै । शङ्करेष्टायै । शशाङ्ककृतशेखरायै । कुम्भेश्वर्यै । कुरुघ्न्यै । पाण्डवेष्टायै । परात्परायै । महिषासुरसंहर्त्र्यै नमः । २२०

ओं माननीयायै नमः । मनुप्रियायै । दक्षिणायै । दक्षजायै । दक्षायै । द्राक्षायै । दूत्यै । द्युतये । धरायै । धर्मदायै । धर्मराजेष्टायै । धर्मस्थायै । धर्मपालिन्यै । धनदायै । धनिकायै । धर्म्यायै । पताकायै । पार्वत्यै । प्रजायै । प्रजावत्यै नमः । २४०

ओं पुर्यै नमः । प्रज्ञायै । पुरे । पुत्र्यै । पत्रिवाहिन्यै । पत्रिहस्तायै । मातङ्ग्यै । पत्रिकायै । पतिव्रतायै । पुष्टये । प्लक्षायै । श्मशानस्थायै । देव्यै । धनदसेवितायै । दयावत्यै । दयायै । दूरायै । दूतायै । निकटवासिन्यै । नर्मदायै नमः । २६०

ओं अनर्मदायै नमः । नन्दायै । नाकिन्यै । नाकसेवितायै । नासासंक्रान्त्यै । ईड्यायै । भैरव्यै । छिन्नमस्तकायै । श्यामायै ।

श्यामाम्बरायै । पीतायै । पीतवस्त्रायै । कलावत्यै । कौतुक्यै । कौतुकाचारायै। कुलधर्मप्रकाशिन्यै। शाम्भव्यै। गारुड्यै। विद्यायै। गरुडासनसंस्थितायै नमः। २८०

ओं विनतायै नमः। वैनतेयेष्टायै। वैष्णव्यै। विष्णुपूजितायै। वार्तादायै । वालुकायै । वेत्र्यै । वेत्रहस्तायै । वराङ्गनायै । विवेकलोचनायै । विज्ञायै । विशालायै । विमलायै । अजायै । विवेकाय । प्रचुरायै। लुप्तायै। नावे। नारायणपूजितायै। नारायण्यै नमः। ३००

ओं सुमुख्यै नमः। दुर्जयायै। दुःखहारिण्यै। दौर्भाग्यहायै। दुराचारायै। दुष्टहन्त्र्यै। द्वेषिण्यै। वाङ्मय्यै। भारत्यै। भाषायै। मष्यै । लेखकपूजितायै । लेखपत्र्यै । लोलाक्ष्यै । लास्यायै । हास्यायै । प्रियङ्कर्यै । प्रेमदायै। प्रणयज्ञायै। प्रमाणायै नमः ३२०

ओं प्रत्ययाङ्कितायै नमः। वाराह्यै। कुब्जिकायै। कारायै। काराबन्धनमोक्षदायै। उग्रायै। उग्रतरायै। उग्रेष्टायै। नृमान्यायै। नरसिंहिकायै । नरनारायणस्तुत्यायै । नरवाहनपूजितायै । नृमुण्डायै । नूपुराढ्यायै । नृमात्रे । त्रिपुरेश्वर्यै । दिव्यायुधायै । उग्रतारायै। त्र्यक्षायै। त्रिपुरमालिन्यै नमः। ३४०

ओं त्रिणेत्रायै नमः। कोटराक्ष्यै। षट्चक्रस्थायै। क्रिमीश्वर्यै। क्रिमिहायै। क्रिमियोनये। कलायै। चन्द्रकलायै। चम्वै। चर्माम्बरायै । चार्वङ्ग्यै। चञ्चलाक्ष्यै। भद्रदायै। भद्रकाल्यै। सुभद्रायै। भद्राङ्ग्यै । प्रेतवाहिन्यै। सुषमायै। स्त्रीप्रियायै। कान्तायै नमः। ३६०

ओं कामिन्यै नमः। कुटिलालकायै। कुशब्दायै। कुगतये। मेधायै। मध्यमाङ्कायै। काश्यप्यै। दक्षिणायै कालिकायै। काल्यै। कालभैरवपूजितायै । क्लींकार्यै । कुमतये । । वाण्यै । बाणासुर-

निषूदिन्यै । निर्ममायै । निर्ममेष्टायै । निरयो(यौ)नये । निराश्रयायै । निर्विकारायै । निरीहायै नमः । ३८०

ओं निलयायै नमः । नृपपुत्रिण्यै । नृपसेव्यायै । विरिञ्चीष्टायै । विशिष्टायै । विश्वमातृकायै । मातृकायै । अर्ण(मातृकार्ण)-विलिप्ताङ्ग्यै । मधुस्नातायै । मधुद्रवायै । शुक्रेष्टायै । शुक्रसन्तुष्टायै । शुक्रस्नातायै । कृशोदर्यै । वृषायै । वृष्टये । अनावृष्टये । लभ्यायै । लोभविवर्जितायै । अब्धये नमः । ४००

ओं ललनायै नमः । लक्ष्यायै । लक्ष्म्यै । रामायै । रमायै । रत्यै । रेवायै । रम्भायै । ऊर्वश्यै । वश्यायै । वासुकिप्रियकारिण्यै । शेषायै । शेषरतायै । श्रेष्ठायै । शेषशायिनमस्कृतायै । शय्यायै । शर्वप्रियायै । शस्तायै । प्रशस्तायै । शम्भुसेवितायै नमः । ४२०

ओं आशुशुक्षणिनेत्रायै नमः । क्षणदायै । क्षणसेवितायै । क्षुरिकायै । कर्णिकायै । सत्यायै । सचराचररूपिण्यै । चरित्र्यै । धरित्र्यै । दित्यै । दैत्येन्द्रपूजितायै । गुणिन्यै । गुणरूपायै । त्रिगुणायै । निर्गुणायै । घृणायै । घोषायै । गजाननेष्टायै । गजाकारायै । गुणिप्रियायै नमः । ४४०

ओं गीतायै नमः । गीतप्रियायै । तथ्यायै । पथ्यायै । त्रिपुरसुन्दर्यै । पीनस्तन्यै । रमण्यै । रमणीष्टायै । मैथुन्यै । पद्मायै । पद्मधरायै । वत्सायै । धेनवे । मेरुधरायै । मघायै । मालत्यै । मधुरालापायै । मातृजायै । मालिन्यै । वैश्वानरप्रियायै नमः । ४६०

ओं वैद्यायै नमः । चिकित्सायै । वैद्यपूजितायै । वेदिकायै । वारपुत्र्यै । वयस्यायै । वाग्भव्यै । प्रसुवे । क्रीतायै । पद्मासनायै । सिद्धायै । सिद्धलक्ष्म्यै । सरस्वत्यै । सत्त्वश्रेष्ठायै । सत्वसंस्थायै । सामान्यायै । सामवायिकायै । साधकेष्टायै । सत्पत्न्यै । सत्पुत्र्यै नमः

ओं सत्कुलाश्रयायै नमः । समदायै । प्रमदायै । श्रान्तायै । परलोकगतये । शिवायै । घोररूपायै । घोररावायै । मुक्तकेश्यै । मुक्तिदायै । मोक्षदायै। बलदायै । पुष्ट्यै । मुक्त्यै । बलिप्रियायै । अभयायै। तिलप्रसूननासायै। प्रसूनायै। कुलशीर्षिण्यै। परद्रोहकर्यै नमः । ५००

ओं पान्थायै नमः । पारावारसुतायै। भगायै। भर्गप्रियायै। भर्गशिखायै । हेलायै । हैमवत्यै । ईश्वर्यै । हेरुकेष्टायै । वटुस्थायै । वटुमात्रे। वटेश्वर्यै। नटिन्यै। त्रोटिन्यै। त्रातायै। स्वस्रे। सारवत्यै। सभायै। सौभाग्यायै। भाग्यदायै नमः। ५२०

ओं भाग्यायै नमः। भोगदायै। भुवे। प्रभावत्यै। चन्द्रिकायै । कालहर्त्र्यै। ज्योत्स्नायै। उल्कायै। अशनये। आह्निकायै। ऐहिक्यै। औष्मिक्यै । ऊष्मायै । ग्रीष्मांशुद्युतिरूपिण्यै । ग्रीवायै । ग्रीष्माननायै । गव्यायै । कैलासाचलवासिन्यै । मल्लयै । मार्ताण्डरूपायै नमः। ५४०

ओं मानहर्त्र्यै नमः। मनोरमायै। मानिन्यै। मानकर्त्र्यै। मानस्यै। तापस्यै। तुट्यै। पयःस्थायै। परब्रह्मस्तुतायै। स्तोत्रप्रियायै। तन्वै । तन्व्यै । तनुतरायै । सूक्ष्मायै । स्थूलायै । शूरप्रियायै। अधमायै । उत्तमायै । मणिभूषाढ्यायै। मणिमण्टपसंस्थितायै नमः। ५६०

ओं माषायै नमः। तीक्ष्णायै। त्रपायै। चिन्तायै। मण्डिकायै । चर्चिकायै । चलायै । चण्डयै । चुल्लयै । चमत्कारकर्त्र्यै । हर्त्र्यै । हरीश्वर्यै । हरिसेव्यायै । कपिश्रेष्ठायै। चर्चितायै । चारुरूपिण्यै । चण्डीश्वर्यै। चण्डरूपायै। मुण्डहस्तायै। मनोगतये नमः। ५८०

ओं पोतायै । पूतायै । पवित्रायै । मज्जायै । मेध्यायै । सुगन्धिन्यै । सुगन्धायै। पुष्पिण्यै। पुष्पायै। प्रेरितायै। पवनेश्वर्यै।

प्रीतायै । क्रोधाकुलायै । न्यस्तायै । न्यक्कारायै । सुरवाहिन्यै । स्रोतस्वत्यै । मधुमत्यै । देवमात्रे । सुधाम्बरायै नमः । ६००

ओं मत्स्यायै नमः । मत्स्येन्द्रपीठस्थायै । वीरपानायै । मदातुरायै । पृथिव्यै । तैजस्यै । तृप्तये । मूलाधारायै । प्रभायै । पृथवे । नागपाशधरायै । अनन्तायै । पाशहस्तायै । प्रबोधिन्यै । प्रसादनायै। कलिङ्गाख्यायै । मदनाशायै । मधुद्रवायै । मधुवीरायै । मदान्धायै नमः । ६२०

ओं पावन्यै नमः । वेदनायै । स्मृत्यै । बोधिकायै । बोधिन्यै । पूषायै । काश्यै । वाराणस्यै । गयायै । कौश्यै । उज्जयिन्यै । धारायै । काश्मीर्यै । कुङ्कुमाकुलायै । भूम्यै । सिन्धवे । प्रभासायै । गङ्गायै । गौर्यै । शुभाश्रयायै नमः । ६४०

ओं नानाविद्यामय्यै नमः । वेत्रवत्यै । गोदावर्यै । गदायै । गदहर्त्र्यै । गजारूढायै । इन्द्राण्यै । कुलकौलिन्यै । कुलाचारायै । कुरूपायै । सुरूपायै । रूपवर्जितायै । चन्द्रभागायै । यमुनायै । याम्यै । यमक्षयङ्कर्यै । काम्भोज्यै । सरय्वै । चित्रायै । वितस्तायै नमः । ६६०

ओं ऐरावत्यै नमः । झषायै । चषिकायै । पथिकायै । तन्त्र्यै । वीणायै । वेणवे । प्रियंवदायै । कुण्डलिन्यै । निर्विकल्पायै । गायत्र्यै । नरकान्तकायै । कृष्णायै । सरस्वत्यै । ताप्यै । पयोर्ण्यै । शतरुद्रिकायै । कावेर्यै । शतपत्राभायै । शतबाहवे नमः । ६८०

ओं शतह्रदायै नमः । रेवत्यै । रोहिण्यै । क्षिप्यायै (प्रायै) । क्षीणायै । क्षोण्यै । क्षमायै । क्षयायै । क्षान्त्यै । भ्रान्त्यै । गुरवे ' गर्व्यै । गरिष्ठायै । गोकुलायै । नद्यै । नादिन्यै । कृषिण्यै । कृष्यायै । २ भूमिकायै नमः । ७००

ओं भ्रमायै नमः । विभ्राजमानायै । तीर्थ्यायै । तीर्थायै । तीर्थफलप्रदायै । तरुण्यै । तामस्यै । पाशायै । विपाशायै । पाशधारिण्यै । पशूपहारसन्तुष्टायै । कुकुव्यै । हंसवाहनायै । मधुरायै । विपुलायै । आकांक्षायै । वेदकाण्डयै । विचित्रिण्यै । स्वप्नावत्यै । सरिते नमः । ७२०

ओं सीताधारिण्यै नमः । मत्सर्यै । मुदे । शतद्रुवे । भारत्यै । कद्रुवे । अनन्तायै । अनन्तशाखिन्यै । वेदनायै । वासव्यै । वेश्यायै । पूतनायै । पुष्पहासिन्यै । त्रिशक्तये । शक्तिरूपायै । अक्षरमात्रे । क्षुर्यै । क्षुधायै । मन्दायै । मन्दाकिन्यै नमः । ७४०

ओं मुद्रायै नमः । भूतायै । भूतपतिप्रियायै । भूतेष्टायै । पञ्चभूतघ्न्यै । स्वक्षायै । कोमलहासिन्यै । वासिन्यै । कुहिकायै । लंभायै । लम्बकेश्यै । सुकेशिन्यै । ऊर्ध्वकेश्यै । विशालाक्ष्यै । घोरायै । पुण्यपतिप्रियायै । पांसुलायै । पात्रहस्तायै । खर्पर्यै । खर्परायुधायै नमः । ७६०

ओं केकर्यै नमः । काकिन्यै । कुंभ्यै । सुफलायै । केकराकृत्यै । विफलायै । विजयायै । श्रीदायै । श्रीदसेव्यायै । शुभङ्कर्यै । शैत्यायै । शीतालयायै । शीधुपात्रहस्तायै । कृपावत्यै । कारुण्यायै । विश्वसारायै । करुणायै । कृपणायै । कृपायै । प्रज्ञायै नमः । ७८०

ओं ज्ञानायै नमः । षड्वर्गायै । षडास्यायै । षण्मुखप्रियायै । क्रौञ्च्यै । क्रौञ्चाद्रिनिलयायै । दान्तायै । दारिद्र्यनाशिन्यै । शालायै । आभासुरायै । साध्यायै । साधनीयायै । सामगायै । सप्तस्वरायै । सप्तधरायै । सप्तसप्तिविलोचनायै । स्थित्यै । क्षेमङ्कर्यै । स्वाहायै । वाचाल्यै नमः । ८००

ओं विविधाम्बरायै नमः । कलकण्ठ्यै । घोषधरायै । सुग्रीवायै । कन्धरायै। रुच्यै। शुचिस्मितायै। समुद्रेष्टायै। शशिन्यै । वशिन्यै । सुदृशे । सर्वज्ञायै । सर्वदायै । शार्यै । सुनासायै। सुरकन्यकायै । सेनायै। सेनासुतायै। शृंग्यै। शृङ्गिण्यै नमः। ८२०

ओं हाटकेश्वर्यै नमः । होटिकायै । हारिण्यै । लिङ्गायै । भगलिङ्गस्वरूपिण्यै । भगमात्रे । लिङ्गाख्यायै । लिङ्गप्रीत्यै । कलिङ्गजायै। कुमार्यै। युवत्यै। प्रौढायै। नवोढायै। प्रौढरूपिण्यै। रम्यायै। रजोवत्यै। रज्ज्वै। रजोल्यै। राजस्यै। घट्यै नमः ।। ८४०

ओं कैवर्त्यै नमः । राक्षस्यै । रात्र्यै । रात्रिश्चरक्षयङ्कर्यै । महोग्रायै । मुदितायै। भिल्ल्यै। भल्लहस्तायै। भयङ्कर्यै। तिलाभायै। दारिकायै। द्वाःस्थायै। द्वारिकायै। मध्यदेशगायै। चित्रलेखायै। वसुमत्यै। सुन्दराङ्ग्यै। वसुन्धरायै। देवतायै। पर्वतस्थायै नमः। ८६०

ओं परभुवे नमः। परमाकृतये। परमूर्तये। मुण्डमालायै। नागयज्ञोपवीतिन्यै। श्मशानकालिकायै। श्मश्रवे। प्रलयात्मने। प्रलोपिन्यै । प्रस्थस्थायै । प्रस्थिन्यै । प्रस्थायै । धूम्रार्चिषे । धूम्ररूपिण्यै । धूम्राङ्ग्यै। धूम्रकेशायै। कपिलायै। कालनाशिन्यै। कङ्काल्यै। कालरूपायै नमः। ८८०

ओं कालमात्रे नमः । मलिम्लुच्यै । शर्वाण्यै । रुद्रपत्न्यै । रौद्र्यै । रुद्रस्वरूपिण्यै । सन्ध्यायै । त्रिसन्ध्यायै । संपूज्यायै । सर्वैश्वर्यप्रदायिन्यै । कुलजायै। सत्यलोकेशायै । सत्यवाचे । सत्यवादिन्यै। सत्यस्वरायै । सत्यमय्यै। हरिद्वारायै। हरिन्मय्यै। हरिद्रत्नमय्यै। राशये नमः। ९००

ओं ग्रहताराततिथितनवे नमः । तुंबुरवे । त्रुटिकायै । त्रौट्यै । भुवनेश्यै । भयापहायै । राज्यै । राज्यप्रदायै । योग्यायै । योगिन्यै । भुवनेश्वर्यै । तुर्यै । तारायै । महालक्ष्म्यै । भीडायै । भार्ग्यै । भयानकायै । कालरात्र्यै । महारात्र्यै । महाविद्यायै नमः । ९२०

ओं शिवालयायै नमः । शिवासज्ञायै । शिवस्थायै । समाधये । अग्निवाहनायै । अग्नीश्वर्यै । महाव्याप्तये । बलाकायै । बालरूपिण्यै । बटुकेश्यै । विलासायै । सते । असते । पुरभैरव्यै । विघ्नहायै । खलहायै । गाथायै । कथायै । कन्थायै । शुभाम्बरायै नमः । ९४०

ओं क्रतुहायै नमः । क्रतुजायै । क्रान्तायै । माधव्यै । अमरावत्यै । अरुणाक्ष्यै । विशालाक्ष्यै । पुण्यशीलायै । विलासिन्यै । सुमात्रे । स्कन्दमात्रे । कृत्तिकायै । भरण्यै । बलये । जिनेश्वर्यै । सुकुशलायै । गोप्यै । गोपतिपूजितायै । गुप्तायै । गोप्यतरायै नमः । ९६०

ओं ख्यातायै नमः । प्रकटायै । गोपितात्मिकायै । कुलाम्नायवत्यै । कीलायै । पूर्णायै । स्वर्णाङ्गदायै । उत्सुकायै । उत्कण्ठायै । कलकण्ठयै । रक्तपायै । पानपायै । अमलायै । संपूर्णचन्द्रवदनायै । यशोदायै । यशस्विन्यै । आनन्दायै । सुन्दर्यै । सर्वानन्दायै । नन्दात्मजायै नमः । ९८०

ओं लयायै नमः । विद्युते । खद्योतरूपायै । सादरायै । जविकायै । जवये । जनन्यै । जनहर्त्र्यै । खर्परायै । खञ्जनेक्षणायै । जीर्णायै । जीमूतलक्ष्यायै । जटिन्यै । जयवर्धिन्यै । जलस्थायै । जयन्त्यै । जम्भारिवरदायै । सहस्रनामसंपूर्णायै । देव्यै । ज्वालामुख्यै (स्मृतायै)नमः । १०००

—*—

# श्री दुर्गासहस्रनामस्तोत्रम्- १

श्री भैरव उवाच—

अधुना शृणु वक्ष्यामि दुर्गासर्वस्वमीश्वरी।
रहस्यं सर्व देवानां दुर्लभं जन्मिनामपि।। १

श्रीदुर्गातत्त्वमुद्दिष्टसारं त्रैलोक्यकारणम्।
मन्त्रनामसहस्रं च दुर्गायाः पुण्यदं परम्।। २

यं पठित्वा शिवे धृत्वा देवीनामसहस्रकम्।
इह भोगी परत्रापि जीवन्मुक्तो भवेन्नरः।। ३

इदं नामसहस्रं ते मन्त्रगर्भं रहस्यकम्।
अश्वमेधायुतात् पुण्यं लोके सौभाग्यवर्धनम्।। ४

श्रेयस्करं विश्ववन्द्यं सर्वदेवनमस्कृतम्।
गुह्यं गोप्यतमं देवि पठनात् सिद्धिदायकम्।।

अस्य श्रीदुर्गासहस्रनामस्तोत्रमहामन्त्रस्य, श्रीमहेश्वर ऋषिः, अनुष्टुप् छन्दः, श्रीदुर्गा देवता, दुं बीजं, ह्रीं शक्तिः, ओं कीलकं, धर्मार्थकाममोक्षार्थे सहस्रनामपाठे विनियोगः।

ध्यानम्—

दूर्वानिभां त्रिनयनां विलसत्किरीटां
शङ्खाब्जखड्गशरखेटकशूलचापान्।
सन्तर्जनीं च दधतीं महिषासनस्थां
दुर्गां नवारकुलपीठगतां भजेऽहम्।

ओं ह्रीं दुं जगदम्बा भा भद्रिका भद्रकालिका।
प्रचण्डा चण्डिका चण्डी चण्डमुण्डनिषूदिनी।। ६

अनसूया त्रुटिस्तारा कृत्तिका कुब्जिका लया।
प्रलया स्थितिः संभूतिर्विभूतिर्भयनाशिनी ।। ७

महामाया महाविद्या मूलविद्या चिदीश्वरी।
मदालसा मदोत्तुङ्गा मदिरा मदनप्रिया ।। ८

आलिर्व्यालिप्रसूः पुण्या पवित्रा परमेश्वरी।
आदिदेवी कला कान्ता त्रिपुरा जगदीश्वरी ।। ९

मनोन्मना महालक्ष्मीः सिद्धलक्ष्मीः सरस्वती।
सरित्कादम्बरी गोधा गुह्यकाली गणेश्वरी ।। १०

गणाम्बिका जया तापी तपना तापहारिणी।
तपोमयी दुरालम्बा दुष्टग्रहनिवारिणी ।। ११

दुःखहा सुखदा साध्वी परमामृतसूः सुरा।
सुधा सुधांशुनिलया प्रलयानलसंनिभा ।। १२

समस्ता संपदम्भोजनिलया कर्णिकालया।
विद्येश्वरी विश्वमयी विराट् छन्दो गतिर्मतिः ।। १३

धृतिदा(धृतिश्च) दाम्भिकी दोला लोपामुद्रा पटीयसी।
गरिष्ठाऽरिष्टहाऽदुष्टा कृपा काशी कुलाऽकुला ।। १४

अकुलस्था पदन्यासा न्यासरूपा विरूपिणी।
विरूपाक्षी कोटराक्षी कुलकान्ताऽपराजिता ।। १५

अजिता कुलिका लम्पा लम्पटा त्रिपुरेश्वरी।
त्रितयी वेदविन्यासा संन्यासा सुमतिर्भया ।। १६

अभया स्वर्मुखा देवी महौषधिरलम्बुसा।
चपला चन्द्रिका चण्डा चण्डमुण्डनिसूदिनी ।। १७

चापलाक्षी मदाविष्टा मदिरारुणलोचना।
पुरी त्रिपुरसू रास्ना रसा रामा मनोहरा (रमा) ॥१८

सन्ध्या सन्ध्याभ्रशीला च शाला श्यामपयोधरा।
शशाङ्कमुकुटा श्यामा सुरा सुन्दरलोचना॥ १९

विषमाक्षी विशालाक्षी वा(व)शा वागीश्वरी शिला।
मनः शिला च कस्तूरी मृगनाभिर्मृगेक्षणा॥ २०

मृगारिवाहना मा(सा)ध्वी मानदा मत्तभाषिणी।
नारसिंही वामदेवी वामा वामश्रुतिप्रिया॥ २१

पुण्यापुण्यगतिः पुण्या पुत्री पुण्यजनप्रिया।
चामुण्डा चोग्रचण्डा च महाचण्डाऽतमाऽतमाः ॥ २२

तम(प)स्विनी प्रभा ज्योत्स्ना महज्ज्योतिःस्वरूपिणी।
सुरूपा सद्गतिः (स्वर्गतिः) साध्वी सदसद्रूपराजिता॥ २३

सृष्टिः स्थितिः क्षेमकरी क्षमा क्षामोन्नतस्तनी।
क्षोणी क्षयकरी क्षीणा शर्व(व)स्था शिववल्लभा॥ २४

दन्तुरा दाडिमप्रीतिर्दया दाम्भिकसूदिनी।
राक्षसी डाकिनी योग्या योगिनी योग(गि)वल्लभा॥ २५

कबन्धा कन्धरा कृष्णा(विद्या) कृत्तिका कण्ठकान्तका।
कलङ्करहिता काली कम्पा काश्मीरवल्लभा॥ २६

काशी कीर्तिप्रदा काञ्ची काश्मीरी कोकिलस्वना।
प्रभावती महारौद्री रुद्रपत्नी रुजापहा॥ २७

रतिः स्तुतिस्तरीस्तुर्या तोतुलाऽतलवासिनी।
तपः प्रिया शरच्छ्रेष्ठा पङ्कपुत्री यमस्वसा॥ २८

यामी यमान्तका याम्या यमुना स्वर्नदी तडित्।
नारायणी विश्वमाता भवानी पापनाशिनी ।। २९

विगता विगतप्रश्ना कृष्णा कृष्टासिधारिणी।
वारी वारा वरधरा वरदा वीरसूदिनी ।। ३०

वीरसूर्वामनाकारा दीर्घसूत्रा दयावती।
दरी धनप्रदा धात्री धात्रीवल्ली महोदरी ।। ३१

गणेश्वरी गया काञ्ची काञ्चीकिङ्किणिघण्टिका।
माया मायावती मत्ता प्रमत्ता प्रवरेश्वरी ।। ३२

पौरन्दरी शची शीला शीतातपस्वभावजा।
स्वाभाविकगुणा गण्या गाम्भीर्यगुणभूषणा ।। ३३

सूतिः सूर्यकला सुप्ता सप्तसप्तिस्वरूपिणी।
तेजस्विनी सदानन्दा सभासन्तोषवर्धिनी ।। ३४

तर्पणा कर्षणा होता(त्री) सङ्कल्पा शुभमन्त्रिका।
दर्भा द्रोणिकला श्रान्ता समिद्धा सुरवेदिका ।। ३५

धूम्राहुतिश्चरमतिश्चामीकररुचिश्चिता।
चिन्ताऽनलेश्वरी नेलाकरा नीलसरस्वती ।। ३६

अपर्णा सुफला यज्ञा सभया निर्भयाऽभया।
भीमस्वना भर्गशिखा भास्वती भाकरा विभा ।। ३७

विभावरी नदी नन्द्या नन्द्यावर्तप्रवर्तिनी।
पृथ्वीधरा विश्व(ष)धरा विश्वगर्भा प्रवर्तिका ।। ३८

विश्वमाया विश्वमाला विश्वम्भरविलासिनी।
उरगेशा पद्मनाभा(गा) पद्मनाभप्रसूः प्रजा ।। ३९

तोरणा तुलसी दीक्षा दक्षा दाक्षायणी द्युतिः ।
संपुटा शयना शय्या शासना शमनान्तका ।। ४०

श्यामाकवर्णा शार्दूली शम्पा शीतांशुवल्लभा ।
स्तुत्या प्रणीता नियतिः कम्पना कम्पहारिणी ।। ४१

चम्पकाभा चरा चीनाऽदीना दीनजनप्रिया ।
वसुन्धरा वासवेशी वसुनाथा वटेश्वरी ।। ४२

समुद्रा सङ्गमा पूर्णाऽन्तराला तरुवासिनी ।
पार्वती पामरी मान्या माननीया मधुप्रिया ।। ४३

माधवी मधुपानस्था मन्दिरा मन्दुरा मृगी ।
मोमुषा(मुमूषा) रूरुषा रेवा रेवती रमणी रमा ।। ४४

ऋद्धिहस्ता सिद्धिहस्ता अन्नपूर्णा महेश्वरी ।
अन्नरूपा जगज्ज्योतिः समस्तासुरघातिनी ।। ४५

गारुडी गगनालम्बा लम्बमानकचप्रिया ।
पीताम्बरा पीतपुष्पा पूतना गीतवल्लभा ।। ४६

बलाका जगदन्ता च जरा जयवरप्रदा ।
प्रीतिः कठोरवदना करालरदना रसा ।। ४७

जिह्वाहस्ता च बगला प्रणया विनयप्रदा ।
किरी करालवपुषी शेमुषी मक्षिका मषी ।। ४८

उत्तीर्णा तर्णिका तीक्ष्णा श्लक्ष्णा कामेश्वरी शिवा ।
शिवपत्नी सरोजाक्षी पद्महस्ता सरस्वती ।। ४९

कमलाक्षी कमलजा करवालविहारिणी ।
कविपूज्या कविगतिः कविरूपा कविप्रिया ।। ५०

कदली कदलीरूपा कदलीवनवासिनी।
कलप्रीता कलहदा कलहा कलहातुरा।। ५१

कस्तूरीमृगसंस्था च कस्तूरीमृगरूपिणी।
कठोरा करमाला च कठोरकुचधारिणी।। ५२

यज्ञमाता यज्ञभोक्त्री यज्ञेशी यज्ञसंभवा।
यज्ञसिद्धिः क्रियासिद्धिर्यज्ञाङ्गी यज्ञरक्षिका।। ५३

वैष्णवी विष्णुरूपा च विष्णुमातृस्वरूपिणी।
विष्णुमाया विशालाक्षी विशालनयनोज्ज्वला।। ५४

शिवमाता शिवाख्या च शिवदा शिवरूपिणी।
गायत्री चैव सावित्री ब्रह्माणी ब्रह्मरूपिणी।। ५५

दुर्गस्था दुर्गरूपा च दुर्गा दुर्गतिनाशिनी।
माहेश्वरी च सर्वाद्या शर्वाणी सर्वमङ्गला।। ५६

सूर्यकोटिसहस्राभा चन्द्रकोटिनिभानना।
समुद्रकोटिगम्भीरा वायुकोटिमहाबला।। ५७

सोमसूर्याग्निमध्यस्था मणिमण्डलवासिनी।
द्वादशारसरोजस्था सूर्यमण्डलवासिनी।। ५८

अकलङ्कशशाङ्काभा षोडशारनिवासिनी।
हृत्पद्मनिलयाऽभीमा महाभैरवनादिनी।। ५९

वर्णाढ्या वर्णरहिता पञ्चाशद्वर्णभेदिनी।
भवानी भूतिदा भूतिर्भूतिदात्री च भैरवी।। ६०

भैरवाचारनिरता भूतभैरवसेविता।
कामेश्वरी कामरूपा कामतापविमोचिनी।। ६१

गणेशजननी देवी गणेशवरदायिनी।
गतिदा गतिहा गीला गौतमी गुरुसेविता ।। ६२

दीनदुःखहरा दीनतापनिर्मूलकारिणी।
दयाशीला दयासारा दयासागरसंस्थिता ।। ६३

नृत्यप्रिया नृत्यरता नर्तकी नर्तकप्रिया।
नारायणी नरेन्द्रस्था नरमुण्डास्थिमालिनी ।। ६४

भैरवी भैरवाराध्या भीमा भीमवरप्रदा।
भुवना भुवनाराध्या भवानी भूतिवर्धिनी ।। ६५

महिषासुरहन्त्री च रक्तबीजविनाशिनी।
धनुर्बाणधरा नित्या धूम्रलोचननाशिनी ।। ६६

कुलीना कुलमार्गस्था कुलमार्गप्रकाशिनी।
पञ्चाशद्वर्णबीजाढ्या पञ्चाशन्मुण्डमालिका ।। ६७

षडङ्गयुवतीपूज्या षडङ्गरूपवर्जिता।
कालमाता कालरात्रिः काली कमलवासिनी ।। ६८

कमला कान्तिरूपा च कामराजेश्वरी क्रिया।
माया मतिर्महामाया भयदा भयहारिका ।। ६९

नारी नारायणी गण्या नारायणगृहप्रिया।
मदिरापानसन्तुष्टा मदिरामोदधारिणी ।। ७०

तथ्या पथ्या कृती रथ्या रथस्था विततस्वरा।
महती रागिणी भार्गी शुचिहासा हरीश्वरी ।। ७१

हरिद्रत्नांशुलसिता लक्ष्मीनायकसुन्दरी।
अंबालिकाऽम्बा देवेशी अनघाऽग्निशिखा श्रुतिः ।। ७२

अलसाऽल्पगतिश्श्रान्त्याऽनन्ताऽनन्तगुणाऽश्रया।
आद्या चादित्यसङ्काशा आदित्यकुलसुन्दरी ।। ७३

आत्मरूपाऽऽधिशमनी आदिमायाऽऽदिदेवता।
इन्द्रप्रसूरिनद्योतिरिनाग्निशशिलोचना ।। ७४

इन्द्रावरजसंस्तुत्या इला चेक्षुरसप्रिया।
ईश्वरी ईशवनिता ईशा केशववल्लभा ।। ७५

उमा उर्वी उरुभुजा उत्तुङ्गा चोक्षवाहना।
उत्तङ्का चोत्तमा ध्येया उल्लासा चोरुगर्विणी ।। ७६

उष्मा ऊणा च गुर्वङ्गी ऊर्ध्वाक्षी ऊर्ध्वमस्तका।
ऋद्धिर्ऋचा ऋवर्णेशी ऋणहर्त्री ऋचान्तकी ।। ७७

ॠढिजा चारुवस्त्रा च ॠणिवासा महालया।
ऌकारा ऌकुरा लीना ऌकारा वरधारिणी ।। ७८

एणाङ्कमुकुटा चेहा चारुचन्द्रकला कला।
ऐकारगतिरैश्वर्यदायिनी चैश्वरी गतिः ।। ७९

ओंकारा बीजरूपा च औत्रिकी वेत्रधारिणी।
अम्बिका लम्पिका पम्पा अः स्वरोद्धाररूपिणी ।। ८०

काली च भद्रकाली च कालिका कालवल्लभा।
कदम्बनिलया कन्था(न्या) काञ्चीमण्डनमण्डिता ।। ८१

कलङ्करहिता कूर्मा काञ्चनाभा करीरगा।
कनकाचलवासा च कारुण्याकुलमानसा ।। ८२

कुलस्था कौलिनी कुल्या कुरुकुल्ला कपालिनी।
कपालकुलनिर्विण्णा क्लीङ्कारा कञ्जलोचना। ८३

खञ्जनाक्षी खड्गधरा खेटकायुधभूषणा।
खर्पराढ्या च खलहा खेटिनी खेचरी खगा॥ ८४

खगायुधा खगगतिः खकाराक्षरभूषणा।
गणाध्यक्षा गजगतिर्गणेशजननी गदा॥ ८५

गोधा गदाधर प्राज्या गगनेशी मही मला।
घुर्घुरा घटभूर्घूका घुसृणाभा गणेश्वरी॥ ८६

घनसारप्रिया साम्या घवर्णकृतभूषणा।
ङान्ता ङवर्णमुकुटा कवर्गकृतभूषणा॥ ८७

चान्द्री चान्द्रिस्तुता चार्वी चन्द्रिका चण्डनिःस्वना।
चञ्चरीकस्वना देवी चञ्चच्चामीकराङ्गदा॥ ८८

छत्रिका छुरिका छञ्छा छत्रचामरभूषणा।
जङ्कारी जलजिह्वा च जृम्भिका जलयोगिनी॥ ८९

जटाजूटधरा जातिर्जातीपुष्पसमानना।
जलेश्वरी जगद्ध्येया जानकी जननी जटा॥ ९०

झञ्झा झरी झरत्कारी झणत्काञ्चीरकिङ्कणी।
झिण्ठिका झम्पकृद् झम्पा झम्पत्रासनिवारिणी॥ ९१

ञाणुरूपा ञङ्कहस्ता ञवर्णाक्षरसंमता।
टङ्कायुधा महातथ्या टङ्कारकरुणा टसी॥ ९२

ठकुरा ठत्करा ठानी डिण्डीरवसना ढला।
ढण्ढानिलमयी ढण्डा ढणत्कारकरा ढसा॥ ९३

णान्ता णीलायुधा णम्रा णवर्णाक्षरभूषणा।
तरुणी तुन्दिला तोन्दा तामसी तामसप्रिया॥ ९४

ताम्रानना ताम्रकरा ताम्राम्बरधरा तुला।
तापत्रयहरा तापी तैलासक्ता तिलोत्तमा॥ ९५

स्थाणुपत्नी स्थली स्थूला स्थितिः स्थैर्यधरा स्थुला।
दन्तिनी दन्तुरा दार्वी देवकी देवनायिका॥ ९६

दमिनी शमिनी दण्डचा दण्डहस्ता दुरानतिः।
दुर्वारा दुर्गतिर्दाक्षी द्राक्षा द्राविडवासिनी॥ ९७

दूरस्था दुन्दुभिध्वाना दरदा दरनाशिनी।
दुःखघ्नी द्रुतगाऽदुष्टा दया दाम्भिक्यनाशिनी॥ ९८

धर्म्या धर्मप्रसूर्धन्या धनदा धातृवल्लभा।
धनुर्धरा धनुर्वल्ली धानुष्कवरदायिनी॥ ९९

धूमाली धूम्रवदना धूमश्रीर्धूम्रलोचना।
नलिनी नर्तकी नान्ता नग्ना नलिनलोचना॥ १००

निर्मला निगमाचारा निम्नगा नगजा निमिः।
नीलग्रीवा निरीहा च नीपोपवनवासिनी॥ १०१

निरञ्जना निजा जन्या निद्रालुर्नीरवासिनी।
नटिनी नाट्यनिरता नवनीतप्रियाऽनिला॥ १०२

नारायणी निराकारा निर्लेपा नित्यवल्लभा।
पद्मावती पद्मकरा पुत्रदा पुत्रवत्सला॥ १०३

परोत्तरा पुरी पाठा पीनश्रोत्रा पुलोमजा।
पुष्पिणी पुस्तककरा पदुः पाठीनवाहना॥ १०४

पापघ्नी शंपिनी (पुष्पिणी) पाली पल्ली परमसुन्दरी।
पिशाची च पिशाचघ्नी पानपात्रधरा पुटा॥ १०५

पूर्णिमा पञ्चमी पौत्री पुरूरववरप्रदा।
पञ्चयज्ञा पञ्चशरी पञ्चाशतिमनुप्रिया॥ १०६

पाञ्चाली पञ्चमुद्रा च पूजा पूर्णमनोरथा।
फलिनी फलदात्री च फल्गुहस्ता फणिप्रिया॥ १०७

फिरङ्गहा स्फीतमतिः स्फीतिः स्फीतिमती स्फुरा।
बलमाया बलस्तुत्या बिल्वसेना बलाऽबला॥ १०८

बगलेश्वरपूज्या च बलिनी बलवर्धिनी।
बुद्धमाता बौद्धमतिर्बद्धा बन्धनमोचिनी॥ १०९

भगिनी भगमाला च भगलिङ्गामृतद्रवा।
भीमेश्वरी च भेरुण्डा भगेशी भगसर्पिणी॥ ११०

भगलिङ्गस्थिता भग्या भाग्यदा भगमालिनी।
मत्ता मनोहरा मीना मैनाकजननी मुरी॥ १११

मुरली मानवी होत्री महस्विजनमोदिता।
मत्तमातङ्गगा माद्री मरालगतिरञ्चला॥ ११२

यक्षेश्वरेश्वरी यज्ञा यजुर्वेदप्रियाश्रिता।
यशोवती यतिस्था च यतात्मा यतिवल्लभा॥ ११३

यवनी यौवनस्था च यवा यक्षजनाश्रया।
यज्ञसूत्रप्रदा ज्येष्ठा यज्ञभूर्यूपमूलिनी॥ ११४

रञ्जिता राजपत्नी च राजसूयफलप्रदा।
रजोवती रजश्चित्रा राज्यदा राज्यवर्धिनी॥ ११५

राज्ञी रात्रिश्वरेशानी रोगघ्नी त्रिपुरेश्वरी।
लुलिता लतिका लाप्या लोपा ललनलालसा॥ ११६

लाटीरद्रुमवासा च लाटीरद्रुमवर्तिनी।
लङ्का ललज्जटाजूटा लङ्किता लोकसुन्दरी॥ ११७

लोकेशवरदा लेया लयकर्त्री महालया।
वेदिर्विलग्ना वारी च वीणा वेणुर्वनेश्वरी॥ ११८

वन्दमाना ववर्णाढ्या वाराही वीरमातृका।
शङ्खिनी शङ्खवलया शङ्खायुधधरा शमा॥ ११९

शशिमण्डलमध्यस्था शीतलाम्बुनिवासिनी।
श्मशानस्था महाघोरा श्मशाननिलयेश्वरी॥ १२०

सिन्धुः सूत्रधरा सत्रा समस्तकुलचारिणी।
सप्तमी सात्त्विकी सत्त्वा सत्रस्थाऽसुरसूदिनी॥ १२१

सुरेश्वरी सम्पदाढ्या समस्ताचलचारिणी।
समदा संमितिः संमा सवना सवनेश्वरी॥ १२२

हंसी हरप्रिया हास्या हरिनेत्रा हराम्बिका।
हेषा हटेश्वरी हेरा हलिनी हलदायिनी॥ १२३

हेहा हाहारवा हाला हालाहलहताशया।
क्षमा क्षेमप्रदा क्षामा क्षौमाम्बरधरा क्षया॥ १२४

क्षितिः क्षीरप्रिया लक्ष्मीः क्षितिभृत्तनया क्षुधा।
क्षत्रियी ब्राह्मणी क्षेत्रा क्षपा क्षःबीजमण्डिता॥ १२५

ळंक्षः बीजस्वरूपा च क्षकाराक्षरमातृका।
दुर्गन्धनाशिनी दूर्वा दुर्गमा दुर्गवासिनी॥ १२६

दुर्गा दुर्गार्ति शमनी ओं ह्रीं दुंबीजमण्डिता।
इति नामसहस्रं तु मन्त्रगर्भं महाफलम्॥ १२७

दुर्गाया दुर्गतिहरं सर्वदेवनमस्कृतम्।
सर्वमन्त्रमयं दिव्यं देवदानवपूजितम्॥ १२८

श्रेयस्करं महापुण्यं महापातकनाशनम्।
यः पठेत् पाठयेद्वापि शृणोति श्रावयेदपि॥ १२९

स महापातकैर्मुक्तो देवदानवसेवितः।
इह लोके श्रियं भुक्त्वा परत्र त्रिदिवं व्रजेत्॥ १३०

दुर्गानामसहस्रं तु मूलमन्त्रैकसाधनम्।
अर्धरात्रे पठेद्वीरो मधुरस्मयसेवितः॥ १३१

त्रिवारं वर्मपूर्वं तु भवेद्वागीशसंनिभः।
यः पठेद् देवि मध्याह्ने स्त्रीयुतो मुक्तकुन्तलः॥ १३२

तस्य वैरिकुलं त्रस्येद् दर्शनाद् दैत्यसूदिनि।
दहनादिव देवेशि पतङ्गकुलमद्रिजे॥ १३३

यः पठेद्वेतसीमूले सायं पूजितभैरवः।
तस्यास्यकुहराद् वाणी निःसरेद्गद्यपद्यभाक्॥ १३४

यः पठेत् सततं देवि शयने स्त्रीरताकुलः।
स भवेद्वैरिविध्वंसी धनेन धनदोपमः॥ १३५

वाग्भिर्वागीशसदृशः कवित्वेन सितोपमः।
तेजसा सूर्यसङ्काशो यशसा शशिसन्निभः॥ १३६

बलेन वायुतुल्योऽपि लक्ष्म्या गीर्वाणनायकः।
देवि किं बहुनोक्तेन स भवेद्भैरवोपमः॥ १३७

स्तम्भनाकर्षणोच्चाट-वशीकरणकक्षमः।
रवौ भूर्जे लिखेद् देवि निशीथे चाष्टगन्धकैः॥ १३८

सस्तन्यरेतोराजस्कैः साधको मन्त्रसाधकः।
लिखित्वा वेष्टयेन्नामसहस्रमणिमीश्वरि॥ १३९

श्वेतसूत्रेण संवेष्ट्य लाक्षया परिवेष्टयेत्।
सुवर्णरजताद्यैश्च वेष्टयेत् पीतसूत्रकैः॥ १४०

संपूज्य गुटिकां देवि शुभेऽह्नि साधकोत्तमः।
धारयेन्मूर्ध्नि वा बाहौ गुटिकां कामदायिनीम्॥ १४१

रणे रिपून् विजित्याशु कल्याणी गृहमाविशेत्।
वन्ध्या वामभुजे धृत्वा कृत्वा साधकपूजनम्॥ १४२

पुत्रान् लभेन्महादेवि साक्षाद्वैश्रवणोपमान्।
गुटिकैषा महादिव्या गोप्या कामफलप्रदा॥ १४३

साधकैः सततं पूज्या साक्षाद् दुर्गास्वरूपिणी।
योऽर्चयेत् साधको दुर्गां गुटिकां धारयेत् प्रिये॥ १४४

पठेद्धर्मं शिवे मन्त्रनामसाहस्रिकीं पराम्।
अङ्गस्तोत्रं फलं तस्य देवि वक्ष्येऽधुना शृणु॥ १४५

वने राजकुले वापि दुर्भिक्षे शत्रुसङ्कटे।
अरण्ये प्रान्तरे दुर्गे श्मशाने सिन्धुसङ्कटे॥ १४६

वात्ये यक्षपिशाचादिभूतप्रेतभये तथा।
वीरो विगतभीर्देवि सर्वत्र विजयी भवेत्॥ १४७

स्तम्भयेद्वातसूर्याम्बुचन्द्रादीन् साधकोत्तमः।
मोहयेत् त्रिजगत् सद्यः कान्ताश्चाकर्षयेद् ध्रुवम्॥ १४८

मारयेदखिलाञ्छत्रूनुच्चाटयति वैरिणः।
वशयेद् देवताः सद्यः किं पुनर्मानवांश्शिवे॥ १४९

शमयेदखिलान् रोगान् महोत्पातानुपद्रवान्।
किं किं न लभते वीरो दुर्गापश्चाङ्गपूजनात्॥ १५०

इदं रहस्यं दुर्गाया अष्टाक्षर्या महेश्वरि।
सर्वस्वं सारतत्त्वं च मूलविद्यामयं परम्॥ १५१

महाचीनक्रमस्थानां साधकानां यशस्करम्।
पठेत् संपूजयेद् देव्या मन्त्रनामसहस्रकम्॥ १५२

इदं सारं हि तन्त्राणां तत्त्वानां तत्त्वमुत्तमम्।
दुर्गानामसहस्रं तु तव भक्त्या प्रकाशितम्॥ १५३

अभक्ताय न दातव्यं गोप्तव्यं पशुसङ्कटे।
अभक्तेभ्योऽपि पुत्रेभ्यो दत्त्वा नरकमाप्नुयात्॥ १५४

दीक्षिताय कुलीनाय गुरुभक्तिरताय च।
शान्ताय भक्तियुक्ताय देयं नामसहस्रकम्॥ १५५

विन दानं न गृह्णीयान्न दद्याद् दक्षिणां विना।
दत्त्वा गृहीत्वाप्युभयोः सिद्धिहानिर्भवेद् ध्रुवम्॥ १५६

इदं नामसहस्रं ते गुप्तं गोप्यतमं शिवे।
तत्त्वं भक्त्या मयाख्यातं गोपनीयं स्वयोनिवत्॥ १५७

(श्रीरुद्रयामले)

—*—

# श्रीदुर्गासहस्रनामावलिः - १

ओं ओं ह्रीं दुं जगदम्बायै नमः । भायै । भद्रिकायै । भद्रकालिकायै । प्रचण्डायै । चण्डिकायै । चण्डचै । चण्डमुण्ड-निषूदिन्यै । अनसूयायै । त्रुट्यै । तारायै । कृत्तिकायै । कुब्जिकायै । लयायै । प्रलयायै । स्थित्यै । संभूत्यै । विभूत्यै । भयनाशिन्यै । महामायायै नमः । २०

ओं महाविद्यायै नमः । मूलविद्यायै । चिदे । ईश्वर्यै । मदालसायै । मदोत्तुङ्गायै । मदिरायै । मदनप्रियायै । आल्यै । व्यालप्रसुवे । पुण्यायै । पवित्रायै । परमेश्वर्यै । आदिदेव्यै । कलायै । कान्तायै । त्रिपुरायै । जगदीश्वर्यै । मनोन्मनायै । महालक्ष्म्यै नमः । ४०

ओं सिद्धलक्ष्म्यै नमः । सरस्वत्यै । सरिते । कादम्बर्यै । गोधायै । गुह्यकाल्यै । गणेश्वर्यै । गणाम्बिकायै । जयायै । ताप्यै । तपनायै । तापहारिण्यै । तपोमय्यै । दुरालम्बायै । दुष्टग्रहनिवारिण्यै । दुःखहायै । सुखदायै । साध्व्यै । परमायै । अमृतसुवे नमः । ६०

ओं सुरायै नमः । सुधायै । सुधांशुनिलयायै । प्रलयानलसन्निभायै । समस्तायै । संपदे । अंभोजनिलयायै । कर्णिकालयायै । विद्येश्वर्यै । विश्वमय्यै । विराजे । छन्दसे । गतये । मतये । धृतिदायै । (धृत्यै) । दाम्भिक्यै । दोलायै । लोपामुद्रायै । पटीयस्यै । गरिष्ठायै नमः । ८०

ओं अरिष्टहायै नमः । अदुष्टायै । कृपायै । काश्यै । कुलायै । अकुलायै । अकुलस्थायै । पदन्यासायै । न्यासरूपायै । विरूपिण्यै । विरूपाक्ष्यै । कोटराक्ष्यै । कुलकान्तायै । अपराजितायै । अजितायै । कुलिकायै । लम्पायै । लम्पटायै । त्रिपुरेश्वर्यै । त्रितय्यै नमः । १००

ओं वेदविन्यासायै नमः । संन्यासायै । सुमत्यै । भयायै । अभयायै । स्वर्मुखायै । देव्यै । महौषध्यै । अलम्बुसायै । चपलायै । चन्द्रिकायै । चण्डायै । चण्डमुण्डनिसूदिन्यै । चापलाक्ष्यै । मदाविष्टायै । मदिरारुणलोचनायै । पुर्यै । त्रिपुरसुवे । रास्नायै । रसायै नमः । १२०

ओं रामायै । मनोहरायै (रमायै) । सन्ध्यायै । सन्ध्याभ्रशीलायै । शालायै । श्यामपयोधरायै । शशाङ्कमुकुटायै । श्यामायै । सुरायै । सुन्दरलोचनायै । विषमाक्ष्यै । विशालाक्ष्यै । वाशायै (वशायै) । वागीश्वर्यै । शिलायै । मनःशिलायै । कस्तूर्यै । मृगनाभ्यै । मृगेक्षणायै । मृगारिवाहनायै नमः । १४०

ओं माध्व्यै नमः (साध्व्यै) नमः । मानदायै । मत्तभाषिण्यै । नारसिंह्यै । वामदेव्यै । वामायै । वामश्रुतिप्रियायै । पुण्यापुण्यगतये । पुण्यायै । पुत्र्यै । पुण्यजनप्रियायै । चामुण्डायै । उग्रचण्डायै । महाचण्डायै । अतमायै । अतमसे । तम(प)स्विन्यै । प्रभायै । ज्योत्स्नायै । महते नमः । १६०

ज्योतिःस्वरूपिण्यै नमः । सुरूपायै । सद्गतये । साध्व्यै । सदसद्रूपराजितायै । सृष्ट्यै । स्थित्यै । क्षेमकर्यै । क्षमायै । क्षामायै । उन्नतस्तन्यै । क्षोण्यै । क्षयकर्यै । क्षीणायै । शर्व(व)स्थायै । शिववल्लभायै । दन्तुरायै । दाडिमप्रीत्यै । दयायै । दाम्भिकसूदिन्यै नमः । १८०

ओं राक्षस्यै नमः । डाकिन्यै । योग्यायै । योगिन्यै । योग(गि)वल्लभायै । कबन्धायै । कन्धरायै । कृष्णायै (विद्यायै) । कृत्तिकायै । कण्ठकान्तकायै । कलङ्करहितायै । काल्यै । कंपायै । काश्मीरवल्लभायै । काश्यै । कीर्तिप्रदायै । काञ्च्यै । काश्मीर्यै । कोकिलस्वनायै । प्रभावत्यै नमः । २००

ओं महारौद्र्यै नमः। रुद्रपत्न्यै। रुजापहायै। रत्यै। स्तुत्यै। तर्यै। तुर्यायै। तोतुलायै। अतलवासिन्यै। तपःप्रियायै। शरदे। श्रेष्ठायै। पङ्गुपुत्र्यै। यमस्वस्रे। याम्यै। यमान्तकायै। याम्यायै। यमुनायै। स्वर्नद्यै। तडिते नमः। २२०

ओं नारायण्यै नमः। विश्वमात्रे। भवान्यै। पापनाशिन्यै। विगतायै। विगतप्रश्नायै। कृष्णायै। कृष्टासिधारिण्यै। वार्यै। वारायै। वरधरायै। वरदायै। वीरसूदिन्यै। वीरसुवे। वामनाकारायै। दीर्घसूत्रायै। दयावत्यै। दर्यै। धनप्रदायै। धात्र्यै नमः। २४०

ओं धात्रीवल्लच्यै नमः। महोदर्यै। गणेश्वर्यै। गयायै। काञ्च्यै। काञ्चीकिङ्किणिघण्टिकायै। मायायै। मायावत्यै। मत्तायै। प्रमत्तायै। प्रवरेश्वर्यै। पौरन्दर्यै। शच्यै। शीतायै। शीतातपस्वभावजायै। स्वाभाविकगुणायै। गण्यायै। गाम्भीर्यगुणभूषणायै। सूत्यै। सूर्यकलायै नमः। २६०

ओं सुप्तायै नमः। सप्तसप्तिस्वरूपिण्यै। तेजस्विन्यै। सदानन्दायै। सभासन्तोषवर्धिन्यै। तर्पणायै। कर्षणायै। होत्रे(त्र्यै)। सङ्कल्पायै। शुभमन्त्रिकायै। दर्भायै। द्रोणिकलायै। श्रान्तायै। समिद्धायै। सुरवेदिकायै। धूम्राहुतये। चरमत्यै। चामीकररुचये। चितायै। चिन्तायै नमः। २८०

ओं अनलेश्वर्यै नमः। नेलाकरायै। नीलसरस्वत्यै। अपर्णायै। सुफलायै। यज्ञायै। सभयायै। निर्भयायै। अभयायै। भीमस्वनायै। भर्गशिखायै। भास्वत्यै। भाकरायै। विभायै। विभावर्यै। नद्यै। नन्द्यायै। नन्द्यावर्तप्रवर्तिन्यै। पृथ्वीधरायै। विश्व(ष)धरायै नमः। ३००

ओं विश्वगर्भायै नमः । प्रवर्तिकायै । विश्वमायायै । विश्वभालायै । विश्वंभरविलासिन्यै । उरगेशायै । पद्मनाभायै(गायै) । पद्मनाभप्रसुवे । प्रजायै । तोरणायै । तुलस्यै । दीक्षायै । दक्षायै । दाक्षायण्यै । द्युत्यै । संपुटायै । शयनायै । शय्यायै । शासनायै । शमनान्तकायै नमः । ३२०

ओं श्यामाकवर्णायै नमः । शार्दूल्यै । शम्पायै । शीतांशुवल्लभायै । स्तुत्यायै । प्रणीतायै । नियत्यै । कम्पनायै । कम्पहारिण्यै । चम्पकाभायै । चरायै । चीनायै । अदीनायै । दीनजनप्रियायै । वसुन्धरायै । वासवेश्यै । वसुनाथायै । वटेश्वर्यै । समुद्रायै । सङ्गमायै नमः । ३४०

ओं पूर्णायै नमः । अन्तरालायै । तरुवासिन्यै । पार्वत्यै । पामर्यै । मान्यायै । माननीयायै । मधुप्रियायै । माधव्यै । मधुपानस्थायै । मन्दिरायै । मन्दुरायै । मृग्यै । मोमुषायै (मूमूषायै) । रूरुषायै । रेवायै । रेवत्यै । रमणायै । रमायै । ऋद्धिहस्तायै नमः । ३६०

ओं सिद्धिहस्तायै नमः । अन्नपूर्णायै । महेश्वर्यै । अन्नरूपायै । जगते । ज्योतिषे । समस्तासुरघातिन्यै । गारुड्यै । गगनालम्बायै । लम्बमानकचप्रियायै । पीताम्बरायै । पीतपुष्पायै । पूतनायै । गीतवल्लभायै । बलाकायै । जगदन्तायै । जरायै । जयवरप्रदायै । प्रीत्यै । कठोरवदनायै नमः । ३८०

ओं करालरदनायै नमः । रसायै । जिह्वाहस्तायै । बगलायै । प्रणयायै । विनयप्रदायै । किर्यै । करालवपुष्यै । शेमुष्यै । मक्षिकायै । मष्यै । उत्तीर्णायै । तर्णिकायै । तीक्ष्णायै । श्लक्ष्णायै । कामेश्वर्यै । शिवायै । शिवपत्न्यै । सरोजाक्ष्यै । पद्महस्तायै नमः । ४००

ओं सरस्वत्यै नमः । कमलाक्ष्यै । कमलजायै । करवाल-विहारिण्यै । कविपूज्यायै । कविगतयै । कविरूपायै । कविप्रियायै । कदल्यै । कदलीरूपायै । कदलीवनवासिन्यै । कलप्रीतायै । कलहदायै । कलहायै । कलहातुरायै । कस्तूरीमृगसंस्थायै । कस्तूरीमृगरूपिण्यै । कठोरायै । करमालायै । कठोरकुचधारिण्यै नमः । ४२०

ओं यज्ञमात्रे नमः । यज्ञभोक्त्र्यै । यज्ञेश्यै । यज्ञसंभवायै । यज्ञसिद्ध्यै । क्रियासिद्ध्यै । यज्ञांग्यै । यज्ञरक्षिकायै । वैष्णव्यै । विष्णुरूपायै । विष्णुमातृस्वरूपिण्यै । विष्णुमायायै । विशालाक्ष्यै । विशालनयनोज्ज्वलायै । शिवमात्रे । शिवाख्यायै । शिवदायै । शिवरूपिण्यै । गायत्र्यै । सावित्र्यै नमः । ४४०

ओं ब्रह्माण्यै नमः । ब्रह्मरूपिण्यै । दुर्गस्थायै । दुर्गरूपायै । दुर्गायै । दुर्गतिनाशिन्यै । माहेश्वर्यै । सर्वाद्यायै । शर्वाण्यै । सर्वमङ्गलायै । सूर्यकोटिसहस्राभायै । चन्द्रकोटिनिभाननायै । समुद्रकोटिगम्भीरायै । वायुकोटिमहाबलायै । सोमसूर्याग्नि-मध्यस्थायै । मणिमण्डलवासिन्यै । द्वादशारसरोजस्थायै । सूर्यमण्डलवासिन्यै । अकलङ्कशशाङ्काभायै । षोडशारनिवासिन्यै नमः । ४६०

ओं हृत्पद्मनिलयायै । अभीमायै । महाभैरवनादिन्यै । वर्णाढ्यायै । वर्णरहितायै । पञ्चाद्वर्णभेदिन्यै । भवान्यै । भूतिदायै । भूत्यै । भूतिदात्र्यै । भैरव्यै । भैरवाचारनिरतायै । भूतभैरवसेवितायै । कामेश्वर्यै । कामरूपायै । कामतापविमोचिन्यै । गणेशजनन्यै । देव्यै । गणेशवरदायिन्यै । गतिदायै नमः । ४८०

ओं गतिहायै । गीतायै । गौतम्यै । गुरुसेवितायै । दीनदुःखहरायै । दीनतापनिर्मूलकारिण्यै । दयाशीलायै । दयासारायै । दयासागरसंस्थितायै । नृत्यप्रियायै । नृत्यरतायै । नर्तक्यै । नर्तकप्रियायै । नारायण्यै । नरेन्द्रस्थायै । नरमुण्डास्थि-मालिन्यै । भैरव्यै । भैरवाराध्यायै । भीमायै । भीमवरप्रदायै नमः । ५००

ओं भुवनायै नमः । भुवनाराध्यायै । भवान्यै । भूतिवर्धिन्यै । महिषासुरहन्त्र्यै । रक्तबीजविनाशिन्यै । धनुर्बाणधरायै । नित्यायै । धूम्रलोचननाशिन्यै । कुलीनायै । कुलमार्गस्थायै । कुलमार्ग-प्रकाशिन्यै । पञ्चाशद्वर्णबीजाढ्यायै । पञ्चाशन्मुण्डमालिकायै । षडङ्गयुवतीपूज्यायै । षडङ्गरूपवर्जितायै । कालमात्रे । कालरात्र्यै । काल्यै । कमलवासिन्यै नमः । ५२०

ओं कमलायै नमः । कान्तिरूपायै । कामराजेश्वर्यै । क्रियायै । मायायै । मत्यै । महामायायै । भयदायै । भयहारिकायै । नार्यै । नारायण्यै । गण्यायै । नारायणगृहप्रियायै । मदिरापानसन्तुष्टायै । मदिरामोदधारिण्यै । तथ्यायै । पथ्यायै । कृत्यै । रथ्यायै । रथस्थायै नमः । ५४०

ओं विततस्वरायै नमः । महत्यै । रागिण्यै । भार्ग्यै । शुचिहासायै । हरीश्वर्यै । हरिद्रत्नांशुलसितायै । लक्ष्मीनायकसुन्दर्यै । अम्बालिकायै । अम्बायै । देवेश्यै । अनघायै । अग्निशिखायै । श्रुत्यै । अलसायै । अल्पगतये । अन्त्यायै । अनन्तायै । अनन्तगुणायै । आश्रयायै नमः । ५६०

ओं आद्यायै नमः । आदित्यसङ्काशायै । आदित्यकुलसुन्दर्यै । आत्मरूपायै । आधिशमन्यै । आदिमायायै । आदिदेवतायै ।

इन्द्रप्रसुवे । इनद्योत्यै । इनाग्निशशिलोचनायै । इन्द्रावरज-संस्तुत्यायै । इलायै। इक्षुरसप्रियायै। ईश्वर्यै। ईशवनितायै। ईशायै। केशववल्लभायै। उमायै। उर्व्यै। उरुभुजायै नमः। ५८०

ओं उत्तुङ्गायै नमः । उक्षवाहनायै । उत्तङ्कायै । उत्तमायै । ध्येयायै । उल्लासायै। उरुगर्विण्यै। ऊष्मणे। ऊणायै। गुर्वङ्ग्यै। ऊर्ध्वाक्ष्यै। ऊर्ध्वमस्तकायै। ऋद्धये। ऋचायै। ऋवर्णेभ्यै। ऋणहर्त्र्यै । ऋचान्तक्यै। ॠढजायै। चारुवस्त्रायै। ॠणिवासायै नमः। ६००

ओं महालयायै नमः । लृकारायै । लृक्कुरायै । लीनायै । लृकारायै । वरधारिण्यै। एणाङ्कमकुटायै। ईहायै। चारुचन्द्रकलायै । कलायै । ऐकारगतये । ऐश्वर्यदायिन्यै । ऐश्वर्यै गत्यै । ओंकारायै । बीजरूपायै । ओत्रिक्यै । वेत्रधारिण्यै । अम्बिकायै । लम्पिकायै । पंपायै नमः । ६२०

ओं अःस्वरोद्धाररूपिण्यै नमः । काल्यै । भद्रकाल्यै । कालिकायै। कालवल्लभायै। कदम्बनिलयायै। कन्थायै (न्यायै)। काञ्चीमण्डनमण्डितायै। कलङ्करहितायै। कूर्मायै। काञ्चनाभायै। करीरगायै। कनकाचलवासायै। कारुण्याकुलमानसायै। कुलस्थायै । कौलिन्यै। कुल्यायै। कुरुकुल्लायै। कपालिन्यै। कपालकुलनिर्विण्णायै नमः। ६४०

ओं क्लींकारायै नमः । कञ्जलोचनायै । खञ्जनाक्ष्यै । खड्गधरायै । खेटकायुधभूषणायै । खर्पराढ्यायै । खलहायै । खेटिन्यै । खेचर्यै । खगायै । खगायुधायै । खगगत्यै । खकाराक्षरभूषणायै । गणाध्यक्षायै । गजगत्यै । गणेशजनन्यै । गदायै । गोधायै। गदाधर प्राज्यायै। गगनेभ्यै नमः। ६६०

ओं मह्यै नमः । मलायै । घुर्घुरायै । घटभुवे । घूकायै । घुसृणाभायै । गणेश्वर्यै । घनसारप्रियायै । साम्यायै । घवर्णकृतभूषणायै । ङान्तायै । ङवर्णमकुटायै । कवर्गकृतभूषणायै । चान्द्र्यै । चान्द्रिस्तुतायै । चार्व्यै । चन्द्रिकायै । चण्डनिःस्वनायै । चञ्चरीकस्वनायै । देव्यै नमः । ६८०

ओं चञ्चच्चामीकराङ्गदायै नमः । छत्रिकायै । छुरिकायै । छञ्छायै । छत्रचामरभूषणायै । जङ्कार्यै । जलजिह्वायै । जृम्भिकायै । जलयोगिन्यै । जटाजूटधरायै । जात्यै । जातीपुष्पसमाननायै । जलेश्वर्यै । जगद्ध्येयायै । जानक्यै । जनन्यै । जटायै । झञ्झायै । झर्यै । झरत्कार्यै नमः । ७००

ओं झणत्काञ्चीरकिङ्किण्यै नमः । झिण्ठिकायै । झम्पकृते । झंपायै । झंपत्रासनिवारिण्यै । त्राणुरूपायै । ञङ्कहस्तायै । ञवर्णाक्षरसंमतायै । टङ्कायुधायै । महातथ्यायै । टङ्कारकरुणायै । टस्यै । ठकुरायै । ठत्करायै । ठान्यै । डिण्डीरवसनायै । ढलायै । ढण्ठानिलमध्यै । ढण्ठायै । ढणत्कारकरायै नमः । ७२०

ओं ढसायै नमः । णान्तायै । णीलायुधायै । णम्रायै । णवर्णाक्षरभूषणायै । तरुण्यै । तुन्दिलायै । तोन्दायै । तामस्यै । तामसप्रियायै । ताम्राननायै । ताम्रकरायै । ताम्राम्बरधरायै । तुलायै । तापत्रयहरायै । ताप्यै । तैलासक्तायै । तिलोत्तमायै । स्थाणुपत्न्यै । स्थल्यै नमः । ७४०

ओं स्थूलायै नमः । स्थित्यै । स्थैर्यधरायै । स्थूलायै । दन्तिन्यै । दन्तुरायै । दार्व्यै । देवक्यै । देवनायिकायै । दमिन्यै । शमिन्यै । दण्डचायै । दण्डहस्तायै । दुरानत्यै । दुर्वारायै । दुर्गतये । दाक्ष्यै । द्राक्षायै । द्राविडवासिन्यै । दूरस्थायै नमः । ७६०

ओं दुन्दुभिध्वानायै नमः। दरदायै। दरनाशिन्यै। दुःखघ्न्यै। द्रुतगायै। (अ)दुष्टायै। दयायै। दाम्भिक्यनाशिन्यै। धर्म्यायै। धर्मप्रसुवे। धन्यायै। धनदायै। धातृवल्लभायै। धनुर्धरायै। धनुर्वल्ल्यै। धानुष्कवरदायिन्यै। धूमाल्यै। धूम्रवदनायै। धूमश्रियै। धूम्रलोचनायै नमः। ७८०

ओं नलिन्यै नमः। नर्तक्यै। नान्तायै। नङ्गायै। नलिनलोचनायै। निर्मलायै। निगमाचारायै। निम्नगायै। नगजायै। निमये। नीलग्रीवायै। निरीहायै। नीपोपवनवासिन्यै। निरञ्जनायै। निजायै। जन्यायै। निद्रालवे। नीरवासिन्यै। नटिन्यै। नाट्यनिरतायै नमः। ८००

ओं नवनीतप्रियायै नमः। (अ)निलायै। नारायण्यै। निराकारायै। निर्लेपायै। नित्यवल्लभायै। पद्मावत्यै। पद्मकरायै। पुत्रदायै। पुत्रवत्सलायै। परोत्तरायै। पुर्यै। पाठायै। पीनश्रोत्रायै। पुलोमजायै। पुष्पिण्यै। पुस्तककरायै। पटवे। पाठीनवाहनायै। पापघ्न्यै नमः। ८२०

ओं शम्पिन्यै (पुष्पिण्यै) नमः। पाल्यै। पल्ल्यै। परमसुन्दर्यै। पिशाच्यै। पिशाचघ्न्यै। पानपात्रधरायै। पुटायै। पूर्णिमायै। पञ्चम्यै। पौत्र्यै। पुरूरववरप्रदायै। पञ्चयज्ञायै। पञ्चशर्यै। पञ्चाशतिमनुप्रियायै। पाञ्चाल्यै। पञ्चमुद्रायै। पूजायै। पूर्णमनोरथायै। फलिन्यै नमः। ८४०

ओं फलदात्र्यै नमः। फल्गुहस्तायै। फणिप्रियायै। फिरङ्गहायै। स्फीतमतये। स्फीत्यै। स्फीतिमत्यै। स्फुरायै। बलमायायै। बलस्तुत्यायै। बिल्वसेनायै। बलायै। अबलायै। बगलेश्वरपूज्यायै। बलिन्यै। बलवर्धिन्यै। बुद्धमात्रे। बौद्धमतये। बद्धायै। बन्धनमोचन्यै नमः। ८६०

ओं भगिन्यै नमः । भगमालायै । भगलिङ्गामृतद्रवायै । भीमेश्वर्यै । भेरुण्डायै । भगेश्यै । भगसर्पिण्यै । भगलिङ्गस्थितायै । भग्यायै । भाग्यदायै । भगमालिन्यै । मत्तायै । मनोहरायै । मीनायै । मैनाकजनन्यै । मुर्यै । मुरल्यै । मानव्यै । होत्र्यै । महस्विजनमोदितायै नमः । ८८०

ओं मत्तमातङ्गगायै नमः । माद्र्यै । मरालगतये । अम्बलायै। यज्ञेश्वरेश्वर्यै । यज्ञायै । यजुर्वेदप्रियाश्रितायै । यशोवत्यै । यतिस्थायै । यतात्मने । यतिवल्लभायै । यवन्यै । यौवनस्थायै । यवायै । यक्षजनाश्रयायै । यज्ञसूत्रप्रदायै । ज्येष्ठायै । यज्ञभुवे । यूपमालिन्यै । रञ्जितायै नमः । ९००

ओं राजपत्न्यै नमः । राजसूयफलप्रदायै । रजोवत्यै । रजश्चित्रायै । राज्यदायै । राज्यवर्धिन्यै । राज्यै । रात्रिश्वरेशान्यै । रोगघ्न्यै । त्रिपुरेश्वर्यै । लुलितायै । लतिकायै । लाप्यायै । लोपायै । ललनलालसायै । लाटीरद्रुमवासायै । लाटीरद्रुमवर्तिन्यै । लङ्कायै । ललज्जटाजूटायै । लंधितायै नमः । (९२०)

ओं लोकसुन्दर्यै नमः । लोकेशवरदायै । लेयायै । लयकर्त्र्यै । महालयायै । वेद्यै । विलग्नायै । वाण्यै । वीणायै । वेणवे । वनेश्वर्यै । वन्दमानायै । ववर्णाढ्यायै । वाराह्यै । वीरमातृकायै । शङ्खिन्यै । शङ्खवलयायै । शङ्खायुधधरायै । शमायै । शशिमण्डलमध्यस्थायै नमः । ९४०

ओं शीतलाम्बुनिवासिन्यै नमः । श्मशानस्थायै । महाघोरायै । श्मशाननिलयायै । ईश्वर्यै । सिन्धवे । सूत्रधरायै । सत्रायै । समस्तकुलचारिण्यै । सप्तम्यै । सात्विक्यै । सत्त्वायै । सत्रस्थायै । असुरसूदिन्यै । सुरेश्वर्यै । संपदाद्यायै । समस्ताचलचारिण्यै । समदायै । संमितये । संमायै नमः । ९६०

ओं सवनायै नमः । सवनेश्वर्यै । हंस्यै । हरप्रियायै । हास्यायै । हरिनेत्रायै । हराम्बिकायै । हेषायै । हटेश्वर्यै । हेरायै । हलिन्यै । हलदायिन्यै । हेहायै । हाहारवायै । हालायै । हालाहलहताशयायै । क्षमायै । क्षेमप्रदायै । क्षामायै । क्षौमाम्बरधरायै नमः । ९८०

ओं क्षयायै नमः । क्षितये । क्षीरप्रियायै । लक्ष्म्यै । क्षितिभृत्तनयायै । क्षुधायै । क्षत्रिय्यै । ब्राह्मण्यै । क्षेत्रायै । क्षपायै । क्षःबीजमण्डितायै । ळंक्षःबीजस्वरूपायै । क्षकाराक्षरमातृकायै । दुर्गन्धिनाशिन्यै । दूर्वायै । दुर्गमायै । दुर्गवासिन्यै । दुर्गायै । दुर्गार्तिशमन्यै । ओं ह्रीं दुं बीजमण्डितायै नमः । १०००

—*—

# श्रीदुर्गासहस्रनामस्तोत्रम्–२

शिव उवाच ।

शृणु देवि प्रवक्ष्यामि दुर्गानामसहस्रकम् ।
यत्प्रसादान्महादेवि चतुर्वर्गफलं लभेत् ॥ १

पठनं श्रवणं चास्य सर्वाशापरिपूरकम् ।
धनपुत्रप्रदं चैव बालानां शान्तिकारकम् ॥ २

उग्ररोगप्रशमनं ग्रहदोषविनाशनम् ।
अकालमृत्युहरणं वाणिज्ये विजयप्रदम् ॥ ३

विवादे दुर्गमे युद्धे नौकायां शत्रुसङ्कटे ।
राजद्वारे महारण्ये, सर्वत्र विजयप्रदम् ॥ ४

नारदोऽस्य ऋषिः प्रोक्तो गायत्री छन्द ईरितम् ।

शक्तिबीजं रूपमस्य श्रीदुर्गा परदेवता।
सर्वाभीष्टप्रयोगे च विनियोगः प्रकीर्त्तितः ।। ९

ओं अस्य श्री दुर्गासहस्रनाममालामन्त्रस्य, नारद ऋषिः, गायत्री छन्दः, श्री दुर्गा देवता, दुं बीजं, ह्रीं शक्तिः, ओं कीलकं, श्री दुर्गाप्रीत्यर्थं श्रीदुर्गा सहस्रनाम जपे विनियोगः।

ह्रीं ओं ह्रीं दुं दुर्गायै अङ्गुष्ठाभ्यां नमः - हृदयाय नमः ।
ह्रीं ॐ ह्रीं दुं दुर्गायै नमः - तर्जनीभ्यां नमः - शिरसे स्वाहा ।
ह्रीं ॐ ह्रीं दुं दुर्गायै नमः मध्यमाभ्यां नमः - शिखायै वषट्।
ह्रीं ॐ ह्रीं दुं दुर्गायै नमः अनामिकाभ्यां नमः - कवचाय हुं।
ह्रीं ॐ ह्रीं दुं दुर्गायै नमः कनिष्ठिकाभ्यां नमः - नेत्रत्रयाय वौषट् ।
ह्रीं ॐ ह्रीं दुं दुर्गायै नमः करतलकरपृष्ठाभ्यां नमः - अस्त्राय फट् ।

ध्यानम्——

सिंहस्था शशिशेखरा मरकतप्रख्या चतुर्भिर्भुजैः
शङ्खं चक्रधनुःशरांश्च दधती नेत्रैस्त्रिभिः शोभिता।
आमुक्ताङ्गदहारकङ्कणरणत् काञ्चीक्वणन्नूपुरा
दुर्गा दुर्गतिहारिणी भवतु वो रत्नोल्लसत्कुण्डला।।

मानस-पूजा——

लं पृथिव्यात्मकं गन्धं समर्पयामि (कनिष्ठाङ्गुष्ठाभ्यां)
हं आकाशात्मकं पुष्पं समर्पयामि। (अङ्गुष्ठतर्जनीभ्यां)

वाय्वात्मकं धूपं समर्पयामि (तर्जन्यंगुष्ठाभ्याम्)
रं वह्न्यात्मकं दीपं दर्शयामि (अङ्गुष्ठ मध्यमाभ्यां)।

वं अमृतात्मकं नैवेद्यं निवेदयामि (अङ्गुष्ठानामिकाभ्यां)
सं सर्वात्मकं ताम्बूलं निवेदयामि (सर्वांगुलिभिः)।

श्रीदुर्गा दुर्गतिहरा परिपूर्णा परात्परा।
सर्वोपाधिविनिर्मुक्ता भवभारविनाशिनी॥ १

कार्यकारणनिर्मुक्ता लीलाविग्रहधारिणी।
सर्वशृङ्गारशोभाढ्या सर्वायुधसमन्विता॥ २

सूर्यकोटिसहस्राभा चन्द्रकोटिनिभानना।
गणेशकोटिलावण्या विष्णुकोट्यरिमर्दिनी॥ ३

दावाग्निकोटिनलिनी रुद्रकोट्युग्ररूपिणी।
समुद्रकोटिगम्भीरा वायुकोटिमहाबला॥ ४

आकाशकोटिविस्तारा यमकोटिभयङ्करी।
मेरुकोटिसमुच्छ्राया गणकोटिसमृद्धिदा॥ ५

नमस्या प्रथमा पूज्या सकला अखिलाऽम्बिका।
महाप्रकृतिः सर्वात्मा भुक्तिमुक्तिप्रदायिनी॥ ६

अजन्या जननी जन्या महावृषभवाहिनी।
कर्दमी काश्यपी पद्मा सर्वतीर्थनिवासिनी॥ ७

भीमेश्वरी भीमनादा भवसागरतारिणी।
सर्वदेवशिरोरत्ननिघृष्टचरणाम्बुजा॥ ८

स्मरतां सर्वपापघ्नी सर्वकारणकारणा।
सर्वार्थसाधिका माता सर्वमङ्गलमङ्गला॥ ९

पृच्छा पृश्नी महाज्योतिररण्या वनदेवता।
भीतिर्भूतिर्मतिः शक्तिस्तुष्टिः पुष्टिरुषा धृतिः॥ १०

उत्तानहस्ता सम्भूतिः वृक्षवल्कलधारिणी।
महाप्रभा महाचण्डी दीप्तास्या उग्रलोचना॥ ११

महामेघप्रभा विद्या मुक्तकेशी दिगम्बरी।
हसन्मुखी साट्टहासा लोलजिह्वा महेश्वरी॥ १२

मुण्डाली अभया दक्षा महाभीमा वरोद्यता।
खड्गमुण्डधरा मुक्तिः कुमुदाऽज्ञाननाशिनी॥ १३

अम्बालिका महावीर्या सारदा कनकेश्वरी।
परमात्मा परा क्षिप्ता शूलिनी परमेश्वरी॥ १४

महाकालसमासक्ता शिवाशतनिनादिनी।
घोराङ्गी मुण्डमुकुटा श्मशानास्थिकृतासना॥ १५

महाश्मशाननिलया मणिमण्डपमध्यगा।
पानपात्रधृता खर्वा पन्नगी परदेवता॥ १६

सुगन्धा तारिणी तारा भवानी वनवासिनी।
लम्बोदरी महादीर्घा जटिनी चन्द्रशेखरा॥ १७

पराऽम्बा परमाराध्या परेशी ब्रह्मरूपिणी।
देवसेना विश्वगर्भा अग्निजिह्वा चतुर्भुजा॥ १८

महादंष्ट्रा महारात्रिर्नीला नीलसरस्वती।
दक्षजा भारती रम्भा महामङ्गलचण्डिका॥ १९

रुद्रजा कौशिकी पूता यमघण्टा महाबला।
कादम्बिनी चिदानन्दा क्षेत्रस्था क्षेत्रकर्षिणी॥ २०

पञ्चप्रेतसमारूढा ललिता त्वरिता सती।
भैरवी रूपसम्पन्ना मदनानल नाशिनी॥ २१

जातापहारिणी वार्त्ता मातृका अष्टमातृका।
अनङ्गमेखला षष्ठी हृल्लेखा पर्वतात्मजा॥ २२

वसुन्धरा धरा धारा विधात्री विन्ध्यवासिनी।
अयोध्या मथुरा काञ्ची महैश्वर्या महोदरी ॥ २३

कोमला मानदा भव्या मत्स्योदरी महालया।
पाशाङ्कुशधनुर्बाणा लावण्याम्बुधिचन्द्रिका ॥ २४

रक्तवासा रक्तलिप्ता रक्तगन्धविनोदिनी।
दुर्लभा सुलभा मत्स्या माधवी मण्डलेश्वरी ॥ २५

पार्वती अमरी अम्बा महापातकनाशिनी।
नित्यतृप्ता निराभासा अकुला रोगनाशिनी ॥ २६

कनकेशी पञ्चरूपा नूपुरा नीलवाहिनी।
जगन्मयी जगद्धात्री अरुणा वारुणी जया ॥ २७

हिंगुला कोटरा सेना कालिन्दी सुरपूजिता।
रामेश्वरी देवगर्भा त्रिस्रोता अखिलेश्वरी ॥ २८

ब्रह्माणी वैष्णवी रौद्री महाकालमनोरमा।
गारुडी विमला हंसी योगिनी रतिसुन्दरी ॥ २९

कपालिनी महाचण्डा विप्रचित्ता कुमारिका।
ईशानी ईश्वरी ब्राह्मी माहेशी विश्वमोहिनी ॥ ३०

एकवीरा कुलानन्दा कालपुत्री सदाशिवा।
शाकम्भरी नीलवर्णा महिषासुरमर्दिनी ॥ ३१

कामदा कामिनी कुल्ला कुरुकुल्ला विरोधिनी।
उग्रा उग्रप्रभा दीप्ता प्रभा दंष्ट्रा मनोजवा ॥ ३२

कल्पवृक्षतलासीना श्रीनाथगुरुपादुका।
अव्याजकरुणामूर्तिरानन्दघनविग्रहा ॥ ३३

अनघा शाङ्करी दिव्या पवित्रा सर्वसाक्षिणी ।। ३४

धनुर्बाणगदाहस्ता सायुधा आयुधान्विता ।
लोकोत्तरा पद्मनेत्रा योगमाया जटेश्वरी ।। ३५

उग्रचण्डा श्रीचाण्डाली मोहिनी चण्डविक्रमा ।
चिन्तनीया महादीर्घा अमृताऽमृतबान्धवी ।। ३६

पिनाकधारिणी शिप्रा धात्री त्रिजगदीश्वरी ।
रक्तपा रुधिराक्ताङ्गी रक्तखर्पर-धारिणी ।। ३७

त्रिपुरा त्रिकूटा नित्या श्रीनित्या भुवनेश्वरी ।
हव्या कव्या लोकगतिर्गायत्री परमा गतिः ।। ३८

विश्वधात्री लोकमाता पञ्चमी पितृतृप्तिदा ।
कामेश्वरी कामरूपा कामबीजा कलात्मिका ।। ३९

ताटङ्कशोभिनी वन्द्या नित्यक्लिन्ना कुलेश्वरी ।
भूवरेशी महाराज्ञी अक्षरा अक्षरात्मिका ।। ४०

अनादिबोधा सर्वज्ञा सर्वा सर्वतरा शुभा ।
इच्छाज्ञानक्रियाशक्तिः सर्वाढ्या शर्वपूजिता ।। ४१

श्रीमहासुन्दरी रम्या राज्ञी श्रीपरमाम्बिका ।
राजराजेश्वरी भद्रा श्रीमत् त्रिपुरसुन्दरी ।। ४२

त्रिसन्ध्या इन्दिरा ऐन्द्री अजिता अपराजिता ।
भेरुण्डा दण्डिनी घोरा इन्द्राणी च तपस्विनी ।। ४३

शैलपुत्री चण्ड(चन्द्र)घण्टा कूष्माण्डा ब्रह्मचारिणी ।
कात्यायनी स्कन्द-माता कालरात्रिः शुभङ्करी ।। ४४

महागौरा सिद्धिदात्री नवदुर्गा नभःस्थिता ।
सुनन्दा नन्दिनी कृत्या महाभागा महोज्ज्वला ।। ४५

महाविद्या ब्रह्मविद्या दामिनी तापहारिणी।
उत्थिता उत्पला बाध्या प्रमोदा शुभदोत्तमा ॥ ४६

अतुल्या अमला पूर्णा हंसारूढा हरिप्रिया।
सुलोचना विरूपाक्षी विद्युद्गौरी महार्हणा ॥ ४७

काकध्वजा शिवाराध्या शूर्पहस्ता कृशाङ्गिनी।
शुभ्रकेशी कोटराक्षी विधवा पतिघातिनी ॥ ४८

सर्वसिद्धिकरी दुष्टा क्षुधार्ता शिवभक्षिणी।
वर्गात्मिका त्रिकालज्ञा त्रिवर्गा त्रिदशार्चिता ॥ ४९

श्रीमती भोगिनी काशी अविमुक्ता गयेश्वरी।
सिद्धाम्बिका सुवर्णाक्षी कोलाम्बा सिद्धयोगिनी ॥ ५०

देवज्योतिःसमुद्भूता देवज्योतिः स्वरूपिणी।
अच्छेद्या अद्भुता तीव्रा व्रतस्था व्रतचारिणी ॥ ५१

सिद्धिदा धूमिनी तन्वी भ्रामरी रक्तदन्तिका।
स्वस्तिका गगना वाणी जाह्नवी भवभामिनी ॥ ५२

पतिव्रता महामोहा मुकुटा मुकुटेश्वरी।
गुह्येश्वरी गुह्यमाता चण्डिका गुह्यकालिका ॥ ५३

प्रसूतिराकृतिश्चित्ता चिन्ता देवाहुतिस्त्रयी।
अनुमतिः कुहू राका सिनीवाली त्विषा रसा ॥ ५४

सुवर्चा वर्चला शार्वी विकेशा कृष्णपिङ्गला।
स्वप्नावती चित्रलेखा अन्नपूर्णा चतुष्टया ॥ ५५

पुण्यलभ्या वरारोहा श्यामाङ्गी शशिशेखरा।
हरणी गौतमी मेना यादवा पूर्णिमा अमा ॥ ५६

त्रिखण्डा त्रिमुण्डा मान्या भूतमाता भवेश्वरी।
भोगदा स्वर्गदा मोक्षा सुभगा यज्ञरूपिणी ॥ ५७

अन्नदा सर्वसम्पत्तिः सङ्कटा सम्पदा स्मृतिः।
वैदूर्यमुकुटा मेधा सर्वविद्येश्वरेश्वरी ॥ ५८

ब्रह्मानन्दा ब्रह्मदात्री मृडानी कैटभेश्वरी।
अरुन्धती अक्षमाला अस्थिरा ग्राम्यदेवता ॥ ५९

वर्णेश्वरी वर्णमाता चिन्तापूर्णी विलक्षणा।
त्रीक्षणा मङ्गला काली वैराटी पद्ममालिनी ॥ ६०

अमला विकटा मुख्या अविज्ञेया स्वयंभवा।
ऊर्जा तारावती वेला मानवी च चतुःस्तनी ॥ ६१

चतुर्णेत्रा चतुर्हस्ता चतुर्दन्ता चतुर्मुखी।
शतरूपा बहुरूपा अरूपा विश्वतोमुखी ॥ ६२

गरिष्ठा गुर्विणी गुर्वी व्याप्या भौमी च भाविनी।
अजाता सुजाता व्यक्ता अचला अक्षया क्षमा ॥ ६३

मारिषा धर्मिणी हर्षा भूतधात्री च धेनुका।
अयोनिजा अजा साध्वी शची क्षेमा क्षयङ्करी ॥ ६४

बुद्धिर्लज्जा महासिद्धिः शाक्री शान्तिः क्रियावती।
प्रज्ञा प्रीतिः श्रुतिः श्रद्धा स्वाहा कान्तिर्वपुःस्वधा ॥ ६५

उन्नतिः सन्नतिः ख्यातिः शुद्धिः स्थितिर्मनस्विनी।
उद्यमा वीरिणी क्षान्तिर्मार्कण्डेयी त्रयोदशी ॥ ६६

प्रसिद्धा प्रतिष्ठा व्याप्ता अनसूयाऽऽकृतिर्यमा।
महाधारा महावीरा भुजङ्गी वलयाकृतिः ॥ ६७

हरसिद्धा सिद्धकाली सिद्धाम्बा सिद्धपूजिता।
परानन्दा पराप्रीतिः परातुष्टिः परेश्वरी ॥ ६८

वक्रेश्वरी चतुर्वक्त्रा अनाथा शिवसाधिका।
नारायणी नादरूपा नादिनी नर्त्तकी नटी ॥ ६९

सर्वप्रदा पञ्चवक्त्रा कामिला कामिका शिवा।
दुर्गमा दुरतिक्रान्ता दुर्ध्येया दुष्परिग्रहा ॥ ७०

दुर्जया दानवी देवी दैत्यघ्नी दैत्यतापिनी।
ऊर्जस्वती महाबुद्धिः रटन्ती सिद्धदेवता ॥ ७१

कीर्तिदा प्रवरा लभ्या शरण्या शिवशोभना।
सन्मार्गदायिनी शुद्धा सुरसा रक्तचण्डिका। ७२

सुरूपा द्रविणा रक्ता विरक्ता ब्रह्मवादिनी।
अगुणा निर्गुणा गुण्या त्रिगुणा त्रिगुणात्मिका ॥ ७३

उड्डीयाना पूर्णशैला कामस्था च जलन्धरी।
श्मशानभैरवी कालभैरवी कुलभैरवी ॥ ७४

त्रिपुरा भैरवी देवीभैरवी वीरभैरवी।
श्रीमहाभैरवी देवी सुखदानन्दभैरवी ॥ ७५

मुक्तिदा भैरवी देवी ज्ञानदानन्दभैरवी।
दाक्षायणी दक्षयज्ञनाशिनी नगनन्दिनी ॥ ७६

राजपुत्री राजपूज्या भक्तिवश्या सनातनी।
अच्युता चर्चिका माया षोडशी सुरसुन्दरी ॥ ७७

चक्रेशी चक्रिणी चक्रा चक्रराजनिवासिनी।
नायिका यक्षिणी बोधा बोधिनी मुण्डकेश्वरी ॥ ७८

बीजरूपा चन्द्रभागा कुमारी कपिलेश्वरी।
वृद्धाऽतिवृद्धा रसिका रसना पाटलेश्वरी ॥ ७९

माहेश्वरी महानन्दा प्रबला अबला बला।
व्याघ्राम्बरी महेशानी शर्वाणी तामसी दया ॥ ८०

धरणी धारिणी तृष्णा महामारी दुरत्यया।
रङ्गिनी टङ्किनी लीला महावेगा मखेश्वरी ॥ ८१

जयदा जित्वरा जेत्री जयश्रीर्जयशालिनी।
नर्मदा यमुना गङ्गा वेणा वेणी दृषद्वती ॥ ८२

दशार्णा अलका सीता तुङ्गा भद्रा तरङ्गिणी।
मदोत्कटा मयूराक्षी मीनाक्षी मणिकुण्डला ॥ ८३

सुमहा महतां सेव्या मायूरी नारसिंहिका।
बगला स्तम्भिनी पीता पूजिता शिवनायिका ॥ ८४

वेदवेद्या महारौद्री वेदबाह्या गतिप्रदा।
सर्वशास्त्रमयी आर्या अवाङ्मनसगोचरा ॥ ८५

अग्निज्वाला महाज्वाला प्रज्वाला दीप्तजिह्विका।
रञ्जनी रमणी रुद्रा रमणीया प्रभञ्जनी ॥ ८६

वरिष्ठा विशिष्टा शिष्टा श्रेष्ठा निष्ठा कृपावती।
ऊर्ध्वमुखी विशालास्या रुद्रभार्या भयङ्करी ॥ ८७

सिंहपृष्ठसमासीना शिवताण्डवदर्शिनी।
हैमवती पद्मगन्धा गन्धेश्वरी भवप्रिया ॥ ८८

अणुरूपा महासूक्ष्मा प्रत्यक्षा च मखान्तका।
सर्वविद्या रक्तनेत्रा बहुनेत्रा अनेत्रका ॥ ८९

विश्वम्भरा विश्वयोनिः सर्वाकारा सुदर्शना।
कृष्णाजिनधरा देवी उत्तरा कन्दवासिनी ।। ९०

प्रकृष्टा प्रहृष्टा हृष्टा चन्द्रसूर्याग्निभक्षिणी।
विश्वेदेवी महामुण्डा पञ्चमुण्डाधिवासिनी ।। ९१

प्रसादसुमुखी गूढा सुमुखा सुमुखेश्वरी।
तत्पदा सत्पदाऽत्यर्था प्रभावती दयावती ।। ९२

चण्डदुर्गा चण्डी देवी वनदुर्गा वनेश्वरी।
ध्रुवेश्वरी ध्रुवा ध्रौव्या ध्रुवाराध्या ध्रुवा गतिः ।। ९३

सच्चिदा सच्चिदानन्दा आपोमयी महासुखा।
वागीशी वाग्भवाऽकण्ठवासिनी वह्निसुन्दरी ।। ९४

गणनाथप्रिया ज्ञानगम्या च सर्वलोकगा।
प्रीतिदा गतिदा प्रेया ध्येया ज्ञेया भयापहा ।। ९५

श्रीकरी श्रीधरी सुश्रीः श्रीविद्या श्रीर्विभावनी।
श्रीयुता श्रीमती सेव्या श्रीमूर्तिः स्त्रीस्वरूपिणी ।। ९६

अनृता सूनृता सेव्या सर्वलोकोत्तमोत्तमा।
जयन्ती चन्दना गौरी गर्जिनी गगनोपमा ।। ९७

छिन्नमस्ता महामत्ता रेणुका वनशङ्करी।
ग्राहिका ग्रासिनी देवभूषणा च कपर्दिनी ।। ९८

सुमतिस्तपती स्वस्था हृदिस्था मृगलोचना।
मनोहरा वज्रदेहा कुलेशी कामचारिणी ।। ९९

रक्ताभा निद्रिता निद्रा रक्ताङ्गी रक्तलोचना।
कुलचण्डा चण्डवक्त्रा चण्डोग्रा चण्डमालिनी ।। १००

रक्तचण्डी रुद्रचण्डी चण्डाक्षी चण्डनायिका।
व्याघ्रास्या शैलजा भाषा देवार्था रणरङ्गिणी॥ १०१

बिल्वपत्रकृतावासा तरुणी शिवमोहिनी।
स्थाणुप्रिया करालास्या गुणदा लिङ्गवासिनी॥ १०२

अविद्या ममता अज्ञा अहन्ता अशुभा कृशा।
महिषघ्नी सुदुष्प्रेक्ष्या तमसा भवमोचनी॥ १०३

पुरूहूता सुप्रतिष्ठा रजनी इष्टदेवता।
दुःखिनी कातरा क्षीणा गोमती त्र्यम्बकेश्वरा॥ १०४

द्वारावती अप्रमेया अव्ययाऽमितविक्रमा।
मायावती कृपामूर्तिः द्वारेशी द्वारवासिनी॥ १०५

तेजोमयी विश्वकामा मन्मथा पुष्करावती।
चित्रा देवी महाकाली कालहन्त्री क्रियामयी॥ १०६

कृपामयी कृपाश्रेष्ठा करुणा करुणामयी।
सुप्रभा सुव्रता माध्वी मधुघ्नी मुण्डमर्दिनी॥ १०७

उल्लासिनी महोल्लासा स्वामिनी शर्मदायिनी।
श्रीमाता श्रीमहाराज्ञी प्रसन्ना प्रसन्नानना॥ १०८

स्वप्रकाशा महाभूमा ब्रह्मरूपा शिवङ्करी।
शक्तिदा शान्तिदा कर्मफलदा श्रीप्रदायिनी॥ १०९

प्रियदा धनदा श्रीदा मोक्षदा ज्ञानदा भवा।
भूमानन्दकरी भूमा प्रसीदश्रुतिगोचरा॥ ११०

रक्तचन्दनसिक्ताङ्गी सिन्दूराङ्कितभालिनी।
स्वच्छन्दशक्तिर्गहना प्रजावती सुखावहा॥ १११

योगेश्वरी योगाराध्या महात्रिशूलधारिणी।
राज्येशी त्रिपुरा सिद्धा महाविभवशालिनी॥ ११२

ह्रीङ्कारी शङ्करी शर्वपङ्कजस्था शतश्रुतिः ।
निस्तारिणी जगन्माता जगदम्बा जगद्धिता ।। ११३

साष्टाङ्गप्रणतिप्रीता भक्तानुग्रहकारिणी ।
शरणागत दीनार्तपरित्राणपरायणा ।। ११४

निराश्रयाश्रया दीनतारिणी भक्तवत्सला ।
दीनाम्बा दीनशरणा भक्तानामभयङ्करी ।। ११५

कृताञ्जलिनमस्कारा स्वयम्भु कुसुमार्चिता ।
कौलतर्पणसम्प्रीता स्वयंभाती विभातिनी ।। ११६

शतशीर्षाऽनन्तशीर्षा श्रीकण्ठार्धशरीरिणी ।
जयध्वनिप्रिया कुलभास्करी कुलसाधिका ।। ११७

अभयवरदहस्ता सर्वानन्दा च सम्विदा ।
पृथ्वीधरा विश्वधरा विश्वगर्भा प्रवर्तिका ।। ११८

विश्वमाया विश्वफाला पद्मनाभप्रसूः प्रजा ।
महीयसी महामूर्तिः सती राज्ञी भयार्तिहा ।। ११९

ब्रह्ममयी विश्वपीठा प्रज्ञाना महिमामयी ।
सिंहारूढा वृषारूढा अश्वारूढा अधीश्वरी ।। १२०

वराभयकरा सर्ववरेण्या विश्वविक्रमा ।
विश्वाश्रया महाभूतिः श्रीप्रज्ञादिस्रगन्विता ।। १२१

दुर्गानामसहस्राख्यं स्तोत्रं तन्त्रोत्तमोत्तमम् ।
पठनात् श्रवणात्सद्यो नरो मुच्येत सङ्कटात् ।। १२२

अश्वमेधसहस्राणां वाजेपयस्य कोटयः ।
सकृत्पाठेन जायन्ते महामायाप्रसादतः ।। १२३

य इदं पठति नित्यं देव्यागारे कृताञ्जलिः ।
किं तस्य दुर्लभं देवि दिवि भुवि रसातले ।। १२४

स दीर्घायुः सुखी वाग्मी निश्चितं पर्वतात्मजे।
श्रद्धयाऽश्रद्धया वापि दुर्गानामप्रसादतः ।। १२५

य इदं पठते नित्यं देवीभक्तो मुदान्वितः ।
तस्य शत्रुः क्षयं याति यदि शक्रसमो भवेत् ।। १२६

प्रतिनाम समुच्चार्य स्रोतसि यः प्रपूजयेत् ।
षण्मासाभ्यन्तरे देवि निर्धनी धनवान् भवेत् ।। १२७

वन्ध्या वा काकवन्ध्या वा मृतवत्सा च याऽङ्गना।
अस्य प्रयोगमात्रेण बहुपुत्रवती भवेत् ।। १२८

आरोग्यार्थे शतावृत्तिः पुत्रार्थे ह्येकवत्सरम् ।
दीप्ताग्निसन्निधौ पाठात् अपापो भवति ध्रुवम् ।। १२९

अष्टोत्तरशतेनास्य पुरश्चर्या विधीयते।
कलौ चतुर्गुणं प्रोक्तं पुरश्चरणसिद्धये ।। १३०

जपा कमलपुष्पं च चम्पकं नागकेशरम् ।
कदम्बं कुसुमं चापि प्रतिनाम्ना समर्चयेत् ।। १३१

प्रणवादि नमोऽन्तेन चतुर्थ्यन्तेन मन्त्रवित् ।
स्रोतसि पूजयित्वा तु उपहारं समर्पयेत् ।। १३२

इच्छाज्ञानक्रियासिद्धिर्निश्चितं गिरिनन्दिनि।
देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम् ।। १३३

स यास्यति न सन्देहो श्रीदुर्गानामकीर्त्तनात् ।
भजेद् दुर्गां स्मरेद् दुर्गां जपेद् दुर्गां शिवप्रियाम् ।
तत्क्षणात् शिवमाप्नोति सत्यं सत्यं वरानने। १३४

—तन्त्रराजतन्त्रतः ।

——*——

# श्री दुर्गासहस्रनामावलिः – २

श्री दुर्गायै नमः । दुर्गतिहरायै । परिपूर्णायै । परात्परायै । सर्वोपाधिविनिर्मुक्तायै । भवभारविनाशिन्यै । कार्यकारण-निर्मुक्तायै । लीलाविग्रहधारिण्यै । सर्वशृङ्गारशोभाढ्यायै । सर्वायुधसमन्वितायै । सूर्यकोटिसहस्राभायै । चन्द्रकोटि-निभाननायै । गणेशकोटिलावण्यायै । विष्णुकोट्यरिमर्दनायै । दावाग्निकोटिनलिन्यै । रुद्रकोट्युग्ररूपिण्यै । समुद्रकोटिगम्भीरायै । वायुकोटिमहाबलायै । आकाशकोटिविस्तारायै । यमकोटिभयङ्कर्यै नमः । २०

ओं मेरुकोटिसमुच्छ्रायायै नमः । गणकोटिसमृद्धिदायै । नमस्यायै । प्रथमायै । पूज्यायै । सकलायै। अखिलायै । अम्बिकायै । महाप्रकृतये । सर्वात्मने । भुक्तिमुक्तिप्रदायिन्यै । अजन्यायै । जनन्यै । जन्यायै । महावृषभवाहिन्यै । कर्दम्यै । काश्यप्यै । पद्मायै । सर्वतीर्थनिवासिन्यै । भीमेश्वर्यै नमः । (४०)

ओं भीमनादायै नमः । भवसागरतारिण्यै । सर्वदेवशिरोरत्ननिघृष्टचरणाम्बुजायै । स्मरतां सर्वपापघ्न्यै । सर्वकारणकारणायै । सर्वार्थसाधिकायै । मात्रे । सर्वमङ्गल-मङ्गलायै । पृच्छायै । पृश्न्यै । महाज्योतिषे । अरण्यायै । वनदेवतायै । भीत्यै । भूत्यै । मत्यै । शक्त्यै । तुष्ट्यै । पुष्ट्यै । उषायै नमः । ६०

ओं धृत्यै नमः । उत्तानहस्तायै । संभूत्यै । वृक्षवल्कलधारिण्यै । महाप्रभायै । महाचण्ड्यै । दीप्तास्यायै । उग्रलोचनायै । महामेघप्रभायै । विद्यायै । मुक्तकेश्यै । दिगम्बर्यै ।

हसन्मुख्यै । साट्टहासायै । लोलजिह्वायै । महेश्वर्यै । मुण्डाल्यै । अभया । दक्षायै । महाभीमायै नमः । ८०

ओं वरोद्यतायै नमः । खड्गमुण्डधरायै । मुक्त्यै । कुमुदायै । अज्ञाननाशिन्यै । अम्बालिकायै । महावीर्यायै । सारदायै । कनकेश्वर्यै । परमात्मने । परायै । क्षिप्तायै । शूलिन्यै । परमेश्वर्यै । महाकालसमासक्तायै । शिवाशतनिनादिन्यै । घोराङ्ग्यै । मुण्डमुकुटायै । श्मशानास्थिकृतासनायै । महाश्मशाननिलयायै नमः । (१००)

ओं मणिमण्डपमध्यगायै नमः । पानपात्रधृतायै । खर्वायै । पन्नग्यै । परदेवतायै । सुगन्धायै । तारिण्यै । तारायै । भवान्यै । वनवासिन्यै । लम्बोदर्यै । महादीर्घायै । जटिन्यै । चन्द्रशेखरायै । परायै । अम्बायै । परमायै । आराध्यायै । परेश्यै । ब्रह्मरूपिण्यै नमः । (१२०)

ओं देवसेनायै नमः । विश्वगर्भायै । अग्निजिह्वायै । चतुर्भुजायै । महादंष्ट्रायै । महारात्र्यै । नीलायै । नीलसरस्वत्यै । दक्षजायै । भारत्यै । रम्भायै । महामङ्गलचण्डिकायै । रुद्रजायै । कौशिक्यै । पूतायै । यमघण्टायै । महाबलायै । कादंबिन्यै । चिदानन्दायै । क्षेत्रस्थायै नमः । १४०

ओं क्षेत्रकर्षिण्यै नमः । पञ्चप्रेतसमारूढायै । ललितायै । त्वरितायै । सत्यै । भैरव्यै । रूपसंपन्नायै । मदनानलनाशिन्यै । जातापहारिण्यै । वार्तायै । मातृकायै । अष्टमातृकायै । अनङ्गमेखलायै । षष्ठ्यै । हृल्लेखायै । पर्वतात्मजायै । वसुन्धरायै । धरायै । धारायै । विधात्र्यै नमः । १६०

ओं विन्ध्यवासिन्यै नमः । अयोध्यायै । मथुरायै । काञ्च्यै । महैश्वर्यायै । महोदर्यै । कोमलायै । मानदायै । भव्यायै । मत्स्योदर्यै । महालयायै । पाशाङ्कुशधनुर्बाणायै । लावण्याम्बुधिचन्द्रिकायै । रक्तवासायै । रक्तलिप्तायै । रक्तगन्धविनोदिन्यै । दुर्लभायै । सुलभायै । मत्स्यायै । माधव्यै नमः । १८०

ओं मण्डलेश्वर्यै नमः । पार्वत्यै । अमर्यै । अम्बायै । महापातकनाशिन्यै । नित्यतृप्तायै । निराभासायै । अकुलायै । रोगनाशिन्यै । कनकेश्यै । पञ्चरूपायै । नूपुरायै । नीलवाहिन्यै । जगन्मय्यै । जगद्धात्र्यै । अरुणायै । वारुण्यै । जयायै । हिंगुलायै । कोटरायै नमः । २००

ओं सेनायै नमः । कालिन्द्यै । सुरपूजितायै । रामेश्वर्यै । देवगर्भायै । त्रिस्रोतायै । अखिलेश्वर्यै । ब्रह्माण्यै । वैष्णव्यै । रौद्र्यै । महाकालमनोरमायै । गारुड्यै । विमलायै । हंस्यै । योगिन्यै । रतिसुन्दर्यै । कपालिन्यै । महाचण्डायै । विप्रचित्तायै । कुमारिकायै नमः । (२२०)

ओं ईशान्यै नमः। ईश्वर्यै । ब्राह्म्यै । माहेश्यै । विश्वमोहिन्यै । एकवीरायै । कुलानन्दायै । कालपुत्र्यै । सदाशिवायै । शाकंभर्यै । नीलवर्णायै । महिषासुरमर्दिन्यै । कामदायै । कामिन्यै । कुल्लायै । कुरुकुल्लायै । विरोधिन्यै । उग्रायै । उग्रप्रभायै । दीप्तायै नमः । २४०

ओं प्रभायै नमः । दंष्ट्रायै । मनोजवायै । कल्पवृक्षतलासीनायै । श्रीनाथगुरुपादुकायै । अव्याजकरुणा-मूर्तये । आनन्दघनविग्रहायै । अनघायै । शाङ्कर्यै । दिव्यायै । पवित्रायै । सर्वसाक्षिण्यै । धनुर्बाणगदाहस्तायै । सायुधायै ।

आयुधान्वितायै। लोकोत्तरायै। पद्मनेत्रायै। योगमायायै। जटेश्वर्यै। उग्रचण्डायै नमः। २६०

ओं श्रीचाण्डाल्यै नमः। मोहिन्यै। चण्डविक्रमायै। चिन्तनीयायै। महादीर्घायै। अमृतायै। अमृतबान्धव्यै। पिनाकधारिण्यै। शिप्रायै। धात्र्यै। त्रिजगदीश्वर्यै। रक्तपायै। रुधिराक्ताङ्ग्यै। रक्तखर्परधारिण्यै। त्रिपुरायै। त्रिकूटायै। नित्यायै। श्रीनित्यायै। भुवनेश्वर्यै। हव्यायै नमः। २८०

ओं कव्यायै नमः। लोकगत्यै। गायत्र्यै। परमायै गत्यै। विश्वधात्र्यै। लोकमात्रे। पञ्चम्यै। पितृतृप्तिदायै। कामेश्वर्यै। कामरूपायै। कामबीजायै। कलात्मिकायै। ताटङ्कशोभिन्यै। वन्द्यायै। नित्यक्लिन्नायै। कुलेश्वर्यै। भूवरेण्यै। महाराज्ञ्यै। अक्षरायै। अक्षरात्मिकायै नमः। ३००

ओं अनादिबोधायै नमः। सर्वज्ञायै। सर्वायै। सर्वतरायै। शुभायै। इच्छाज्ञानक्रियाशक्त्यै। सर्वाढ्यायै। शर्वपूजितायै। श्रीमहासुन्दर्यै। रम्यायै। राज्ञ्यै। श्रीपरमाम्बिकायै। राजराजेश्वर्यै। भद्रायै। श्रीमत्त्रिपुरसुन्दर्यै। त्रिसन्ध्यायै। इन्दिरायै। ऐन्द्र्यै। अजितायै। अपराजितायै नमः। ३२०

ओं भेरुण्डायै नमः। दण्डिन्यै। घोरायै। इन्द्राण्यै। तपस्विन्यै। शैलपुत्र्यै। चण्ड(चन्द्र)घण्टायै। कूष्माण्डायै। ब्रह्मचारिण्यै। कात्यायन्यै। स्कन्दमात्रे। कालरात्र्यै। शुभङ्कर्यै। महागौरायै। सिद्धिदात्र्यै। नवदुर्गायै। नभः स्थितायै। सुनन्दायै। नन्दिन्यै। कृत्यायै नमः। ३४०

ओं महाभागायै नमः। महोज्ज्वलायै। महाविद्यायै। ब्रह्मविद्यायै। दामिन्यै। तापहारिण्यै। उत्थितायै। उत्पलायै।

बाध्यायै। प्रमोदायै। शुभदायै। उत्तमायै। अतुल्यायै। अमलायै। पूर्णायै। हंसारूढायै। हरिप्रियायै। सुलोचनायै। विरूपाक्ष्यै। विद्युते नमः। ३६०

ओं गौर्यै नमः। महार्हणायै नमः। काकध्वजायै। शिवाराध्यायै। शूर्पहस्तायै। कृशाङ्गिन्यै। शुभ्रकेश्यै। कोटराक्ष्यै। विधवायै। पतिघातिन्यै। सर्वसिद्धिकर्यै। दुष्टायै। क्षुधार्तायै। शिवभक्षिण्यै। वर्गात्मिकायै। त्रिकालज्ञायै। त्रिवर्गायै। त्रिदशार्चितायै। श्रीमत्यै। भोगिन्यै नमः। ३८०

ओं काश्यै। अविमुक्तायै। गयेश्वर्यै। सिद्धाम्बिकायै। सुवर्णाक्ष्यै। कोलाम्बायै। सिद्धयोगिन्यै। देवज्योतिःसमुद्भूतायै। देवज्योतिःस्वरूपिण्यै। अच्छेद्यायै। अद्भुतायै। तीव्रायै। व्रतस्थायै। व्रतचारिण्यै। सिद्धिदायै। धूमिन्यै। तन्व्यै। भ्रामर्यै। रक्तदन्तिकायै। स्वस्तिकायै नमः। ४००

ओं गगनायै नमः। वाण्यै। जाह्नव्यै। भवभामिन्यै। पतिव्रतायै। महामोहायै। मुकुटायै। मुकुटेश्वर्यै। गुह्येश्वर्यै। गुह्यमात्रे। चण्डिकायै। गुह्यकालिकायै। प्रसूत्यै। आकूत्यै। चित्तायै। चिन्तायै। देवाहुत्यै। त्रय्यै। अनुमत्यै। कुह्वै नमः। (४२०)

ओं राकायै नमः। सिनीवाल्यै। त्विषायै। रसायै। सुवर्चायै। वर्चलायै। शार्व्यै। विकेशायै। कृष्णपिङ्गलायै। स्वप्नावत्यै। चित्रलेखायै। अन्नपूर्णायै। चतुष्टयायै। पुण्यलभ्यायै। वरारोहायै। श्यामाङ्ग्यै। शशिशेखरायै। हरण्यै। गौतम्यै। मेनायै नमः। (४४०)

ओं यादवायै नमः । पूर्णिमायै । अमायै । त्रिखण्डायै । त्रिमुण्डायै । मान्यायै । भूतमात्रे । भवेश्वर्यै । भोगदायै । स्वर्गदायै । मोक्षायै । सुभगायै । यज्ञरूपिण्यै । अन्नदायै । सर्वसंपत्त्यै । सङ्कटायै । संपदायै । स्मृत्यै । वैदूर्यमकुटायै । मेधायै नमः । ४६०

ओं सर्वविद्येश्वरेश्वर्यै नमः । ब्रह्मानन्दायै । ब्रह्मदात्र्यै । मृडान्यै । कैटभेश्वर्यै । अरुन्धत्यै । अक्षमालायै । अस्थिरायै । ग्राम्यदेवतायै । वर्णेश्वर्यै । वर्णमात्रे । चिन्तापूर्ण्यै । विलक्षणायै । त्रीक्षणायै । मङ्गलायै । काल्यै । वैराट्यै । पद्ममालिन्यै । अमलायै । विकटायै नमः । ४८०

ओं मुख्यायै नमः । अविज्ञेयाय । स्वयंभवायै । ऊर्जायै । तारावत्यै । वेलायै । मानव्यै । चतुःस्तन्यै । चतुर्णेत्रायै । चतुर्हस्तायै । चतुर्दन्तायै । चतुर्मुख्यै । शतरूपायै । बहुरूपायै । अरूपायै । विश्वतोमुख्यै । गरिष्ठायै । गुर्विण्यै । गुर्व्यै । व्याप्त्यायै नमः । ५००

ओं भौम्यै नमः । भाविन्यै । अजातायै । सुजातायै । व्यक्तायै । अचलायै । अक्षयायै । क्षमायै । मारिषायै । धर्मिण्यै । हर्षायै । भूतधात्र्यै । धेनुकायै । अयोनिजायै। अजायै । साध्व्यै । शच्यै । क्षेमायै । क्षयंकर्यै । बुद्ध्यै नमः । ५२०

ओं लज्जायै नमः । महासिद्ध्यै । शाक्र्यै । शान्त्यै । क्रियावत्यै । प्रज्ञायै । प्रीत्यै । श्रुत्यै । श्रद्धायै । स्वाहायै । कान्त्यै । वपुषे । स्वधायै । उन्नत्यै । सन्नत्यै । ख्यात्यै । शुद्ध्यै । स्थित्यै । मनस्विन्यै । उद्यमायै नमः । ५४०

ओं वीरिण्यै नमः । क्षान्त्यै । मार्कण्डेय्यै । त्रयोदश्यै । प्रसिद्धायै । प्रतिष्ठायै । व्याप्तायै । अनसूयायै । आकृत्यै । यमायै ।

महाधारायै । महावीरायै । भुजङ्ग्यै । वलयाकृत्यै । हरसिद्धायै । सिद्धकाल्यै । सिद्धाम्बायै । सिद्धपूजितायै । परानन्दायै । परायै प्रीत्यै नमः । (५६०)

ओं परायै तुष्ट्यै नमः । परेश्वर्यै । वक्रेश्वर्यै । चतुर्वक्त्रायै । अनाथायै । शिवसाधिकायै । नारायण्यै । नादरूपायै । नादिन्यै । नर्तक्यै । नट्यै । सर्वप्रदायै । पञ्चवक्त्रायै । कामिलायै । कामिकायै । शिवायै । दुर्गमायै । दुरतिक्रान्तायै । दुर्ध्येयायै । दुष्परिग्रहायै नमः । ५८०

ओं दुर्जयायै नमः । दानव्यै । देव्यै । दैत्यघ्न्यै । दैत्यतापिन्यै । ऊर्जस्वत्यै । महाबुद्ध्यै । रटन्त्यै । सिद्धदेवतायै । कीर्तिदायै । प्रवरायै । लभ्यायै । शरण्यायै । शिवशोभनायै । सन्मार्गदायिन्यै । शुद्धायै । सुरसायै । रक्तचण्डिकायै । सुरूपायै । द्रविणायै नमः । ६००

ओं रक्तायै नमः । विरक्तायै । ब्रह्मवादिन्यै । अगुणायै । निर्गुणायै । गुण्यायै । त्रिगुणायै । त्रिगुणात्मिकायै । उड्डीयानायै । पूर्णशैलायै । कामस्थायै । जलन्धर्यै । श्मशानभैरव्यै । कालभैरव्यै । कुलभैरव्यै । त्रिपुरायै भैरव्यै । देव्यै भैरव्यै । वीरभैरव्यै । श्रीमहाभैरव्यै । देव्यै नमः । ६२०

ओं सुखदायै आनन्दभैरव्यै नमः । मुक्तिदाभैरव्यै । देव्यै ज्ञानदायै । आनन्दभैरव्यै । दाक्षायण्यै । दक्षयज्ञनाशिन्यै । नगनन्दिन्यै । राजपुत्र्यै । राजपूज्यायै । भक्तिवश्यायै । सनातन्यै । अच्युतायै । चर्चिकायै । मायायै । षोडश्यै । सुरसुन्दर्यै । चक्रेश्यै । चक्रिण्यै । चक्रायै । चक्रराजनिवासिन्यै नमः । ६४०

ओं नायिकायै नमः । यक्षिण्यै । बोधायै । बोधिन्यै । मुण्डकेश्वर्यै । बीजरूपायै । चन्द्रभागायै । कुमार्यै । कपिलेश्वर्यै । वृद्धायै । अतिवृद्धायै । रसिकायै । रसनायै । पाटलेश्वर्यै । माहेश्वर्यै । महानन्दायै । प्रबलायै । अबलायै । बलायै । व्याघ्रांबर्यै नमः । ६६०

ओं महेशान्यै नमः । शर्वाण्यै । तामस्यै । दयायै । धरण्यै । धारिण्यै । तृष्णायै । महामार्यै । दुरत्ययायै । रङ्गिन्यै । टङ्किन्यै । लीलायै । महावेगायै । मखेश्वर्यै । जयदायै । जित्वरायै । जेत्र्यै । जयश्रियै । जयशालिन्यै । नर्मदायै नमः । ६८०

ओं यमुनायै नमः । गङ्गायै । वेणायै । वेण्यै । दृषद्वत्यै । दशार्णायै । अलकायै । सीतायै । तुङ्गायै । भद्रायै । तरङ्गिण्यै । मदोत्कटायै । मयूराक्ष्यै । मीनाक्ष्यै । मणिकुण्डलायै । सुमहायै । महतां सेव्यायै । मायूर्यै । नारसिंहिकायै । बगलायै नमः । ७००

ओं स्तम्भिन्यै नमः । पीतायै । पूजितायै । शिवनायिकायै । वेदवेद्यायै । महारौद्र्यै । वेदबाह्यायै । गतिप्रदायै । सर्वशास्त्रमय्यै । आर्यायै । अवाङ्मनसगोचरायै । अग्निज्वालायै । महाज्वालायै । प्रज्वालायै । दीप्तजिह्विकायै । रञ्जन्यै । रमण्यै । रुद्रायै । रमणीयायै । प्रभञ्जिन्यै नमः । ७२०

ओं वरिष्ठायै नमः । विशिष्टायै । शिष्टायै । श्रेष्ठायै । निष्ठायै । कृपावत्यै । ऊर्ध्वमुख्यै । विशालास्यायै । रुद्रभार्यायै । भयङ्कर्यै । सिंहपृष्ठसमासीनायै । शिवताण्डवदर्शिन्यै । हैमवत्यै । पद्मगन्धायै । गन्धेश्वर्यै । भवप्रियायै । अणुरूपायै । महासूक्ष्मायै । प्रत्यक्षायै । मखान्तकायै नमः । ७४०

ओं सर्वविद्यायै नमः । रक्तनेत्रायै । बहुनेत्रायै । अनेत्रकायै । विश्वम्भरायै । विश्वयोन्यै । सर्वाकारायै । सुदर्शनायै ।

कृष्णाजिनधरायै । देव्यै । उत्तरायै । कन्दवासिन्यै । प्रकृष्टायै । प्रहृष्टायै । हृष्टायै । चन्द्रसूर्याग्निभक्षिण्यै । विश्वेदेव्यै । महामुण्डायै । पञ्चमुण्डाधिवासिन्यै । प्रसादसुमुख्यै नमः । ७६०

ओं गूढायै नमः । सुमुखायै । सुमुखेश्वर्यै । तत्पदायै । सत्पदायै । अत्यर्थायै । प्रभावत्यै । दयावत्यै । चण्डदुर्गायै । चण्डचै । देव्यै । वनदुर्गायै । वनेश्वर्यै । ध्रुवेश्वर्यै । ध्रुवायै । ध्रौव्यायै । ध्रुवाराध्यायै । ध्रुवाय गत्यै । सते । चिदायै नमः । ७८०

ओं सच्चिदानन्दायै नमः । आपोमय्यै । महासुखायै । वागीश्यै । वाग्भवायै । आकण्ठवासिन्यै । वह्निसुन्दर्यै । गणनाथप्रियायै । ज्ञानगम्यायै । सर्वलोकगायै । प्रीतिदायै । गतिदायै । प्रेयायै । ध्येयायै । ज्ञेयायै । भयापहायै । श्रीकर्यै । श्रीधर्यै । सुश्रियै । श्रीविद्यायै नमः । ८००

ओं श्रियै नमः । विभावन्यै । श्रीयुतायै । श्रीमत्यै । सेव्यायै । श्रीमूर्त्यै । स्त्रीस्वरूपिण्यै । अनृतायै । सूनृतायै । सेव्यायै । सर्वलोकोत्तमोत्तमायै । जयन्त्यै । चन्दनायै । गौर्यै । गर्जिन्यै । गगनोपमायै । छिन्नमस्तायै । महामत्तायै । रेणुकायै । वनशङ्कर्यै नमः । ८२०

ओं ग्राहिकायै नमः । ग्रासिन्यै । देवभूषणायै । कपर्दिन्यै । सुमत्यै । तपत्यै । स्वस्थायै । हृदिस्थायै । मृगलोचनायै । मनोहरायै । वज्रदेहायै । कुलेश्यै । कामचारिण्यै । रक्ताभायै । निद्रितायै । निद्रायै । रक्ताङ्ग्यै । रक्तलोचनायै । कुलचण्डायै । चण्डवक्त्रायै नमः । ८४०

ओं चण्डायै नमः । उग्रायै । चण्डमालिन्यै । रक्तचण्डचै । रुद्रचण्डचै । चण्डाक्ष्यै । चण्डनायिकायै । व्याघ्रास्यायै । शैलजायै ।

भाषायै। देवार्थायै। रणरङ्गिण्यै। बिल्वपत्रकृतावासायै। तरुण्यै। शिवमोहिन्यै । स्थाणुप्रियायै । करालास्यायै । गुणदायै । लिङ्गवासिन्यै। अविद्यायै नमः। ८६०

ओं ममतायै नमः। अज्ञायै। अहन्तायै। अशुभायै। कृशायै। महिषघ्न्यै । सुदुष्प्रेक्ष्यायै । तमसायै । भवमोचिन्यै । पुरुहूतायै । सुप्रतिष्ठायै। रजन्यै। इष्टदेवतायै। दुःखिन्यै। कातरायै। क्षीणायै। गोमत्यै। त्र्यम्बकेश्वरायै। द्वारावत्यै। अप्रमेयायै नमः। ८८०

ओं अव्ययायै नमः । अमितविक्रमायै । मायावत्यै । कृपामूर्त्यै । द्वारेश्यै । द्वारवासिन्यै । तेजोमय्यै । विश्वकामायै । मन्मथायै। पुष्करावत्यै। चित्रायै। देव्यै। महाकाल्यै। कालहन्त्र्यै। क्रियामय्यै । कृपामय्यै । कृपाश्रेष्ठायै । करुणायै । करुणामय्यै । सुप्रभायै नमः। ९००

ओं सुव्रतायै नमः । माध्व्यै । मधुघ्न्यै । मुण्डमर्दिन्यै । उल्लासिन्यै। महोल्लासायै। स्वामिन्यै। शर्मदायिन्यै। श्रीमात्रे। श्री महाराज्ञ्यै । प्रसन्नायै । प्रसन्नाननायै । स्वप्रकाशायै । महाभूमायै(म्ने)। ब्रह्मरूपायै। शिवङ्कर्यै। शक्तिदायै। शान्तिदायै। कर्मफलदायै। श्रीप्रदायिन्यै नमः। ९२०

ओं प्रियदायै। धनदायै। श्रीदायै। मोक्षदायै। ज्ञानदायै। भवायै । भूमानन्दकर्यै । भूम्ने । प्रसीदश्रुतिगोचरायै । रक्तचन्दनसिक्ताङ्ग्यै। सिन्दूराङ्कितभालिन्यै। स्वच्छन्दशक्त्यै। गहनायै । प्रजावत्यै । सुखावहायै । योगेश्वर्यै । योगाराध्यायै । महात्रिशूलधारिण्यै। राज्येश्यै। त्रिपुरायै नमः। ९४०

ओं सिद्धायै नमः । महाविभवशालिन्यै नमः । ह्रींकार्यै । शङ्कर्यै। शर्वपङ्कजस्थायै। शतश्रुत्यै। निस्तारिण्यै। जगन्मात्रे।

जगदम्बायै । जगद्धितायै । साष्टाङ्गप्रणतिप्रीतायै । भक्तानुग्रहकारिण्यै । शरणागतदीनार्तपरित्राणपरायणायै । निराश्रयाश्रयायै । दीनतारिण्यै । भक्तवत्सलयै । दीनाम्बायै । दीनशरणायै । भक्तानामभयङ्कर्यै । कृताञ्जलिनमस्कारायै नमः । ९६०

ओं स्वयंभुकुसुमार्चितायै नमः । कौलतर्पणसंप्रीतायै । स्वयंभात्यै । विभातिन्यै । शतशीर्षायै । अनन्तशीर्षायै । श्रीकण्ठार्धशरीरिण्यै । जयध्वनिप्रियाय । कुलभास्कर्यै । कुलसाधिकायै । अभयवरदहस्तायै । सर्वानन्दायै । संविदायै । पृथ्वीधरायै । विश्वधरायै । विश्वगर्भायै । प्रवर्तिकायै । विश्वमायायै । विश्वफालायै । पद्मनाभप्रसुवे नमः । ९८०

ओं प्रजायै नमः । महीयस्यै । महामूर्तये । सत्यै । राज्यै । भयार्तिहायै । ब्रह्ममय्यै । विश्वपीठायै । प्रज्ञानायै । महिमामय्यै । सिंहारूढायै । वृषारूढायै । अश्वारूढायै । अधीश्वर्यै । वराभयकरायै । सर्ववरेण्यायै । विश्वविक्रमायै । विश्वाश्रयायै । महाभूत्यै । श्रीप्रज्ञादिस्रगन्वितायै नमः ।। १०००

॥ श्रीः ॥

# दुर्गासहस्रनामस्तोत्रम्- ३

(दकारादि)

श्रीदेव्युवाच

मम नामसहस्रं च शिवपूर्वविनिर्मितम्।
तत्पठ्यतां विधानेन तदा सर्वं भविष्यति ॥

इत्युक्त्वा पार्वती देवी श्रावयामास तच्च तान्।
तदेव नामसहस्रं दकारादि वरानने ॥

रोगदारिद्र्यदौर्भाग्यशोकदुःखविनाशकम्।
सर्वासां पूजितं नाम श्रीदुर्गा देवता मता ॥

निजबीजं भवेद्बीजं मन्त्रं कीलकमुच्यते।
सर्वाशापूरणे देवी विनियोगः प्रकीर्तितः।

अथ विनियोगः—

ॐ एषां दकारादि-श्रीदुर्गासहस्रनाम्नां महामन्त्राणां श्रीशिवः साक्षात्कर्ता ऋषिः, श्रीदुर्गा देवता, दुं बीजं, दुँ कीलकं, श्रीदुर्गाप्रीत्यर्थे रोग दारिद्र्यदौर्भाग्यशोकदुः-खविनाशनार्थे सर्वाशापूरणार्थे च नामपारायणे विनियोगः।

दुं दुर्गा दुर्गतिहरा दुर्गाचलनिवासिनी।
दुर्गमार्गानुसंचारा दुर्गमार्गनिवासिनी ॥ १

दुर्गमार्गप्रविष्टा च दुर्गमार्गप्रवेशिनी।
दुर्गमार्गकृतावासा दुर्गमार्गजयप्रिया ॥ २

दुर्गमार्गगृहीतार्चा दुर्गमार्गस्थितात्मिका।
दुर्गमार्गस्तुतिपरा दुर्गमार्गस्मृतिः परा॥ ३

दुर्गमार्गसदास्थाली दुर्गमार्गरतिप्रिया।
दुर्गमार्गस्थलस्थाना दुर्गमार्गविलासिनी॥ ४

दुर्गमार्गत्यक्तवस्त्रा दुर्गमार्गप्रवर्तिनी।
दुर्गासुरनिहन्त्री च दुर्ग दुष्टनिषूदिनी॥ ५

दुर्गासुरहरा दूती दुर्गासुरविनाशिनी।
दुर्गासुरवधोन्मत्ता दुर्गासुरवधोत्सुका॥ ६

दुर्गासुवधोत्साहा दुर्गासुर वधोद्यता।
दुर्गासुरवधप्रेप्सुर्दुर्गासुरमखान्तकृत्॥ ७

दुर्गासुरध्वंसतोषा दुर्गदानवदारिणी।
दुर्गविद्रावणकरी दुर्गविद्रावणी सदा॥ ८

दुर्गविक्षोभणकरी दुर्गशीर्षनिकृन्तिनी।
दुर्गविध्वंसनकरी दुर्गदैत्यनिकृन्तिनी॥ ९

दुर्गदैत्यप्राणहरा दुर्गदैत्यान्तकारिणी।
दुर्गदैत्यहरत्राता दुर्गदैत्यासृगुन्मदा॥ १०

दुर्गदैत्याशनकरी दुर्गचर्माम्बरावृता।
दुर्गयुद्धोत्सवकरी दुर्गयुद्धविशारदा॥ ११

दुर्गयुद्धासवरता दुर्गयुद्धविमर्दिनी।
दुर्गयुद्धहास्यरता दुर्गयुद्धाट्टहासिनी॥ १२

दुर्गयुद्धमहामत्ता दुर्गयुद्धानुसारिणी।
दुर्गयुद्धोत्सवोत्साहा दुर्गदेशनिषेविणी॥ १३

दुर्गदेशवासरता दुर्गदेशविलासिनी।
दुर्गदेशार्चनरता दुर्गदेशजनप्रिया॥ १४

दुर्गमस्थानसंस्थाना दुर्गमध्यानुसाधना।
दुर्गमा दुर्गमध्याना दुर्गमात्मस्वरूपिणी॥ १५

दुर्गमागमसंधाना दुर्गमागमसंस्तुता।
दुर्गमागमदुर्ज्ञेया दुर्गम श्रुतिसंमता॥ १६

दुर्गमश्रुतिमान्या च दुर्गमश्रुतिपूजिता।
दुर्गमश्रुतिसुप्रीता दुर्गमश्रुतिहर्षदा॥ १७

दुर्गमश्रुतिसंस्थाना दुर्गमश्रुतिमानिता।
दुर्गमाचार सन्तुष्टा दुर्गमाचारतोषिता॥ १८

दुर्गमाचारनिर्वृत्ता दुर्गमाचारपूजिता।
दुर्गमाचारकलिता दुर्गमस्थानदायिनी॥ १९

दुर्गमप्रेमनिरता दुर्गमद्रविणप्रदा।
दुर्गमाम्बुजमध्यस्था दुर्गमाम्बुजवासिनी॥ २०

दुर्गनाडीमार्गगतिर्दुर्गनाडीप्रचारिणी।
दुर्गनाडीपद्मरता दुर्गनाड्यम्बुजस्थिता॥ २१

दुर्गनाडीगतायाता दुर्गनाडीकृतास्पदा।
दुर्गनाडीरतरता दुर्गनाडीश संस्तुता॥ २२

दुर्गनाडीश्वररता दुर्गनाडीशचुम्बिता।
दुर्गनाडीशक्रोडस्था दुर्गनाड्युत्थितोत्सुका॥ २३

दुर्गनाड्यारोहणा च दुर्गनाडीनिषेविता।
दरिस्थाना दरिस्थानवासिनी दनुजान्तकृत्॥ २४

दरीकृत तपस्या च दरीकृत हरार्चना।
दरीजापितदिष्टा च दरीकृतरतिक्रिया।। २५

दरीकृतहरार्हा च दरीक्रीडितपुत्रिका।
दरीसन्दर्शनरता दरीरोपितवृश्चिका।। २६

दरीगुप्तिकौतुकाढ्या दरीभ्रमणतत्परा।
दनुजान्तकरी दीना दनुसन्तानदारिणी।। २७

दनुजध्वंसिनी दीना दनुजेन्द्रविनाशिनी।
दानवध्वंसिनी देवी दानवानां भयङ्करी।। २८

दानवी दानवाराध्या दानवेन्द्रवरप्रदा।
दानवेन्द्रनिहन्त्री च दानवद्वेषिणी सती।। २९

दानवारिप्रेमरता दानवारिप्रपूजिता।
दानवारिकृतार्चा च दानवारिविभूतिदा।। ३०

दानवारिमहानन्दा दानवारिरतिप्रिया।
दानवारिदानरता दानवारिकृतास्पदा।। ३१

दानवारिस्तुतिरता दानवारिस्मृतिप्रिया।
दानवार्याहाररता दानवारिप्रबोधिनी।। ३२

दानवारिधृतप्रेमा दुःखशोकविमोचिनी।
दुःखहन्त्री दुःखदात्री दुःखनिर्मूलकारिणी।। ३३

दुःखनिर्मूलनकरी दुःखदाय्यरिनाशिनी।
दुःखहरा दुःखनाशा दुःखग्रामा दुरासदा।। ३४

दुःखहीना दुःखधरा द्रविणाचारदायिनी।
द्रविणोत्सर्गसन्तुष्टा द्रविणत्यागतोषिका।। ३५

द्रविणस्पर्शसन्तुष्टा द्रविणस्पर्शमानदा।
द्रविणस्पर्शहर्षाढ्या द्रविणस्पर्शतुष्टिदा॥ ३६

द्रविणस्पर्शनकरी द्रविणस्पर्शनातुरा।
द्रविणस्पर्शनोत्साहा द्रविणस्पर्शसाधिता॥ ३७

द्रविणस्पर्शनमता द्रविणस्पर्शपुत्रिका।
द्रविणस्पर्शरक्षिणी द्रविणस्तोमदायिनी॥ ३८

द्रविणाकर्षणकरी द्रविणौघविसर्जनी।
द्रविणाचलदानाढ्या द्रविणाचलवासिनी॥ ३९

दीनमाता दीनबन्धुर्दीनविघ्नविनाशिनी।
दीनसेव्या दीनसिद्धा दीनसाध्या दिगम्बरी॥ ४०

दीनगेहकृतानन्दा दीनगेहविलासिनी।
दीनभावप्रेमरता दीनभावविनोदिनी॥ ४१

दीनमानवचेतःस्था दीनमानवहर्षदा।
दीनदैन्यनिघातेच्छुर्दीनद्रविणदायिनी॥ ४२

दीनसाधनसन्तुष्टा दीनदर्शनदायिनी।
दीनपुत्रादिदात्री च दीनसंपद्विधायिनी॥ ४३

दत्तात्रेयध्यानरता दत्तात्रेयप्रपूजिता।
दत्तात्रेयर्षिसंसिद्धा दत्तात्रेयविभाविता॥ ४४

दत्तात्रेयकृतार्हा च दत्तात्रेयप्रसाधिता।
दत्तात्रेयहर्षदात्री दत्तात्रेयसुखप्रदा॥ ४५

दत्तात्रेयस्तुता चैव दत्तात्रेयनुता सदा।
दत्तात्रेयप्रेमरता दत्तात्रेयानुमानिता॥ ४६

दत्तात्रेयसमुद्गीता दत्तात्रेयकुटुम्बिनी ।
दत्तात्रेयप्राणतुल्या दत्तात्रेयशरीरिणी ।। ४७

दत्तात्रेयकृतानन्दा दत्तात्रेयांशसंभवा ।
दत्तात्रेयविभूतिस्था दत्तात्रेयानुसारिणी ।। ४८

दत्तात्रेयगीतिरता दत्तात्रेयधनप्रदा ।
दत्तात्रेयदुःखहरा दत्तात्रेयवरप्रदा ।। ४९

दत्तात्रेयज्ञानदात्री दत्तात्रेयभयापहा ।
देवकन्या देवमान्या देवदुःखविनाशिनी ।। ५०

देवसिद्धा देवपूज्या देवेज्या देववन्दिता ।
देवमान्या देवधन्या देवविघ्नविनाशिनी ।। ५१

देवरम्या देवरता देवकौतुकतत्परा ।
देवक्रीडा देवव्रीडा देववैरिविनाशिनी । ५२

देवकामा देवरामा देवद्विष्टविनाशिनी ।
देवदेवप्रिया देवी देवदानववन्दिता ।। ५३

देवदेवरतानन्दा देवदेववरोत्सुका ।
देवदेवप्रेमरता देवदेवप्रियंवदा ।। ५४

देवदेवप्राणतुल्या देवदेवनितम्बिनी ।
देवदेवहृतमना देवदेवसुखावहा ।। ५५

देवदेवक्रोडरता देवदेवसुखप्रदा ।
देवदेवमहानन्दा देवदेवप्रचुम्बिता ।। ५६

देवदेवोपभुक्ता च देवदेवानुसेविता ।
देवदेवगतप्राणा देवदेवगतात्मिका ।। ५७

देवदेवहर्षदात्री देवदेवसुखप्रदा ।
देवदेवमहानन्दा देवदेवविलासिनी ।। ५८

देवदेवधर्मपत्नी देवदेवमनोगता ।
देवदेववधूर्देवी देवदेवार्चनप्रिया ।। ५९

देवदेवाङ्कनिलया देवदेवाङ्गशायिनी ।
देवदेवाङ्गसुखिनी देवदेवाङ्गवासिनी ।। ६०

देवदेवाङ्गभूषा च देवदेवाङ्गभूषणा ।
देवदेवप्रियकरी देवदेवाप्रियान्तकृत् ।। ६१

देवदेवप्रियप्राणा देवदेवप्रियात्मिका ।
देवदेवार्चकप्राणा देवदेवार्चकप्रिया ।। ६२

देवदेवार्चकोत्साहा देवदेवार्चकाश्रया ।
देवदेवार्चकाविघ्ना देवदेवप्रसूरपि ।। ६३

देवदेवस्य जननी देवदेवविधायिनी ।
देवदेवस्य रमणी देवदेवहृदाश्रया ।। ६४

देवदेवेष्टदेवी च देवतापसपातिनी ।
देवताभावसन्तुष्टा देवताभावतोषिता ।। ६५

देवताभाववरदा देवताभावसिद्धिदा ।
देवताभावसंसिद्धा देवताभावसंभवा ।। ६६

देवताभावसुखिनी देवताभाववन्दिता ।
देवताभावसुप्रीता देवताभावहर्षदा ।। ६७

देवताविघ्नहन्त्री च देवताद्विष्टनाशिनी ।
देवतापूजितपदा देवताप्रेमतोषिता ।। ६८

देवतागारनिलया देवतासौख्यदायिनी।
देवतानिजभावा च देवताहृतमानसा।। ६९

देवताकृतपादार्चा देवताहृतभक्तिका।
देवतागर्वमध्यस्था देवता देवतातनुः।। ७०

दुं दुर्गायै नमो नाम्नी दुंफण्मन्त्रस्वरूपिणी।
दूं नमो मन्त्ररूपा च दूं नमो मूर्तिकात्मिका।। ७१

दूरदर्शिप्रिया दुष्टा दुष्टभूतनिषेविता।
दूरदर्शिप्रेमरता दूरदर्शिप्रियंवदा।। ७२

दूरदर्शिसिद्धिदात्री दूरदर्शिप्रतोषिता।
दूरदर्शिकण्ठसंस्था दूरदर्शिप्रहर्षिता।। ७३

दूरदर्शिगृहीतार्चा दूरदर्शिप्रतर्पिता।
दूरदर्शिप्राणतुल्या दूरदर्शिसुखप्रदा।। ७४

दूरदर्शिभ्रान्तिहरा दूरदर्शिहृदास्पदा।
दूरदर्श्यरिविद्भावा दीर्घदर्शिप्रमोदिनी।। ७५

दीर्घदर्शिप्राणतुल्या दीर्घदर्शिवरप्रदा।
दीर्घदर्शिहर्षदात्री दीर्घदर्शिप्रहर्षिता।। ७६

दीर्घदर्शिमहानन्दा दीर्घदर्शिगृहालया।
दीर्घदर्शिगृहीतार्चा दीर्घदर्शिहृतार्हणा।। ७७

दया दानवती दात्री दयालुर्दीनवत्सला।
दयार्द्रा च दयाशीला दयाढ्या च दयात्मिका।। ७८

दया दानवती दात्री दयालुर्दीनवत्सला।
दयार्द्रा च दयाशीला दयाढ्या च दयात्मिका।। ७९

दयाम्बुधिर्दयासारा दयासागरपारगा।
दयासिन्धुर्दयाभारा दयावत्करुणाकरी ॥ ८०

दयावद्वत्सला देवी दया दानरता सदा।
दयावद्भक्तिसुखिनी दयावत्परितोषिता ॥ ८१

दयावत्स्नेहनिरता दयावत्प्रतिपादिका।
दयावत्त्राणकर्त्री च दयावन्मुक्तिदायिनी ॥ ८२

दयावद्भावसन्तुष्टा दयावत्परितोषिता।
दयावत्तारणपरा दयावत्सिद्धिदायिनी ॥ ८३

दयावत्पुत्रवद्भावा दयावत्पुत्ररूपिणी।
दयावद्देहनिलया दयाबन्धुर्दयाश्रया ॥ ८४

दयालुवात्सल्यकरी दयालुसिद्धिदायनी।
दयालुशरणासक्ता दयालुदेहमन्दिरा ॥ ८५

दयालुभक्तिभावस्था दयालुप्राणरूपिणी।
दयालुसुखदा दम्भा दयालुप्रेमवर्षिणी ॥ ८६

दयालुवशगा दीर्घा दीर्घाङ्गी दीर्घलोचना।
दीर्घनेत्रा दीर्घचक्षुर्दीर्घबाहुलतात्मिका ॥ ८७

दीर्घकेशी दीर्घमुखी दीर्घघोणा च दारुणा।
दारुणासुरहन्त्री च दारुणासुरदारिणी ॥ ८८

दारुणाहवकर्त्री च दारुणाहवहर्षिता।
दारुणाहवहोमाढ्या दारुणाचलनाशिनी ॥ ८९

दारुणाचारनिरता दारुणोत्सवहर्षिता।
दारुणोद्यतरूपा च दारुणारिनिवारिणी ॥ ९०

दारुणेक्षणसंयुक्ता दोश्चतुष्कविराजिता।
दशदोष्का दशभुजा दशबाहुविराजिता॥ ९१

दशास्त्रधारिणी देवी दशदिक्ख्यातविक्रमा।
दशरथार्चितपदा दाशरथिप्रिया सदा॥ ९२

दाशरथिप्रेमतुष्टा दाशरथिरतिप्रिया।
दाशरथिप्रियकरी दाशरथिप्रियंवदा॥ ९३

दाशरथीष्टसंदात्री दाशरथीष्टदेवता।
दाशरथिद्वेषिनाशा दाशरथ्यानुकूल्यदा॥ ९४

दाशरथिप्रियतमा दाशरथिप्रपूजिता।
दशाननारिसंपूज्या दशाननारिदेवता॥ ९५

दशाननारिप्रमदा दशाननारिजन्मभूः।
दशाननारिरतिदा दशाननारिसेविता॥ ९६

दशाननारिसुखदा दशाननारिवैरिहृत्।
दशाननारीष्टदेवी दशग्रीवारिवन्दिता॥ ९७

दशग्रीवारिजननी दशग्रीवारिभाविनी।
दशग्रीवारिसहिता दशग्रीवसभाजिता॥ ९८

दशग्रीवारिरमणी दशग्रीववधूरपि।
दशग्रीवनाशकर्त्री दशग्रीववरप्रदा॥ ९९

दशग्रीवपुरस्था च दशग्रीववधोत्सुका।
दशग्रीव प्रीतिदात्री दशग्रीवविनाशिनी॥ १००

दशग्रीवाहवकरी दशग्रीवानपायिनी।
दशग्रीवप्रिया वन्द्या दशग्रीवहृता तथा॥ १०१

दशग्रीवाहितकरी दशग्रीवेश्वरप्रिया।
दशग्रीवेश्वरप्राणा दशग्रीववरप्रदा ।। १०२

दशग्रीवेश्वररता दशवर्षीयकन्यका।
दशवर्षीयबाला च दशवर्षीयवासिनी ।। १०३

दशपापहरा दम्या दशहस्तविभूषिता।
दशशास्त्रलसद्दोष्का दशदिक्पालवन्दिता ।। १०४

दशावताररूपा च दशावताररूपिणी।
दशविद्याऽभिन्नदेवी दशप्राणस्वरूपिणी ।। १०५

दशविद्यास्वरूपा च दशविद्यामयी तथा।
दृक्स्वरूपा दृक्प्रदात्री दृग्रूपा दृक्प्रकाशिनी ।। १०६

दिगन्तरा दिगन्तस्था दिगंबरविलासिनी।
दिगंबर समाजस्था दिगंबरप्रपूजिता ।। १०७

दिगंबर सहचरी दिगंबरकृतास्पदा।
दिगंबरहृतचित्ता दिगंबरकथाप्रिया ।। १०८

दिगम्बर गुणरता दिगम्बर स्वरूपिणी।
दिगम्बर शिरोधार्या दिगम्बरहृताश्रया ।। १०९

दिगम्बर प्रेमरता दिगम्बर रतातुरा।
दिगम्बरीस्वरूपा च दिगम्बरीगणार्चिता ।। ११०

दिगम्बरीगणप्राणा दिगम्बरीगणप्रिया।
दिगम्बरीगणाराध्या दिगम्बरगणेश्वरी ।। १११

दिगम्बरगणस्पर्श मदिरामानविह्वला।
दिगम्बरीकोटिवृता दिगम्बरीगणावृता ।। ११२

दुरन्ता दुष्कृतिहरा दुर्ध्येया दुरतिक्रमा।
दुरन्तदानवद्वेष्ट्री दुरन्तदनुजान्तकृत्॥ ११३

दुरन्तपापहन्त्री दस्रनिस्तारकारिणी।
दस्रमानससंस्थाना दस्रज्ञानविवर्धिनी॥ ११४

दस्रसंभोगजननी दस्रसंभोगदायिनी।
दस्रसंभोगभवना दस्रविद्याविधायिनी॥ ११५

दस्रोद्वेगहरा दस्रजननी दस्रसुन्दरी।
दस्रभक्तिविधानज्ञा दस्रद्विष्टविनाशिनी॥ ११६

दस्रापकारदमनी दस्रसिद्धिविधायिनी।
दस्रताराराधिता च दस्रमातृप्रपूजिता। ११७

दस्रदैन्यहरा चैव दस्रतातनिषेविता।
दस्रपितृशतज्योतिर्दस्रकौशलदायिनी॥ ११८

दशशीर्षारिसहिता दशशीर्षारिकामिनी।
दशशीर्षपुरी देवी दशशीर्षसभाजिता॥ ११९

दशशीर्षारिसुप्रीता दशशीर्षवधूप्रिया।
दशशीर्षशिरश्छेत्री दशशीर्षनितम्बिनी॥ १२०

दशशीर्षहरप्राणा दशशीर्षहरात्मिका।
दशशीर्षहराराध्या दशशीर्षारिवन्दिता॥ १२१

दशशीर्षारिसुखदा दशशीर्षकपालिनी।
दशशीर्षज्ञानदात्री दशशीर्षारिदेहिनी॥ १२२

दशशीर्षवधोपात्त श्रीरामचन्द्ररूपता।
दशशीर्षराष्ट्रदेवी दशशीर्षारिसारिणी॥ १२३

दशशीर्षभ्रातृतुष्टा दशशीर्षवधूप्रिया।
दशशीर्षवधूप्राणा दशशीर्षवधूरता॥ १२४

दैत्यगुरुरता साध्वी दैत्यगुरुप्रपूजिता।
दैत्यगुरूपदेष्ट्री च दैत्यगुरुनिषेविता॥ १२५

दैत्यगुरुमतप्राणा दैत्यगुरुतापनाशिनी।
दुरन्तदुःखशमनी दुरन्तदमनी तमी॥ १२६

दुरन्तशोकशमनी दुरन्तरोगनाशिनी।
दुरन्तवैरिदमनी दुरन्तदैत्यनाशिनी॥ १२७

दुरन्तकलुषघ्नी च दुष्कृतिस्तोमनाशिनी।
दुराशया दुराधारा दुर्जया दुष्टकामिनी॥ १२८

दर्शनीया च दृश्या चाऽदृश्या च दृष्टिगोचरा।
दूतीयागप्रिया दूती दूतीयागकरप्रिया॥ १२९

दूतीयागकरानन्दा दूतीयागसुखप्रदा।
दूतीयागकरायाता दूतीयागप्रमोदिनी॥ १३०

दुर्वासःपूजिता चैव दुर्वासोमुनिभाविता।
दुर्वासोऽर्च्चितपादा च दुर्वासो मौनभाविता॥ १३१

दुर्वासोमुनिवन्द्या च दुर्वासोमुनिदेवता।
दुर्वासोमुनिमाता च दुर्वासोमुनिसिद्धिदा॥ १३२

दुर्वासोमुनिभावस्था दुर्वासोमुनिसेविता।
दुर्वासोमुनिचित्तस्था दुर्वासोमुनिमण्डिता॥ १३३

दुर्वासोमुनिसंचारा दुर्वासोहृदयङ्गमा।
दुर्वासोहृदयाराध्या दुर्वासोहृत्सरोजगा॥ १३४

दुर्वासिस्तापसाराध्या दुर्वासिस्तापसाश्रया।
दुर्वासिस्तापसरता दुर्वासिस्तापसेश्वरी॥ १३५

दुर्वासोमुनिकन्या च दुर्वासोऽद्भुतसिद्धिदा।
दररात्री दरहरा दरयुक्ता दरापहा॥ १३६

दरघ्नी दरहन्त्री च दरयुक्ता दराश्रया।
दरस्मेरा दरापाङ्गी दया दात्री दयाश्रया।
दस्रपूज्या दस्रमाता दस्रदेवी दुरोन्मदा॥ १३७

दस्रसिद्धा दस्रसंस्था दस्रतापविमोचिनी।
दस्रक्षोभहरा नित्या दस्रलोकगलात्मिका॥ १३८

दैत्यगुर्वंगनावन्द्या दैत्यगुर्वङ्गनाप्रिया।
दैत्यगुर्वङ्गनासिद्धा दैत्यगुर्वङ्गनोत्सुका॥ १३९

दैत्यगुरुप्रियतमा देवगुरुनिषेविता।
देवगुरुप्रसूरूपा देवगुरुकृतार्हणा॥ १४०

देवगुरुप्रेमयुता देवगुर्वनुमानिता।
देवगुरुप्रभावज्ञा देवगुरुसुखप्रदा॥ १४१

देवगुरुज्ञानदात्री देवगुरुप्रमोदिनी।
दैत्यस्त्रीगणसंपूज्या दैत्यस्त्रीगणपूजिता॥ १४२

दैत्यस्त्रीगणरूपा च दैत्यस्त्रीचित्तहारिणी।
देवस्त्रीगणपूज्या च देवस्त्रीगणवन्दिता॥ १४३

देवस्त्रीगणचित्तस्था देवस्त्रीगणभूषिता।
देवस्त्रीगणसंसिद्धा देवस्त्रीगणतोषिता॥ १४४

देवस्त्रीगणहस्तस्थचारुचामरवीजिता।
देवस्त्रीगणहस्तस्थचारुगन्धविलेपिता॥ १४५

देवाङ्गनाधृतादर्शदृष्टचर्थसुखचन्द्रमाः ।
देवाङ्गनोत्सृष्टनागवल्लीदलकृतोत्सुका ।। १४६

देवस्त्रीगणहस्तस्थदीपमालाविलोकना ।
देवस्त्रीगणहस्तस्थधूपघ्राणविनोदिनी ।। १४७

देवनारीकरगतवासकासवपायिनी ।
देवनारीकङ्कतिकाकृतकेशनिमार्जना ।। १४८

देवनारीसेव्यगात्रा देवनारीकृतोत्सुका ।
देवनारीविरचितपुष्पमालाविराजिता ।। १४९

देवनारीविचित्राङ्गी देवस्त्रीदत्तभोजना ।
देवस्त्रीगणगीता च देवस्त्रीगीतसोत्सुका ।। १५०

देवस्त्रीनृत्यसुखिनी देवस्त्रीनृत्यदर्शिनी ।
देवस्त्रीयोजितलसद्रत्नपादुपदाम्बुजा ।। १५१

देवस्त्रीगणविस्तीर्णचारुतल्पनिषेदुषी ।
देवनारीचारुकराकलितांघ्र्यादिदेहिका ।। १५२

देवनारीकरव्यग्रतालवृन्दमरुत्सुखा ।
देवनारीवेणुवीणानादसोत्कण्ठमानसा ।। १५३

देवकोटिस्तुतिनुता देवकोटिकृतार्हणा ।
देवकोटिगीतगुणा देवकोटिकृतस्तुतिः ।। १५४

दन्तदष्टचोद्वेगफला देवकोलाहलाकुला ।
द्वेषरागपरित्यक्ता द्वेषरागविवर्जिता ।। १५५

दामपूज्या दामभूषा दामोदरविलासिनी ।
दामोदरप्रेमरता दामोदरभगिन्यपि ।। १५६

दामोदरप्रसूर्दामोदरपत्नीपतिव्रता।
दामोदराभिन्नदेहा दामोदररतिप्रिया॥ १५७

दामोदराभिन्नतनुर्दामोदरकृतास्पदा।
दामोदरकृतप्राणा दामोदरगतात्मिका॥ १५८

दामोदरकौतुकाढ्या दामोदरकलाकला।
दामोदरालिङ्गिताङ्गी दामोदरकुतूहला॥ १५९

दामोदरकृताह्लादा दामोदरसुचुम्बिता।
दामोदरसुताकृष्टा दामोदरसुखप्रदा॥ १६०

दामोदरसहाढ्या च दामोदरसहायिनी।
दामोदरगुणज्ञा च दामोदरवरप्रदा॥ १६१

दामोदरानुकूला च दामोदरनितम्बिनी।
दामोदरजलक्रीडाकुशला दर्शनप्रिया॥ १६२

दामोदरजलक्रीडात्यक्तस्वजनसौहृदा।
दामोदरलसद्रासकेलिकौतुकिनी तथा॥ १६३

दामोदरभ्रातृका च दामोदरपरायणा।
दामोदरधरा दामोदरवैरिविनाशिनी॥ १६४

दामोदरोपजाया च दामोदरनिमन्त्रिता।
दामोदरपराभूता दामोदरपराजिता॥ १६५

दामोदरसमाक्रान्ता दामोदरहताशुभा।
दामोदरोत्सवरता दामोदरोत्सवावहा॥ १६६

दामोदरस्तन्यदात्री दामोदरगवेषिता।
दमयन्तीसिद्धिदात्री दमयन्तीप्रसाधिता॥ १६७

दमयन्तीष्टदेवी च दमयन्तीस्वरूपिणी।
दमयन्तीकृतार्चा च दमनर्षिविभाविता॥ १६८

दमनर्षिप्राणतुल्या दमनर्षिस्वरूपिणी।
दमनर्षिस्वरूपा च दम्भपूरितविग्रहा॥ १६९

दम्भहन्त्री दम्भधात्री दम्भलोकविमोहिनी।
दम्भशीला दम्भहरा दम्भवत्परिमर्दिनी॥ १७०

दम्भरूपा दम्भकरी दम्भसन्तानदारिणी।
दत्तमोक्षा दत्तधना दत्तारोग्या च दाम्भिका॥ १७१

दत्तपुत्रा दत्तदारा दत्तहारा च दारिका।
दत्तभोगा दत्तशोका दत्तहस्त्यादिवाहना॥ १७२

दत्तमतिर्दत्तभार्या दत्तशास्त्रावबोधिका।
दत्तपाना दत्तदाना दत्तदारिद्र्यनाशिनी॥ १७३

दत्तसौधावनीवासा दत्तस्वर्गा च दासदा।
दास्यतुष्टा दास्यहरा दासदासीशतप्रदा॥ १७४

दाररूपा दारवासा दारवासिहृदास्पदा।
दारवासिजनाराध्या दारवासिजनप्रिया॥ १७५

दारवासिविनिर्णीता दारवासिसमर्चिता।
दारवास्याहृतप्राणा दारवास्यरिनाशिनी॥ १७६

दारवासिविघ्नहरा दारवासिविमुक्तिदा।
दाराग्निरूपिणी दारा दारकार्यरिनाशिनी॥ १७७

दम्पती दम्पतीष्टा च दम्पतीप्राणरूपिका।
दम्पतीस्नेहनिरता दाम्पत्यसाधनप्रिया॥ १७८

दाम्पत्यसुखसेना च दाम्पत्यसुखदायिनी।
दम्पत्याचारनिरता दम्पत्यामोदमोदिता ॥ १७९

दम्पत्यामोदसुखिनी दाम्पत्याह्लादकारिणी।
दम्पतीष्टपादपद्मा दाम्पत्यप्रेमरूपिणी ॥ १८०

दाम्पत्यभोगभवना दाडिमीफलभोजिनी।
दाडिमीफलसंतुष्टा दाडिमीफलमानसा ॥ १८१

दाडिमीवृक्षसंस्थाना दाडिमीवृक्षवासिनी।
दाडिमीवृक्षरूपा च दाडिमीवनवासिनी ॥ १८२

दाडिमीफलसाम्योरुपयोधरसमन्विता।
दक्षिणा दक्षिणारूपा दक्षिणारूपधारिणी ॥ १८३

दक्षकन्या दक्षपुत्री दक्षमाता च दक्षसूः।
दक्षगोत्रा दक्षसुता दक्षयज्ञविनाशिनी ॥ १८४

दक्षयज्ञनाशकर्त्री दक्षयज्ञान्तकारिणी।
दक्षप्रसूतिर्दक्षेज्या दक्षवंशैकपावनी ॥ १८५

दक्षात्मजा दक्षसूनुर्दक्षजा दक्षजातिका।
दक्षजन्मा दक्षजनुर्दक्षदेहसमुद्भवा ॥ १८६

दक्षजनिर्दक्षयागध्वंसिनी दक्षकन्यका।
दक्षिणाचारनिरता दक्षिणाचारतुष्टिदा ॥ १८७

दक्षिणाचारसंसिद्धा दक्षिणाचारभाविता।
दक्षिणाचारसुखिनी दक्षिणाचारसाधिता ॥ १८८

दक्षिणाचारमोक्षाप्तिर्दक्षिणाचारवन्दिता।
दक्षिणाचारशरणा दक्षिणाचारहर्षिता ॥ १८९

द्वारपालप्रिया द्वारवासिनी द्वारसंस्थिता।
द्वाररूपा द्वारसंस्था द्वारदेशनिवासिनी ॥ १९०

द्वारकरी द्वारधात्री दोषमात्रविवर्जिता।
दोषाकरा दोषहरा दोषराशिविनाशिनी ॥ १९१

दोषाकरविभूषाढ्या दोषाकरकपालिनी।
दोषाकरसहस्राभा दोषाकरसमानना ॥ १९२

दोषाकरमुखी दिव्या दोषाकरकराग्रजा।
दोषाकरसमज्योतिर्दोषाकरसुशीतला ॥ १९३

दोषाकरश्रेणी दोषासदृशापाङ्गवीक्षणा।
दोषाकरेष्टदेवी च दोषाकरनिषेविता ॥ १९४

दोषाकरप्राणरूपा दोषाकरमरीचिका।
दोषाकरोल्लसद्भाला दोषाकरसुहर्षिणी ॥ १९५

दोषाकरशिरोभूषा दोषाकरवधूप्रिया।
दोषाकरवधूप्राणा दोषाकरवधूमता ॥ १९६

दोषाकरवधूप्रीता दोषाकरवधूरपि।
दोषापूज्या तथा दोषापूजिता दोषहारिणी ॥ १९७

दोषाजापमहानन्दा दोषाजापपरायणा।
दोषापुरश्चाररता दोषापूजकपुत्रिणी ॥ १९८

दोषापूजकवात्सल्यकारिणी जगदम्बिका।
दोषापूजकवैरिघ्नी दोषापूजकविघ्नहृत् ॥ १९९

दोषापूजकसंतुष्टा दोषापूजकमुक्तिदा।
दमप्रसूनसंपूज्या दमपुष्पप्रिया सदा ॥ २००

दुर्योधनप्रपूज्या च दुःशासनसमर्चिता।
दण्डपाणिप्रिया दण्डपाणिमाता दयानिधिः ॥ २०१

दण्डपाणिसमाराध्या दण्डपाणिप्रपूजिता।
दण्डपाणिगृहासक्ता दण्डपाणिप्रियंवदा ॥ २०२

दण्डपाणिप्रियतमा दण्डपाणिमनोहरा।
दण्डपाणिहृतप्राणा दण्डपाणिसुसिद्धिदा ॥ २०३

दण्डपाणिपरामृष्टा दण्डपाणिप्रहर्षिता।
दण्डपाणिविघ्नहरा दण्डपाणिशिरोधृता ॥ २०४

दण्डपाणिप्राप्तचर्चा दण्डपाण्युन्मुखी सदा।
दण्डपाणिप्राप्तपदा दण्डपाणिवरोन्मुखी ॥ २०५

दण्डहस्ता दण्डपाणिर्दण्डबाहुर्दरान्तकृत्।
दण्डदोष्का दण्डकरा दण्डचित्तकृतास्पदा ॥ २०६

दण्डिविद्या दण्डिमाता दण्डिखण्डकनाशिनी।
दण्डिप्रिया दण्डिपूज्या दण्डिसन्तोषदायिनी ॥ २०७

दस्युपूज्या दस्युरता दस्युद्रविणदायिनी।
दस्युगर्वकृतार्हा च दस्युवर्गविनाशिनी ॥ २०८

दस्युनिर्णाशिनी दस्युकुलनिर्णाशिनी तथा।
दस्युप्रियकरी दस्युनृत्यदर्शनतत्परा ॥ २०९

दुष्टदण्डकरी दुष्टवर्गविद्राविणी तथा।
दुष्टगर्वनिग्रहार्हा दूषकप्राणनाशिनी ॥ २१०

दूषकोत्तापजननी दूषकारिष्टकारिणी।
दूषकद्वेषणकरी दाहिका दहनात्मिका ॥ २११

दारुकारिनिहन्त्री च दारुकेश्वरपूजिता।
दारुकेश्वरमाता च दारुकेश्वरवन्दिता ॥ २१२

दर्भहस्ता दर्भयुता दर्भकर्मविवर्जिता।
दर्भमयी दर्भतनुर्दर्भसर्वस्वरूपिणी ॥ २१३

दर्भकर्माचाररता दर्भहस्तकृतार्हणा।
दर्भानुकूला दाम्भर्या दर्वीपात्रानुदामिनी ॥ २१४
दमघोषप्रपूज्या च दमघोषवरप्रदा।
दमघोषसमाराध्या दावाग्निरूपिणी तथा। २१५

दावाग्निरूपा दावाग्निनिर्णाशितमहाबला।
दन्तदंष्ट्रासुरकला दन्तचर्चितहस्तिका ॥ २१६

दन्तदंष्ट्रस्यन्दना च दन्तनिर्णाशितासुरा।
दधिपूज्या दधिप्रीता दधीचिवरदायिनी ॥ २१७

दधीचीष्टदेवता च दधीचिमोक्षदायिनी।
दधीचिदैन्यहन्त्री च दधीचिदरदारिणी ॥ २१८

दधीचिभक्तिसुखिनी दधीचिमुनिसेविता।
दधीचिज्ञानदात्री च दधीचिगुणदायिनी ॥ २१९

दधीचिकुलसंभूषा दधीचिभुक्तिमुक्तिदा।
दधीचिकुलदेवी च दधीचिकुलदेवता ॥ २२०

दधीचिकुलगम्या च दधीचिकुलपूजिता।
दधीचिसुखदात्री च दधीचिदैन्यहारिणी ॥ २२१

दधीचिदुःखहन्त्री च दधीचिकुलसुन्दरी।
दधीचिकुलसंभूता दधीचिकुलपालिनी ॥ २२२

दधीचिदानगम्या च दधीचिदानमानिनी।
दधीचिदानसंतुष्टा दधीचिदानदेवता ॥ २२३

दधीचिजपसंप्रीता दधीचिजपमानसा।
दधीचिजपपूजाढ्या दधीचिजपमालिका ॥ २२४

दधीचिजपसंतुष्टा दधीचिजपतोषिणी।
दधीचितपसाराध्या दधीचिशुभदायिनी ॥ २२५

दूर्वा दूर्वादलश्यामा दूर्वादलसमद्युतिः।
नाम्नां सहस्रं दुर्गाया दादीनामिति कीर्तितम् ॥ २२६

यः पठेत् साधकाधीशः सर्वसिद्धीर्लभेत्तु सः।
प्रातर्मध्याह्नकाले च संध्यायां नियतः शुचिः ॥ २२७

तथाऽर्धरात्रसमये स महेश इवापरः।
शक्तियुक्तो महारात्रौ महावीरः प्रपूजयेत् ॥ २२८

महादेवीं मकाराद्यैः पञ्चभिर्द्रव्यसत्तमैः।
यः संपठेत् स्तुतिमिमां स च सिद्धिस्वरूपधृक् ॥ २२९

देवालये श्मशाने च गङ्गातीरे निजे गृहे।
वाराङ्गनागृहे चैव श्रीगुरोः सन्निधावपि ॥ २३०

पर्वते प्रान्तरे घोरे स्तोत्रमेतत् सदा पठेत्।
दुर्गानामसहस्रं हि दुर्गां पश्यति चक्षुषा ॥ २३१

शतावर्तनमेतस्य पुरश्चरणमुच्यते।
स्तुतिसारो निगदितः किं भूयः श्रोतुमिच्छसि ॥ २३२

—कुलार्णवतः

—*—

# दकारादिदुर्गासहस्रनामावलिः - ३

ओं ऐं ह्रीं क्लीं दुं । दुं दुर्गायै नमः । दुर्गतिहरायै । दुर्गाचलनिवासिन्यै । दुर्गमार्गानुसञ्चारायै । दुर्गमार्गनिवासिन्यै । दुर्गमार्गप्रविष्टायै । दुर्गमार्गप्रवेशिन्यै । दुर्गमार्गकृतावासायै । दुर्गमार्गजयप्रियायै । दुर्गमार्गगृहीतार्चायै । दुर्गमार्गस्थितात्मिकायै । दुर्गमार्गस्तुतिपरायै । दुर्गमार्गस्मृत्यै परायै । दुर्गमार्गसदास्थाल्यै । दुर्गमार्गरतिप्रियायै । दुर्गमार्गस्थलस्थानायै । दुर्गमार्गविलासिन्यै । दुर्गमार्गत्यक्तवस्त्रायै । दुर्गमार्गप्रवर्तिन्यै । दुर्गासुरनिहन्त्र्यै नमः । २०

ओं दुर्गदुष्टनिषूदिन्यै नमः । दुर्गासुरहरायै । दूत्यै । दुर्गासुरविनाशिन्यै । दुर्गासुरवधोन्मत्तायै । दुर्गासुरवधोत्सुकायै । दुर्गासुरवधोत्साहायै । दुर्गासुरवधोद्यतायै । दुर्गासुरवधप्रेप्सवे । दुर्गासुरमखान्तकृते । दुर्गासुरध्वंसतोषायै । दुर्गदानवदारिण्यै । दुर्गविद्रावणकर्यै । सदा दुर्गविद्राविण्यै । दुर्गविक्षोभणकर्यै । दुर्गशीर्षनिकृन्तिन्यै । दुर्गदैत्यनिकृन्तिन्यै । दुर्गविध्वंसनकर्यै । दुर्गदैत्यप्राणहरायै । दुर्गदैत्यान्तकारिण्यै नमः । ४०

ओं दुर्गदैत्यहरत्रात्रे । दुर्गदैत्यासृगुन्मदायै । दुर्गदैत्याशनकर्यै । दुर्गचर्माम्बरावृतायै । दुर्गयुद्धोत्सवकर्यै । दुर्गयुद्धविशारदायै । दुर्गयुद्धासवरतायै । दुर्गयुद्धविमर्दिन्यै । दुर्गयुद्धहास्यरतायै । दुर्गयुद्धाट्टहासिन्यै । दुर्गयुद्धमहामत्तायै । दुर्गयुद्धानुसारिण्यै । दुर्गयुद्धोत्सवोत्साहायै । दुर्गदेशनिषेविण्यै । दुर्गदेशवासरतायै । दुर्गदेशविलासिन्यै । दुर्गदेशार्चनरतायै । दुर्गदेशजनप्रियायै । दुर्गमस्थानसंस्थानायै । दुर्गमध्यानुसाधनायै नमः । ६०

ओं दुर्गमायै नमः । दुर्गमध्यानायै । दुर्गमात्मस्वरूपिण्यै । दुर्गमागमसन्धानायै । दुर्गमागमसंस्तुतायै । दुर्गमागमदुर्ज्ञेयायै । दुर्गमश्रुतिसंमतायै । दुर्गमश्रुतिमान्यायै । दुर्गमश्रुतिपूजितायै । दुर्गमश्रुतिप्रीतायै । दुर्गमश्रुतिहर्षदायै । दुर्गमश्रुतिसंस्थानायै । दुर्गमश्रुतिमानितायै । दुर्गमाचारसन्तुष्टायै । दुर्गमाचारतोषितायै । दुर्गमाचारनिर्वृत्तायै । दुर्गमाचारपूजितायै । दुर्गमाचारकलितायै । दुर्गमस्थानदायिन्यै । दुर्गमप्रेमनिरतायै नमः । ८०

ओं दुर्गमद्रविणप्रदायै नमः । दुर्गमाम्बुजमध्यस्थायै । दुर्गमाम्बुजवासिन्यै । दुर्गनाडीमार्गगत्यै । दुर्गनाडीप्रचारिण्यै । दुर्गनाडीपद्मरतायै । दुर्गनाड्यम्बुजस्थितायै । दुर्गनाडीगतायातायै । दुर्गनाडीकृतास्पदायै । दुर्गनाडीरतरतायै । दुर्गनाडीशसंस्तुतायै । दुर्गनाडीश्वररतायै । दुर्गनाडीशचुम्बितायै । दुर्गनाडीशक्रोडस्थायै । दुर्गनाड्युत्थितोत्सुकायै । दुर्गनाड्यारोहणायै । दुर्गनाडीनिषेवितायै । दरिस्थानायै । दरिस्थानवासिन्यै । दनुजान्तकृते नमः । १००

ओं दरीकृततपस्यायै नमः । दरीकृतहरार्चनायै । दरीजापितदिष्टायै । दरीकृतरतिक्रियायै । दरीकृतहरार्हायै । दरीक्रीडितपुत्रिकायै । दरीसन्दर्शनरतायै । दरीरोपितवृश्चिकायै । दरीगुप्तिकौतुकाढ्यायै । दरीभ्रमणतत्परायै । दनुजान्तकर्यै । दीनायै । दनुसन्तानदारिण्यै । दनुजध्वंसिन्यै । दीनायै । दनुजेन्द्रविनाशिन्यै । दानवध्वंसिन्यै । देव्यै । दानवानां भयङ्कर्यै । दानव्यै नमः । १२०

ओं दानवाराध्यायै । दानवेन्द्रवरप्रदायै । दानवेन्द्रनिहन्त्र्यै । दानवद्वेषिण्यै सत्यै । दानवारिप्रेमरतायै दानवारिप्रपूजितायै । दानवारिकृतार्चायै । दानवारिविभूतिदायै । दानवारिमहानन्दायै । दानवारिरतिप्रियायै । दानवारिदानरतायै । दानवारिकृतास्पदायै ।

दानवारिस्तुतिरतायै। दानवारिस्मृतिप्रियायै। दानवार्याहाररतायै। दानवारिप्रबोधिन्यै। दानवारिधृतप्रेमायै। दुःखशोकविमोचिन्यै। दुःखहन्त्र्यै। दुःखदात्र्यै नमः। १४०

ओं दुःखनिर्मूलकारिण्यै नमः। दुःखनिर्मूलनकर्यै। दुःखदाय्यरिनाशिन्यै। दुःखहरायै। दुःखनाशायै। दुःखग्रामायै। दुरासदायै। दुःखहीनायै। दुःखधीरायै। द्रविणाचारदायिन्यै। द्रविणोत्सर्गसन्तुष्टायै। द्रविणत्यागतोषिकायै। द्रविणस्पर्शसन्तुष्टायै। द्रविणस्पर्शमानदायै। द्रविणस्पर्शहर्षाढ्यायै। द्रविणस्पर्शतुष्टिदायै। द्रविणस्पर्शनकर्यै। द्रविणस्पर्शनोतुरायै। द्रविणस्पर्शनात्साहायै। द्रविणस्पर्शसाधितायै नमः। १६०

ओं द्रविणस्पर्शनमतायै नमः। द्रविणस्पर्शपुत्रिकायै। द्रविणस्पर्शरक्षिण्यै। द्रविणस्तोमदायिन्यै। द्रविणाकर्षणकर्यै। द्रविणौघविसर्जिन्यै। द्रविणाचलदानाढ्यायै। द्रविणाचलवासिन्यै। दीनमात्रे। दीनबन्धवे। दीनविघ्नविनाशिन्यै। दीनसेव्यायै। दीनसिद्धायै। दीनसाध्यायै। दिगम्बर्यै। दीनगेहकृतानन्दायै। दीनगेहविलासिन्यै। दीनभावप्रेमरतायै। दीनभावविनोदिन्यै। दीनमानवचेतःस्थायै नमः। १८०

ओं दीनमानवहर्षदायै नमः। दीनदैन्यविघातेच्छवे। दीनद्रविणदायिन्यै। दीनसाधनसंतुष्टायै। दीनदर्शनदायिन्यै। दीनपुत्रादिदात्र्यै। दीनसम्पद्विधायिन्यै। दत्तात्रेयध्यानरतायै। दत्तात्रेयप्रपूजितायै। दत्तात्रेयर्षिसंसिद्धायै। दत्तात्रेयविभावितायै। दत्तात्रेयकृताहार्यै। दत्तात्रेयप्रसाधितायै। दत्तात्रेयहर्षदात्र्यै। दत्तात्रेयसुखप्रदायै। दत्तात्रेयस्तुतायै। सदा दत्तात्रेयनुतायै। दत्तात्रेयप्रेमरतायै। दत्तात्रेयानुमानितायै। दत्तात्रेयसमुद्गीतायै नमः। २००

ओं दत्तात्रेयकुटुम्बिन्यै । दत्तात्रेयप्राणतुल्यायै । दत्तात्रेयशरीरिण्यै । दत्तात्रेयकृतानन्दायै । दत्तात्रेयांशसंभवायै । दत्तात्रेयविभूतिस्थायै । दत्तात्रेयानुसारिण्यै । दत्तात्रेयगीतिरतायै । दत्तात्रेयधनप्रदायै । दत्तात्रेयदुःखहरायै । दत्तात्रेयवरप्रदायै । दत्तात्रेयज्ञानदात्र्यै । दत्तात्रेयभयापहायै । देवकन्यायै । देवमान्यायै । देवदुःखविनाशिन्यै । देवसिद्धायै । देवपूज्यायै । देवेज्यायै । देववन्दितायै नमः । २२०

ओं देवमान्यायै नमः । देवधन्यायै । देवविघ्नविनाशिन्यै । देवरम्यायै । देवरतायै । देवकौतुकतत्परायै । देवक्रीडायै । देवव्रीडायै । देववैरिविनाशिन्यै । देवकामायै । देवरामायै । देवद्विष्टविनाशिन्यै । देवदेवप्रियायै । देव्यै । देवदानववन्दितायै । देवदेवरतानन्दायै । देवदेववरोत्सुकायै । देवदेवप्रेमरतायै । देवदेवप्रियंवदायै । देवदेवप्राणतुल्यायै नमः । २४०

ओं देवदेवनितम्बिन्यै नमः । देवदेवहृतमनसे । देवदेवसुखावहायै । देवदेवक्रोडरतायै । देवदेवसुखप्रदायै । देवदेवमहानन्दायै । देवदेवप्रचुम्बितायै । देवदेवोपभुक्तायै । देवदेवानुसेवितायै । देवदेवगतप्राणायै । देवदेवगतात्मिकायै । देवदेवहर्षदात्र्यै । देवदेवसुखप्रदायै । देवदेवमहानन्दायै । देवदेवविलासिन्यै । देवदेवधर्मपत्न्यै । देवदेवमनोगतायै । देवदेववध्वै देव्यै । देवदेवार्चनप्रियायै । देवदेवाङ्कनिलयायै नमः । २६०

ओं देवदेवाङ्गशायिन्यै । देवदेवाङ्गसुखिन्यै । देवदेवाङ्गवासिन्यै । देवदेवाङ्गभूषायै । देवदेवाङ्गभूषणायै । देवदेवप्रियकर्यै । देवदेवाप्रियान्तकृते । देवदेवप्रियप्राणायै । देवदेवप्रियात्मिकायै । देवदेवार्चकप्राणायै । देवदेवार्चकप्रियायै ।

देवदेवार्चकोत्साहायै । देवदेवार्चकाश्रयायै । देवदेवार्चकाविघ्नायै । देवदेवप्रस्वे । देवदेवस्य जनन्यै । देवदेवविधायिन्यै । देवदेवस्य रमण्यै । देवदेवहृदाश्रयायै । देवदेवेष्टदेव्यै नमः । २८०

ओं देवतापसपातिन्यै नमः । देवताभावसन्तुष्टायै । देवताभावतोषितायै । देवताभाववरदायै । देवताभावसिद्धिदायै । देवताभावसंसिद्धायै । देवताभावसंभवायै । देवताभावसुखिन्यै । देवताभाववन्दितायै ।देवताभावसुप्रीतायै । देवताभावहर्षदायै । देवताविघ्नहन्त्र्यै । देवताद्विष्टनाशिन्यै । देवतापूजितपदायै । देवताप्रेमतोषितायै । देवतागारनिलयायै । देवतासौख्यदायिन्यै । देवतानिजभावायै । देवताहृतमानसायै । देवताकृतपादार्च्यै नमः । ३००

ओं देवताहृतभक्तिकायै नमः । देवतागर्वमध्यस्थायै । देवतायै । देवतातनवे । दुं दुर्गायै । नमोन्नाङ्ग्यै । दुं फट् मन्त्रस्वरूपिण्यै । दूं नमोमन्त्ररूपायै । दूं नमोमूर्तिकात्मिकायै । दूरदर्शिप्रियायै । दुष्टायै । दुष्टभूतनिषेवितायै । दूरदर्शिप्रेमरतायै । दूरदर्शिप्रियंवदायै । दूरदर्शिसिद्धिधात्र्यै । दूरदर्शिप्रतोषितायै । दूरदर्शिकण्ठसंस्थायै । दूरदर्शिप्रहर्षितायै । दूरदर्शिगृहीतार्च्यै । दूरदर्शिप्रतर्पितायै नमः । ३२०

ओं दूरदर्शिप्राणतुल्यायै नमः । दूरदर्शिसुखप्रदायै । दूरदर्शिभ्रान्तिहरायै । दूरदर्शिहृदास्पदायै । दूरदश्यरिविद्भावायै । दीर्घदर्शिप्रमोदिन्यै । दीर्घदर्शिप्राणतुल्यायै । दीर्घदर्शिवरप्रदायै । दीर्घदर्शिहर्षदात्र्यै । दीर्घदर्शिप्रहर्षितायै। दीर्घदर्शिमहानन्दायै । दीर्घदर्शिगृहालयायै । दीर्घदर्शिगृहीतार्च्यै । दीर्घदर्शिहृतार्हणायै । दयायै । दानवत्यै । दात्र्यै । दयालवे । दीनवत्सलायै । दयार्द्रायै नमः । ३४०

ओं दयाशीलायै नमः । दयाढ्यायै । दयात्मिकायै । दयायै । दानवत्यै । दात्र्यै । दयालवे । दीनवत्सलायै । दयार्द्रायै । दयाशीलायै । दयाढ्यायै । दयात्मिकायै। दयाम्बुधये। दयासारायै। दयासागरपारगायै। दयासिन्धवे। दयाभारायै। दयावत्करुणाकर्यै। दयावद्वत्सलायै। देव्यै नमः । ३६०

ओं दयायै नमः । सदा दानरतायै । दयावद्भक्तिसुखिन्यै । दयावत्परितोषितायै। दयावत्स्नेहनिरतायै। दयावत्प्रतिपादिकायै। दयावत्त्राणकर्त्र्यै । दयावन्मुक्तिदायिन्यै । दयावद्भावसन्तुष्टायै । दयावत्परितोषितायै। दयावत्तारणपरायै। दयावत्सिद्धिदायिन्यै। दयावत्पुत्रवद्भावायै । दयावत्पुत्ररूपिण्यै । दयावद्देहनिलयायै । दयाबन्धवे । दयाश्रयायै । दयालुवात्सल्यकर्यै । दयालुसिद्धि-दायिन्यै । दयालुशरणासक्तायै नमः । ३८०

ओं दयालुदेहमन्दिरायै नमः । दयालुभक्तिभावस्थायै । दयालुप्राणरूपिण्यै। दयालुसुखदायै। दम्भायै। दयालुप्रेमवर्षिण्यै । दयालुवशगायै। दीर्घायै। दीर्घाङ्ग्यै। दीर्घलोचनायै। दीर्घनेत्रायै। दीर्घचक्षुषे । दीर्घबाहुलतात्मिकायै । दीर्घकेश्यै । दीर्घमुख्यै । दीर्घघोणायै। दारुणायै। दारुणासुरहन्त्र्यै। दारुणासुरदारिण्यै। दारुणाहवकर्त्र्यै नमः । ४००

ओं दारुणाहवहर्षितायै नमः । दारुणाहवहोमाढ्यायै । दारुणाचलनाशिन्यै। दारुणाचारनिरतायै। दारुणोत्सवहर्षितायै। दारुणोद्यतरूपायै । दारुणारिनिवारिण्यै । दारुणेक्षणसंयुक्तायै । दोश्चतष्कविराजितायै। दशदोष्कायै। दशभुजायै। दशबाहुविराजि-तायै । दशास्त्रधारिण्यै । देव्यै । दशदिक्ख्यातविक्रमायै । सदा दशरथार्चितपदायै। दाशरथिप्रियायै। दाशरथिप्रेमतुष्टायै। दाशरथिरतिप्रियायै । दाशरथिप्रियकर्यै नमः। ४२०

ओं दाशरथिप्रियम्वदायै नमः । दाशरथीष्टसंदात्र्यै । दाशरथीष्टदेवतायै । दाशरथिद्वेषिनाशायै । दाशरथ्यानुकूल्यदायै । दाशरथिप्रियतमायै । दाशरथिप्रपूजितायै । दशाननारिसम्पूज्यायै । दशाननारिदेवतायै । दशाननारिप्रमदायै । दशाननारिजन्मभुवे । दशाननारिरतिदायै । दशाननारिसेवितायै । दशाननारिसुखदायै । दशाननारिवैरिहृते । दशाननारीष्टदेव्यै । दशग्रीवारिवन्दितायै । दशग्रीवारिजनन्यै । दशग्रीवारिभाविन्यै । दशग्रीवारिसहितायै नमः । ४४०

ओं दशग्रीवसभाजितायै नमः । दशग्रीवारिरमण्यै । दशग्रीववध्वे । दशग्रीवनाशकर्त्र्यै । दशग्रीववरप्रदायै । दशग्रीवपुरस्थायै । दशग्रीववधोत्सुकायै । दशग्रीवप्रीतिदात्र्यै । दशग्रीवविनाशिन्यै । दशग्रीवाहवकर्यै । दशग्रीवानपायिन्यै । दशग्रीवप्रियावन्द्यायै । दशग्रीवहृतायै । दशग्रीवाहितकर्यै । दशग्रीवेश्वरप्रियायै । दशग्रीवेश्वरप्राणायै । दशग्रीववरप्रदायै । दशग्रीवेश्वररतायै । दशवर्षीयकन्यकायै । दशवर्षीयबालायै नमः । ४६०

ओं दशवर्षीयवासिन्यै नमः । दशपापहरायै । दम्यायै । दशहस्तविभूषितायै । दशशस्त्रलसद्दोष्कायै । दशदिक्पालवन्दितायै । दशावताररूपायै । दशावताररूपिण्यै । दशविद्याभिन्नदेव्यै । दशप्राणस्वरूपिण्यै । दशविद्यास्वरूपायै । दशविद्यामय्यै । दृक्स्वरूपायै । दृक्प्रदात्र्यै । दृग्रूपायै । दृक्प्रकाशिन्यै । दिगन्तरायै । दिगन्तस्थायै । दिगम्बरविलासिन्यै । दिगम्बरसमाजस्थायै नमः । ४८०

ओं दिगम्बरप्रपूजितायै। दिगम्बरसहचर्यै। दिगम्बरकृतास्पदायै। दिगम्बरहृतचित्तायै। दिगम्बरकथाप्रियायै। दिगम्बरगुणरतायै। दिगम्बरस्वरूपिण्यै। दिगम्बरशिरोधार्यायै। दिगम्बरहृताश्रयायै। दिगम्बरप्रेमरतायै। दिगम्बररतातुरायै। दिगम्बरस्वरूपायै। दिगम्बरीगणार्चितायै। दिगम्बरीगणप्राणायै। दिगम्बरीगणप्रियायै। दिगम्बरीगणाराध्यायै। दिगम्बरगणेश्वर्यै। दिगम्बरगणस्पर्शमदिरापानविह्वलायै दिगम्बरीकोटिवृतायै। दिगम्बरीगणवृतायै नमः। ५००

ओं दुरन्तायै। दुष्कृतिहरायै। दुर्ध्येयायै। दुरतिक्रमायै। दुरन्तदानवद्वेष्ट्र्यै। दुरन्तदनुजान्तकृते। दुरन्तपापहन्त्र्यै। दस्रनिस्तारकारिण्यै। दस्रमानससंस्थानायै। दस्रज्ञानविवर्धिन्यै। दस्रसंभोजनन्यै। दस्रसंभोगदायिन्यै। दस्रसंभोगभवनायै। दस्रविद्याविधायिन्यै। दस्रोद्वेगहरायै। दस्रजनन्यै। दस्रसुन्दर्यै। दस्रभक्तिविधानज्ञायै। दस्रद्विष्टविनाशिन्यै। दस्रापकारदमन्यै नमः। ५२०

ओं दस्रसिद्धिविधायिन्यै नमः। दस्रताराराधितायै। दस्रमातृप्रपूजितायै। दस्रदैन्यहरायै। दस्रतातनिषेवितायै। दस्रपितृशतज्योतिषे। दस्रकौशलदायिन्यै। दशशीर्षारिसहितायै। दशशीर्षारिकामिन्यै। दशशीर्षपुर्यै। देव्यै। दशशीर्षसभाजितायै। दशशीर्षारिसुप्रीतायै। दशशीर्षवधूप्रियायै। दशशीर्षशिरश्छेत्र्यै। दशशीर्षनितम्बिन्यै। दशशीर्षहरप्राणायै। दशशीर्षहरात्मिकायै। दशशीर्षहराराध्यायै। दशशीर्षारिवन्दितायै नमः। ५४०

ओं दशशीर्षारिसुखदायै नमः। दशशीर्षकपालिन्यै। दशशीर्षज्ञानदात्र्यै। दशशीर्षारिदेहिन्यै। दशशीर्षवधोपात्त

श्रीरामचन्द्ररूपतायै । दशशीर्षराष्ट्रदेव्यै । दशशीर्षारिसारिण्यै । दशशीर्षभ्रातृतुष्टायै । दशशीर्षवधूप्रियायै । दशशीर्षवधूप्राणायै । दशशीर्षवधूरतायै । दैत्यगुरुरतायै साध्व्यै । दैत्यगुरुप्रपूजितायै । दैत्यगुरुपदेष्ट्र्यै । दैत्यगुरुनिषेवितायै । दैत्यगुरुमतप्राणायै । दैत्यगुरुतापनाशिन्यै । दुरन्तदुःखशमन्यै । दुरन्तदमनीतम्यै । दुरन्तशोकशमन्यै नमः । ५६०

ओं दुरन्तरोगनाशिन्यै । दुरन्तवैरिदमन्यै । दुरन्तदैत्य-नाशिन्यै । दुरन्तकलुषघ्न्यै । दुष्कृतिस्तोमनाशिन्यै । दुराशयायै । दुराधारायै । दुर्जयायै । दुष्टकामिन्यै । दर्शनीयायै । दृश्यायै । अदृश्यायै । दृष्टिगोचरायै । दूतीयागप्रियायै । दूत्यै । दूतीयागकरप्रियायै । दूतीयागकरानन्दायै । दूतीयागसुखप्रदायै । दूतीयागकरायातायै । दूतीयागप्रमोदिन्यै नमः । ५८०

ओं दुर्वासः पूजितायै नमः । दुर्वासोमुनिभावितायै । दुर्वासोऽर्चितपादायै । दुर्वासोमौनभावितायै । दुर्वासोमुनिवन्द्यायै । दुर्वासोमुनिदेवतायै । दुर्वासोमुनिमात्रे । दुर्वासोमुनिसिद्धिदायै । दुर्वासोमुनिभावस्थायै । दुर्वासोमुनिसेवितायै । दुर्वासोमुनिचित्त-स्थायै । दुर्वासोमुनिमण्डितायै । दुर्वासोमुनिसञ्चारायै । दुर्वासो-हृदयङ्गमायै । दुर्वासोहृदयाराध्यायै । दुर्वासोहृत्सरोजगायै । दुर्वासस्तापसाराध्यायै । दुर्वासस्तापसाश्रयायै । दुर्वासस्ताप-सरतायै । दुर्वासस्तापसेश्वर्यै नमः । ६००

ओं दुर्वासोमुनिकन्यायै नमः । दुर्वासोऽद्भुतसिद्धिदायै नमः । दररात्र्यै । दरहरायै । दरयुक्तायै । दरापहायै । दरघ्न्यै । दरहन्त्र्यै । दरयुक्तायै । दराश्रयायै । दरस्मेरायै । दरापाङ्ग्यै । दयादात्र्यै । दयाश्रयायै । दस्रपूज्यायै । दस्रमात्रे । दस्रदेव्यै । दुरोन्मदायै । दस्रसिद्धायै । दस्रसंस्थायै नमः । ६२०

ओं दस्रतापविमोचिन्यै । दस्रक्षोभहरायै नित्यायै । दस्रलोकगतात्मिकायै। दैत्यगुर्वङ्गनावन्द्यायै। दैत्यगुर्वङ्गनाप्रियायै । दैत्यगुर्वङ्गनासिद्धायै। दैत्यगुर्वङ्गनोत्सुकायै। दैत्यगुरुप्रियतमायै। देवगुरुनिषेवितायै । देवगुरुप्रसूरूपायै । देवगुरुकृतार्हणायै । देवगुरुप्रेमयुतायै । देवगुरुर्वनुमानितायै । देवगुरुप्रभावज्ञायै । देवगुरुसुखप्रदायै । देवगुरुज्ञानदात्र्यै । देवगुरुप्रमोदिन्यै । दैत्यस्त्रीगणसम्पूज्यायै। दैत्यस्त्रीगणपूजितायै। दैत्यस्त्रीगणरूपायै नमः ॥ ६४०

ओं दैत्यस्त्रीचित्तहारिण्यै नमः । देवस्त्रीगणपूज्यायै । देवस्त्रीगणवन्दितायै। देवस्त्रीगणचित्तस्थायै। देवस्त्रीगणभूषितायै । देवस्त्रीगणसंसिद्धायै। देवस्त्रीगणतोषितायै। देवस्त्रीगणहस्तस्थ-चारुचामरवीजितायै । देवस्त्रीगणहस्तस्थचारुगन्धविलेपितायै । देवाङ्गनाधृतादर्शदृष्टचर्थमुखचन्द्रमसे । देवाङ्गनोत्सृष्टनागवल्ली-दलकृतोत्सुकायै । देवस्त्रीगणहस्तस्थदीपमालाविलोकनायै । देवस्त्रीगणहस्तस्थधूपघ्राणविनोदिन्यै । देवनारीकरगतवासका-सवपायिन्यै । देवनारीकङ्कतिकाकृतकेशनिमार्जनायै । देवनारी-सेव्यगात्रायै । देवनारीकृतोत्सुकायै । देवनारीविरचितपुष्प-मालाविराजितायै। देवनारीविचित्राङ्ग्यै। देवस्त्रीदत्तभोजनायै नमः । ६६०

ओं देवस्त्रीगणगीतायै नमः । देवस्त्रीगीतसोत्सुकायै । देवस्त्रीनृत्यसुखिन्यै। देवस्त्रीनृत्यदर्शिन्यै। देवस्त्रीयोजितलसद्रत्न-पादपदाम्बुजायै । देवस्त्रीगणविस्तीर्णचारुतल्पनिषेदुष्यै । देवनारीचारुकराकलिताङ्घ्र्यादिदेहिकायै । देवनारीकरव्यग्रता-लवृन्दमरुत्सुखायै । देवनारीवेणुवीणानादसोत्कण्ठमानसायै ।

देवकोटिस्तुतिनुतायै। देवकोटिकृतार्हणायै। देवकोटिगीतगुणायै। देवकोटिकृतस्तुत्यै। दन्तदष्टचोद्वेगफलायै। देवकोलाहलाकुलायै। द्वेषरागपरित्यक्तायै । द्वेषरागविवर्जितायै । दामपूज्यायै । दामभूषायै । दामोदरविलासिन्यै नमः। ६८०

ओं दामोदरप्रेमरतायै नमः । दामोदरभगिन्यै । दामोदरप्रस्वे । दामोदरपत्न्यै । दामोदरपतिव्रतायै । दामोदराभिन्नदेहायै। दामोदररतिप्रियायै। दामोदराभिन्नतनवे। दामोदरकृतास्पदायै । दामोदरकृतप्राणायै । दामोदरगतात्मिकायै । दामोदरकौतुकाढ्यायै । दामोदरकलाकलायै । दामोदरालिङ्गिताङ्ग्यै । दामोदरकुतूहलायै । दामोदरकृताह्लादायै । दामोदरसुचुम्बितायै । दामोदरसुताकृष्टायै । दामोदरसुखप्रदायै । दामोदरसहाढ्यायै नमः। ७००

ओं दामोदरसहायिन्यै नमः । दामोदरगुणज्ञायै । दामोदरवरप्रदायै । दामोदरानुकूलायै । दामोदरनितम्बिन्यै। दामोदरजलक्रीडाकुशलायै । दर्शनप्रियायै । दामोदरजलक्रीडात्यक्तस्वजन सौहृदायै। दामोदरलसद्रासकेलिकौतुकिन्यै । दामोदरभ्रातृकायै । दामोदरपरायणायै । दामोदरधरायै । दामोदरवैरिविनाशिन्यै। दामोदरोपजायायै। दामोदरनिमन्त्रितायै । दामोदरपराभूतायै। दामोदरपराजितायै। दामोदरसमाक्रान्तायै। दामोदरहताशुभायै। दामोदरोत्सवरतायै नमः। ७२०

ओं दामोदरात्सवावहायै नमः । दामोदरस्तन्यदात्र्यै । दामोदरगवेषितायै। दमयन्तीसिद्धिदात्र्यै। दमयन्तीप्रसाधितायै। दमयन्तीष्टदेव्यै । दमयन्तीस्वरूपिण्यै । दमयन्तीकृतार्चायै । दमनर्षिविभावितायै। दमनर्षिप्राणतुल्यायै। दमनर्षिस्वरूपिण्यै।

दमनर्षिस्वरूपायै । दम्भपूरितविग्रहायै । दम्भहन्त्र्यै । दंभधात्र्यै । दम्भलोकविमोहिन्यै । दम्भशीलायै । दम्भहरायै । दम्भवत्परिमर्दिन्यै । दम्भरूपायै नमः । ७४०

ओं दम्भकर्यै नमः । दम्भसन्तानदारिण्यै । दत्तमोक्षायै । दत्तधनायै । दत्तारोग्यायै । दाम्भिकायै । दत्तपुत्रायै । दत्तदारायै । दत्तहारायै । दारिकायै । दत्तभोगायै । दत्तशोकायै । दत्तहस्त्यादिवाहनायै । दत्तमत्यै । दत्तभार्यायै । दत्तशास्त्रावबोधिकायै । दत्तपानायै । दत्तदानायै । दत्तदारिद्र्यनाशिन्यै । दत्तसौधावनीवासायै नमः । ७६०

ओं दत्तस्वर्गायै नमः । दासदायै । दास्यतुष्टायै । दास्यहरायै । दासदासीशतप्रदायै । दाररूपायै । दारवासायै । दारवासिहृदास्पदायै । दारवासिजनाराध्यायै । दारवासिजनप्रियायै । दारवासिविनिर्णीतायै । दारवासिसमर्चितायै । दारवास्याहृतप्राणायै । दारवास्यरिनाशिन्यै । दारवासिविघ्नहरायै । दारवासिविमुक्तिदायै । दाराग्निरूपिण्यै । दारायै । दारकार्यरिनाशिन्यै । दम्पतीभ्यां नमः । ७८०

ओं दम्पतीष्टायै नमः । दम्पतीप्राणरूपिकायै । दम्पतीस्नेहनिरतायै । दाम्पत्यसाधनप्रियायै । दांपत्यसुखसेनायै । दाम्पत्यसुखदायिन्यै । दम्पत्याचारनिरतायै । दम्पत्यामोदमोदितायै । दम्पत्यामोदसुखिन्यै । दम्पत्याह्लादकारिण्यै । दम्पतीष्टपादपद्मायै । दाम्पत्यप्रेमरूपिण्यै । दाम्पत्यभोगभवनायै । दाडिमीफलभोजिन्यै । दाडिमीफलसन्तुष्टायै । दाडिमीफलमानसायै । दाडिमीवृक्षसंस्थानायै । दाडिमीवृक्षवासिन्यै । दाडिमीवृक्षरूपायै । दाडिमीवनवासिन्यै नमः । ८००

ओं दाडिमीफलसाम्योरुपयोधरसमन्वितायै । दक्षिणायै । दक्षिणारूपायै । दक्षिणारूपधारिण्यै । दक्षकन्यायै । दक्षपुत्र्यै । दक्षमात्रे । दक्षसुवे । दक्षगोत्रायै । दक्षसुतायै । दक्षयज्ञविनाशिन्यै । दक्षयज्ञनाशकर्त्र्यै । दक्षयज्ञान्तकारिण्यै । दक्षप्रसूत्यै । दक्षेज्यायै । दक्षवंशैकपावन्यै । दक्षात्मजायै । दक्षसूनवे । दक्षजायै । दक्षजातिकायै नमः । ८२०

ओं दक्षजन्मने नमः । दक्षजनुषे । दक्षदेहसमुद्भवायै । दक्षजनये । दक्षयागध्वंसिन्यै । दक्षकन्यकायै । दक्षिणाचार-निरतायै । दक्षिणाचारतुष्टिदायै । दक्षिणाचारसंसिद्धायै । दक्षिणा-चारभावितायै । दक्षिणाचारसुखिन्यै । दक्षिणाचारसाधितायै । दक्षिणाचारमोक्षाप्त्यै । दक्षिणाचारवन्दितायै । दक्षिणाचार-शरणायै । दक्षिणाचारहर्षितायै । द्वारपालप्रियायै । द्वारवासिन्यै । द्वारसंस्थितायै । द्वाररूपायै नमः । ८४०

ओं द्वारसंस्थायै नमः । द्वारदेशनिवासिन्यै । द्वारकर्त्र्यै । द्वारधात्र्यै । दोषमात्रविवर्जितायै । दोषाकरायै । दोषहरायै । दोषराशिविनाशिन्यै । दोषाकरविभूषाढ्यायै । दोषाकरकपालिन्यै । दोषाकरसहस्राभायै । दोषाकरसमाननायै । दोषाकरमुख्यै । दिव्यायै । दोषाकरकराग्रजायै । दोषाकरसमज्योतिषे । दोषाकर-सुशीतलायै । दोषाकरश्रेण्यै । दोषासदृशापाङ्गवीक्षणायै । दोषाकरेष्टदेव्यै नमः । ८६०

ओं दोषाकरनिषेवितायै नमः । दोषाकरप्राणरूपायै । दोषाकरमरीचिकायै । दोषाकरोल्लसज्झालायै । दोषाकरसुहर्षिण्यै । दोषाकरशिरोभूषायै । दोषाकरवधूप्रियायै । दोषाकरवधूप्राणायै । दोषाकरवधूमतायै । दोषाकरवधूप्रीतायै । दोषाकरवध्वै ।

दोषापूज्यायै। दोषापूजितायै। दोषहारिण्यै। दोषाजापमहानन्दायै । दोषाजापपरायणायै । दोषापुरश्चाररतायै । दोषापूजकपुत्रिण्यै । दोषापूजकवात्सल्यकारिण्यै जगदम्बिकायै। दोषापूजकवैरिघ्न्यै नमः ।८८०

ओं दोषापूजकविघ्नहृते नमः । दोषापूजकसन्तुष्टायै । दोषापूजकमुक्तिदायै। दमप्रसूनसम्पूज्यायै। सदा दमपुष्पप्रियायै । दुर्योधनप्रपूज्यायै । दुःशासनसमर्च्चितायै। दण्डपाणिप्रियायै । दण्डपाणिमात्रे । दयानिधये । दण्डपाणिसमाराध्यायै । दण्डपाणिप्रपूजितायै । दण्डपाणिगृहासक्तायै । दण्डपाणिप्रियंवदायै । दण्डपाणिप्रियतमायै । दण्डपाणिमनोहरायै । दण्डपाणिहृतप्राणायै । दण्डपाणिसुसिद्धिदायै । दण्डपाणिपरामृष्टायै ।दण्डपाणिप्रहर्षितायै नमः । ९००

ओ दण्डपाणिविघ्नहरायै नमः । दण्डपाणिशिरोधृतायै । दण्डपाणिप्राप्तचर्यायै । सदा दण्डपाण्युन्मुख्यै । दण्डपाणिप्राप्तपदायै । दण्पाणिवरोन्मुख्यै । दण्डहस्तायै । दण्डपाण्यै । दण्डबाह्वै। दरान्तकृते। दण्डदोष्कायै। दण्डकरायै। दण्डच्चित्तकृतास्पदायै । दण्डिविद्यायै । दण्डिमात्रे । दण्डिकण्टकनाशिन्यै । दण्डिप्रियायै। दण्डिपूज्यायै। दण्डिसन्तोषदायिन्यै। दस्युपूज्यायै नमः । ९२०

ओं दस्युरतायै नमः । दस्युद्रविणदायिन्यै । दस्युवर्गकृताहार्यै । दस्युवर्गविनाशिन्यै । दस्युनिर्णाशिन्यै । दस्युकुलनिर्णाशिन्यै। दस्युप्रियकर्यै। दस्युनृत्यदर्शनतत्परायै। दुष्टदण्डकर्यै । दुष्टवर्गविद्राविण्यै । दुष्टगर्वनिग्रहाहार्यै । दूषकप्राणनाशिन्यै । दूषकोत्तापजनन्यै । दूषकारिष्टकारिण्यै । दूषकद्वेषणकर्यै ।

दाहिकायै । दहनात्मिकायै । दारुकारिनिहन्त्र्यै । दारुकेश्वर-पूजितायै । दारुकेश्वरमात्रे नमः । ९४०

ओं दारकेश्वरवन्दितायै नमः । दर्भहस्तायै । दर्भयुतायै । दर्भकर्मविवर्जितायै । दर्भमय्यै । दर्भतनवे । दर्भसर्वस्वरूपिण्यै । दर्भकर्माचाररतायै । दर्भहस्तकृतार्हणायै । दर्भानुकूलायै । दाम्भर्यायै । दर्वीपात्रानुदामिन्यै । दमघोषप्रपूज्यायै । दमघोषवरप्रदायै । दमघोषसमाराध्यायै । दावाग्निरूपिण्यै । दावाग्निरूपायै । दावाग्निनिर्णाशितमहाबलायै । दन्तदंष्ट्रासुरकलायै । दन्तचर्चितहस्तिकायै नमः । ९६०

ओं दन्तदंष्ट्रस्यन्दनायै । दन्तनिर्णाशितासुरायै । दधिपूज्यायै । दधिप्रीतायै । दधीचिवरदायिन्यै । दधीचीष्टदेवतायै । दधीचिमोक्षदायिन्यै । दधीचिदैन्यहन्त्र्यै । दधीचिदरदारिण्यै । दधीचिभक्तिसुखिन्यै । दधीचिमुनिसेवितायै । दधीचिज्ञानदात्र्यै । दधीचिगुणदायिन्यै । दधीचिकुलसम्भूषायै । दधीचिभुक्तिमुक्तिदायै । दधीचिकुलदेव्यै । दधीचिकुलदेवतायै । दधीचिकुलगम्यायै । दधीचिकुलपूजितायै । दधीचिसुखदात्र्यै नमः । ९८०

ओं दधीचिदैन्यहारिण्यै नमः । दधीचिदुःखहन्त्र्यै । दधीचिकुलसुन्दर्यै । दधीचिकुलसम्भूतायै । दधीचिकुलपालिन्यै । दधीचिदानगम्यायै । दधीचिदानमानिन्यै । दधीचिदानसन्तुष्टायै । दधीचिदानदेवतायै । दधीचिजपसंप्रीतायै । दधीचिजपमानसायै । दधीचिजपपूजाढ्यायै । दधीचिजपमालिकायै । दधीचिजप-सन्तुष्टायै । दधीचिजपतोषिण्यै । दधीचितपसाराध्यायै । दधीचिशुभदायिन्यै । दूर्वायै । दूर्वादलश्यामायै । दूर्वादलसमद्युतये नमः । १०००

# श्री दुर्गासहस्रनामस्तोत्रम्-४

पार्वतीसहस्रनामस्तोत्रमिति नाम्ना कूर्मपुराणे प्रथितमिदम्। तत्र पूर्वपीठिका फलश्रुतिश्च हिमवद्देवी संवादात्मिके। तत् अनु संयुज्यते यथास्थानम्। शिवोमा परमा शक्तिरनन्ता निष्कलाऽमला। शान्ता महेश्वरी नित्या शाश्वती परमाक्षया इत्यक्षरमात्रेण क्वचित्क्वचित्पाठभेदः।

नारद उवाच—

कुमार गुणगम्भीर देवसेनापते प्रभो।
सर्वाभीष्टप्रदं पुंसां सर्वपापप्रणाशनम्॥ १

गुह्याद्गुह्यतरं स्तोत्रं भक्तिवर्धकमञ्जसा।
मङ्गलं ग्रहपीडादिशान्तिदं वक्तुमर्हसि॥ २

स्कन्द उवाच—

शृणु नारद देवर्षे लोकानुग्रहकाम्यया।
यत्पृच्छसि परं पुण्यं तत्ते वक्ष्यामि कौतुकात्॥ ३

माता मे लोकजननी हिमवन्नगसत्तमात्।
मेनायां ब्रह्मवादिन्यां प्रादुर्भूता हरप्रिया॥ ४

महता तपसाऽऽराध्य शङ्करं लोकशङ्करम्।
स्वमेव वल्लभं भेजे कलेव हि कलानिधिम्॥ ५

नगानामधिराजस्तु हिमवान् विरहातुरः।
स्वसुतायाः परिक्षीणे वसिष्ठेन प्रबोधितः॥ ६

त्रिलोकजननी सेयं प्रसन्ना त्वयि पुण्यतः।
प्रादुर्भूता सुतात्वेन तद्वियोगं शुभं त्यज॥ ७

बहुरूपा च दुर्गेयं बहुनाम्नी सनातनी।
सनातनस्य जाया सा पुत्रीमोहं त्यजाधुना ।। ८

इति प्रबोधितः शैलः तां तुष्टाव परां शिवाम्।
तदा प्रसन्ना सा दुर्गा पितरं प्राह नन्दिनी ।। ९

मत्प्रसादात्परं स्तोत्रं हृदये प्रतिभासताम्।
तेन नाम्नां सहस्रेण पूजयन् काममाप्नुहि ।। १०

इत्युक्त्वान्तर्हितायां तु हृदये स्फुरितं तदा।
नाम्नां सहस्रं दुर्गायाः पृच्छते मे यदुक्तवान् ।। ११

मङ्गलानां मङ्गलं तद्दुर्गानामसहस्रकम्।
सर्वाभीष्टप्रदं पुंसां ब्रवीम्यखिलकामदम् ।। १२

दुर्गा देवी समाख्याता हिमवानृषिरुच्यते।
छन्दोऽनुष्टुप् जपो देव्याः प्रीतये क्रियते सदा ।। १३

अस्य श्री दुर्गास्तोत्रमहामन्त्रस्य । हिमवान् ऋषिः । अनुष्टुप् छन्दः । दुर्गा भगवती देवता । श्रीदुर्गाप्रसाद-सिद्ध्यर्थे जपे विनियोगः । श्री दुर्गायै नमः । ध्यानम्-

ओं ह्रीं कालाभ्राभां कटाक्षैररिकुलभयदां मौलिबद्धेन्दुरेखां
शङ्खं चक्रं कृपाणं त्रिशिखमपि करैरुद्वहन्तीं त्रिनेत्राम्।
सिंहस्कन्धाधिरूढां त्रिभुवनमखिलं तेजसा पूरयन्तीं
ध्यायेद् दुर्गां जयाख्यां त्रिदशपरिवृतां सेवितां सिद्धिकामैः।
श्री जयदुर्गायै नमः।

—*—

ओं शिवाऽथोमा रमा शक्तिरनन्ता निष्कलाऽमला।
शान्ता माहेश्वरी नित्या शाश्वता परमा क्षमा।। १

अचिन्त्या केवलाऽनन्ता शिवात्मा परमात्मिका।
अनादिरव्यया शुद्धा सर्वज्ञा सर्वगाऽचला।। २

एकानेकविभागस्था मायातीता सुनिर्मला।
महामाहेश्वरी सत्या महादेवी निरञ्जना।। ३

काष्ठा सर्वान्तरस्थाऽपि चिच्छक्तिश्चात्रिलालिता।
सर्वा सर्वात्मिका विश्वा ज्योतीरूपाऽक्षराऽमृता।। ४

शान्ता प्रतिष्ठा सर्वेशा निवृत्तिरमृतप्रदा।
व्योममूर्तिर्व्योमसंस्था व्योमाधाराऽच्युताऽतुला।। ५

अनादिनिधनाऽमोघा कारणात्मकलाकुला।
ऋतुप्रथमजाऽनाभिरमृतात्मसमाश्रया।। ६

प्राणेश्वरप्रिया नम्या महामहिषघातिनी।
प्राणेश्वरी प्राणरूपा प्रधानपुरुषेश्वरी।। ७

सर्वशक्तिकलाऽकामा महिषेष्टविनाशिनी।
सर्वकार्यनियन्त्री च सर्वभूतेश्वरेश्वरी।। ८

अङ्गदादिधरा चैव तथा मुकुटधारिणी।
सनातनी महानन्दाऽऽकाशयोनिस्तथोच्यते।। ९

चित्प्रकाशस्वरूपा च महायोगेश्वरेश्वरी।
महामाया सुदुष्पारा मूलप्रकृतिरीशिका।। १०

संसारयोनिः सकला सर्वशक्तिसमुद्भवा।
संसारपारा दुर्वारा दुर्निरीक्षा दुरासदा।। ११

प्राणशक्तिश्च सेव्या च योगिनी परमा कला।
महाविभूतिर्दुर्दर्शा मूलप्रकृतिसम्भवा॥ १२

अनाद्यनन्तविभवा परार्था पुरुषारणिः।
सर्गस्थित्यन्तकृच्चैव सुदुर्वाच्या दुरत्यया॥ १३

शब्दगम्या शब्दमाया शब्दाख्यानन्दविग्रहा।
प्रधानपुरुषातीता प्रधानपुरुषात्मिका॥ १४

पुराणी चिन्मया पुंसामिष्टदा पुष्टिरूपिणी।
पूतान्तरस्था कूटस्था महापुरुषसंज्ञिता॥ १५

जन्ममृत्युजरातीता सर्वशक्तिस्वरूपिणी।
वाञ्छाप्रदाऽनवच्छिन्नप्रधानानुप्रवेशिनी॥ १६

क्षेत्रज्ञाऽचिन्त्यशक्तिस्तु प्रोच्यतेऽव्यक्तलक्षणा।
मलापवर्जिताऽनादिमाया त्रितयतत्त्विका॥ १७

प्रीतिश्च प्रकृतिश्चैव गुहावासा तथोच्यते।
महामाया नगोत्पन्ना तामसी च ध्रुवा तथा॥ १८

व्यक्ताव्यक्तात्मिका कृष्णा रक्ता शुक्ला ह्यकारणा।
प्रोच्यते कार्यजननी नित्यप्रसवधर्मिणी॥ १९

सर्गप्रलयमुक्ता च सृष्टिस्थित्यन्तधर्मिणी।
ब्रह्मगर्भा चतुर्विंशस्वरूपा पद्मवासिनी॥ २०

अच्युताह्लादिका विद्युद्ब्रह्मयोनिर्महालया।
महालक्ष्मीः समुद्भावभावितात्मा महेश्वरी॥ २१

महाविमानमध्यस्था महानिद्रा सकौतुका।
सर्वार्थधारिणी सूक्ष्मा ह्यविद्धा परमार्थदा॥ २२

अनन्तरूपाऽनन्तार्था तथा पुरुषमोहिनी।
अनेकानेकहस्ता च कालत्रयविवर्जिता॥ २३

ब्रह्मजन्मा हरप्रीता मतिर्ब्रह्मशिवात्मिका।
ब्रह्मेशविष्णुसम्पूज्या ब्रह्माख्या ब्रह्मसंज्ञिता॥ २४

व्यक्ता प्रथमजा ब्राह्मी महारात्रिः प्रकीर्तिता।
ज्ञानस्वरूपा वैराग्यरूपा ह्यैश्वर्यरूपिणी॥ २५

धर्मात्मिका ब्रह्ममूर्तिः प्रतिश्रुतपुमर्थिका।
अपांयोनिः स्वयम्भूता मानसी तत्त्वसम्भवा॥ २६

ईश्वरस्य प्रिया प्रोक्ता शङ्करार्धशरीरिणी।
भवानी चैव रुद्राणी महालक्ष्मीस्तथाऽम्बिका॥ २७

महेश्वरसमुत्पन्ना भुक्तिमुक्ति प्रदायिनी।
सर्वेश्वरी सर्ववन्द्या नित्यमुक्ता सुमानसा॥ २८

महेन्द्रोपेन्द्रनमिता शाङ्करीशानुवर्तिनी।
ईश्वरार्धासनगता महेश्वरपतिव्रता॥ २९

संसारशोषिणी चैव पार्वती हिमवत्सुता।
परमानन्ददात्री च गुणाग्र्या योगदा तथा॥ ३०

ज्ञानमूर्तिश्च सावित्री लक्ष्मीः श्रीः कमला तथा।
अनन्तगुणगम्भीरा ह्युरोनीलमणिप्रभा॥ ३१

सरोजनिलया गङ्गा योगिध्येयाऽसुरार्दिनी।
सरस्वती सर्वविद्या जगज्ज्येष्ठा सुमङ्गला॥ ३२

वाग्देवी वरदा वर्या कीर्तिः सर्वार्थसाधिका।
वागीश्वरी ब्रह्मविद्या महाविद्या सुशोभना॥ ३३

ग्राह्यविद्या वेदविद्या धर्मविद्याऽऽत्मभाविता।
स्वाहा विश्वम्भरा सिद्धिः साध्या मेधा धृतिः कृतिः ॥ ३४

सुनीतिः संकृतिश्चैव कीर्तिता नरवाहिनी।
पूजाविभाविनी सौम्या भोग्यभाग् भोगदायिनी॥ ३५

शोभावती शाङ्करी च लोला मालाविभूषिता।
परमेष्ठिप्रिया चैव त्रिलोकीसुन्दरी मता॥ ३६

नन्दा सन्ध्या कामधात्री महादेवी सुसात्त्विका।
महामहिषदर्पघ्नी पद्ममालाऽघहारिणी॥ ३७

विचित्रमुकुटा रामा कामदात्री प्रकीर्तिता।
पीताम्बरधरा दिव्यविभूषण विभूषिता॥ ३८

दिव्याख्या सोमवदना जगत्संसृष्टिवर्जिता।
निर्यन्त्रा यन्त्रवाहस्था नन्दिनी रुद्रकालिका॥ ३९

आदित्यवर्णा कौमारी मयूरवरवाहिनी।
पद्मासनगता गौरी महाकाली सुरार्चिता॥ ४०

अदितिर्नियता रौद्री पद्मगर्भा विवाहना।
विरूपाक्षा केशिवाहा गुहापुरनिवासिनी॥ ४१

महाफलाऽनवद्याङ्गी कामरूपा सरिद्वरा।
भास्वद्रूपा मुक्तिदात्री प्रणतक्लेशभञ्जना॥ ४२

कौशिकी गोमिनी रात्रिस्त्रिदशारिविनाशिनी।
बहुरूपा सुरूपा च विरूपा रूपवर्जिता॥ ४३

भक्तार्तिशमना भव्या भवभावविनाशिनी।
सर्वज्ञानपरीताङ्गी सर्वासुरविमर्दिका॥ ४४

पिकस्वनी सामगीता भवाङ्कनिलया प्रिया।
दीक्षा विद्याधरी दीप्ता महेन्द्राहितपातिनी ॥ ४५

सर्वदेवमया दक्षा समुद्रान्तरवासिनी।
अकलङ्का निराधारा नित्यसिद्धा निरामया ॥ ४६

कामधेनुर्बृहद्गर्भा धीमती मौननाशिनी।
निःसङ्कल्पा निरातङ्का विनया विनयप्रदा ॥ ४७

ज्वालामाला सहस्राढ्या देवदेवी मनोमया।
सुभगा सुविशुद्धा च वसुदेवसमुद्भवा ॥ ४८

महेन्द्रोपेन्द्रभगिनी भक्तिगम्या परावरा।
ज्ञानज्ञेया परातीता वेदान्तविषया मतिः ॥ ४९

दक्षिणा दाहिका दह्या सर्वभूतहृदिस्थिता।
योगमाया विभागज्ञा महामोहा गरीयसी ॥ ५०

सन्ध्या सर्वसमुद्भूता ब्रह्मवृक्षाश्रयाऽदितिः।
बीजाङ्कुरसमुद्भूता महाशक्तिर्महाम [illegible]ः ॥ ५१

ख्यातिः प्रज्ञावती संज्ञा महाभोगीन्द्रशायिनी।
ह्रींकृतिः शङ्करी शान्तिर्गन्धर्वगणसेविता ॥ ५२

वैश्वानरी महाशूला देवसेना भवप्रिया।
महारात्री परानन्दा शची दुःस्वप्ननाशिनी ॥ ५३

ईड्या जया जगद्धात्री दुर्विज्ञेया सुरूपिणी।
गुहाम्बिका गणोत्पन्ना महापीठा मरुत्सुता ॥ ५४

हव्यवाहा भवानन्दा जगद्योनिः प्रकीर्तिता।
जगन्माता जगन्मृत्युर्जरातीता च बुद्धिदा ॥ ५५

सिद्धिदात्री रत्नगर्भा रत्नगर्भाश्रया परा।
दैत्यहन्त्री स्वेष्टदात्री मङ्गलैकसुविग्रहा ॥ ५६

पुरुषान्तर्गता चैव समाधिस्था तपस्विनी।
दिविस्थिता त्रिणेत्रा च सर्वेन्द्रियमनोधृतिः ॥ ५७

सर्वभूतहृदिस्था च तथा संसारतारिणी।
वेद्या ब्रह्म विवेद्या च महालीला प्रकीर्तिता ॥ ५८

ब्राह्मणी बृहती ब्राह्मी ब्रह्मभूताऽघहारिणी।
हिरण्मयी महादात्री संसारपरिवर्तिका ॥ ५९

सुमालिनी सुरूपा च भास्विनी धारिणी तथा।
उन्मूलिनी सर्वसमा सर्वप्रत्ययसाक्षिणी ॥ ६०

सुसौम्या चन्द्रवदना ताण्डवासक्तमानसा।
सत्त्वशुद्धिकरी शुद्धा मलत्रयविनाशिनी ॥ ६१

जगत्त्रयी जगन्मूर्तिस्त्रिमूर्तिरमृताश्रया।
विमानस्था विशोका च शोकनाशिन्यनाहता ॥ ६२

हेमकुण्डलिनी काली पद्मवासा सनातनी।
सदाकीर्तिः सर्वभूतशाया देवी सतां प्रिया ॥ ६३

ब्रह्ममूर्तिकला चैव कृत्तिका कञ्जमालिनी।
व्योमकेशा क्रियाशक्तिरिच्छाशक्तिः परा गतिः ॥ ६४

क्षोभिका खण्डिकाभेद्या भेदाभेदविवर्जिता।
अभिन्ना भिन्नसंस्थाना वशिनी वंशधारिणी ॥ ६५

गुह्यशक्तिर्गुह्यतत्त्वा सर्वदा सर्वतोमुखी।
भगिनी च निराधारा निराहारा प्रकीर्तिता। ६६

निरङ्कुशपदोद्भूता चक्रहस्ता विशोधिका।
स्रग्विणी पद्मसम्भेदकारिणी परिकीर्तिता।। ६७

परावरविधानज्ञा महापुरुषपूर्वजा।
परावरज्ञा विद्या च विद्युज्जिह्वा जिताश्रया।। ६८

विद्यामयी सहस्राक्षी सहस्रवदनात्मजा।
सहस्ररश्मिः सत्वस्था महेश्वरपदाश्रया।।६९

ज्वालिनी सन्मया व्याप्ता चिन्मया पद्मभेदिका।
महाश्रया महामन्त्रा महादेवमनोरमा।। ७०

व्योमलक्ष्मीः सिंहरथा चेकितानाऽमितप्रभा।
विश्वेश्वरी भगवती सकला कालहारिणी।। ७१

सर्ववेद्या सर्वभद्रा गुह्या गूढा गुहारणी।
प्रलया योगधात्री च गङ्गा विश्वेश्वरी तथा।। ७२

कामदा कनका कान्ता कंजगर्भप्रभा तथा।
पुण्यदा कालकेशा च भोक्त्री पुष्करिणी तथा।। ७३

सुरेश्वरी भूतिदात्री भूतिभूषा प्रकीर्तिता।
पञ्चब्रह्मसमुत्पन्ना परमार्थाऽर्थविग्रहा।। ७४

वर्णोदया भानुमूर्तिर्वाग्विज्ञेया मनोजवा।
मनोहरा महोरस्का तामसी वेदरूपिणी।। ७५

वेदशक्तिर्वेदमाता वेदविद्याप्रकाशिनी।
योगेश्वरेश्वरी माया महाशक्तिर्महामयी।। ७६

विश्वान्तःस्था वियन्मूर्तिर्भार्गवी सुरसुन्दरी।
सुरभिर्नन्दिनी विद्या नन्दगोपतनूद्भवा।। ७७

भारती परमानन्दा परावरविभेदिका।
सर्वप्रहरणोपेता काम्या कामेश्वरेश्वरी ॥ ७८

अनन्तानन्दविभवा हृल्लेखा कनकप्रभा।
कूष्माण्डा धनरत्नाढ्या सुगन्धा गन्धदायिनी ॥ ७९

त्रिविक्रमपदोद्भूता चतुरास्या शिवोदया।
सुदुर्लभा धनाध्यक्षा धन्या पिङ्गललोचना ॥ ८०

शान्ता प्रभास्वरूपा च पङ्कजायतलोचना।
इन्द्राक्षी हृदयान्तःस्था शिवा माता च सत्क्रिया ॥ ८१

गिरिजा च सुगूढा च नित्यपुष्टा निरन्तरा।
दुर्गा कात्यायनी चण्डी चन्द्रिका कान्तविग्रहा ॥ ८२

हिरण्यवर्णा जगती जगद्यन्त्रप्रवर्तिका।
मन्दराद्रिनिवासा च शारदा स्वर्णमालिनी ॥ ८३

रत्नमाला रत्नगर्भा व्युष्टिर्विश्वप्रमाथिनी।
पद्मानन्दा पद्मनिभा नित्यपुष्टा कृतोद्भवा ॥ ८४

नारायणी दुष्टशिक्षा सूर्यमाता वृषप्रिया।
महेन्द्रभगिनी सत्या सत्यभाषा सुकोमला ॥ ८५

वामा च पञ्चतपसां वरदात्री प्रकीर्तिता।
वाच्यवर्णेश्वरी विद्या दुर्जया दुरतिक्रमा ॥ ८६

कालरात्रिर्महावेगा वीरभद्रप्रिया हिता।
भद्रकाली जगन्माता भक्तानां भद्रदायिनी ॥ ८७

कराला पिङ्गलाकारा कामभेत्त्री महामनाः।
यशस्विनी यशोदा च षडध्वपरिवर्तिका ॥ ८८

शङ्खिनी पद्मिनी संख्या सांख्ययोगप्रवर्तिका।
चैत्रादिर्वत्सरारूढा जगत्सम्पूरणीन्द्रजा॥ ८९

शुम्भघ्नी खेचराराध्या कम्बुग्रीवा बलीडिता।
खगारूढा महैश्वर्या सुपद्मनिलया तथा॥ ९०

विरक्ता गरुडस्था च जगतीहृद्गुहाश्रया।
शुम्भादिमथना भक्तहृद्गह्वरनिवासिनी॥ ९१

जगत्त्रयारणी सिद्धसङ्कल्पा कामदा तथा।
सर्वविज्ञानदात्री चानल्पकल्मषहारिणी॥ ९२

सकलोपनिषद्गम्या दुष्टदुष्प्रेक्ष्यसत्तमा।
सद्वृता लोकसंव्याप्ता तुष्टिः पुष्टिः क्रियावती॥ ९३

विश्वामरेश्वरी चैव भुक्तिमुक्तिप्रदायिनी।
शिवा धृता लोहिताक्षी सर्पमालाविभूषणा॥ ९४

निरानन्दा त्रिशूलासिधनुर्बाणादिधारिणी।
अशेषध्येयमूर्तिश्च देवतानां च देवता॥ ९५

वराऽम्बिका गिरेः पुत्री निशुम्भविनिपातिनी।
सुवर्णा स्वर्णलसिताऽनन्तवर्णा सदाधृता॥ ९६

शाङ्करी शान्तहृदया अहोरात्रविधायिका।
विश्वगोप्त्री गूढरूपा गुणपूर्णा च गार्ग्यजा॥ ९७

गौरी शाकम्भरी सत्यसन्धा सन्ध्यात्रयीधृता।
सर्वपापविनिर्मुक्ता सर्वबन्धविवर्जिता॥ ९८

सांख्ययोगसमाख्याता अप्रमेया मुनीडिता।
विशुद्धसुकुलोद्भूता बिन्दुनादसमादृता॥ ९९

शम्भुवामाङ्कगा चैव शशितुल्यनिभानना।
वनमालाविराजन्ती अनन्तशयनादृता॥ १००

नरनारायणोद्भूता नारसिंही प्रकीर्तिता।
दैत्यप्रमाथिनी शङ्खचक्रपद्मगदाधरा॥ १०१

सङ्कर्षणसमुत्पन्ना अम्बिका सज्जनाश्रया।
सुवृता सुन्दरी चैव धर्मकामार्थदायिनी॥ १०२

मोक्षदा भक्तिनिलया पुराणपुरुषादृता।
महाविभूतिदाऽऽराध्या सरोजनिलयाऽसमा॥ १०३

अष्टादशभुजाऽनादिर्नीलोत्पलदलाक्षिणी।
सर्वशक्तिसमारूढा धर्माधर्मविवर्जिता॥ १०४

वैराग्यज्ञाननिरता निरालोका निरिन्द्रिया।
विचित्रगहनाधारा शाश्वतस्थानवासिनी॥ १०५

ज्ञानेश्वरी पीतचेला वेदवेदाङ्गपारगा।
मनस्विनी मन्युमाता महामन्युसमुद्भवा॥ १०६

अमन्युरमृतास्वादा पुरन्दरपरिष्टुता।
अशोच्या भिन्नविषया हिरण्यरजतप्रिया॥ १०७

हिरण्यजननी भीमा हेमाभरणभूषिता।
विभ्राजमाना दुर्ज्ञेया ज्योतिष्टोमफलप्रदा॥ १०८

महानिद्रासमुत्पत्तिरनिद्रा सत्यदेवता।
दीर्घा ककुद्मिनी पिङ्गजटाधारा मनोज्ञधीः॥ १०९

महाश्रया रमोत्पन्ना तमःपारे प्रतिष्ठिता।
त्रितत्त्वमाता त्रिविधा सुसूक्ष्मा पद्मसंश्रया॥ ११०

शान्त्यतीतकलाऽतीतविकारा श्वेतचेलिका।
चित्रमाया शिवज्ञानस्वरूपा दैत्यमाथिनी ॥ १११

काश्यपी कालसर्पाभवेणिका शास्त्रयोनिका।
त्रयीमूर्तिः क्रियामूर्तिश्चतुर्वर्गा च दर्शिनी ॥ ११२

नारायणी नरोत्पन्ना कौमुदी कान्तिधारिणी।
कौशिकी ललिता लीला परावरविभाविनी ॥ ११३

वरेण्याऽद्भुतमाहात्म्या वडवा वामलोचना।
सुभद्रा चेतनाराध्या शान्तिदा शान्तिवर्धिनी ॥ ११४

जयादिशक्तिजननी शक्तिचक्रप्रवर्तिका।
त्रिशक्तिजननी जन्या षट्सूत्रपरिवर्णिता ॥ ११५

सुधौतकर्मणाऽऽराध्या युगान्तदहनात्मिका।
सङ्कर्षिणी जगद्धात्री कामयोनिः किरीटिनी ॥ ११६

ऐन्द्री त्रैलोक्यनमिता वैष्णवी परमेश्वरी।
प्रद्युम्नजननी बिम्बसमोष्ठी पद्मलोचना ॥ ११७

मदोत्कटा हंसगतिः प्रचण्डा चण्डविक्रमा।
वृषाधीशा परात्मा च विन्ध्यपर्वतवासिनी ॥ ११८

हिमवन्मेरुनिलया कैलासपुरवासिनी।
चाणूरहन्त्री नीतिज्ञा कामरूपा त्रयीतनुः ॥ ११९

व्रतस्नाता धर्मशीला सिंहासननिवासिनी।
वीरभद्रादृता वीरा महाकालसमुद्भवा ॥ १२०

विद्याधरार्चिता सिद्धसाध्याराधितपादुका।
श्रद्धात्मिका पावनी च मोहिनी अचलात्मिका ॥ १२१

महाद्भुता वारिजाक्षी सिंहवाहनगामिनी।
मनीषिणी सुधावाणी वीणावादनतत्परा॥ १२२

श्वेतवाहनिषेव्या च लसन्मतिररुन्धती।
हिरण्याक्षी तथा चैव महानन्दप्रदायिनी॥ १२३

वसुप्रभा सुमाल्याप्तकन्धरा पङ्कजानना।
परावरा वरारोहा सहस्रनयनार्चिता॥ १२४

श्रीरूपा श्रीमती श्रेष्ठा शिवनाम्नी शिवप्रिया।
श्रीप्रदा श्रितकल्याणा श्रीधरार्धशरीरिणी॥ १२५

श्रीकलाऽनन्तदृष्टिश्च ह्यक्षुद्राऽरातिसूदनी।
रक्तबीजनिहन्त्री च दैत्यसङ्घविमर्दिनी॥ १२६

सिंहारूढा सिंहिकास्या दैत्यशोणितपायिनी।
सुकीर्तिसहिता च्छिन्नसंशया रसवेदिनी॥ १२७

गुणाभिरामा नागारिवाहना निर्जरार्चिता।
नित्योदिता स्वयंज्योतिः स्वर्णकाया प्रकीर्तिता॥ १२८

वज्रदण्डाङ्किता चैव तथाऽमृतसञ्जीविनी।
वज्रच्छन्ना देवदेवी वरवज्रस्वविग्रहा॥ १२९

माङ्गल्या मङ्गलात्मा च मालिनी माल्यधारिणी।
गन्धर्वी तरुणी चान्द्री खड्गायुधधरा तथा॥ १३०

सौदामिनी प्रजानन्दा तथा प्रोक्ता भृगूद्भवा।
एकाऽनङ्गा च शास्त्रार्थकुशला धर्मचारिणी॥ १३१

धर्मसर्वस्ववाहा च धर्माधर्मविनिश्चया।
धर्मशक्तिर्धर्ममया धार्मिकानां शिवप्रदा॥ १३२

विधर्मा विश्वधर्मज्ञा धर्मार्थान्तरविग्रहा।
धर्मवर्ष्मा धर्मपूर्वा धर्मपारङ्गतान्तरा॥ १३३

धर्मोपदेष्ट्री धर्मात्मा धर्मगम्या धराधरा।
कपालिनी शाकलिनी कलाकलितविग्रहा॥ १३४

सर्वशक्तिविमुक्ता च कर्णिकारधराऽक्षरा।
कंसप्राणहरा चैव युगधर्मधरा तथा॥ १३५

युगप्रवर्तिका प्रोक्ता त्रिसन्ध्या ध्येयविग्रहा।
स्वर्गापवर्गदात्री च तथा प्रत्यक्षदेवता॥ १३६

आदित्या दिव्यगन्धा च दिवाकरनिभप्रभा।
पद्मासनगता प्रोक्ता खड्गबाणशरासना॥ १३७

शिष्टा विशिष्टा शिष्टेष्टा शिष्टश्रेष्ठप्रपूजिता।
शतरूपा शतावर्ता वितता रासमोदिनी॥ १३८

सूर्येन्दुनेत्रा प्रद्युम्नजननी सुष्ठुमायिनी।
सूर्यान्तरस्थिता चैव सत्प्रतिष्ठितविग्रहा॥ १३९

निवृत्ता प्रोच्यते ज्ञानपारगा पर्वतात्मजा।
कात्यायनी चण्डिका च चण्डी हैमवती तथा॥ १४०

दाक्षायणी सती चैव भवानी सर्वमङ्गला।
धूम्रलोचनहन्त्री च चण्डमुण्डविनाशिनी॥ १४१

योगनिद्रा योगभद्रा समुद्रतनया तथा।
देवप्रियङ्करी शुद्धा भक्तभक्तिप्रवर्धिनी॥ १४२

त्रिणेत्रा चन्द्रमुकुटा प्रमथार्चितपादुका।
अर्जुनाभीष्टदात्री च पाण्डवप्रियकारिणी॥ १४३

कुमारलालनासक्ता हरबाहूपधानिका।
विघ्नेशजननी भक्तविघ्नस्तोमप्रहारिणी ॥ १४४

सुस्मितेन्दुमुखी नम्या जयाप्रियसखी तथा।
अनादिनिधना प्रेष्ठा चित्रमाल्यानुलेपना ॥ १४५

कोटिचन्द्रप्रतीकाशा कूटजालप्रमाथिनी।
कृत्याप्रहारिणी चैव मारणोच्चाटनी तथा ॥ १४६

सुरासुरप्रवन्द्याङ्घ्रिर्मोहघ्नी ज्ञानदायिनी।
षड्वैरिनिग्रहकरी वैरिविद्राविणी तथा ॥ १४७

भूतसेव्या भूतदात्री भूतपीडाविमर्दिका।
नारदस्तुतचारित्रा वरदेशा वरप्रदा ॥ १४८

वामदेवस्तुता चैव कामदा सोमशेखरा।
दिक्पालसेविता भव्या भामिनी भावदायिनी ॥ १४९

स्त्रीसौभाग्यप्रदात्री च भोगदा रोगनाशिनी।
व्योमगा भूमिगा चैव मुनिपूज्यपदाम्बुजा।
वनदुर्गा च दुर्बोधा महादुर्गा प्रकीर्तिता ॥ १५०

इतीदं कीर्तिदं भद्र दुर्गानामसहस्रकम्।
त्रिसन्ध्यं यः पठेन्नित्यं तस्य लक्ष्मीः स्थिरा भवेत् ॥ १५१

ग्रहभूतपिशाचादिपीडा नश्यत्यसंशयम्।
बालग्रहादिपीडायाः शान्तिर्भवति कीर्तनात् ॥ १५२

मारिकादिमहारोगे पठतां सौख्यदं नृणाम्।
व्यवहारे च जयदं शत्रुबाधानिवारकम् ॥ १५३

दंपत्योः कलहे प्राप्ते मिथः प्रेमाभिवर्धकम्।
आयुरारोग्यदं पुंसां सर्वसम्पत्प्रदायकम् ॥ १५४

विद्याभिवर्धकं नित्यं पठतामर्थसाधकम्।
शुभदं शुभकार्येषु पठतां शृण्वतामपि॥ १५५

यः पूजयति दुर्गां तां दुर्गानामसहस्रकैः।
पुष्पैः कुङ्कुमसम्मिश्रैः स तु यत्काङ्क्षते हृदि॥ १५६

तत्सर्वं समवाप्नोति नास्ति नास्त्यत्र संशयः।
यन्मुखे ध्रियते नित्यं दुर्गानामसहस्रकम्॥ १५७

किं तस्येतरमन्त्रौघैः कार्यं धन्यतमस्य हि।
दुर्गानामसहस्रस्य पुस्तकं यद्गृहे भवेत्॥ १५८

न तत्र ग्रहभूतादिबाधा स्यान्मङ्गलास्पदे।
तद्गृहं पुण्यदं क्षेत्रं देवीसान्निध्यकारकम्॥ १५९

एतस्य स्तोत्रमुख्यस्य पाठकः श्रेष्ठमन्त्रवित्।
देवतायाः प्रसादेन सर्वपूज्यः सुखी भवेत्॥ १६०

इत्येतन्नगराजेन कीर्तितं मुनिसत्तम।
गुह्याद्गुह्यतरं स्तोत्रं त्वयि स्नेहात् प्रकीर्तितम्॥ १६१

भक्ताय श्रद्धधानाय केवलं कीर्त्यतामिदम्।
हृदि धारय नित्यं त्वं देव्यनुग्रहसाधकम्॥ १६२

— (श्रीस्कान्दपुराणे)

——*——

# श्री दुर्गासहस्रनामावलिः—४

ओं शिवायै नमः । उमायै । रमायै । शक्त्यै । अनन्तायै । निष्कलायै । अमलायै । शान्तायै । माहेश्वर्यै । नित्यायै । शाश्वतायै । परमायै । क्षमायै । अचिन्त्यायै । केवलायै । अनन्तायै । शिवात्मने । परमात्मिकायै । अनादये । अव्ययायै नमः । २०

ओं शुद्धायै नमः । सर्वज्ञायै । सर्वगायै । अचलायै । एकानेकविभागस्थायै । मायातीतायै । सुनिर्मलायै । महामाहेश्वर्यै । सत्यायै । महादेव्यै । निरञ्जनायै । काष्ठायै । सर्वान्तरस्थायै । चिच्छक्त्यै । अत्रिलालितायै । सर्वायै । सर्वात्मिकायै । विश्वायै । ज्योतीरूपायै । अक्षरायै नमः । ४०

ओ अमृतायै नमः । शान्तायै । प्रतिष्ठायै । सर्वेशायै । निवृत्तये । अमृतप्रदायै । व्योममूर्तये । व्योमसंस्थायै । व्योमाधारायै । अच्युतायै । अतुलायै । अनादिनिधनायै । अमोघायै । कारणात्म-कलाकुलायै । ऋतुप्रथमजायै । अनाभये । अमृतात्मसमाश्रयायै । प्राणेश्वरप्रियायै । नम्यायै । महामहिषघातिन्यै नमः । ६०

ओं प्राणेश्वर्यै नमः । प्राणरूपायै । प्रधानपुरुषेश्वर्यै । सर्वशक्तिकलायै । अकामायै । महिषेष्टविनाशिन्यै । सर्वकार्य-नियन्त्र्यै । सर्वभूतेश्वरेश्वर्यै । अङ्गदादिधरायै । मुकुटधारिण्यै । सनातन्यै । महानन्दायै । आकाशयोनये । चित्प्रकाशस्वरूपायै । महायोगेश्वरेश्वर्यै । महामायायै । सुदूष्पूरायै । मूलप्रकृत्यै । ईशिकायै । संसारयोनये नमः । ८०

ओं सकलायै नमः । सर्वशक्तिसमुद्भवायै । संसारपारायै । दुर्वारायै । दुर्निरीक्षायै । दुरासदायै । प्राणशक्त्यै । सेव्यायै । योगिन्यै । परमायै कलायै । महाविभूत्यै । दुर्दर्शायै । मूलप्रकृतिसंभवायै । अनाद्यनन्तविभवायै । परार्थायै । पुरुषारणये । सर्गस्थित्यन्तकृते । सुदुर्वाच्यायै । दुरत्ययायै । शब्दगम्यायै नमः । १००

ओं शब्दमायायै नमः । शब्दाख्यानन्दविग्रहायै । प्रधानपुरुषातीतायै । प्रधानपुरुषात्मिकायै । पुराण्यै । चिन्मयायै । पुंसामिष्टदायै । पुष्टिरूपिण्यै । पूतान्तरस्थायै । कूटस्थायै । महापुरुषसंज्ञितायै । जन्ममृत्युजरातीतायै । सर्वशक्तिस्वरूपिण्यै । वाञ्छाप्रदायै । अनवच्छिन्नप्रधानानुप्रवेशिन्यै । क्षेत्रज्ञायै । अचिन्त्यशक्त्यै । अव्यक्तलक्षणायै । मलापवर्जितायै । अनादिमायायै नमः । १२०

ओं त्रितयतत्त्विकायै नमः । प्रीत्यै । प्रकृत्यै । गुहावासायै । महामायायै । नगोत्पन्नायै । तामस्यै । ध्रुवायै । व्यक्ताव्यक्तात्मिकायै । कृष्णायै । रक्तायै । शुक्लायै । अकारणायै । कार्यजनन्यै । नित्यप्रसवधर्मिण्यै । सर्गप्रलयमुक्तायै । सृष्टिस्थित्यन्तधर्मिण्यै । ब्रह्मगर्भायै । चतुर्विंशस्वरूपायै । पद्मवासिन्यै नमः । १४०

ओं अच्युताह्लादिकायै नमः । विद्युते । ब्रह्मयोन्यै । महालयायै । महालक्ष्म्यै । समुद्भावभावितात्मने । महेश्वर्यै । महाविमानमध्यस्थायै । महानिद्रायै । सकौतुकायै । सर्वार्थधारिण्यै । सूक्ष्मायै । अविद्धायै । परमार्थदायै । अनन्तरूपायै । अनन्तार्थायै । पुरुषमोहिन्यै । अनेकानेकहस्तायै । कालत्रयविवर्जितायै । ब्रह्मजन्मने नमः । १६०

ओं हरप्रीतायै नमः । मत्यै । ब्रह्मशिवात्मिकायै । ब्रह्मेशविष्णुसंपूज्यायै । ब्रह्माख्यायै । ब्रह्मसंज्ञितायै । व्यक्तायै । प्रथमजायै । ब्राह्मयै । महारात्र्यै । ज्ञानस्वरूपायै । वैराग्यरूपायै । ऐश्वर्यरूपिण्यै । धर्मात्मिकायै । ब्रह्ममूर्त्यै । प्रतिश्रुतपुमर्थिकायै । अपांयोनये । स्वयंभूतायै । मानस्यै । तत्त्वसंभवायै नमः । १८०

ओं ईश्वरस्य प्रियायै नमः । शङ्करार्धशरीरिण्यै । भवान्यै । रुद्राण्यै । महालक्ष्म्यै । अम्बिकायै । महेश्वरसमुत्पन्नायै । भुक्तिमुक्तिप्रदायिन्यै । सर्वेश्वर्यै । सर्ववन्द्यायै । नित्यमुक्तायै । सुमानसायै । महेन्द्रोपेन्द्रनमितायै । शाङ्कर्यै । ईशानुवर्तिन्यै । ईश्वरार्धासनगतायै । महेश्वरपतिव्रतायै । संसारशोषिण्यै । पार्वत्यै । हिमवत्सुतायै नमः । २००

ओं परमानन्ददात्र्यै नमः । गुणाग्र्यायै । योगदायै । ज्ञानमूर्त्यै । सावित्र्यै । लक्ष्म्यै । श्रियै । कमलायै । अनन्तगुणगम्भीरायै । उरोनीलमणिप्रभायै । सरोजनिलयायै । गङ्गायै । योगिध्येयायै । असुरार्दिन्यै । सरस्वत्यै । सर्वविद्यायै । जगज्ज्येष्ठायै । सुमङ्गलायै । वाग्देव्यै । वरदायै नमः । २२०

ओं वर्यायै नमः । कीर्त्यै । सर्वार्थसाधिकायै । वागीश्वर्यै । ब्रह्मविद्यायै । महाविद्यायै । सुशोभनायै । ग्राह्यविद्यायै । वेदविद्यायै । धर्मविद्यायै । आत्मभावितायै । स्वाहायै । विश्वम्भरायै । सिद्ध्यै । साध्यायै । मेधायै । धृत्यै । कृत्यै । सुनीत्यै । संकृत्यै नमः । २४०

ओं नरवाहिन्यै नमः । पूजाविभाविन्यै । सौम्यायै । भोग्यभाजे । भोगदायिन्यै । शोभावत्यै । शाङ्कर्यै । लोलायै । मालाविभूषितायै । परमेष्ठिप्रियायै । त्रिलोकीसुन्दर्यै । नन्दायै । सन्ध्यायै । कामधात्र्यै । महादेव्यै । सुसात्त्विकायै । महामहिषदर्पघ्न्यै । पद्ममालायै । अघहारिण्यै । विचित्रमकुटायै नमः । २६०

ओं रामायै नमः । कामदात्र्यै । पीताम्बरधरायै । दिव्यविभूषणविभूषितायै । दिव्याख्यायै । सोमवदनायै । जगत्संसृष्टिवर्जितायै । निर्यन्त्रायै । यन्त्रवाहस्थायै । नन्दिन्यै । रुद्रकालिकायै । आदित्यवर्णायै । कौमार्यै । मयूरवरवाहिन्यै । पद्मासनगतायै। गौर्यै। महाकाल्यै। सुरार्चितायै। अदित्यै। नियतायै नमः । २८०

ओं रौद्र्यै नमः । पद्मगर्भायै । विवाहनायै । विरूपाक्षायै । केशिवाहायै । गुहापुरनिवासिन्यै । महाफलायै । अनवद्यांग्यै । कामरूपायै । सरिद्वरायै । भास्वद्रूपायै । मुक्तिदात्र्यै । प्रणतक्लेश-भञ्जनायै । कौशिक्यै। गोमिन्यै । रात्र्यै । त्रिदशारिविनाशिन्यै । बहुरूपायै । सुरूपायै । विरूपायै नमः । ३००

ओं रूपवर्जितायै नमः । भक्तार्तिशमनायै । भव्यायै । भवभावविनाशिन्यै । सर्वज्ञानपरीताङ्ग्यै । सर्वासुरविमर्दिकायै । पिकस्वन्यै । सामगीतायै । भवांकनिलयायै । प्रियायै । दीक्षायै । विद्याधर्यै । दीप्तायै । महेन्द्राहितपातिन्यै । सर्वदेवमयायै । दक्षायै । समुद्रान्तरवासिन्यै । अकलंकायै । निराधारायै । नित्यसिद्धायै नमः । ३२०

ओं निरामयायै नमः । कामधेनवे । बृहद्गर्भायै । धीमत्यै । मौननाशिन्यै । निस्संकल्पायै । निरातङ्कायै । विनयायै । विनयप्रदायै । ज्वालामालायै । सहस्राढ्यायै । देवदेव्यै । मनोमयायै । सुभगायै । सुविशुद्धायै । वसुदेवसमुद्भवायै । महेन्द्रोपेन्द्रभगिन्यै । भक्तिगम्यायै । परावरायै । ज्ञानज्ञेयायै नमः । ३४०

ओं परातीतायै नमः । वेदान्तविषयायै मत्यै । दक्षिणायै । दाहिकायै । दह्यायै । सर्वभूतहृदिस्थितायै । योगमायायै । विभागज्ञायै । महामोहायै । गरीयस्यै । सन्ध्यायै । सर्वसमुद्भूतायै । ब्रह्मवृक्षाश्रयायै । अदित्यै । बीजाङ्कुरसमुद्भूतायै । महाशक्त्यै । महामत्यै । ख्यात्यै । प्रज्ञावत्यै । संज्ञायै नमः । ३६०

ओं महाभोगीन्द्रशायिन्यै नमः । ह्रींकृत्यै । शङ्कर्यै । शान्त्यै । गन्धर्वगणसेवितायै । वैश्वानर्यै । महाशूलायै । देवसेनायै । भवप्रियायै । महारात्र्यै । परानन्दायै । शच्यै । दुःस्वप्ननाशिन्यै । ईड्यायै । जयायै । जगद्धात्र्यै । दुर्विज्ञेयायै । सुरूपिण्यै । गुहाम्बिकायै । गणोत्पन्नायै नमः । ३८०

ओं महापीठायै नमः । मरुत्सुतायै । हव्यवाहायै । भवानन्दायै । जगद्योनये । जगन्मात्रे । जगन्मृत्यवे । जरातीतायै । बुद्धिदायै । सिद्धिदात्र्यै । रत्नगर्भायै । रत्नगर्भाश्रयायै । परायै । दैत्यहन्त्र्यै । स्वेष्टदात्र्यै । मङ्गलैकसुविग्रहायै । पुरुषान्तर्गतायै । समाधिस्थायै । तपस्विन्यै । दिविस्थितायै नमः । ४००

ओं त्रिणेत्रायै नमः । सर्वेन्द्रियमनोधृत्यै । सर्वभूतहृदिस्थायै । संसारतारिण्यै । वेद्यायै । ब्रह्मणे । विवेद्यायै । महालीलायै । ब्राह्मण्यै । बृहत्यै । ब्राह्मचै । ब्रह्मभूतायै । अघहारिण्यै । हिरण्मय्यै । महादात्र्यै । संसारपरिवर्तिकायै । सुमालिन्यै । सुरूपायै । भास्विन्यै । धारिण्यै नमः । ४२०

ओं उन्मूलिन्यै नमः । सर्वसमायै । सर्वप्रत्ययसाक्षिण्यै । सुसौम्यायै । चन्द्रवदनायै । ताण्डवासक्तमानसायै । सत्वशुद्धिकर्यै । शुद्धायै । मलत्रयविनाशिन्यै । जगत्त्रय्यै । जगन्मूर्त्यै । त्रिमूर्त्यै । अमृताश्रयायै । विमानस्थायै । विशोकायै । शोकनाशिन्यै । अनाहतायै । हेमकुण्डलिन्यै । काल्यै । पद्मवासायै नमः । ४४०

ओं सनातन्यै । सदाकीर्त्यै । सर्वभूतशयायै । देव्यै । सतां प्रियायै । ब्रह्ममूर्तिकलायै । कृत्तिकायै । कञ्जमालिन्यै । व्योमकेशायै । क्रियाशक्त्यै । इच्छाशक्त्यै । परायै गत्यै । क्षोभिकायै । खण्डिकाभेद्यायै । भेदाभेदविवर्जितायै । अभिन्नायै । भिन्नसंस्थानायै । वशिन्यै । वंशधारिण्यै । गुह्यशक्त्यै नमः । ४६०

ओं गुह्यतत्वायै नमः । सर्वदायै । सर्वतोमुख्यै । भगिन्यै । निराधारायै । निराहारायै । निरङ्कुशपदोद्भूतायै । चक्रहस्तायै । विशोधिकायै । स्रग्विण्यै । पद्मसंभेदकारिण्यै । परावरविधानज्ञायै । महापुरुषपूर्वजायै । परावरज्ञायै । विद्यायै । विद्युज्जिह्वायै । जिताश्रयायै । विद्यामय्यै । सहस्राक्ष्यै । सहस्रवदनात्मजायै नमः । ४८०

ओं सहस्ररश्मये नमः । सत्वस्थायै । महेश्वरपदाश्रयायै । ज्वालिन्यै । सन्मयायै । व्याप्तायै । चिन्मयायै । पद्मभेदिकायै । महाश्रयायै । महामन्त्रायै । महादेवमनोरमायै । व्योमलक्ष्म्यै । सिंहरथायै । चेकितानायै । अमितप्रभायै । विश्वेश्वर्यै । भगवत्यै । सकलायै । कालहारिण्यै । सर्ववेद्यायै नमः । ५००

ओं सर्वभद्रायै नमः । गुह्यायै । गूढायै । गुहारण्यै । प्रलयायै । योगधात्र्यै । गङ्गायै । विश्वेश्वर्यै । कामदायै । कनकायै । कान्तायै । कञ्जगर्भप्रभायै । पुण्यदायै । कालकेशायै । भोक्त्र्यै । पुष्करिण्यै । सुरेश्वर्यै । भूतधात्र्यै । भूतिभूषायै । पञ्चब्रह्मसमुत्पन्नायै नमः । ५२०

ओं परमार्थायै नमः । अर्थविग्रहायै । वर्णोदयायै । भानुमूर्त्यै । वाग्विज्ञेयायै । मनोजवायै । मनोहरायै । महोरस्कायै । तामस्यै । वेदरूपिण्यै । वेदशक्त्यै । वेदमात्रे । वेदविद्याप्रकाशिन्यै । योगेश्वरेश्वर्यै । मायायै । महाशक्त्यै । महामय्यै । विश्वान्तःस्थायै । वियन्मूर्त्यै । भार्गव्यै नमः । ५४०

ओं सुरसुन्दर्यै नमः । सुरभ्यै । नन्दिन्यै । विद्यायै । नन्दगोपतनूद्भवायै । भारत्यै । परमानन्दायै । परावरविभेदिकायै । सर्वप्रहरणोपेतायै । काम्यायै । कामेश्वरेश्वर्यै । अनन्तानन्दविभवायै । हृल्लेखायै । कनकप्रभायै । कूष्माण्डायै । धनरत्नाढ्यायै । सुगन्धायै । गन्धदायिन्यै । त्रिविक्रमपदोद्भूतायै । चतुरास्यायै नमः । ५६०

ओं शिवोदयायै नमः । सुदुर्लभायै । धनाध्यक्षायै । धन्यायै । पिङ्गललोचनायै । शान्तायै । प्रभास्वरूपायै । पङ्कजायतलोचनायै । इन्द्राक्ष्यै । हृदयान्तः स्थायै । शिवायै । मात्रे । सत्क्रियायै । गिरिजायै । सुगूढायै । नित्यपुष्टायै । निरन्तरायै । दुर्गायै । कात्यायन्यै । चण्ड्यै नमः । ५८०

ओं चन्द्रिकायै नमः । कान्तविग्रहायै । हिरण्यवर्णायै । जगत्यै । जगद्यन्त्रप्रवर्तिकायै । मन्दराद्रिनिवासायै । शारदायै । स्वर्णमालिन्यै । रत्नमालायै । रत्नगर्भायै । व्युष्ट्यै । विश्वप्रमाथिन्यै । पद्मानन्दायै । पद्मनिभायै । नित्यपुष्टायै । कृतोद्भवायै । नारायण्यै । दुष्टशिक्षायै । सूर्यमात्रे । वृषप्रियायै नमः । ६००

ओं महेन्द्रभगिन्यै नमः । सत्यायै । सत्यभाषायै । सुकोमलायै । वामायै । पञ्चतपसां वरदात्र्यै । वाच्यवर्णेश्वर्यै । विद्यायै । दुर्जयायै । दुरतिक्रमायै । कालरात्र्यै । महावेगायै । वीरभद्रप्रियायै । भद्रकाल्यै । जगन्मात्रे । भक्तानां भद्रदायिन्यै । करालायै । पिङ्गलाकारायै । कामभेत्र्यै । महामनसे नमः । ६२०

ओं यशस्विन्यै नमः । यशोदायै । षडध्वपरिवर्तिकायै । शङ्खिन्यै । पद्मिन्यै । संख्यायै । सांख्ययोगप्रवर्तिकायै । चैत्राद्यै । वत्सरारूढायै । जगत्संपूरण्यै । इन्द्रजायै । शुंभघ्न्यै । खेचराराध्यायै । कम्बुग्रीवायै । बलीडितायै । खगारूढायै । महैश्वर्यायै । सुपद्मनिलयायै । विरक्तायै । गरुडस्थायै नमः । ६४०

ओं जगतीहृद्गुहाश्रयायै । शुंभादिमथनायै । भक्तहृद्ध्वर-निवासिन्यै । जगत्त्रयारण्यै । सिद्धसङ्कल्पायै । कामदायै । सर्वविज्ञानदात्र्यै । अनल्पकल्मषहारिण्यै । सकलोपनिषद्गम्यायै । दुष्टदुष्प्रेक्ष्यसत्तमायै । सद्वृतायै । लोकसंव्याप्तायै । तुष्ट्यै । पुष्ट्यै । क्रियावत्यै । विश्वामरेश्वर्यै । भुक्तिमुक्तिप्रदायिन्यै । शिवायै । धृतायै । लोहिताक्ष्यै नमः । ६६०

ओं सर्पमालाविभूषणायै नमः । निरानन्दायै । त्रिशूलासि-धनुर्बाणादिधारिण्यै । अशेषध्येयमूर्त्यै । देवतानां देवतायै । वरायै । अम्बिकायै । गिरेः पुत्र्यै । निशुम्भविनिपातिन्यै । सुवर्णायै । स्वर्णलसितायै । अनन्तवर्णायै । सदाधृतायै । शाङ्कर्यै । शान्त-हृदयायै । अहोरात्रविधायिकायै । विश्वगोप्त्र्यै । गूढरूपायै । गुणपूर्णायै । गार्ग्यजायै नमः । ६८०

ओं गौर्यै नमः । शाकंभर्यै । सत्यसन्धायै । सन्ध्यात्रयीधृतायै । सर्वपापविनिर्मुक्तायै । सर्वबन्धविवर्जितायै । सांख्ययोगस-माख्यातायै । अप्रमेयायै । मुनीडितायै । विशुद्धसुकुलोद्भूतायै । बिन्दुनादसमादृतायै । शम्भुवामाङ्कगायै । शशितुल्यनिभाननायै । वनमालाविराजन्त्यै । अनन्तशयनादृतायै । नरनारायणोद्भूतायै । नारसिंह्यै । दैत्यप्रमाथिन्यै । शङ्खचक्रपद्मगदाधरायै । सङ्कर्षण-समुत्पन्नायै नमः । ७००

ओं अम्बिकायै नमः । सज्जनाश्रयायै । सुवृतायै । सुन्दर्यै । धर्मकामार्थदायिन्यै । मोक्षदायै । भक्तिनिलयायै । पुराणपुरुषा-दृतायै । महाविभूतिदायै । आराध्यायै । सरोजनिलयायै । असमायै । अष्टादशभुजायै । अनादये । नीलोत्पलदलाक्षिण्यै । सर्वशक्तिसमारूढायै । धर्माधर्मविवर्जितायै । वैराग्यज्ञाननिरतायै । निरालोकायै । निरिन्द्रियायै नमः । ७२०

ओं विचित्रगहनाधारायै नमः । शाश्वतस्थानवासिन्यै । ज्ञानेश्वर्यै । पीतचेलायै । वेदवेदान्तपारगायै । मनस्विन्यै । मन्युमात्रे । महामन्युसमुद्भवायै । अमन्यवे । अमृतास्वादायै । पुरन्दरपरिष्टुतायै । अशोच्यायै । भिन्नविषयायै । हिरण्यरजतप्रियायै । हिरण्यजनन्यै । भीमायै । हेमाभरण भूषितायै । विभ्राजमानायै । दुर्ज्ञेयायै । ज्योतिष्टोमफलप्रदायै नमः । ७४०

महानिद्रासमुत्पत्तये नमः । अनिद्रायै । सत्यदेवतायै । दीर्घायै । ककुद्मिन्यै । पिङ्गजटाधारायै । मनोज्ञधिये । महाश्रयायै । रमोत्पन्नायै । तमःपारेप्रतिष्ठितायै । त्रितत्त्वमात्रे । त्रिविधायै । सुसूक्ष्मायै । पद्मसंश्रयायै । शान्त्यतीतकलायै । अतीतविकारायै । श्वेतचेलिकायै । चित्रमायायै । शिवज्ञानस्वरूपायै । दैत्यमाथिन्यै नमः । ७६०

ओं काम्यप्यै नमः । कालसर्पाभवेणिकायै । शास्त्रयोनिकायै । त्रयीमूर्त्यै । क्रियामूर्त्यै । चतुर्वर्गायै । दर्शिन्यै । नारायण्यै । नरोत्पन्नायै । कौमुद्यै । कान्तिधारिण्यै । कौशिक्यै । ललितायै । लीलायै । परावरविभाविन्यै । वरेण्यायै । अद्भुतमाहात्म्यायै । वडवायै । वामलोचनायै । सुभद्रायै नमः । ७८०

ओं चेतनाराध्यायै नमः । शान्तिदायै । शान्तिवर्धिन्यै । जयादिशक्तिजनन्यै । शक्तिचक्रप्रवर्तिकायै । त्रिशक्तिजनन्यै । जन्यायै । षट्सूत्रपरिवर्णितायै । सुधौतकर्मणाऽऽराध्यायै । युगान्तदहनात्मिकायै । संकर्षिण्यै । जगद्धात्र्यै । कामयोन्यै । किरीटिन्यै । ऐन्द्र्यै । त्रैलोक्यनमितायै । वैष्णव्यै । परमेश्वर्यै । प्रद्युम्नजनन्यै । बिम्बसमोष्ठ्यै नमः । ८००

ओं पद्मलोचनायै नमः। मदोत्कटायै। हंसगत्यै। प्रचण्डायै। चण्डविक्रमायै। वृषाधीशायै। परात्मने। विन्ध्यपर्वतवासिन्यै। हिमवन्मेरुनिलयायै। कैलासपुरवासिन्यै। चाणूरहन्त्र्यै। नीतिज्ञायै। कामरूपायै। त्रयीतनवे। व्रतस्नातायै। धर्मशीलायै। सिंहासननिवासिन्यै। वीरभद्रादृतायै। वीरायै। महाकालसमुद्भवायै नमः। ८२०

ओं विधाद्याराचिंतायै नमः। सिद्धसाध्याराधितपादुकायै। श्रद्धात्मिकायै। पावन्यै। मोहिन्यै। अचलात्मिकायै। महाद्भुतायै। वारिजाक्ष्यै। सिंहवाहनगामिन्यै। मनीषिण्यै। सुधावाण्यै। वीणावादनतत्परायै। श्वेतवाहनिषेव्यायै। लसन्मत्यै। अरुन्धत्यै। हिरण्याक्ष्यै। महानन्दप्रदायिन्यै। वसुप्रभायै। सुमाल्याप्तकन्धरायै। पङ्कजाननायै नमः। ८४०

ओं परावरायै नमः। वरारोहायै। सहस्रनयनार्चितायै। श्रीरूपायै। श्रीमत्यै। श्रेष्ठायै। शिवनाम्न्यै। शिवप्रियायै। श्रीप्रदायै। श्रितकल्याणायै। श्रीधरार्धशरीरिण्यै। श्रीकलायै। अनन्तदृष्ट्यै। अक्षुद्रायै। अरातिसूदन्यै। रक्तबीजनिहन्त्र्यै। दैत्यसङ्घविमर्दिन्यै। सिंहारूढायै। सिंहिकास्यायै। दैत्यशोणितपायिन्यै नमः। ८६०

ओं सुकीर्तिसहितायै नमः। छिन्नसंशयायै। रसवेदिन्यै। गुणाभिरामायै। नागारिवाहनायै। निर्जरार्चितायै। नित्योदितायै। स्वयंज्योतिषे। स्वर्णकायायै। वज्रदण्डाङ्कितायै। अमृतसञ्जीविन्यै। वज्रच्छन्नायै। देवदेव्यै। वरवज्रस्वविग्रहायै। माङ्गल्यायै। मङ्गलात्मने। मालिन्यै। माल्यधारिण्यै। गन्धर्व्यै। तरुण्यै नमः। ८८०

चान्द्रचै नमः। खड्गायुधधरायै। सौदामिन्यै। प्रजानन्दायै। भृगूद्भवायै। एकायै। अनङ्गायै। शास्त्रार्थकुशलायै। धर्मचारिण्यै। धर्मसर्वस्ववाहायै। धर्माधर्मविनिश्चयायै। धर्मशक्त्यै। धर्ममयायै। धार्मिकानां शिवप्रदायै। विधर्मायै। विश्वधर्मज्ञायै। धर्मार्थान्तरविग्रहायै। धर्मवर्ष्मणे। धर्मपूर्वायै। धर्मपारङ्गतान्तरायै नमः। ९००

ओं धर्मोपदेष्ट्र्यै नमः। धर्मात्मने। धर्मगम्यायै। धराधरायै। कपालिन्यै। शाकलिन्यै। कलाकलितविग्रहायै। सर्वशक्तिविमुक्तायै। कर्णिकारधरायै। अक्षरायै। कंसप्राणहरायै। युगधर्मधरायै। युगप्रवर्तिकायै। त्रिसन्ध्यायै। ध्येय(त्रिसन्ध्या-ध्येय)विग्रहायै। स्वर्गापवर्गदात्र्यै। प्रत्यक्षदेवतायै। आदित्यायै। दिव्यगन्धायै। दिवाकरनिभप्रभायै नमः। ९२०

ओं पद्मासनगतायै नमः। खड्गबाणशरासनायै। शिष्टायै। विशिष्टायै। शिष्टेष्टायै। शिष्टश्रेष्ठप्रपूजितायै। शतरूपायै। शतावर्तायै। वितताये। रासमोदिन्यै। सूर्येन्दुनेत्रायै। प्रद्युम्नजनन्यै। सुष्ठुमायिन्यै। सूर्यान्तरस्थितायै। सत्प्रतिष्ठित-विग्रहायै। निवृत्तायै। ज्ञानपारगायै। पर्वतात्मजायै। कात्यायन्यै। चण्डिकायै नमः। ९४०

ओं चण्डचै नमः। हैमवत्यै। दाक्षायण्यै। सत्यै। भवान्यै। सर्वमङ्गलायै। धूम्रलोचनहन्त्र्यै। चण्डमुण्डविनाशिन्यै। योगनिद्रायै। योगभद्रायै। समुद्रतनयायै। देवप्रियङ्कर्यै। शुद्धायै। भक्तभक्तिप्रवर्धिन्यै। त्रिणेत्रायै। चन्द्रमुकुटायै। प्रमथार्चित-पादुकायै। अर्जुनाभीष्टदात्र्यै। पाण्डवप्रियकारिण्यै। कुमारलाल-नासक्तायै नमः। ९६०

ओं हरबाहूपधानिकायै नमः। विघ्नेशजनन्यै। भक्तविघ्नस्तोम-प्रहारिण्यै। सुस्मितेन्दुमुख्यै। नम्यायै। जयाप्रियसख्यै। अनादि-निधनायै। प्रेष्ठायै। चित्रमाल्यानुलेपनायै। कोटिचन्द्रप्रतीकाशायै। कूटजालप्रमाथिन्यै। कृत्याप्रहारिण्यै। मारणोच्चाटन्यै। सुरासुर-प्रवन्द्याङ्घ्रये। मोहघ्न्यै। ज्ञानदायिन्यै। षड्वैरिनिग्रहकर्यै। वैरिविद्राविण्यै। भूतसेव्यायै। भूतदात्र्यै नमः। ९८०

ओं भूतपीडाविमर्दिकायै नमः। नारदस्तुतचारित्रायै। वरदेशायै। वरप्रदायै। वामदेवस्तुतायै। कामदायै। सोमशेखरायै। दिक्पालसेवितायै। भव्यायै। भामिन्यै। भावदायिन्यै। स्त्रीसौभाग्यप्रदात्र्यै। भोगदायै। रोगनाशिन्यै। व्योमगायै। भूमिगायै। मुनिपूज्यपदाम्बुजायै। वनदुर्गायै। दुर्बोधायै। महादुर्गायै नमः। १०००

—*—

# ।। श्री पार्वती (दुर्गा)सहस्रनामस्तोत्रम् ।।

(दुर्गासहस्रनामस्तोत्रमिति स्कान्दे । कञ्चित्कचिद्भिन्नम् ।)

हिमवानुवाच ।

का त्वं देवि विशालाक्षि शशाङ्कावयवाङ्किते ।
न जाने त्वामहं वत्से यथावद् ब्रूहि पृच्छते ।। १

गिरीन्द्रवचनं श्रुत्वा ततः सा परमेश्वरी ।
व्याजहार महाशैलं योगिनामभयप्रदा ।। २

देव्युवाच ।

मां विद्धि परमां शक्तिं परमेशसमाश्रयाम् ।
अनन्यामव्ययामेकां यां पश्यन्ति मुमुक्षवः ।। ३

अहं वै सर्वभावानामात्मा सर्वान्तरा शिवा ।
शाश्वतैश्वर्यविज्ञानमूर्तिः सर्वप्रवर्तिका ।। ४

अनन्ताऽनन्तमहिमा संसारार्णवतारिणी ।
दिव्यं ददामि ते चक्षुः पश्य मे रूपमैश्वरम् ।। ५

एतावदुक्त्वा विज्ञानं दत्त्वा हिमवते स्वयम् ।
स्वं रूपं दर्शयामास दिव्यं तत् पारमेश्वरम् ।। ६

कोटिसूर्यप्रतीकाशं तेजोबिम्बं निराकुलम् ।
ज्वालामालासहस्राढ्यं कालानलशतोपमम् ।। ७

दंष्ट्राकरालं दुर्धर्षं जटामण्डलमण्डितम् ।
त्रिशूलवरहस्तं च घोररूपं भयानकम् ।। ८

प्रशान्तं सौम्यवदनमनन्ताश्चर्यसंयुतम् ।
चन्द्रावयवलक्ष्माणं चन्द्रकोटिसमप्रभम् ।। ९

किरीटिनं गदाहस्तं नूपुरैरुपशोभितम्।
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम्।। १०
शङ्खचक्रधरं काम्यं त्रिनेत्रं कृत्तिवासाम्।
अण्डस्थं चाण्डबाह्यस्थं बाह्यमाभ्यन्तरं परम्।। ११
सर्वशक्तिमयं शुभ्रं सर्वाकारं सनातनम्।
ब्रह्मेन्द्रोपेन्द्रयोगीन्द्रैर्वन्द्यमानपदाम्बुजम्।। १२
सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम्।
सर्वमावृत्य तिष्ठन्तं ददर्श पारमेश्वरम्।। १३
दृष्ट्वा तदीदृशं रूपं देव्या माहेश्वरं परम्।
भयेन च समाविष्टः स राजा हृष्टमानसः।। १४
आत्मन्याधाय चात्मानमोङ्कारं समनुस्मरन्।
नाम्नामष्टसहस्रेण तुष्टाव परमेश्वरीम्।। १५
हिमवानुवाच।
शिवोमा परमा शक्तिरनन्ता निष्कलाऽमला।
शान्ता माहेश्वरी नित्या शाश्वती परमाक्षरा।। १६
अचिन्त्या केवलाऽनन्त्या शिवात्मा परमात्मिका।
अनादिरव्यया शुद्धा देवात्मा सर्वगाऽचला।। १७
एकाऽनेकविभागस्था मायातीता सुनिर्मला।
महामाहेश्वरी सत्या महादेवी निरंजना।। १८
काष्ठा सर्वान्तरस्था च चिच्छक्तिरतिलालसा।
नन्दा सर्वात्मिका विद्या ज्योतीरूपाऽमृताऽक्षरा।। १९

शान्तिः प्रतिष्ठा सर्वेषां निवृत्तिरमृतप्रदा।
व्योममूर्त्तिर्व्योमलया व्योमाधाराऽच्युताऽमरा ॥ २०
अनादिनिधनाऽमोघा कारणात्मा कलाऽकला।
क्रतुः प्रथमजा नाभिरमृतस्यात्मसंश्रया ॥ २१
प्राणेश्वरप्रिया माता महामहिषघातिनी।
प्राणेश्वरी प्राणरूपा प्रधानपुरुषेश्वरी ॥ २२
सर्वशक्तिकलाकारा ज्योत्स्ना द्यौर्महिमास्पदा।
सर्वकार्यनियन्त्री च सर्वभूतेश्वरेश्वरी ॥ २३
अनादिरव्यक्तगुहा महानन्दा सनातनी।
आकाशयोनिर्योगस्था महायोगेश्वरेश्वरी ॥ २४
महामाया सुदुष्पूरा मूलप्रकृतिरीश्वरी।
संसारयोनिः सकला सर्वशक्तिसमुद्भवा ॥ २५
संसारपारा दुर्वारा दुर्निरीक्ष्या दुरासदा।
प्राणशक्तिः प्राणविद्या योगिनी परमा कला ॥ २६
महाविभूतिर्दुर्धर्षा मूलप्रकृतिसंभवा।
अनाद्यनन्तविभवा परार्था पुरुषाऽरणिः ॥ २७
सर्गस्थित्यन्तकरणी सुदुर्वाच्या दुरत्यया।
शब्दयोनिः शब्दमयी नादाख्या नादविग्रहा ॥ २८
प्रधानपुरुषातीता प्रधानपुरुषात्मिका।
पुराणी चिन्मयी पुंसामादिः पुरुषरूपिणी ॥ २९
भूतान्तरात्मा कूटस्था महापुरुषसंज्ञिता।
जन्ममृत्युजरातीता सर्वशक्तिसमन्विता ॥ ३०

व्यापिनी चानवच्छिन्ना प्रधानानुप्रवेशिनी।
क्षेत्रज्ञशक्तिरव्यक्तलक्षणा मूलवर्जिता।। ३१
अनादिमायासंभिन्ना त्रितत्त्वा प्रकृतिर्गुहा।
महामायासमुत्पन्ना तामसी पौरुषी ध्रुवा।। ३२
व्यक्ताऽव्यक्तात्मिका कृष्णा रक्ता शुक्ला प्रसूतिका।
अकार्या कार्यजननी नित्यं प्रसवधर्मिणी।। ३३
सर्गप्रलयनिर्मुक्ता सृष्टिस्थित्यन्तधर्मिणी।
ब्रह्मगर्भा चतुर्विंशा पद्मनाभाऽच्युतात्मिका।। ३४
वैद्युती शाश्वती योनिर्जगन्मातेश्वरप्रिया।
सर्वाधारा महारूपा सर्वैश्वर्यसमन्विता।। ३५
विश्वरूपा महागर्भा विश्वेशेच्छानुवर्तिनी।
महीयसी ब्रह्मयोनिर्महालक्ष्मीसमुद्भवा।। ३६
महाविमानमध्यस्था महानिद्राऽऽत्महेतुका।
सर्वसाधारणी सूक्ष्मा ह्यविद्या पारमार्थिका।। ३७
अनन्तरूपाऽनन्तस्था देवी पुरुषमोहिनी।
अनेकाकारसंस्थाना कालत्रयविवर्जिता।। ३८
ब्रह्मजन्मा हरेर्मूर्तिर्ब्रह्मविष्णुशिवात्मिका।
ब्रह्मेशविष्णुजननी ब्रह्माख्या ब्रह्मसंश्रया।। ३९
व्यक्ता प्रथमजा ब्राह्मी महती ज्ञानरूपिणी।
वैराग्यैश्वर्यधर्मात्मा ब्रह्ममूर्तिर्हृदिस्थिता।
अपांयोनिः स्वयंभूतिर्मानसी तत्त्वसंभवा।। ४०

ईश्वराणी च शर्वाणी शंकरार्धशरीरिणी।
भवानी चैव रुद्राणी महालक्ष्मीरथाम्बिका॥ ४१
महेश्वरसमुत्पन्ना भुक्तिमुक्तिफलप्रदा।
सर्वेश्वरी सर्ववन्द्या नित्यं मुदितमानसा॥ ४२
ब्रह्मेन्द्रोपेन्द्रनमिता शंकरेच्छानुवर्तिनी।
ईश्वरार्धासनगता महेश्वरपतिव्रता॥ ४३
सकृद्विभाविता सर्वा समुद्रपरिशोषिणी।
पार्वती हिमवत्पुत्री परमानन्ददायिनी॥ ४४
गुणाढ्या योगजा योग्या ज्ञानमूर्तिर्विकासिनी।
सावित्री कमला लक्ष्मीः श्रीरनन्तोरसि स्थिता॥ ४५
सरोजनिलया मुद्रा योगनिद्रा सुरार्दिनी।
सरस्वती सर्वविद्या जगज्ज्येष्ठा सुमङ्गला॥ ४६
वाग्देवी वरदा वाच्या कीर्तिः सर्वार्थसाधिका।
योगीश्वरी ब्रह्मविद्या महाविद्या सुशोभना॥ ४७
गुह्यविद्याऽऽत्मविद्या च धर्मविद्यात्मभाविता।
स्वाहा विश्वंभरा सिद्धिः स्वधा मेधा धृतिः श्रुतिः॥ ४८
नीतिः सुनीतिः सुकृतिर्माधवी नरवाहिनी।
अजा विभावरी सौम्या भोगिनी भोगदायिनी॥ ४९
शोभा वंशकरी लोला मालिनी परमेष्ठिनी।
त्रैलोक्यसुन्दरी रम्या सुन्दरी कामचारिणी॥ ५०
महानुभावा सत्त्वस्था महामहिषमर्दनी।
पद्ममाला पापहरा विचित्रा मुकुटानना॥ ५१

कान्ता चित्राम्बरधरा दिव्याभरणभूषिता ।
हंसाख्या व्योमनिलया जगत्सृष्टिविवार्धिनी ॥ ५२

निर्यन्त्रा यन्त्रवाहस्था नन्दिनी भद्रकालिका ।
आदित्यवर्णा कौमारी मयूरवरवाहिनी ॥ ५३

वृषासनगता गौरी महाकाली सुरार्चिता ।
अदितिर्नियता रौद्री पद्मगर्भा विवाहना ॥ ५४

विरूपाक्षी लेलिहाना महापुरनिवासिनी ।
महाफलाऽनवद्याङ्गी कामपूरा विभावरी ॥ ५५

विचित्ररत्नमुकुटा प्रणतार्तिप्रभंजनी ।
कौशिकी कर्षणी रात्रिस्त्रिदशार्त्तिविनाशिनी ॥ ५६

बहुरूपा सुरूपा च विरूपा रूपवर्जिता ।
भक्तार्तिशमनी भव्या भवभावविनाशिनी ॥ ५७

निर्गुणा नित्यविभवा निःसारा निरपत्रपा ।
यशस्विनी सामगीतिर्भवाङ्गनिलयाऽलया ॥ ५८

दीक्षा विद्याधरी दीप्ता महेन्द्रविनिपातिनी ।
सर्वातिशायिनी विद्या सर्वसिद्धिप्रदायिनी ॥ ५९

सर्वेश्वरप्रिया तार्क्ष्या समुद्रान्तरवासिनी ।
अकलङ्का निराधारा नित्यसिद्धा निरामया ॥ ६०

कामधेनुर्बृहद्गर्भा धीमती मोहनाशिनी ।
निः सङ्कल्पा निरातङ्का विनया विनयप्रदा ॥ ६१

ज्वालामालासहस्राढ्या देवदेवी मनोन्मनी ।
महाभगवती दुर्गा वासुदेवसमुद्भवा ॥ ६२

महेन्द्रोपेन्द्रभगिनी भक्तिगम्या परावरा।
ज्ञानज्ञेया जरातीता वेदान्तविषया गतिः ॥ ६३

दक्षिणा दहना दाह्या सर्वभूतनमस्कृता।
योगमाया विभावज्ञा महामाया महीयसी ॥ ६४

संध्या सर्वसमुद्भूतिर्ब्रह्मवृक्षाश्रया नतिः।
बीजाङ्कुरसमुद्भूतिर्महाशक्तिर्महामतिः ॥ ६५

ख्यातिः प्रज्ञा चितिः संवित् महाभोगीन्द्रशायिनी।
विकृतिः शांकरी शास्त्री गणगन्धर्वसेविता ॥ ६६

वैश्वानरी महाशाला देवसेना गुहप्रिया।
महारात्रिः शिवानन्दा शची दुःस्वप्ननाशिनी ॥ ६७

इज्या पूज्या जगद्धात्री दुर्विज्ञेया सुरूपिणी।
गुहाम्बिका गुणोत्पत्तिर्महापीठा मरुत्सुता ॥ ६८

हव्यवाहान्तर्यागादिः हव्यवाहसमुद्भवा।
जगद्योनिर्जगन्माता जन्ममृत्युजरातिगा ॥ ६९

बुद्धिमाता बुद्धिमती पुरुषान्तरवासिनी।
तरस्विनी समाधिस्था त्रिनेत्रा दिवि संस्थिता ॥ ७०

सर्वेन्द्रियमनोमाता सर्वभूतहृदि स्थिता।
संसारतारिणी विद्या ब्रह्मवादिमनोलया ॥ ७१

ब्रह्माणी बृहती ब्राह्मी ब्रह्मभूता भवारणिः।
हिरण्मयी महारात्रिः संसारपरिवर्त्तिका ॥ ७२

सुमालिनी सुरूपा च भाविनी तारिणी प्रभा।
उन्मीलनी सर्वसहा सर्वप्रत्ययसाक्षिणी ॥ ७३

सुसौम्या चन्द्रवदना ताण्डवासक्तमानसा।
सत्त्वशुद्धिकरी शुद्धिर्मलत्रयविनाशिनी॥ ७४
जगत्प्रिया जगन्मूर्तिस्त्रिमूर्तिरमृताश्रया।
निराश्रया निराहारा निरङ्कुरवनोद्भवा॥ ७५
चन्द्रहस्ता विचित्राङ्गी स्रग्विणी पद्मधारिणी।
परावरविधानज्ञा महापुरुषपूर्वजा॥ ७६
विद्येश्वरप्रिया विद्या विद्युज्जिह्वा जितश्रमा।
विद्यामयी सहस्राक्षी सहस्रवदनात्मजा॥ ७७
सहस्ररश्मिः सत्त्वस्था महेश्वरपदाश्रया।
क्षालिनी सन्मयी व्याप्ता तैजसी पद्मबोधिका॥ ७८
महामायाश्रया मान्या महादेवमनोरमा।
व्योमलक्ष्मीः सिंहरथा चेकितानाऽमितप्रभा॥ ७९
वीरेश्वरी विमानस्था विशोका शोकनाशिनी।
अनाहता कुण्डलिनी नलिनी पद्मवासिनी॥ ८०
सदानन्दा सदाकीर्तिः सर्वभूताश्रयस्थिता।
वाग्देवता ब्रह्मकला कलातीता कलारणिः॥ ८१
ब्रह्मश्रीर्ब्रह्महृदया ब्रह्मविष्णुशिवप्रिया।
व्योमशक्तिः क्रियाशक्तिर्ज्ञानशक्तिः परागतिः॥ ८२
क्षोभिका बन्धिका भेद्या भेदाभेदविवर्जिता।
अभिन्ना भिन्नसंस्थाना वंशिनी वंशहारिणी॥ ८३
गुह्यशक्तिर्गुणातीता सर्वदा सर्वतोमुखी।
भगिनी भगवत्पत्नी सकला कालकारिणी॥ ८४

सर्ववित् सर्वतोभद्रा गुह्यातीता गुहारणिः ।
प्रक्रिया योगमाता च गङ्गा विश्वेश्वरेश्वरी ।। ८५
कपिला कापिला कान्ता कनकाभा कलान्तरा ।
पुण्या पुष्करिणी भोक्त्री पुरंदरपुरस्सरा ।। ८६
पोषणी परमैश्वर्यभूतिदा भूतिभूषणा ।
पञ्चब्रह्मसमुत्पत्तिः परमार्थाऽर्थविग्रहा ।। ८७
धर्मोदया भानुमती योगिज्ञेया मनोजवा ।
मनोहरा मनोरक्षा तापसी वेदरूपिणी ।। ८८
वेदशक्तिर्वेदमाता वेदविद्याप्रकाशिनी ।।
योगेश्वरेश्वरी माता महाशक्तिर्मनोमयी ।।८९
विश्वावस्था वियन्मूर्त्तिर्विद्युन्माला विहायसी ।
किंनरी सुरभी वन्द्या नन्दिनी नन्दिवल्लभा ।। ९०
भारती परमानन्दा परापरविभेदिका ।
सर्वप्रहरणोपेता काम्या कामेश्वरेश्वरी ।। ९१
अचिन्त्याऽचिन्त्यविभवा हृल्लेखा कनकप्रभा ।
कूष्माण्डी धनरत्नाढ्या सुगन्धा गन्धदायिनी ।। ९२
त्रिविक्रमपदोद्भूता धनुष्पाणिः शिवोदया ।
सुदुर्लभा धनाध्यक्षा धन्या पिङ्गललोचना ।। ९३
शान्तिः प्रभावती दीप्तिः पङ्कजायतलोचना ।
आद्या हृत्कमलोद्भूता गवां माता रणप्रिया ।। ९४
सत्क्रिया गिरिजा शुद्धा नित्यपुष्टा निरन्तरा ।
दुर्गा कात्यायनी चण्डी चर्चिका शान्तविग्रहा ।। ९५

हिरण्यवर्णा रजनी जगद्यन्त्रप्रवर्तिका।
मन्दराद्रिनिवासा च शारदा स्वर्णमालिनी।। ९६
रत्नमाला रत्नगर्भा पृथ्वी विश्वप्रमाथिनी।
पद्मानना पद्मनिभा नित्यतुष्टाऽमृतोद्भवा।। ९७
धुन्वती दुष्प्रकम्प्या च सूर्यमाता दृषद्वती।
महेन्द्रभगिनी मान्या वरेण्या वरदर्पिता।। ९८
कल्याणी कमला रामा पञ्चभूता वरप्रदा।
वाच्या वरेश्वरी वन्द्या दुर्जया दुरतिक्रमा।। ९९
कालरात्रिर्महावेगा वीरभद्रप्रिया हिता।
भद्रकाली जगन्माता भक्तानां भद्रदायिनी।। १००
कराला पिङ्गलाकारा नामभेदाऽमहामदा।
यशस्विनी यशोदा च षडध्वपरिवर्त्तिका।। १०१
शङ्खिनी पद्मिनी सांख्या सांख्ययोगप्रवर्तिका।
चैत्रा संवत्सरारूढा जगत्संपूरणीन्द्रजा।। १०२
शुम्भारिः खेचरी स्वस्था कम्बुग्रीवा कलिप्रिया।
खगध्वजा खगारूढा परार्ध्या परमालिनी।।१०३
ऐश्वर्यवर्त्मनिलया विरक्ता गरुडासना।
जयन्ती हृद्गुहा रम्या गह्वरेष्ठा गणाग्रणीः।। १०४
संकल्पसिद्धा साम्यस्था सर्वविज्ञानदायिनी।
कलिकल्मषहन्त्री च गुह्योपनिषदुत्तमा।। १०५
निष्ठा दृष्टिः स्मृतिर्व्याप्तिः पुष्टिस्तुष्टिः क्रियावती।
विश्वामरेश्वरेशाना भुक्तिर्मुक्तिः शिवाऽमृता।। १०६

लोहिता सर्पमाला च भीषणी वनमालिनी।
अनन्तशयनाऽनन्या नरनारायणोद्भवा ।। १०७
नृसिंही दैत्यमथनी शङ्खचक्रगदाधरा।
संकर्षणसमुत्पत्तिरम्बिका पादसंश्रया ।। १०८
महाज्वाला महामूर्त्तिः सुमूर्त्तिः सर्वकामधुक्।
सुप्रभा सुस्तना गौरी धर्मकामार्थमोक्षदा ।। १०९
भ्रूमध्यनिलया पूर्वा पुराणपुरुषारणि ः।
महाविभूतिदा मेध्या सरोजनयना समा ।। ११०
अष्टादशभुजाऽनाद्या नीलोत्पलदलप्रभा।
सर्वशक्त्यासनारुढा धर्माधर्मार्थवर्जिता ।। १११
वैराग्यज्ञाननिरता निरालोका निरिन्द्रिया।
विचित्रगहनाधारा शाश्वतस्थानवासिनी ।। ११२
स्थानेश्वरी निरानन्दा त्रिशूलवरधारिणी।
अशेषदेवतामूर्त्तिर्देवता वरदेवता।
गणाम्बिका गिरेः पुत्री निशुम्भविनिपातिनी ।। ११३
अवर्णा वर्णरहिता निर्वर्णा बीजसंभवा।
अनन्तवर्णाऽनन्यस्था शंकरी शान्तमानसा ।। ११४
अगोत्रा गोमती गोप्त्री गुह्यरूपा गुणोत्तरा।
गौर्गीर्गव्यप्रिया गौणी गणेश्वरनमस्कृता ।। ११५
सत्यमात्रा सत्यसंधा त्रिसंध्या संधिवर्जिता।
सर्ववादाश्रया संख्या सांख्ययोगसमुद्भवा ।। ११६
असंख्येयाऽप्रमेयाख्या शून्या शुद्धकुलोद्भवा।
बिन्दुनादसमुत्पत्तिः शंभुवामा शशिप्रभा ।। ११७

विसङ्गा भेदरहिता मनोज्ञा मधुसूदनी।
महाश्रीः श्रीसमुत्पत्तिस्तमःपारे प्रतिष्ठिता॥ ११८

त्रितत्त्वमाता त्रिविधा सुसूक्ष्मपदसंश्रया।
शान्त्यतीता मलातीता निर्विकारा निराश्रया॥ ११९

शिवाख्या चित्तनिलया शिवज्ञानस्वरूपिणी।
दैत्यदानवनिर्मात्री काश्यपी कालकल्पिका॥ १२०

शास्त्रयोनिः क्रियामूर्तिश्चतुर्वर्गप्रदर्शिका।
नारायणी नरोद्भूतिः कौमुदी लिङ्गधारिणी॥ १२१

कामुकी ललिता भावा परा परविभूतिदा।
परान्तजातमहिमा बडवा वामलोचना॥ १२२

सुभद्रा देवकी सीता वेदवेदाङ्गपारगा।
मनस्विनी मन्युमाता महामन्युसमुद्भवा॥ १२३

अमृत्युरमृता स्वाहा पुरुहूता पुरुष्टुता।
अशोच्या भिन्नविषया हिरण्यरजतप्रिया॥ १२४

हिरण्या राजती हैमी हेमाभरणभूषिता।
विभ्राजमाना दुर्ज्ञेया ज्योतिष्टोमफलप्रदा॥ १२५

महानिद्रासमुद्भूतिरनिद्रा सत्यदेवता।
दीर्घा ककुद्मिनी हृद्या शान्तिदा शान्तिवर्द्धिनी॥ १२६

लक्ष्म्यादिशक्तिजननी शक्तिचक्रप्रवर्तिका।
त्रिशक्तिजननी जन्या षडूर्मिपरिवर्जिता॥ १२७

सुधामा कर्मकरणी युगान्तदहनात्मिका।
संकर्षणी जगद्धात्री कामयोनिः किरीटिनी॥ १२८

ऐन्द्री त्रैलोक्यनमिता वैष्णवी परमेश्वरी।
प्रद्युम्नदयिता दान्ता युग्मदृष्टिस्त्रिलोचना॥ १२९

मदोत्कटा हंसगतिः प्रचण्डा चण्डविक्रमा।
वृषावेशा वियन्माता विन्ध्यपर्वतवासिनी॥ १३०

हिमवन्मेरुनिलया कैलासगिरिवासिनी।
चाणूरहन्तृतनया नीतिज्ञा कामरूपिणी॥ १३१

वेदविद्याव्रतस्नाता धर्मशीलाऽनिलाशना।
वीरभद्रप्रिया वीरा महाकालसमुद्भवा॥ १३२

विद्याधरप्रिया सिद्धा विद्याधरनिराकृतिः।
आप्यायनी हरन्ती च पावनी पोषणी खिला॥ १३३

मातृका मन्मथोद्भूता वारिजा वाहनप्रिया।
करीषिणी सुधावाणी वीणावादनतत्परा॥ १३४

सेविता सेविका सेव्या सिनीवाली गरुत्मती।
अरुन्धती हिरण्याक्षी मृगाङ्का मानदायिनी॥ १३५

वसुप्रदा वसुमती वसोर्धारा वसुंधरा।
धराधरा वरारोहा वरा वरसहस्रदा॥ १३६

श्रीफला श्रीमती श्रीशा श्रीनिवासा शिवप्रिया।
श्रीधरा श्रीकरी कल्या श्रीधरार्धशरीरिणी॥ १३७

अनन्तदृष्टिरक्षुद्रा धात्रीशा धनदप्रिया।
निहन्त्री दैत्यसङ्घानां सिंहिका सिंहवाहना॥ १३८

सुषेणा चन्द्रनिलया सुकीर्तिश्छिन्नसंशया।
रसज्ञा रसदा रामा लेलिहानाऽमृतस्रवा॥ १३९

नित्योदिता स्वयंज्योतिरुत्सुका मृतजीवनी।
वज्रदण्डा वज्रजिह्वा वैदेही वज्रविग्रहा ।। १४०
मङ्गल्या मङ्गला माला मलिना मलहारिणी।
गान्धर्वी गारुडी चान्द्री कम्बलाश्वतरप्रिया ।। १४१
सौदामिनी जनानन्दा भ्रुकुटीकुटिलानना।
कर्णिकारकरा कक्ष्या कंसप्राणापहारिणी ।। १४२
युगंधरा युगावर्त्ता त्रिसंध्या हर्षवर्धनी।
प्रत्यक्षदेवता दिव्या दिव्यगन्धा दिवापरा ।। १४३
शक्रासनगता शाक्री साध्वी नारी शवासना।
इष्टा विशिष्टा शिष्टेष्टा शिष्टाशिष्टप्रपूजिता ।। १४४
शतरूपा शतावर्त्ता विनता सुरभिः सुरा।
सुरेन्द्रमाता सुद्युम्ना सुषुम्ना सूर्यसंस्थिता ।। १४५
समीक्ष्या सत्प्रतिष्ठा च निवृत्तिर्ज्ञानपारगा।
धर्मशास्त्रार्थकुशला धर्मज्ञा धर्मवाहना ।। १४६
धर्माधर्मविनिर्मात्री धार्मिकाणां शिवप्रदा।
धर्मशक्तिर्धर्ममयी विधर्मा विश्वधर्मिणी ।। १४७
धर्मान्तरा धर्ममेघा धर्मपूर्वा धनावहा।
धर्मोपदेष्ट्री धर्मात्मा धर्मगम्या धराधरा ।। १४८
कापालीशा कलामूर्त्तिः कलाकलितविग्रहा।
सर्वशक्तिविनिर्मुक्ता सर्वशक्त्याश्रयाश्रया ।। १४९
सर्वा सर्वेश्वरी सूक्ष्म सुसूक्ष्म ज्ञानरूपिणी।
प्रधानपुरुषेशेश महादेवैकसाक्षिणी।
सदाशिवा वियन्मूर्त्तिर्विश्वमूर्त्तिरमूर्त्तिका ।। १५०

एवं नाम्नां सहस्रेण स्तुत्वाऽसौ हिमवान् गिरिः ।
भूयः प्रणम्य भीतात्मा प्रोवाचेदं कृतांजलिः ।। १५१

यदेतदैश्वरं रूपं घोरं ते परमेश्वरि ।
भीतोऽस्मि साम्प्रतं दृष्ट्वा रूपमन्यत् प्रदर्शय ।। १५२

एवमुक्ताऽथ सा देवी तेन शैलेन पार्वती ।
संहृत्य दर्शयामास स्वरूपमपरं पुरः ।। १५३

नीलोत्पलदलप्रख्यं नीलोत्पलसुगन्धिकम् ।
द्विनेत्रं द्विभुजं सौम्यं नीलालकविभूषितम् ।। १५४

रक्तपादाम्बुजतलं सुरक्तकरपल्लवम् ।
श्रीमद् विशालसंवृत्तललाटतिलकोज्ज्वलम् ।। १५५

भूषितं चारुसर्वाङ्गं भूषणैरतिकोमलम् ।
दधानमुरसा मालां विशालां हेमनिर्मिताम् ।। १५६

ईषत्स्मितं सुबिम्बोष्ठं नूपुरारावसंयुतम् ।
प्रसन्नवदनं दिव्यमनन्तमहिमास्पदम् ।। १५७

तदीदृशं समालोक्य स्वरूपं शैलसत्तमः ।
भीतिं संत्यज्य हृष्टात्मा बभाषे परमेश्वरीम् ।। १५८

-कूर्मपुराणतः

# पार्वती(दुर्गा)सहस्रनामावलिः

ओं शिवायै नमः । उमायै । परमायै । शक्त्यै । अनन्तायै । निष्कलायै । अमलायै । शान्तायै । माहेश्वर्यै । नित्यायै । शाश्वत्यै । परमाक्षरायै । अचिन्त्यायै । केवलायै । अनन्त्यायै । शिवात्मने । परमात्मिकायै । अनादये । अव्ययायै । शुद्धायै नमः । २०

ओं देवात्मने नमः । सर्वगायै । अचलायै । एकायै । अनेकविभागस्थायै । मायातीतायै । सुनिर्मलायै । महामाहेश्वर्यै । सत्यायै । महादेव्यै । निरञ्जनायै । काष्ठायै । सर्वान्तरस्थायै । चिच्छक्त्यै । अतिलालसायै । नन्दायै । सर्वात्मिकायै । विद्यायै । ज्योतीरूपायै । अमृतायै नमः । ४०

ओं अक्षरायै नमः । शान्त्यै । सर्वेषां प्रतिष्ठायै । निवृत्त्यै । अमृतप्रदायै । व्योममूर्त्यै । व्योमलयायै । व्योमाधारायै । अच्युतायै । अमरायै । अनादिनिधनायै । अमोघायै । कारणात्मने । कलायै । अकलायै । क्रतवे । प्रथमजायै । अमृतस्य नाभ्यै । आत्मसंश्रयायै । प्राणेश्वरप्रियायै नमः । ६०

ओं मात्रे नमः । महामहिषघातिन्यै । प्राणेश्वर्यै । प्राणरूपायै । प्रधानपुरुषेश्वर्यै । सर्वशक्तिकलाकारायै । ज्योत्स्नायै । दिवे । महिमास्पदायै । सर्वकार्यनियन्त्र्यै । सर्वभूतेश्वरेश्वर्यै । अनादये । अव्यक्तगुहायै । महानन्दायै । सनातन्यै । आकाशयोन्यै । योगस्थायै । महायोगेश्वरेश्वर्यै । महामायायै । सुदुष्पूरायै नमः । ८०

ओं मूलप्रकृत्यै नमः । ईश्वर्यै । संसारयोन्यै । सकलायै । सर्वशक्तिसमुद्भवायै । संसारपारायै । दुर्वारायै । दुर्निरीक्ष्यायै ।

दुरासदायै । प्राणशक्त्यै । प्राणविद्यायै । योगिन्यै । परमायै कलायै । महाविभूत्यै । दुर्धर्षायै । मूलप्रकृतिसंभवायै । अनाद्यनन्तविभवायै । परार्थायै । पुरुषायै । अरण्यै नमः । १००

ओं सर्गस्थित्यन्तकरण्यै नमः । सुदुर्वाच्यायै । दुरत्ययायै । शब्दयोन्यै । शब्दमय्यै । नादाख्यायै । नादविग्रहायै । प्रधानपुरुषातीतायै । प्रधानपुरुषात्मिकायै । पुराण्यै । चिन्मय्यै । पुंसामादये । पुरुषरूपिण्यै । भूतान्तरात्मने । कूटस्थायै । महापुरुषसंज्ञितायै । जन्ममृत्युजरातीतायै । सर्वशक्तिसमन्वितायै । व्यापिन्यै । अनवच्छिन्नायै नमः । १२०

ओं प्रधानानुप्रवेशिन्यै नमः । क्षेत्रज्ञशक्त्यै । अव्यक्तलक्षणायै । मूलवर्जितायै । अनादिमायासंभिन्नायै । त्रितत्वायै । प्रकृत्यै । गुहायै । महामायासमुत्पन्नायै । तामस्यै । पौरुष्यै । ध्रुवायै । व्यक्तायै । अव्यक्तात्मिकायै । कृष्णायै । रक्तायै । शुक्लायै । प्रसूतिकायै । अकार्यायै । कार्यजनन्यै नमः । १४०

ओं नित्यं प्रसवधर्मिण्यै नमः । सर्गप्रलयनिर्मुक्तायै । सृष्टिस्थित्यन्तधर्मिण्यै । ब्रह्मगर्भायै । चतुर्विंशायै । पद्मनाभायै । अच्युतात्मिकायै । वैद्युत्यै । शाश्वत्यै । योन्यै । जगन्मात्रे । ईश्वरप्रियायै । सर्वाधारायै । महारूपायै । सर्वैश्वर्यसमन्वितायै । विश्वरूपायै । महागर्भायै । विश्वेशेच्छानुवर्तिन्यै । महीयस्यै । ब्रह्मयोन्यै नमः । १६०

ओं महालक्ष्मीसमुद्भवायै नमः । महाविमानमध्यस्थायै । महानिद्रायै । आत्महेतुकायै । सर्वसाधारण्यै । सूक्ष्मायै । अविद्यायै । पारमार्थिकायै । अनन्तरूपायै । अनन्तस्थायै । देव्यै । पुरुषमोहिन्यै । अनेकाकारसंस्थानायै । कालत्रयविवर्जितायै ।

ब्रह्मजन्मने । हरेर्मूर्त्यै । ब्रह्मविष्णुशिवात्मिकायै । ब्रह्मेशविष्णुजनन्यै । ब्रह्माख्यायै । ब्रह्मसंश्रयायै नमः । १८०

ओं व्यक्तायै नमः । प्रथमजायै । ब्राह्म्यै । महत्यै । ज्ञानरूपिण्यै । वैराग्यैश्वर्यधर्मात्मने । ब्रह्ममूर्त्यै । हृदिस्थितायै । अपांयोन्यै । स्वयंभूत्यै । मानस्यै । तत्वसंभवायै । ईश्वराण्यै । शर्वाण्यै । शङ्करार्धशरीरिण्यै । भवान्यै । रुद्राण्यै । महालक्ष्म्यै । अम्बिकायै । महेश्वरसमुत्पन्नायै नमः । २००

ओं भुक्तिमुक्तिफलप्रदायै नमः । सर्वेश्वर्यै । सर्ववन्द्यायै । नित्यं मुदितमानसायै । ब्रह्मेन्द्रोपेन्द्रनमितायै । शङ्करेच्छानुवर्तिन्यै । ईश्वरार्धासनगतायै । महेश्वरपतिव्रतायै । सकृद्विभावितायै । सर्वायै । समुद्रपरिशोषिण्यै । पार्वत्यै । हिमवत्पुत्र्यै । परमानन्ददायिन्यै । गुणाढ्यायै । योगजायै । योग्यायै । ज्ञानमूर्त्यै । विकासिन्यै । सावित्र्यै नमः । २२०

ओं कमलायै नमः । लक्ष्म्यै । श्रियै । अनन्तोरसिस्थितायै । सरोजनिलयायै । मुद्रायै । योगनिद्रायै । सुरार्दिन्यै । सरस्वत्यै । सर्वविद्यायै । जगज्ज्येष्ठायै । सुमङ्गलायै । वाग्देव्यै । वरदायै । वाच्यायै । कीर्त्यै । सर्वार्थसाधिकायै । योगीश्वर्यै । ब्रह्मविद्यायै । महाविद्यायै नमः । २४०

ओं सुशोभनायै नमः । गुह्यविद्यायै । आत्मविद्यायै । धर्मविद्यायै । आत्मभावितायै । स्वाहायै । विश्वम्भरायै । सिद्ध्यै । स्वधायै । मेधायै । धृत्यै । श्रुत्यै । नीत्यै । सुनीत्यै । सुकृत्यै । माधव्यै । नरवाहिन्यै । अजायै । विभावर्यै । सौम्यायै नमः । २६०

ओं भोगिन्यै नमः । भोगदायिन्यै । शोभायै । वंशकर्यै । लोलायै । मालिन्यै । परमेष्ठिन्यै । त्रैलोक्यसुन्दर्यै । रम्यायै । सुन्दर्यै ।

कामचारिण्यै । महानुभावायै । सत्वस्थायै । महामहिषमर्दिन्यै । पद्ममालायै । पापहरायै । विचित्रायै । मुकुटाननायै । कान्तायै । चित्राम्बरधरायै नमः । २८०

ओं दिव्यारणभूषितायै नमः । हंसाख्यायै । व्योमनिलयायै । जगत्सृष्टिविवर्धिन्यै । निर्यन्त्रायै । यन्त्रवाहस्थायै । नन्दिन्यै । भद्रकालिकायै । आदित्यवर्णायै । कौमार्यै । मयूरवरवाहिन्यै । वृषासनगतायै । गौर्यै । महाकाल्यै । सुरार्चितायै । अदित्यै । नियतायै । रौद्र्यै । पद्मगर्भायै । विवाहनायै नमः । ३००

ओं विरूपाक्ष्यै नमः । लेलिहानायै । महापुरनिवासिन्यै । महाफलायै । अनवद्यांग्यै । कामपूरायै । विभावर्यै । विचित्ररत्नमकुटायै । प्रणतार्तिप्रभञ्जिन्यै । कौशिक्यै । कर्षण्यै । रात्र्यै । त्रिदशार्तिविनाशिन्यै । बहुरूपायै । सुरूपायै । विरूपायै । रूपवर्जितायै । भक्तार्तिशमन्यै । भव्यायै । भवभावविनाशिन्यै नमः । ३२०

ओं निर्गुणायै नमः । नित्यविभवायै । निःसारायै । निरपत्रपायै । यशस्विन्यै । सामगीत्यै । भवाङ्गनिलयायै । अलयायै । दीक्षायै । विद्याधर्यै । दीप्तायै । महेन्द्रविनिपातिन्यै । सर्वातिशायिन्यै । विद्यायै । सर्वसिद्धिप्रदायिन्यै । सर्वेश्वरप्रियायै । तार्क्ष्यायै । समुद्रान्तरवासिन्यै । अकलङ्कायै । निराधारायै नमः । ३४०

ओं नित्यसिद्धायै नमः । निरामयायै । कामधेन्वै । बृहद्गर्भायै । धीमत्यै । मोहनाशिन्यै । निःसंकल्पायै । निरातङ्कायै । विनयायै । विनयप्रदायै । ज्वालामलासहस्राढ्यायै । देवदेव्यै । मनोन्मन्यै । महाभगवत्यै । दुर्गायै । वासुदेवसमुद्भवायै ।

महेन्द्रोपेन्द्रभगिन्यै । भक्तिगम्यै । परावरायै । ज्ञानज्ञेयायै नमः । ३६०

ओं जरातीतायै नमः । वेदान्तविषयायै गत्यै । दक्षिणायै । दहनायै । दाह्यायै । सर्वभूतनमस्कृतायै । योगमायायै । विभावज्ञायै । महामायायै । महीयस्यै । सन्ध्यायै । सर्वसमुद्भूत्यै । ब्रह्मवृक्षाश्रयायै । नत्यै । बीजाङ्कुरसमुद्भूत्यै । महाशक्त्यै । महामत्यै । ख्यात्यै । प्रज्ञायै । चित्यै नमः । ३८०

ओं संविदे नमः । महाभोगीन्द्रशायिन्यै । विकृत्यै । शाङ्कर्यै । शास्त्र्यै । गणगन्धर्वसेवितायै । वैश्वानर्यै । महाशालायै । देवसेनायै । गुहप्रियायै । महारात्र्यै । शिवानन्दायै । शच्यै । दुःस्वप्ननाशिन्यै । इज्यायै । पूज्यायै । जगद्धात्र्यै । दुर्विज्ञेयायै । सुरूपिण्यै । गुहाम्बिकायै नमः । ४००

गुणोत्पत्त्यै नमः । महापीठायै । मरुत्सुतायै । हव्यवाहायै । अन्तर्यागाद्यै । हव्यवाहसमुद्भवायै । जगद्योन्यै । जगन्मात्रे । जन्मन्मृत्युजरातिगायै । बुद्धिमात्रे । बुद्धिमत्यै । पुरुषान्तरवासिन्यै । तरस्विन्यै । समाधिस्थायै । त्रिनेत्रायै । दिविसंस्थितायै । सर्वेन्द्रियमनोमात्रे । सर्वभूतहृदिस्थितायै । संसारतारिण्यै । विद्यायै नमः । ४२०

ओं ब्रह्मवादिमनोलयायै नमः । ब्रह्माण्यै । बृहत्यै । ब्राह्म्यै । ब्रह्मभूतायै । भवारण्यै । हिरण्मय्यै । महारात्र्यै । संसारपरिवर्तिकायै । सुमालिन्यै । सुरूपायै । भाविन्यै । तारिण्यै । प्रभायै । उन्मीलन्यै । सर्वसहायै । सर्वप्रत्ययसाक्षिण्यै । सुसौम्यायै । चन्द्रवदनायै । ताण्डवासक्तमानसायै नमः । ४४०

ओं सत्त्वशुद्धिकर्यै नमः । शुद्ध्यै । मलत्रयविनाशिन्यै । जगत्प्रियायै । जगन्मूर्त्यै । त्रिमूर्त्यै । अमृताश्रयायै । निराश्रयायै । निराहारायै । निरङ्कुरवनोद्भवायै । चन्द्रहस्तायै । विचित्राङ्ग्यै । स्रग्विण्यै । पद्मधारिण्यै । परापरविधानज्ञायै । महापुरुषपूर्वजायै । विद्येश्वरप्रियायै । विद्यायै । विद्युज्जिह्वायै । जितश्रमायै नमः । ४६०

ओं विद्यामय्यै नमः । सहस्राक्ष्यै । सहस्रवदनात्मजायै । सहस्ररश्म्यै । सत्त्वस्थायै । महेश्वरपदाश्रयायै । क्षालिन्यै । सन्मय्यै । व्याप्तायै । तैजस्यै । पद्मबोधिकायै । महामायाश्रयायै । मान्यायै । महादेवमनोरमायै । व्योमलक्ष्म्यै । सिंहरथायै । चेकितानायै । अमितप्रभायै । वीरेश्वर्यै । विमानस्थायै नमः । ४८०

ओं विशोकायै नमः । शोकनाशिन्यै । अनाहतायै । कुण्डलिन्यै । नलिन्यै । पद्मवासिन्यै । सदानन्दायै । सदाकीर्त्यै । सर्वभूताश्रयस्थितायै । वाग्देवतायै । ब्रह्मकलायै । कलातीतायै । कलारण्यै । ब्रह्मश्रियै । ब्रह्महृदयायै । ब्रह्मविष्णुशिवप्रियायै । व्योमशक्त्यै । क्रियाशक्त्यै । ज्ञानशक्त्यै । परायै गत्यै नमः । ५००

ओं क्षोभिकायै नमः । बन्धिकायै । भेद्यायै । भेदाभेदविवर्जितायै । अभिन्नायै । भिन्नसंस्थानायै । वंशिन्यै । वंशहारिण्यै । गुह्यशक्त्यै । गुणातीतायै । सर्वदायै । सर्वतोमुख्यै । भगिन्यै । भगवत्पत्न्यै । सकलायै । कालकारिण्यै । सर्वविदे । सर्वतोभद्रायै । गुह्यातीतायै । गुहारण्यै नमः । ५२०

ओं प्रक्रियायै नमः । योगमात्रे । गङ्गायै । विश्वेश्वरेश्वर्यै । कपिलायै । कापिलायै । कान्तायै । कनकाभायै । कलान्तरायै । पुण्यायै । पुष्करिण्यै । भोक्त्र्यै । पुरन्दर पुरःसरायै । पोषण्यै । परमैश्वर्यभूतिदायै । भूतिभूषणायै । पञ्चब्रह्मसमुत्पत्त्यै । परमार्थायै । अर्थविग्रहायै । धर्मोदयायै नमः । ५४०

ओं भानुमत्यै नमः। योगिज्ञेयायै। मनोजवायै। मनोहरायै। मनोरक्षायै । तापस्यै । वेदरूपिण्यै । वेदशक्त्यै । वेदमात्रे । वेदविद्याप्रकाशिन्यै। योगेश्वरेश्वर्यै। मात्रे। महाशक्त्यै। मनोमय्यै। विश्वावस्थायै। वियन्मूर्त्यै। विद्युन्मालायै। विहायस्यै। किन्नर्यै। सुरभ्यै नमः। ५६०

ओं वन्द्यायै नमः । नन्दिन्यै । नन्दिवल्लभायै । भारत्यै । परमानन्दायै। परापरविभेदिकायै। सर्वप्रहरणोपेतायै। काम्यायै। कामेश्वरेश्वर्यै । अचिन्त्यायै । अचिन्त्यविभवायै । हृल्लेखायै । कनकप्रभायै । कूष्माण्डयै । धनरत्नाढ्यायै । सुगन्धायै । गन्धदायिन्यै । त्रिविक्रमपदोद्भूतायै । धनुष्पाण्यै । शिवोदयायै नमः। ५८०

ओं सुदुर्लभायै नमः । धनाध्यक्षायै । धन्यायै । पिङ्गललोचनायै। शान्त्यै। प्रभावत्यै। दीप्त्यै। पङ्कजायतलोचनायै। आद्यायै। हृत्कमलोद्भूतायै। गवां मात्रे। रणप्रियायै। सत्क्रियायै। गिरिजायै । शुद्धायै । नित्यपुष्टायै । निरन्तरायै । दुर्गायै । कात्यायन्यै । चण्डयै नमः। ६००

ओं चर्चिकायै नमः । शान्तविग्रहायै । हिरण्यवर्णायै । रजन्यै । जगद्यन्त्रप्रवर्तिकायै। मन्दराद्रिनिवासायै। शारदायै। स्वर्णमालिन्यै। रत्नमालायै। रत्नगर्भायै। पृथ्व्यै। विश्वप्रमाथिन्यै। पद्माननायै। पद्मनिभायै। नित्यतुष्टायै। अमृतोद्भवायै। धुन्वत्यै। दुष्प्रकंप्यायै। सूर्यमात्रे। दृषद्वत्यै नमः। ६२०

ओं महेन्द्रभगिन्यै नमः। मान्यायै। वरेण्यायै। वरदर्पितायै। कल्याण्यै। कमलायै। रामायै। पंचभूतायै। वरप्रदायै। वाच्यायै। वरेश्वर्यै । वन्द्यायै । दुर्जयायै । दुरतिक्रमायै । कालरात्र्यै ।

महावेगायै । वीरभद्रप्रियायै। हितायै। भद्रकाल्यै। जगन्मात्रे नमः ।६४०

ओं भक्तानां भद्रदायिन्यै नमः। करालायै। पिङ्गलाकारायै। नामभेदायै । अमहामदायै । यशस्विन्यै । यशोदायै । षडध्वपरिवर्तिकायै । शंखिन्यै । पद्मिन्यै । सांख्यायै । सांख्ययोगप्रवर्तिकायै। चैत्रायै। संवत्सरारूढायै। जगत्संपूरण्यै। इन्द्रजायै। शुंभारये। खेचर्यै। स्वस्थायै। कम्बुग्रीवायै नमः। ६६०

ओं कलिप्रियायै नमः । खगध्वजायै । खगारूढायै । पराध्यर्यै । परमालिन्यै । ऐश्वर्यवर्त्मनिलयायै । विरक्तायै । गरुडासनायै। जयन्त्यै। हृद्गुहायै। रम्यायै। गह्वरेष्ठायै। गणाग्रण्यै। सङ्कल्पसिद्धायै । साम्यस्थायै । सर्वविज्ञानदायिन्यै । कलिकल्मषहन्त्र्यै। गुह्योपनिषदे। उत्तमायै। निष्ठायै नमः। ६८०

ओं दृष्ट्यै नमः । स्मृत्यै । व्याप्त्यै । पुष्ट्यै । तुष्ट्यै । क्रियावत्यै । विश्वामरेश्वरेशानायै । भुक्त्यै । मुक्त्यै । शिवायै । अमृतायै । लोहितायै । सर्पमालायै । भीषण्यै । वनमालिन्यै । अनन्तशयनायै । अनन्यायै । नरनारायणोद्भवायै । नृसिंह्यै । दैत्यमथन्यै नमः। ७००

ओं शङ्खचक्रगदाधरायै नमः । सङ्कर्षणसमुत्पत्त्यै । अम्बिकायै। पादसंश्रयायै। महाज्वालायै। महामूर्त्यै। सुमूर्त्यै। सर्वकामदुहे। सुप्रभायै। सुस्तनायै। गौर्यै। धर्मकामार्थमोक्षदायै। भ्रूमध्यनिलयायै। पूर्वायै। पुराणपुरुषारण्यै। महाविभूतिदायै। मेध्यायै। सरोजनयनायै। समायै। अष्टादशभुजायै नमः। ७२०

ओं अनाद्यायै नमः । नीलोत्पलदलप्रभायै । सर्वशक्त्यासनारूढायै । धर्माधर्मार्थवर्जितायै ।

वैराग्यज्ञाननिरतायै । निरालोकायै । निरिन्द्रियायै । विचित्रगहनाधारायै । शाश्वतस्थानवासिन्यै । स्थानेश्वर्यै । निरानन्दायै । त्रिशूलवरधारिण्यै । अशेषदेवतामूर्त्यै । देवतायै । वरदेवतायै । गणाम्बिकायै । गिरेः पुत्र्यै । निशुंभविनिपातिन्यै । अवर्णायै । वर्णरहितायै नमः । ७४०

ओं निर्वर्णायै नमः । बीजसंभवायै । अनन्तवर्णायै । अनन्यस्थायै । शङ्कर्यै । शान्तमानसायै । अगोत्रायै । गोमत्यै । गोप्त्र्यै । गुह्यरूपायै । गुणोत्तरायै । गवे । गिरे । गव्यप्रियायै । गौण्यै । गणेश्वरनमस्कृतायै । सत्यमात्रायै । सत्यसन्धायै । त्रिसन्ध्यायै । सन्धिवर्जितायै नमः । ७६०

ओं सर्ववादाश्रयायै नमः । संख्यायै । सांख्ययोगसमुद्भवायै । असंख्येयायै । अप्रमेयाख्यायै । शून्यायै । शुद्धकुलोद्भवायै । बिन्दुनादसमुत्पत्त्यै । शंभुवामायै । शशिप्रभायै । विसंगायै । भेदरहितायै । मनोज्ञायै । मधुसूदन्यै । महाश्रियै । श्रीसमुत्पत्त्यै । तमःपारेप्रतिष्ठितायै । त्रितत्त्वमात्रे । त्रिविधायै । सुसूक्ष्मपदसंश्रयायै नमः । ७८०

ओं शान्त्यतीतायै नमः । मलातीतायै । निर्विकारायै । निराश्रयायै । शिवाख्यायै । चित्तनिलयायै । शिवज्ञानस्वरूपिण्यै । दैत्यदानवनिर्मात्र्यै । काश्यप्यै । कालकल्पिकायै । शास्त्रयोन्यै । क्रियामूर्त्यै । चतुर्वर्गप्रदर्शिकायै । नारायण्यै । नरोद्भूत्यै । कौमुद्यै । लिङ्गधारिण्यै । कामुक्यै । ललितायै । भावायै नमः । ८००

ओं परायै नमः । परविभूतिदायै । परान्तजातमहिमायै । बडवायै । वामलोचनायै । सुभद्रायै । देवक्यै । सीतायै । वेदवेदाङ्गपारगायै । मनस्विन्यै । मन्युमात्रे । महामन्युसमुद्भवायै ।

अमृत्यवे । अमृतायै । स्वाहायै । पुरुहूतायै । पुरुष्टुतायै । अशोच्यायै । भिन्न विषयायै । हिरण्यरजतप्रियायै नमः । ८२०

ओं हिरण्यायै नमः । राजत्यै । हैम्यै । हेमाभरणभूषितायै । विभ्राजमानायै । दुर्ज्ञेयायै । ज्योतिष्टोमफलप्रदायै । महानिद्रासमुद्भूत्यै । अनिद्रायै । सत्यदेवतायै । दीर्घायै । ककुद्मिन्यै । हृद्यायै । शान्तिदायै । शान्तिवर्धिन्यै । लक्ष्म्यादिशक्तिजनन्यै । शक्तिचक्रप्रवर्तिकायै । त्रिशक्तिजनन्यै । जन्यायै । षडूर्मिपरिवर्जितायै नमः । ८४०

ओं सुधामायै नमः । कर्मकरण्यै । युगान्तदहनात्मिकायै । संकर्षण्यै । जगद्धात्र्यै । कामयोन्यै । किरीटिन्यै । ऐन्द्र्यै । त्रैलोक्यनमितायै । वैष्णव्यै । परमेश्वर्यै । प्रद्युम्नदयितायै । दान्तायै । युग्मदृष्ट्यै । त्रिलोचनायै । मदोत्कटायै । हंसगत्यै । प्रचण्डायै । चण्डविक्रमायै । वृषावेशायै नमः । ८४०

ओं वियन्मात्रे नमः । विन्ध्यपर्वतवासिन्यै । हिमवन्मेरुनिलयायै । कैलासगिरिवासिन्यै । चाणूरहन्तृतनयायै । नीतिज्ञायै । कामरूपिण्यै । वेदविद्याव्रतस्नातायै । धर्मशीलायै । अनिलाशनायै । वीरभद्रप्रियायै । वीरायै । महाकालसमुद्भवायै । विद्याधरप्रियायै । सिद्धायै । विद्याधरनिराकृत्यै । आप्यायन्यै । हरन्त्यै । पावन्यै । पोषण्यै नमः । ८८०

ओं खिलायै नमः । मातृकायै । मन्मथोद्भूतायै । वारिजायै । वाहनप्रियायै । करीषिण्यै । सुधावाण्यै । वीणावादनतत्परायै । सेवितायै । सेविकायै । सेव्यायै । सिनीवाल्यै । गरुत्मत्यै । अरुन्धत्यै । हिरण्याक्ष्यै । मृगाङ्कायै । मानदायिन्यै । वसुप्रदायै । वसुमत्यै । वसोर्धारायै नमः । ९००

ओं वसुन्धरायै नमः । धराधरायै । वरारोहायै । वरायै । वरसहस्रदायै । श्रीफलायै । श्रीमत्यै । श्रीशायै । श्रीनिवासायै । शिवप्रियायै । श्रीधरायै । श्रीकर्यै । कल्यायै । श्रीधरार्धशरीरिण्यै । अनन्तदृष्ट्यै । अक्षुद्रायै । धात्रीशायै । धनदप्रियायै । दैत्यसंघानां निहन्त्र्यै । सिंहिकायै नमः । ९२०

ओं सिंहवाहनायै नमः । सुषेणायै । चन्द्रनिलयायै । सुकीर्त्यै । छिन्नसंशयायै । रसज्ञायै । रसदायै । रामायै । लेलिहानायै । अमृतस्रवायै । नित्योदितायै । स्वयंज्योतिषे । उत्सुकायै । मृतजीवन्यै । वज्रदण्डायै । वज्रजिह्वायै । वैदेह्यै । वज्रविग्रहायै । मंगल्यायै । मङ्गलायै नमः । ९४०

ओं मालायै नमः । मलिनायै । मलहारिण्यै । गान्धर्व्यै । गारुड्यै । चान्द्र्यै । कम्बलाश्वतरप्रियायै । सौदामिन्यै । जनानन्दायै । भ्रुकुटीकुटिलाननायै । कर्णिकारकरायै । कक्ष्यायै । कंसप्राणापहारिण्यै । युगन्धरायै । युगावर्तायै । त्रिसन्ध्यायै । हर्षवर्धन्यै । प्रत्यक्षदेवतायै । दिव्यायै । दिव्यगन्धायै नमः । ९६०

ओं दिवापरायै नमः । शक्रासनगतायै । शाक्र्यै । साध्व्यै नार्यै । शवासनायै । इष्टायै । विशिष्टायै । शिष्टेष्टायै । शिष्टाशिष्टप्रपूजितायै । शतरूपायै । शतावर्तायै । विनतायै । सुरभ्यै । सुरायै । सुरेन्द्रमात्रे । सुद्युम्नायै । सुषुम्नायै । सूर्यसंस्थितायै । समीक्ष्यायै । सत्प्रतिष्ठायै नमः । ९८०

ओं निवृत्त्यै नमः । ज्ञानपारगायै । धर्मशास्त्रार्थकुशलायै धर्मज्ञायै । धर्मवाहनायै । धर्माधर्मविनिर्मात्र्यै । धार्मिकाणां शिवप्रदायै । धर्मशक्त्यै । धर्ममय्यै । विधर्मायै । विश्वधर्मिण्यै । धर्मान्तरायै । धर्ममेघायै । धर्मपूर्वायै । धनावहायै । धर्मोपदेष्ट्र्यै ।

धर्मात्मने। धर्मगम्यायै। धराधरायै। कापालीश कलामूर्त्यै नमः। १०००

ओं कलाकलितविग्रहायै नमः। सर्वशक्तिविनिर्मुक्तायै। सर्वशक्त्याश्रयाश्रयायै। सर्वायै। सर्वेश्वर्यै। सूक्ष्मसुसूक्ष्मज्ञानरूपिण्यै। प्रधानपुरुषेशेशमहादेवैकसाक्षिण्यै। सदाशिवायै। वियन्मूर्त्यै। विश्वमूर्त्यै। अमूर्तिकायै नमः। १०११

—*—

# दुर्गानवाक्षरीत्रिशतीनामावलिः

ओंऐंह्रींक्लीं। ओं ऐं ऐङ्कारपीठमध्यस्थायै नमः। ऐङ्कारासनसुस्थितायै। ऐङ्कारजपसन्तुष्टायै। ऐङ्कारजपसौख्यदायै। ऐङ्कारमोहनपरायै। ऐङ्काराभरणोज्ज्वलायै। ऐङ्काररूपायै। ऐंकार्यै। ऐंकारवरवर्णिन्यै। ऐंकारकल्पवृक्षस्थायै। ऐंकारलोचनायै। ऐंकारवाच्यायै। ऐंकारपूज्यायै। ऐंकारपङ्कजायै। ऐंकारकाननावासायै। ऐंकारगिरिरूपिण्यै। ऐंकारकन्दरासिंह्यै। ऐंकाराक्षरशोभितायै। ऐंकाराब्जसमासीनायै। ऐंकारमुखमण्डलायै नमः। (२०) ऐंकारारण्यहरिण्यै। ऐंकारामृतवर्षिण्यै। ऐंकारकमलावासायै। ऐंकारोद्यानवासिन्यै। ऐंकारवन्दितपदायै। ऐंकारवरदायिन्यै। ऐंकारामृतसन्दात्र्यै। ऐंकारामृतपायिन्यै। ऐंकारारण्यसञ्चारायै। ऐंकारश्रीविराजितायै। ऐंकारमन्त्रसञ्जप्यायै। ऐंकारजपसिद्धिदायै। ऐंकारनन्दनोद्यानकुसुमोज्ज्वलमूर्धजायै नमः। ३३

ओं ह्रीं। ह्रींकारमन्त्रसंवासायै नमः। ह्रींकारसुमशोभितायै। ह्रींकाररूपायै। ह्रींकारकायायै। ह्रींकाराम्बुजमध्यगायै। ह्रींकारपूजनप्रीतायै। ह्रींकाराक्षररूपिण्यै। (४०)

ह्रींकाराक्षरसञ्जप्यायै । ह्रींकारारण्यवल्लयैं । ह्रींकारमणि-भूषाढ्यायै । ह्रींकारारामशोभितायै । ह्रींकारजपसुप्रीतायै । ह्रींकारकमलोज्ज्वलायै । ह्रींकारशिखिसंरूपायै । ह्रींकारा-नन्ददायिन्यै । ह्रींकारगिरिसंभूतायै । ह्रींकारगिरिवासिन्यै । ह्रींकारोड्याणपीठस्थायै। ह्रींकारवरदायिन्यै। ह्रींकाररञ्जनपरायै। ह्रींकाराकाशबिम्बितायै। ह्रींकारोद्यानसंशोभायै। ह्रींकारारण्य-वासिन्यै । ह्रींकारविलसद्रूपायै । ह्रींकारादित्यभास्वरायै । ह्रींकारेन्दुकलादायै। ह्रींकारशशिमण्डलायै। (६०) ह्रींकारनादर-सिकायै । ह्रींकारास्वादभृङ्गिकायै । ह्रींकारवापिकाहंस्यै । ह्रींकारालापकोकिलायै । ह्रींकारोज्ज्वलसर्वाङ्गयै । ह्रींकारमधु-मत्तमायै नमः। ६६

ओं क्लीं। क्लींकारमध्यनिलयायै नमः। क्लींकारहृदयस्थितायै। क्लींकारबिम्बसंशोभायै। क्लींकाराह्लादचन्द्रिकायै। क्लींकारानन्द-सन्दात्र्यै । क्लींकारमणिमण्डपायै । क्लींकारपीठमध्यस्थायै । क्लींकारपरसौख्यदायै। क्लींकारसौधमध्यस्थायै। क्लींकारतिलको-ज्ज्वलायै । क्लींकारमोदहृदयायै । क्लींकारविजयप्रदायै । क्लींकारबीजसर्वस्वायै । क्लींकारहृदयस्थितायै नमः (८०) क्लींकारैकनिवासिन्यै। क्लींकारसाधकपरायै। क्लींकारकलुषापहायै। क्लींकारपुष्टिसन्धात्र्यै । क्लींकारकमलासनायै । क्लींकारपद्म-संवासायै । क्लींकारमधुपायिन्यै । क्लींकारचापहस्ताढ्यायै । क्लींकारेषुसुबाहुकायै । क्लींकारसुममध्यस्थायै । क्लींकारसुम-शोभितायै । क्लींकारमधुरालापायै । क्लींकाराङ्कुशशोभितायै । क्लींकारपद्महस्ताढ्यायै । क्लींकारमधुवापिकायै । क्लींकारहत-दैत्यौघायै। क्लींकारोत्पलमालिकायै। क्लींकारानलसन्दग्धदुष्टदैत्य-समूहिकायै । क्लींकारगन्धोद्यानस्थमणिमण्टपशोभितायै नमः । (९९)

ओं चा । चापबाणलसद्धस्तायै नमः । (१००) चारवे । चान्द्रकलाधरायै । चांपेयकुसुमप्रीतायै । चारुनूपुरशोभितायै । चारुरूपायै । चारुहासायै । चराचरनिवासिन्यै । चातुर्वर्ण्य-समाराध्यायै । चारुसुभ्रूसुशोभितायै । चांपेयकुसुमाकार-नासा-दण्डविराजितायै । चामरद्वयसंवीजल्लक्ष्मीवाणी-सुशोभितायै । चारुदन्तायै । चारुजिह्वायै । चारुकुण्डलशोभितायै । चारुदेहायै । चारुहस्तायै । चारुलम्बिचतुर्भुजायै । चारुपादायै । चारुजङ्घायै । चारुवक्षोजयुग्मिकायै । (१२०) चारुवक्षसे । चारुनासायै । चारुजघनोज्ज्वलायै । चारुपृष्ठायै । चारुकट्यै । चारुपार्श्व-द्वयोज्ज्वलायै । चारुनेत्रायै । चारुकर्णायै । चारुनेत्रललाटिकायै । चारुकेश्यै । चारुमूर्ध्न्यै । चारुसर्वाङ्गसुन्दर्यै नमः (१३२)

ओं मु । मुण्डसेनामहाशङ्खघोरनादविमोहिन्यै नमः । मुण्डसेनामहावेगगर्जनस्तम्भकारिण्यै । मुण्डसेनापतीसंघजय-शब्दप्रमोहिन्यै । मुण्डसेनापतिव्रातविनाशनसमुत्सुकायै । मुण्डा-सुरचमूसंघकण्ठज्याघोषमूर्च्छिन्यै । मुण्डासुरचमूघोषस्व-शब्दविनिवारिण्यै । मुण्डजल्पवशोत्साहदैत्य सैन्यसमुत्सुकायै । मुण्डासुरवधोद्युक्तखड्गहस्तसुशोभितायै । (१४०) मुण्डासुर-महायुद्धसंस्तम्भितमहासुरायै । मुण्डदूषितशक्त्यौघ दैत्यसंघ-विदारिण्यै । मुण्डकोपप्रज्वलितभीतदेवसमुत्सुकायै । मुण्डासुर-महायुद्धदेववाद्यसुरघोषितायै । मुण्डासुरवधोत्साहदेव-दुन्दुभिघोषितायै । मुण्डासुरमहायुद्धपटहानन्तदैत्यकायै । मुण्डासुरशिरोगृह्यखड्गपातनिकृन्तन्यै । मुण्डासुरशिरोहस्त-कन्दुकक्रीडनोत्सुकायै । मुण्डासुरशिरोहस्तसन्तुष्टसुरसैनिकायै । मुण्डासुरहतप्रासदैत्यसङ्घप्ररोचिन्यै । मुण्डासुरशिरोहस्त विभ्रामितदिगम्बरायै । मुण्डासुरशिरोहस्तदैत्यसंघविभीषिण्यै ।

मुण्डासुरशिरः स्रावरक्तवस्त्रसमुज्ज्वलायै । मुण्डमुण्डसुसन्दष्ट-दैत्यसैन्यपलायितायै । मुण्डमालालसत्कण्ठलम्बजिह्वासुवर्धन्यै । मुण्डवस्त्रपरीधान सुशोभितशरीरिण्यै । मुण्डासुरवधोत्साहमुनि-संघसमुत्सुकायै । मुण्डदैत्यवधोत्साहदेवसंस्तुतवैभवायै । मुण्ड-दैत्यशिरश्छेत्र्यै । मुण्डिन्यै । (१६०) मुण्डरूपिण्यै । मुण्डिन्यै । मुण्डमथन्यै । मुण्डोज्ज्वलसुशोभितायै । मुण्डासुरवधोत्पन्न देवर्षिगणतोषदायै नमः । (१६५)

ओं डा । डामरोत्कटसन्नादायै नमः । डाकिनीगण-सेवितायै । डमर्वंकुशहस्ताढ्यायै । डाकिनीगणपूजितायै । डम्भमुक्तजनोत्साहायै । डम्भयुक्तविगर्हिण्यै । डाडिमीसुम-संकाशायै । डाडिमीफलसुप्रियायै । डकारशोभितमनवे । डम्भिकायै । डमरोत्सुकायै । डमायै । डम्भरहितायै । डम्भडम्भसमुत्सुकायै । डमरूवाद्यसुप्रीतायै । (१८०) डमरूहस्तसखीजनायै । डमरोत्कटसन्नादायै । डमरुध्वनि-संकुलायै । डमरुध्वनिसंस्तब्धदैत्यसंघविराजितायै । डकारविलस-न्मन्त्रायै । डकारपरमार्थदायै । डकारमन्त्र सर्वस्वायै । डकारहतकिल्बिषायै । डकारहतदैत्यौघायै । डकारगिरिसुप्रियायै । डकाराक्षरसुप्रीतायै । डकारामोददायिन्यै । डम्भासुरसुसंहर्त्र्यै । डम्भाडम्भविवर्जितायै । डकारहतपापौघायै । डकारपरसौख्यदायै । डकारपूजनप्रीतायै । डकारोज्ज्वलमध्यगायै नमः । १९८

ओं यै । यैकाराक्षरसंपूज्यायै नमः । यैकाराक्षरशोभितायै । (२००) यैकारशोभितमनसे । यैकारतरुवासिन्यै । यैकारगिरिसंवासायै । यैकारगुहासंस्थितायै । यैकारसिंहसंवाहायै । यैकाराक्षरसुस्थितायै । यैकाराक्षरसुप्रीतायै । यैकारमनुमध्यगायै । यैकारमनुमध्यस्थायै । यैकाराक्षरसुप्रियायै । यैकारविलसन्मन्त्रायै ।

यैकाराक्षरभासुरायै । यैकारगजसंरूढायै । यैकारतुरगोज्ज्वलायै । यैकारविलसद्योगायै । यैकाराह्लादकारिण्यै । यैकाररथसंरूढायै । यैकारसुखसुसिदायै । यैकाराक्षररूपिण्यै । यैकारपरमानन्दायै (२२०) यैकारपरमाक्षरायै । यैकारानन्दहृदयायै । यैकारपर-सौख्यदायै । यैकारसुखसंसुप्तायै । यैकारायै । यैकरूपिण्यै । यैकारज्ञानसंपन्नायै । यैकारपररूपिण्यै । यैकारसंपदापत्त्यै । यैकारफलदायिन्यै नमः । (२३०)

ओं वि । विज्ञानजनसन्तुष्टायै नमः । विज्ञान-जनपूजितायै । विज्ञानजनसुप्रीतायै । विज्ञानजनसौख्यदायै । विज्ञानपरमा-नन्दायै । विज्ञानजनलोषिण्यै । विज्ञानानन्दसुखितायै । विज्ञान-तत्वसन्दर्शायै । विज्ञानानन्दरूपिण्यै । विज्ञानवादसुप्रीतायै । (२४०) विज्ञानार्थविदांवरायै । विज्ञानवादमध्यस्थायै । विज्ञानघनरूपिण्यै । विज्ञानज्ञानसन्दात्र्यै । विज्ञानसुखदायिन्यै । विज्ञानार्थविवादज्ञकारणानन्दविग्रहायै । विज्ञानतत्त्ववादार्थ-जनसन्देहनाशिन्यै । विज्ञानज्ञानविदितायै । विज्ञानारण्य-वासिन्यै । विज्ञानासवसुप्रीतायै । विज्ञानमधुपायिन्यै । विज्ञानामृतसंवासायै । विज्ञानामृतपायिन्यै । विज्ञानाब्धिस-माह्लादायै । विज्ञानाम्बुधिचन्द्रमसे । विज्ञानमन्दिरावासायै । विज्ञानमधुभृङ्गिकायै । विज्ञानरथसंरूढायै । विज्ञान-तुरगोज्ज्वलायै । विज्ञानहृदयानन्द सत्स्वरूपप्रकाशिन्यै । (२६०) विज्ञानानन्दसंयोगप्रबोधनपटीयस्यै । विज्ञानमण्टपान्तःस्थसु-भूतिदपदद्वयायै नमः । २६२

ओं च्चे । चेतनायै नमः । चेतनारूपायै । चेतनारूपधारिण्यै । च्चेकाराक्षरसंपूज्यायै । च्चेकाराक्षरमूर्धजायै । च्चेकारजापितमनवे । च्चेकाराक्षरशोभितायै । चेकारचित्तनैर्मल्यायै । च्चेकारा-

क्षरसौख्यदायै। चेकि(ति)ताशेषभुवनायै। चेकारानन्ददायिन्यै। चेरदेशकृतावासायै। चेरदेशसुरक्षितायै।। चेकाररक्षःसंशोभायै। चेरेश्वरसुरक्षितायै । चेकारवाच्यसन्तुष्टायै । चेकारान्त्य-सुशोभितायै । चेकाराक्षरसंजप्यायै । (२८०) चेकाराक्षर-संयुतायै । चेकाराक्षरमन्त्राद्यजपसन्तोषदयिन्यै । चेदिराज्य-कृतद्वेषायै। चेदिराजावमानितायै। चेदिराजसंहन्त्र्यै। चेदिराज-भयप्रदायै । चेदिराजसमुन्मूलनाशनोत्सुकविग्रहायै । चेदिराज-भ्रमोत्पन्नसमुत्सुकविराजितायै । चेदिराजवधोत्साहायै । चेदिराजवधप्रियायै। चेदिराजशिरोहन्त्र्यै। चेदिजनसुरक्षितायै। चेतनाचेतनप्रीतायै। चेतनोज्ज्वलरूपिण्यै। चेरचोलादिदेशस्थ-जारचोरविनाशिन्यै नमः। (२९५)

ओं ऐं ह्रीं क्लीं शोभायै। चामुण्डायै। सुपूजितायै। विच्चे। विशेषतत्त्वार्थज्ञानज्ञेयस्वरूपिण्यै नमः। ३००

श्री गुरुभ्यो नमः। श्रीदुर्गापरमेश्वर्यै नमः।।

—*—

# श्रीदुर्गाष्टोत्तरशतनामस्तोत्रम्

दुर्गा शिवा महालक्ष्मीर्महागौरी च चण्डिका।
सर्वज्ञा सर्वलोकेशा सर्वकर्मफलप्रदा।। १

सर्वतीर्थमया पुण्या देवयोनिरयोनिजा।
भूमिजा निर्गुणा चैवाधारशक्तिरनीश्वरा।। २

निर्गुणा निरहङ्कारा सर्वगर्वविमर्दिनी।
सर्वलोकप्रिया वाणी सर्वविद्याधिदेवता।। ३

पार्वती देवमाता च वनीशा विन्ध्यवासिनी।
तेजोवती महामाता कोटिसूर्यसमप्रभा ॥ ४

देवता वह्निरूपा च सदौजा वर्णरूपिणी।
गुणाश्रया गुणमयी गुणत्रयविवर्जिता ॥ ५

कर्मज्ञानप्रदा कान्ता सर्वसंहारकारिणी।
धर्मज्ञाना धर्मनिष्ठा सर्वकर्मविवर्जिता ॥ ६

कामाक्षा कामसंहन्त्री कामक्रोधविवर्जिता।
शाङ्करी शांभवी शान्ता चन्द्रसूर्याग्निलोचना ॥ ७

सुजया जयभूमिष्ठा जाह्नवी जनपूजिता।
शास्त्रा शास्त्रमया नित्या शुभा चन्द्रार्धमस्तका ॥ ८

भारती भ्रामरी कल्पा कराली कृष्णपिङ्गला।
ब्राह्मी नारायणी रौद्रा चन्द्रामृतपरिश्रुता ॥ ९

ज्येष्ठेन्दिरा महामाया जगत्सृष्ट्यादिकारिणी।
ब्रह्माण्डकोटिसंस्थाना कामिनी कमलालया ॥ १०

कात्यायनी कलातीता कालसंहारकारिणी।
योगनिष्ठा योगिगम्या योगिध्येया तपस्विनी ॥ ११

ज्ञानरूपा निराकारा भक्ताभीष्टफलप्रदा।
भूतात्मिका भूतमाता भूतेशा भूतधारिणी ॥ १२

स्वधानारीमध्यगता षडाधारादिवर्तिनी।
मोहदांशुभवा शुभ्रा सूक्ष्मा मात्रा निरालसा ॥ १३

निम्नगा नीलसंकाशा नित्यानन्दा हरा परा।
सर्वज्ञानप्रदाऽनन्ता सत्या दुर्लभरूपिणी ॥
सरस्वती सर्वगता सर्वाभीष्टप्रदायिनी ॥ १४

—*—

# दुर्गाष्टोत्तरशतनामावलिः

ओं दुर्गायै नमः । शिवायै । महालक्ष्म्यै । महागौर्यै । चण्डिकायै । सर्वज्ञायै । सर्वलोकेशायै । सर्वकर्मफलप्रदायै । सर्वतीर्थमयायै । पुण्यायै । देवयोनये । अयोनिजायै । भूमिजायै । निर्गुणायै । आधारशक्त्यै । अनीश्वरायै । निर्गुणायै । निरहङ्कारायै । सर्वगर्वविमर्दिन्यै । सर्वलोकप्रियायै नमः । २०

ओं वाण्यै नमः । सर्वविद्याधिदेवतायै । पार्वत्यै । देवमात्रे । वनीशायै । विन्ध्यवासिन्यै । तेजोवत्यै । महामात्रे । कोटिसूर्यसमप्रभायै । देवतायै । वह्निरूपायै । सदौजसे । वर्णरूपिण्यै । गुणाश्रयायै । गुणमय्यै । गुणत्रयविवर्जितायै । कर्मज्ञानप्रदायै । कान्तायै । सर्वसंहारकारिण्यै । धर्मज्ञानायै नमः । ४०

ओं धर्मनिष्ठायै नमः । सर्वकर्मविवर्जितायै । कामाक्षायै । कामसंहन्त्र्यै । कामक्रोधविवर्जितायै । शाङ्कर्यै । शाम्भव्यै । शान्तायै । चन्द्रसूर्याग्निलोचनायै । सुजयायै । जयभूमिष्ठायै । जाह्नव्यै । जनपूजितायै । शास्त्रायै । शास्त्रमयायै । नित्यायै । शुभायै । चन्द्रार्धमस्तकायै । भारत्यै । भ्रामर्यै नमः । ६०

ओं कल्पायै नमः । कराल्यै । कृष्णपिङ्गलायै । ब्राह्म्यै । नारायण्यै । रौद्रायै । चन्द्रामृतपरिश्रुतायै । ज्येष्ठायै । इन्दिरायै । महामायायै । जगत्सृष्ट्याद्किारिण्यै । ब्रह्माण्डकोटिसंस्थानायै । कामिन्यै । कमलालयायै । कात्यायन्यै । कलातीतायै । कालसंहारकारिण्यै । योगिनिष्ठायै । योगिगम्यायै । योगिध्येयायै नमः । ८०

ओं तपस्विन्यै नमः । ज्ञानरूपायै । निराकारायै । भक्ताभीष्टफलप्रदायै । भूतात्मिकायै । भूतमात्रे । भूतेशायै । भूतधारिण्यै । स्वधानारीमध्यगतायै । षडाधारादिवर्तिन्यै । मोहदायै । अंशुभवायै। शुभ्रायै। सूक्ष्मायै। मात्रायै। निरालसायै। निम्नगायै। नीलसंकाशायै। नित्यानन्दायै। हरायै नमः। १००

ओं परायै नमः । सर्वज्ञानप्रदायै । अनन्तायै । सत्यायै । दुर्लभरूपिण्यै। सरस्वत्यै। सर्वगतायै। सर्वाभीष्टप्रदायिन्यै नमः।

—*—

## दुर्गाद्वात्रिंशन्नामस्तोत्रम्

(त्रिपुरारहस्ये माहात्म्यखण्डतः)

दुर्गा उवाच—

देवाः शृणुध्वमेतत्तु गोप्यमत्यन्तदुर्लभम्।
द्वात्रिंशन्नाममाला मे सर्वापत्प्रविनाशिनी॥ १
दुर्गा दुर्गार्तिशमनी दुर्गापद्विनिवारिणी।
दुर्गमच्छेदिनी दुर्गसाधिनी दुर्गनाशिनी॥ २
दुर्गतोद्धारिणी दुर्गनिहन्त्री दुर्गमापहा।
दुर्गमज्ञानदा दुर्गदैत्यलोकदवानला॥ ३
दुर्गमा दुर्गमालोका दुर्गमात्मस्वरूपिणी।
दुर्गमार्गप्रदा दुर्गमविद्या दुर्गमाश्रिता॥ ४
दुर्गमज्ञानसंस्थाना दुर्गमध्यावभासिनी।
दुर्गमोहा दुर्गमगा दुर्गमार्थस्वरूपिणी॥ ५

दुर्गमासुरसंहन्त्री दुर्गमायुधधारिणी।
दुर्गमाङ्गी दुर्गमता दुर्गम्या दुर्गमेश्वरी ।। ६

दुर्गभीमा दुर्गभामा दुर्गभा दुर्गदारिणी।
नामावलिमिमां यस्तु दुर्गाया मम मानवः ।। ७

पठेत्सर्वभयान्मुक्तो भविष्यति न संशयः।
शत्रुभिः पीड्यमानो वा दुर्गबन्धगतोऽपि वा ।। ८

द्वात्रिंशन्नामपाठेन मुच्यते नात्र संशयः।
आपत्सु नैतत्सदृशमन्यदस्ति भयापहम् ।। ९

—*—

## दुर्गाद्वात्रिंशन्नामावलिः

ओं दुं। दुर्गायै नमः। दुर्गार्तिशमन्यै। दुर्गापद्विनिवारिण्यै। दुर्गमच्छेदिन्यै। दुर्गसाधिन्यै। दुर्गनाशिन्यै। दुर्गतोद्धारिण्यै। दुर्गनिहन्त्र्यै। दुर्गमापहायै। दुर्गमज्ञानदायै। दुर्गदैत्यलोकदवानलायै। दुर्गमायै। दुर्गमालोकायै। दुर्गमात्मस्वरूपिण्यै। दुर्गमार्गप्रदायै। दुर्गमविद्यायै। दुर्गमाश्रितायै। दुर्गमज्ञानसंस्थानायै। दुर्गमध्यानभासिन्यै। दुर्गमोहायै। दुर्गमगायै। दुर्गमार्थस्वरूपिण्यै। दुर्गमासुरसंहन्त्र्यै। दुर्गमायुधधारिण्यै। दुर्गमाङ्ग्यै। दुर्गमतायै। दुर्गम्यायै। दुर्गमेश्वर्यै। दुर्गभीमायै। दुर्गभामायै। दुर्गभायै। दुर्गदारिण्यै नमः। ३२

—*—

॥ श्रीः ॥

# अन्नपूर्णासहस्रनामस्तोत्रम्

कैलासशिखरासीनं देवदेवं महेश्वरम्।
प्रणम्य दण्डवद्भूमौ पार्वती परिपृच्छति ॥ १

श्रीपार्वत्युवाच—

न्नपूर्णा महादेवी त्रैलोक्ये जीवधारिणी।
नाम्नां सहस्रं तस्यास्तु कथयस्व महाप्रभो ॥ २

श्रीशिव उवाच—

शृणु देवि वरारोहे जगत्कारणि कौलिनि।
आराधनीया सर्वेषां सर्वेषां परिपृच्छसि ॥ ३

सहस्रैर्नामभिर्दिव्यैस्त्रैलोक्यप्राणिपूजितैः।
अन्नदायास्स्तवं दिव्यं यत्सुरैरपि वाञ्छितम् ॥ ४

कथयामि तव स्नेहात्सावधानाऽवधारय।
गोपनीयं प्रयत्नेन स्तवराजमिदं शुभम् ॥ ५

न प्रकाश्यं त्वया भद्रे दुर्जनेभ्यो निशेषतः।
न देयं परशिष्येभ्यो भक्तिहीनाय पार्वति ॥ ६

देयं शिष्याय शान्ताय गुरुदेवरताय च।
अन्नपूर्णास्तवं देयं कौळिकाय कुलेश्वरी ॥ ७

ओं अस्य श्रीमदन्नपूर्णासहस्रनामस्तोत्र-मालामन्त्रस्य, श्रीभगवान् सदाशिव ऋषिः, अनुष्टुप्छन्दः, प्रकटगुप्तगुप्ततर सम्प्रदाय कुलोत्तीर्ण निगर्भरहस्याति-रहस्यपरापरातिरहस्यातिपूर्णाचिन्त्यप्रभावा भगवती

श्रीमदन्नपूर्णा देवता, हलो बीजं, स्वराश्शक्तिः, जीवो बीजं, बुद्धिश्शक्तिः, उदानो बीजं, सुषुम्ना नाडी, सरस्वती शक्तिः, धर्मार्थकाममोक्षार्थे पाठे विनियोगः ॥ ध्यानम्—

अर्कोन्मुक्तशशाङ्ककोटिवदनामापीनतुङ्गस्तनीं
चन्द्रार्धाङ्कितमस्तकां मधुमदामालोलनेत्रत्रयीम्।
बिभ्राणामनिशं वरं जपपटीं शूलं कपालं करैः
आद्यां यौवनगर्वितां लिपितनुं वागीश्वरीमाश्रये॥

—*—

॥ ओं अन्नपूर्णायै नमः ॥

अन्नपूर्णा अन्नदात्री अन्नराशिकृतालया।
अन्नदा अन्नरूपा च अन्नदानरतोत्सवा॥ १

अनन्ता च अनन्ताक्षी अनन्तगुणशालिनी।
अच्युता अच्युतप्राणा अच्युतानन्दकारिणी॥ २

अव्यक्ताऽनन्तमहिमा अनन्तस्य कुलेश्वरी।
अब्धिस्था अब्धिशयना अब्धिजा अब्धिनन्दिनी॥ ३

अब्जस्था अब्जनिलया अब्जजा अब्जभूषणा।
अब्जाभा अब्जहस्ता च अब्जपत्रशुभेक्षणा॥ ४

अब्जानना अनन्तात्मा अग्निस्था अग्निरूपिणी।
अग्निजाया अग्निमुखी अग्निकुण्डकृतालया॥ ५

अकारा अग्निमाता च अजयाऽदितिनन्दिनी।
आद्या आदित्यसङ्काशा आत्मज्ञा आत्मगोचरा॥ ६

आत्मसूरात्मदयिता आधारा आत्मरूपिणी।
आशा आकाशपद्मस्था अवकाशस्वरूपिणी॥ ७

आशापूरी अगाधा च अणिमादिसुसेविता।
अम्बिका अबला अम्बा अनाद्या च अयोनिजा ॥ ८

अनीशा ईशिका ईशा ईशानी ईश्वरप्रिया।
ईश्वरी ईश्वरप्राणा ईश्वरानन्ददायिनी ॥ ९

इन्द्राणी इन्द्रदयिता इन्द्रसूरिन्द्रपालिनी।
इन्दिरा इन्द्रभगिनी इन्द्रिया इन्दुभूषणा ॥ १०

इन्दुमाता इन्दुमुखी इन्द्रियाणां वशङ्करी।
उमा उमापतेः प्राणा ओड्याणपीठवासिनी ॥ ११

उत्तरज्ञा उत्तराख्या उकारा उत्तरात्मिका।
ऋमाता ऋभवा ऋस्था ॠलृकारस्वरूपिणी ॥ १२

ऋकारा च लृकारा च लॄतकप्रीतिदायिनी।
एका च एकवीरा च एकारैकाररूपिणी ॥ १३

ओकारी ओघरूपा च ओघत्रयसुपूजिता।
ओघस्था ओघसम्भूता ओघधात्री च ओघसूः ॥ १४

षोडशस्वरसम्भूता षोडशस्वररूपिणी।
वर्णात्मा वर्णनिलया शूलिनी वर्णमालिनी ॥ १५

कालरात्रिर्महारात्रिर्मोहरात्रिः सुलोचना।
काळी कपालिनी कृत्या काळिका सिंहगामिनी ॥ १६

कात्यायनी कलाधारा कालदैत्यनिकृन्तनी।
कामिनी कामवन्द्या च कमनीया विनोदिनी ॥ १७

कामसूः कामवनिता कामधुक् कमलावती।
कामदात्री कराळी च कामकेलिविनोदिनी ॥ १८

कामना कामदा काम्या कमला कमलार्चिता।
काश्मीरलिप्तवक्षोजा काश्मीरद्रवचर्चिता॥ १९

कनका कनकप्राणा कनकाचलवासिनी।
कनकाभा काननस्था कामाख्या कनकप्रदा॥ २०

कामपीठस्थिता नित्या कामधामनिवासिनी।
कम्बुकण्ठी कराळाक्षी किशोरी च कलापिनी॥ २१

कला काष्ठा निमेषा च कालस्था कालरूपिणी।
कालज्ञा कालमाता च कालधात्री कलावती॥ २२

कालदा कालहा कुल्या कुरुकुल्ला कुलाङ्गना।
कीर्तिदा कीर्तिहा कीर्तिः कीर्तिस्था कीर्तिवर्धनी॥ २३

कीर्तिज्ञा कीर्तितपदा कृत्तिका केशवप्रिया।
केशिहा केळिकारी च केशवानन्दकारिणी॥ २४

कुमुदाभा कुमारी च कर्मदा कमलेक्षणा।
कौमुदी कुमुदानन्दा कौळिनी च कुमुद्वती॥ २५

कोदण्डधारिणी क्रोधा कूटस्था कोटराश्रया।
कालकण्ठी करालाङ्गी कालाङ्गी कालभूषणा॥ २६

कङ्काळी कामदामा च कङ्कालकृतभूषणा।
कपालकर्त्रिककरा करवीरस्वरूपिणी॥ २७

कपर्दिनी कोमलाङ्गी कृपासिन्धुः कृपामयी।
कुशावती कुण्डसंस्था कौबेरी कौशिकी तथा॥ २८

काश्यपी कद्रुतनया कलिकल्मषनाशिनी।
कञ्जस्था कञ्जवदना कञ्जकिञ्जल्कचर्चिता॥ २९

कञ्जाभा कञ्जमध्यस्था कञ्जनेत्रा कचोद्भवा।
कामरूपा च ह्रींकारी कश्यपान्वयवर्धिनी ॥ ३०

खर्वा च खञ्जनद्वन्द्वलोचना खर्ववाहिनी।
खड्गिनी खड्गहस्ता च खेचरी खड्गरूपिणी ॥ ३१

खगस्था खगरूपा च खगगा खगसम्भवा।
खगधात्री खगानन्दा खगयोनिस्वरूपिणी ॥ ३२

खगेशी खेटककरा खगानन्दविवर्धिनी।
खगमान्या खगाधारा खगगर्वविमोचिनी ॥ ३३

गङ्गा गोदावरी गीतिर्गायत्री गगनालया।
गीर्वाणसुन्दरी गौश्च गाधा गीर्वाणपूजिता ॥ ३४

गीर्वाणचर्चितपदा गान्धारी गोमती तथा।
गर्विणी गर्वहन्त्री च गर्भस्था गर्भधारिणी ॥ ३५

गर्भदा गर्भहन्त्री च गन्धर्वकुलपूजिता।
गया गौरी च गिरिजा गिरिस्था गिरिसम्भवा ॥ ३६

गिरिगह्वरमध्यस्था कुञ्जरेश्वरगामिनी।
किरीटिनी च गदिनी गुञ्जाहारविभूषणा ॥ ३७

गणपा गणका गण्या गणकानन्दकारिणी।
गणपूज्या च गीर्वाणी गणपानन्दवर्धिनी ॥ ३८

गुरुमाता गुरुरता गुरुभक्तिपरायणा।
गोत्रा गौः कृष्णभगिनी कृष्णसूः कृष्णनन्दिनी ॥ ३९

गोवर्धनी गोत्रधरा गोवर्धनकृतालया।
गोवर्धनधरा गोदा गौराङ्गी गौतमात्मजा ॥ ४०

घर्घरा घोररूपा च घोरा घर्घरनादिनी ।
श्यामा घनरवाऽघोरा घना घोरार्तिनाशिनी ।। ४१

घनस्था च घनानन्दा दारिद्र्यघननाशिनी ।
चित्तज्ञा चिन्तितपदा चित्तस्था चित्तरूपिणी ।। ४२

चक्रिणी चारुचम्पाभा चारुचम्पकमालिनी ।
चन्द्रिका चन्द्रकान्तिश्च चापिनी चन्द्रशेखरा ।। ४३

चण्डिका चण्डदैत्यघ्नी चन्द्रशेखरवल्लभा ।
चाण्डालिनी च चामुण्डा चण्डमुण्डवधोद्यता ।। ४४

चैतन्यभैरवी चण्डा चैतन्यघनगेहिनी ।
चित्स्वरूपा चिदाधारा चण्डवेगा चिदालया ।। ४५

चन्द्रमण्डलमध्यस्था चन्द्रकोटिसुशीतला ।
चपला चन्द्रभगिनी चन्द्रकोटिनिभानना ।। ४६

चिन्तामणिगुणाधारा चिन्तामणिविभूषणा ।
भक्तचिन्तामणिलता चिन्तामणिकृतालया ।। ४७

चारुचन्दनलिप्ताङ्गी चतुरा च चतुर्मुखी ।
चैतन्यदा चिदानन्दा चारुचामरवीजिता ।। ४८

छत्रदा छत्रधारी च छलच्छद्मविनाशिनी ।
छत्रहा छत्ररूपा च छत्रच्छायाकृतालया ।। ४९

जगज्जीवा जगद्धात्री जगदानन्दकारिणी ।
यज्ञप्रिया यज्ञरता जपयज्ञपरायणा ।। ५०

जननी जानकी यज्वा यज्ञहा यज्ञनन्दिनी ।
यज्ञदा यज्ञफलदा यज्ञस्थानकृतालया ।। ५१

यज्ञभोक्त्री यज्ञरूपा यज्ञविघ्नविनाशिनी ।
जपाकुसुमसङ्काशा जपाकुसुमशोभिता ।। ५२

जालन्धरी जया जैत्री जीमूतचयभाषिणी ।
जयदा जयरूपा च जयस्था जयकारिणी ।। ५३

जगदीशप्रिया जीवा जलस्था जलजेक्षणा ।
जलरूपा जह्नुकन्या यमुना जलजोदरी ।। ५४

जलजास्या जाह्नवी च जलजाभा जलोदरी ।
यदुवंशोद्भवा जीवा यादवानन्दकारिणी ।। ५५

यशोदा यशसां राशिर्यशोदानन्दकारिणी ।
ज्वलिनी ज्वालिनी ज्वाला ज्वलत्पावकसन्निभा ।। ५६

ज्वालामुखी जगन्माता यमलार्जुनभञ्जनी ।
जन्मदा जन्महा जन्या जन्मभूर्जनकात्मजा ।। ५७

जनानन्दा जाम्बवती जम्बूद्वीपकृतालया ।
जाम्बूनदसमानाभा जाम्बूनदविभूषणा ।। ५८

जम्भहा जातिदा जातिर्ज्ञानदा ज्ञानगोचरा ।
ज्ञानरूपाऽज्ञानहा च ज्ञानविज्ञानशालिनी ।। ५९

जिनजैत्री जिनाधारा जिनमाता जिनेश्वरी ।
जितेन्द्रिया जनाधारा अजिनाम्बरधारिणी ।। ६०

शम्भुकोटिदुराधर्षा विष्णुकोटिविमर्दिनी ।
समुद्रकोटिगम्भीरा वायुकोटिमहाबला ।। ६१

सूर्यकोटिप्रतीकाशा यमकोटिदुरापहा ।
कामधुक्कोटिफलदा शक्रकोटिसुराज्यदा । ६२

कन्दर्पकोटिलावण्या पद्मकोटिनिभानना।
पृथ्वीकोटिजनाधारा अग्निकोटिभयङ्करी ।। ६३

अणिमा महिमा प्राप्तिर्गरिमा लघिमा तथा।
प्राकाम्यदा वशकरी ईशिका सिद्धिदा तथा ।। ६४

महिमादिगुणोपेता अणिमाद्यष्टसिद्धिदा।
जवनघ्नी जनाधीना जामिनी च जरापहा ।। ६५

तारिणी तारिका तारा तोतला तुलसीप्रिया।
तन्त्रिणी तन्त्ररूपा च तन्त्रज्ञा तन्त्रधारिणी ।। ६६

तारहारा च तुलजा डाकिनीतन्त्रगोचरा।
त्रिपुरा त्रिदशा त्रिस्था त्रिपुरासुरघातिनी ।। ६७

त्रिगुणा च त्रिकोणस्था त्रिमात्रा त्रितनुस्थिता।
त्रैविद्या च त्रयी त्रिघ्नी तुरीया त्रिपुरेश्वरी ।। ६८

त्रिकोदरस्था त्रिविधा त्रैलोक्या त्रिपुरात्मिका।
त्रिधाम्नी त्रिदशाराध्या त्र्यक्षा त्रिपुरवासिनी ।। ६९

त्रिवर्णी त्रिपदी तारा त्रिमूर्तिजननी त्वरा।
त्रिदिवा त्रिदिवेशाऽऽदिर्देवी त्रैलोक्यधारिणी ।। ७०

त्रिमूर्तिश्च त्रिजननी त्रिभूस्त्रिपुरसुन्दरी।
तपस्विनी तपोनिष्ठा तरुणीताररूपिणी ।। ७१

तामसी तापसी चैव तापघ्नी च तमोपहा।
तरुणार्कप्रतीकाशा तप्तकाञ्चनसन्निभा ।। ७२

उन्मादिनी तन्तुरूपा त्रैलोक्यव्यापिनीश्वरी।
तार्किकी तर्किकी विद्या तापत्रयविनाशिनी ।। ७३

त्रिपुष्करा त्रिकालज्ञा त्रिसन्ध्या च त्रिलोचना।
त्रिवर्गा च त्रिवर्गस्था तपसस्सिद्धिदायिनी ॥ ७४

अधोक्षजा अयोध्या च अपर्णा च अवन्तिका।
कारिका तीर्थरूपा च तीरा तीर्थकरी तथा ॥ ७५

दारिद्र्यदुःखदलिनी अदीना दीनवत्सला।
दीनानाथप्रिया दीर्घा दयापूर्णा दयात्मिका ॥ ७६

देवदानवसंपूज्या देवानां प्रियकारिणी।
दक्षपुत्री दक्षमाता दक्षयज्ञविनाशिनी ॥ ७७

देवसूर्दक्षिणा दक्षा दुर्गा दुर्गतिनाशिनी।
देवकीगर्भसंभूता दुर्गदैत्यविनाशिनी ॥ ७८

अट्टाऽट्टहासिनी दोला दोलाकर्माभिनन्दिनी।
देवकी देविका देवी दुरितघ्नी तटित्तथा ॥ ७९

गण्डकी गल्लकी क्षिप्रा द्वारा द्वारवती तथा।
आनन्दोदधिमध्यस्था कटिसूत्रैरलङ्कृता ॥ ८०

घोराग्निदाहदमनी दुःखदुस्स्वप्ननाशिनी।
श्रीमयी श्रीमती श्रेष्ठा श्रीकरी श्रीविभाविनी ॥ ८१

श्रीदा श्रीशा श्रीनिवासा श्रीमती श्रीर्मतिर्गतिः।
धनदा दामिनी दान्ता धर्मदा धनशालिनी ॥ ८२

दाडिमीपुष्पसङ्काशा धनागारा धनञ्जया।
धूम्राभा धूम्रदैत्यघ्नी धवला धवळप्रिया ॥ ८३

धूम्रवक्त्रा धूम्रनेत्रा धूम्रकेशी च धूसरा।
धरणी धरिणी धैर्या धरा धात्री च धैर्यदा ॥ ८४

दमिनी धर्मिणी धूम्रा दया दोग्ध्री दुरासदा।
नारायणी नारसिंही नृसिंहहृदयालया॥ ८५

नागिनी नागकन्या च नागसूर्नागनायिका।
नानारत्नविचित्राङ्गी नानाभरणमण्डिता॥ ८६

दुर्गस्था दुर्गरूपा च दुःखदुष्कृतनाशिनी।
ह्रीङ्कारी चैव श्रीङ्कारी हुङ्कारी क्लेशनाशिनी॥ ८७

नगात्मजा नागरी च नवीना नूतनप्रिया।
नीरजास्या नीरदाभा नवलावण्यसुन्दरी॥ ८८

नीतिज्ञा नीतिदा नीतिर्निम्ननाभिर्नगेश्वरी।
निष्ठा नित्या निरातङ्का नागयज्ञोपवीतिनी॥ ८९

निधिदा निधिरूपा च निर्गुणा नरवाहिनी।
नरमांसरता नारी नरमुण्डविभूषणा॥ ९०

निराधारा निर्विकारा नुतिर्निर्वाणसुन्दरी।
नरासृक्पानमत्ता च निर्वैरा नागगामिनी॥ ९१

परमा प्रमिता प्राज्ञा पार्वती पर्वतात्मजा।
पर्वप्रिया पर्वरता पर्वपावनपावनी॥ ९२

परात्परतरा पूर्वा पश्चिमा पापनाशिनी।
पशूनां पतिपत्नी च पतिभक्तिपरायणा॥ ९३

परेशी पारगा पारा परञ्ज्योतिस्स्वरूपिणी।
निष्ठुरा क्रूरहृदया परासिद्धिः परागतिः॥ ९४

पशुघ्नी पशुरूपा च पशुहा पशुवाहिनी।
पिता माता च यन्त्री च पशुपाशविनाशिनी॥ ९५

पद्मिनी पद्महस्ता च पद्मकिञ्जल्कवासिनी।
पद्मवक्त्रा च पद्माक्षी पद्मस्था पद्मसंभवा ॥ ९६

पद्मास्या पञ्चमी पूर्णा पूर्णपीठनिवासिनी।
पद्मरागप्रतीकाशा पाञ्चाली पञ्चमप्रिया ॥ ९७

परब्रह्मस्वरूपा च परब्रह्मनिवासिनी।
परमानन्दमुदिता परचक्रनिवासिनी ॥ ९८

परेशी परमा पृथ्वी पीनतुङ्गपयोधरा।
परापरा पराविद्या परमानन्ददायिनी ॥ ९९

पूज्या प्रज्ञावती पुष्टिः पिनाकिपरिकीर्तिता।
प्राणघ्नी प्राणरूपा च प्राणदा च प्रियंवदा ॥ १००

फणिभूषा फणावेशी फकारकण्ठमालिनी।
फणिराड्वृतसर्वाङ्गी फलभागनिवासिनी ॥ १०१

बलभद्रस्य भगिनी बाला बालप्रदायिनी।
फल्गुरूपा प्रलम्बघ्नी फल्गूत्सव विनोदिनी ॥ १०२

भवानी भवपत्नी च भवभीतिहरा भवा।
भवेश्वरी भवाराध्या भवेशी भवनायिका ॥ १०३

भवमाता भवागम्या भवकण्टकनाशिनी।
भवप्रिया भवानन्दा भव्या च भवमोचनी ॥ १०४

भावनीया भगवती भवभारविनाशिनी।
भूतधात्री च भूतेशी भूतस्था भूतरूपिणी ॥ १०५

भूतमाता च भूतघ्नी भूतपञ्चकवासिनी।
भोगोपचारकुशला भिस्साधात्री च भूचरी ॥ १०६

भीतिघ्नी भक्तिगम्या च भक्तानामार्तिनाशिनी।
भक्तानुकम्पिनी भीमा भगिनी भगनायिका॥ १०७

भगविद्या भगक्लिन्ना भगयोनिर्भगप्रदा।
भगेशी भगरूपा च भगगुह्या भगापहा॥ १०८

भगोदरी भगानन्दा भगाद्या भगमालिनी।
भोगप्रदा भोगवासा भोगमूला च भोगिनी॥ १०९

भेरुण्डा भेदिनी भीमा भद्रकाली भिदोज्झिता।
भैरवी भुवनेशानी भुवना भुवनेश्वरी॥ ११०

भीमाक्षी भारती चैव भैरवाष्टकसेविता।
भास्वरा भास्वती भीतिर्भास्वदुत्तानशायिनी॥ १११

भागीरथी भोगवती भवघ्नी भुवनात्मिका।
भूतिदा भूतिरूपा च भूतस्था भूतवर्धिनी॥ ११२

माहेश्वरी महामाया महातेजा महासुरी।
महाजिह्वा महालोला महादंष्ट्रा महाभुजा॥ ११३

महामोहान्धकारघ्नी महामोक्षप्रदायिनी।
महादारिद्र्यशमनी महाशत्रुविमर्दिनी॥ ११४

महाशक्तिर्महाज्योतिर्महासुरविमर्दिनी।
महाकाया महावीर्या महापातकनाशिनी॥ ११५

महारवा मन्त्रमयी मणिपूरनिवासिनी।
मानसी मानदा मान्या मनश्चक्षुरगोचरा॥ ११६

माहेन्द्री मधुरा माया महिषासुरमर्दिनी।
महाकुण्डलिनी शक्तिर्महाविभववर्धिनी॥ ११७

मानसी माधवी मेधा मतिदा मतिधारिणी ।
मेनकागर्भसम्भूता मेनकाभगिनी मतिः ।। ११८

महोदरी मुक्तकेशी मुक्तिकाम्यार्थसिद्धिदा ।
माहेशी महिषारूढा मधुदैत्यविमर्दिनी ।। ११९

महाव्रता महामूर्धा महाभयविनाशिनी ।
मातङ्गी मत्तमातङ्गी मातङ्गकुलमण्डिता ।। १२०

महाघोरा माननीया मत्तमातङ्गगामिनी ।
मुक्ताहारलतोपेता मदघूर्णितलोचना ।। १२१

महापराधराशिघ्नी महाचोरभयापहा ।
महाचिन्त्यस्वरूपा च मणिमन्त्रमहौषधी ।। १२२

मणिमण्डपमध्यस्था मणिमालाविराजिता ।
मन्त्रात्मिका मन्त्रगम्या मन्त्रमाता सुमन्त्रिणी ।। १२३

मेरुमन्दिरमध्यस्था मकराकृतिकुण्डला ।
मन्थरा च महासूक्ष्मा महादूती महेश्वरी ।। १२४

मालिनी मानवी माध्वी मदरूपा मदोत्कटा ।
मदिरा मधुरा चैव मोदिनी च महोद्धता ।। १२५

मङ्गळाङ्गी मधुमयी मधुपानपरायणा ।
मनोरमा रमामाता राजराजेश्वरी रमा ।। १२६

राजमान्या राजपूज्या रक्तोत्पलविभूषणा ।
राजीवलोचना रामा राधिका रामवल्लभा ।। १२७

शाकिनी डाकिनी चैव लावण्याम्बुधिवीचिका ।
रुद्राणी रुद्ररूपा च रौद्रा रुद्रार्तिनाशिनी ।। १२८

रक्तप्रिया रक्तवस्त्रा रक्ताक्षी रक्तलोचना ।
रक्तकेशी रक्तदंष्ट्रा रक्तचन्दनचर्च्चिता ।। १२९

रक्ताङ्गी रक्तभूषा च रक्तबीजनिपातिनी ।
रागादिदोषरहिता रतिजा रतिदायिनी ।। १३०

विश्वेश्वरी विशालाक्षी विन्ध्यपीठनिवासिनी ।
विश्वभूर्वीरविद्या च वीरसूर्वीरनन्दिनी ।। १३१

वीरेश्वरी विशालाक्षी विष्णुमाया विमोहिनी ।
विद्यावती विष्णुरूपा विशालनयनोज्ज्वला ।। १३२

विष्णुमाता च विश्वात्मा विष्णुजायास्वरूपिणी ।
वाराही वरदा वन्द्या विख्याता विलसत्कचा ।। १३३

ब्रह्मेशी ब्रह्मदा ब्राह्मी ब्रह्माणी ब्रह्मरूपिणी ।
द्वारका विश्ववन्द्या च विश्वपाशविमोचनी ।
विश्वासकारिणी विश्वा विश्वशक्तिर्विचक्षणा ।। १३४

बाणचापधरा वीरा बिन्दुस्था बिन्दुमालिनी ।
षट्चक्रभेदिनी षोढा षोडशारनिवासिनी ।। १३५

शितिकण्ठप्रिया शान्ता शाकिनी वातरूपिणी ।
शाश्वती शम्भुवनिता शाम्भवी शिवरूपिणी ।। १३६

शिवमाता च शिवदा शिवा शिवहृदासना ।
शुक्लाम्बरा शीतला च शीलाशीलप्रदायिनी ।। १३७

शिशुप्रिया वैद्यविद्या सालग्रामशिला शुचिः ।
हरिप्रिया हरमूर्तिर्हरिनेत्रकृतालया ।। १३८

हरिवक्त्रोद्भवा हाला हरिवक्षःस्थलस्थिता ।
क्षेमङ्करी क्षितिः क्षेत्रा क्षुधितस्य प्रपूरणी । १३९

वैश्या च क्षत्रिया शूद्री क्षत्रियाणां कुलेश्वरी।
हरपत्नी हराराध्या हरसूर्हररूपिणी ।। १४०

सर्वानन्दमयी सिद्धिस्सर्वरक्षास्वरूपिणी।
सर्वदुष्टप्रशमनी सर्वेप्सितफलप्रदा ।। १४१

सर्वसिद्धेश्वराराध्या सर्वमङ्गल मङ्गळा।
पुण्यं सहस्रनामेदं तव प्रीत्या प्रकाशितम् ।। १४२

गोपनीयं प्रयत्नेन पठनीयं प्रयत्नतः।
नातः परतरं पुण्यं नातः परतरं तपः ।। १४३

नातः परतरं स्तोत्रं नातः परतरा गतिः।
स्तोत्रं नामसहस्राख्यं मम वक्त्राद्विनिर्गतम् ।। १४४

यः पठेत्परया भक्त्या शृणुयाद्वा समाहितः।
मोक्षार्थी लभते मोक्षं स्वर्गार्थी स्वर्गमाप्नुयात् ।। १४५

कामार्थी लभते कामं धनार्थी लभते धनम्।
विद्यार्थी लभते विद्यां यशोऽर्थी लभते यशः ।। १४६

कन्यार्थी लभते कन्यां सुतार्थी लभते सुतान्।
मूर्खोऽपि लभते शास्त्रं चोरोऽपि लभते गतिम् ।। १४७

गुर्विणी जनयेत्पुत्रं कन्यां विन्दति सत्पतिम्।
संक्रान्त्यां च चतुर्दश्यामष्टम्यां च विशेषतः ।। १४८

पौर्णमास्याममावास्यां नवम्यां भौमवासरे।
पठेद्वा पाठयेद्वापि पूजयेद्वापि पुस्तकम् ।। १४९

स मुक्तस्सर्वपापेभ्यः कामेश्वरसमो भवेत्।
लक्ष्मीवान् सुतवांश्चैव वल्लभस्सर्वयोषिताम् ।। १५०

तस्य वश्यं भवेदाशु त्रैलोक्यं सचराचरम् ।
विद्यानां पारगो विप्रः क्षत्रियो विजयी रणे ।। १५१

वैश्यो धनसमृद्धस्स्याच्छूद्रस्सुखमवाप्नुयात् ।
क्षेत्रे च बहुसस्यं स्याद्गावश्च बहुदुग्धदाः ।। १५२

नाशुभं नापदस्तस्य न भयं नृपशत्रुतः ।
जायते नाशुभा बुद्धिर्लभते कुलपूज्यताम् ।। १५३

न बाधन्ते ग्रहास्तस्य न रक्षांसि न पन्नगाः ।
न पिशाचा न डाकिन्यो भूतभेतालडम्भकाः ।। १५४

बालग्रहाभिभूतानां बालानां शान्तिकारकम् ।
द्वन्द्वानां प्रतिभेदे च मैत्रीकरणमुत्तमम् ।। १५५

लोहपाशैर्दृढैर्बद्धो बन्दी वेश्मनि दुर्गमे ।
तिष्ठञ्छृण्वन्पठन्मर्त्यो मुच्यते नात्र संशयः ।। १५६

पश्यन्ति नहि ते शोकं वियोगं चिरजीविनः ।
शृण्वती बद्धगर्भा च सुखं चैव प्रसूयते ।। १५७

एकदा पठनादेव सर्वपापक्षयो भवेत् ।
नश्यन्ति च महारोगा दशधावर्तनेन च ।। १५८

शतधावर्तने चैव वाचां सिद्धिः प्रजायते ।
नवरात्रे जिताहारो दृढबुद्धिर्जितेन्द्रियः ।। १५९

अम्बिकायतने विद्वान् शुचिष्मान् मूर्तिसन्निधौ ।
एकाकी च दशावर्तं पठन्धीरश्च निर्भयः ।। १६०

साक्षाद्भगवती तस्मै प्रयच्छेदीप्सितं फलम् ।
सिद्धपीठे गिरौ रम्ये सिद्धक्षेत्रे सुरालये ।। १६१

पठनात्साधकस्याशु सिद्धिर्भवति वाञ्छिता।
दशावर्तं पठेन्नित्यं भूमिशायी नरश्शुचिः ।। १६२

स्वप्ने मूर्तिमयीं देवीं वरदां सोऽपि पश्यति।
आवर्तनसहस्रैर्ये जपन्ति पुरुषोत्तमाः ।। १६३

ते सिद्धा सिद्धिदा लोके शापानुग्रहणक्षमाः ।
प्रयच्छन्तश्च सर्वस्वं सेवन्ते तान्महीश्वराः ।। १६४

भूर्जपत्रेऽष्टगन्धेन लिखित्वा तु शुभे दिने।
धारयेद्यन्त्रितं शीर्षे पूजयित्वा कुमारिकाम् ।। १६५

ब्राह्मणान् वरनारीश्च धूपैः कुसुमचन्दनैः ।
क्षीरखण्डादिभोज्यांश्च भोजयित्वा सुभक्तितः ।। १६६

बध्नन्ति ये महारक्षां बालानां च विशेषतः ।
रुद्रं दृष्ट्वा यथा देवं विष्णुं दृष्ट्वा च दानवाः ।। १६७

पन्नगा गरुडं दृष्ट्वा सिंहं दृष्ट्वा यथा गजाः ।
मण्डूका भोगिनं दृष्ट्वा मार्जारं मूषिकास्तथा ।। १६८

विघ्नभूताः पलायन्ते तस्य वक्त्रविलोकनात्।
अग्निचोरभयं तस्य कदाचिन्नैव संभवेत् ।। १६९

पातकान्विविधान्सोऽपि मेरुमन्दरसन्निभान्।
भस्मितान्कुरुते क्षिप्रं तृणं वह्निहुतं यथा ।। १७०

नृपाश्च वश्यतां यान्ति नृपपूज्याश्च ते नराः ।
महार्णवे महानद्यां पोतस्थे च न भीः क्वचित् ।। १७१

रणे द्यूते विवादे च विजयं प्राप्नुवन्ति ते।
सर्वत्र पूजितो लोकैर्बहुमानपुरस्सरैः ।। १७२

रतिरागविवृद्धाश्च विह्वलाः कामपीडिताः।
यौवनाक्रान्तदेहास्तान् श्रयन्ते वामलोचनाः॥ १७३

सहस्रं जपते यस्तु खेचरी जायते नरः।
सहस्रदशकं देवि यः पठेद्भक्तिमान्नरः॥ १७४

सा तस्य जगतां धात्री प्रत्यक्षा भवति ध्रुवम्।
लक्षं पूर्णं यदा देवि स्तोत्रराजं जपेत्सुधीः॥ १७५

भवपाशविनिर्मुक्तो मम तुल्यो न संशयः।
सर्वतीर्थेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम्॥ १७६

सर्वधर्मेषु यज्ञेषु सर्वदानेषु यत्फलम्।
सर्ववेदेषु प्रोक्तेषु यत्फलं परिकीर्तितम्॥ १७७

तत्पुण्यं कोटिगुणितं सकृज्जस्वा लभेन्नरः।
देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम्।
स यास्यति न सन्देहस्स्तवराजस्य कीर्तनात्॥ १७८

—श्रीरुद्रयामळे

—*—

॥ श्रीः ॥

# अन्नपूर्णासहस्रनामावलिः

ओं अन्नपूर्णायै नमः। अन्नदात्र्यै। अन्नराशिकृतालयायै। अन्नदायै। अन्नरूपायै। अन्नदानरतोत्सवायै। अनन्तायै। अनन्ताक्ष्यै। अनन्तगुणशालिन्यै। अच्युतायै। अच्युतप्राणायै। अच्युतानन्दकारिण्यै। अव्यक्तायै। अनन्तमहिमायै। अनन्तस्य कुलेश्वर्यै। अब्धिस्थायै। अब्धिशयनायै। अब्धिजायै। अब्धिनन्दिन्यै। अब्जस्थायै नमः। २०

ओं अब्जनिलयायै नमः । अब्जजायै । अब्जभूषणायै । अब्जाभायै । अब्जहस्तायै । अब्जपत्त्रशुभेक्षणायै । अब्जाननायै । अनन्तात्मने । अग्निस्थायै । अग्निरूपिण्यै । अग्निजायायै । अग्निमुख्यै । अग्निकुण्डलकृतालयायै । अकारायै । अग्निमात्रे । अजयायै । अदितिनन्दिन्यै । आद्यायै । आदित्यसङ्काशायै । आत्मज्ञायै नमः । ४०

ओं आत्मगोचरायै नमः । आत्मसुवे । आत्मदयितायै । आधारायै । आत्मरूपिण्यै । आशायै । आकाशपद्मस्थायै । अवकाशस्वरूपिण्यै । आशापूर्यै । अगाधायै । अणिमादिसुसेवितायै । अम्बिकायै । अबलायै । अम्बायै । अनाद्यायै । अयोनिजायै । अनीशायै । ईशिकायै । ईशायै । ईशान्यै नमः । ६०

ओं ईश्वरप्रियायै नमः । ईश्वर्यै । ईश्वरप्राणायै । ईश्वरानन्ददायिन्यै । इन्द्राण्यै । इन्द्रद्रयितायै । इन्द्रसुवे । इन्द्रपालिन्यै । इन्दिरायै । इन्द्रभगिन्यै । इन्द्रियायै । इन्दुभूषणायै । इन्दुमात्रे । इन्दुमुख्यै । इन्द्रियाणां वशंकर्यै । उमायै । उमापतेः प्राणेभ्यः । ओड्याणपीठवासिन्यै । उत्तरज्ञायै । उत्तराख्यायै नमः । ८०

ओं उकारायै नमः । उत्तरात्मिकायै । ऋमात्रे । ऋभवायै । ऋस्थायै । ॠऌकारस्वरूपिण्यै । ऋकारायै । ऌकारायै । ऌतकप्रीतिदायिन्यै । एकायै । एकवीरायै । एकारैकाररूपिण्यै । ओकार्यै । ओघरूपायै । ओघत्रयसुपूजितायै । ओघस्थायै । ओघसंभूतायै । ओघधात्र्यै । ओघसुवे । षोडशस्वरसंभूतायै नमः । १००

ओं षोडशस्वररूपिण्यै नमः । वर्णात्मने । वर्णनिलयायै । शूलिन्यै । वर्णमालिन्यै । काळरात्र्यै । महारात्र्यै । मोहरात्र्यै । सुलोचनायै । काळ्यै । कपालिन्यै । कृत्यायै । कालिकायै । सिंहगामिन्यै । कात्यायन्यै । कलाधारायै । कालदैत्यनिकृन्तन्यै । कामिन्यै । कामवन्द्यायै । कमनीयायै नमः । १२०

ओं विनोदिन्यै नमः । कामसुवे । कामवनितायै । कामधुहे । कमलावत्यै । कामदात्र्यै । कराळ्यै । कामकेलिविनोदिन्यै । कामनायै । कामदायै । काम्यायै । कमलायै । कमलार्चितायै । काश्मीरलिप्तवक्षोजायै । काश्मीरद्रवचर्चितायै । कनकायै । कनकप्राणायै । कनकाचलवासिन्यै । कनकाभायै । काननस्थायै नमः । १४०

ओं कामाख्यायै नमः । कनकप्रदायै । कामपीठस्थितायै । नित्यायै । कामधामनिवासिन्यै । कम्बुकण्ठ्यै । कराळाक्ष्यै । किशोर्यै । कलापिन्यै । कलायै । काष्ठायै । निमेषायै । कालस्थायै । कालरूपिण्यै । कालज्ञायै । कालमात्रे । कालधात्र्यै ।कलावत्यै । कालदायै । कालहायै नमः । १६०

ओं कुल्यायै नमः । कुरुकुल्लायै । कुलाङ्गनायै । कीर्तिदायै । कीर्तिहायै । कीर्त्यै । कीर्तिस्थायै । कीर्तिवर्धन्यै । कीर्तिज्ञायै । कीर्तितपदायै । कृत्तिकायै । केशवप्रियायै । केशिहायै । केळिकायै । केशवानन्दकारिण्यै । कुमुदाभायै । कुमार्यै । कर्मदायै । कमलेक्षणायै । कौमुद्यै नमः । १८०

ओं कुमुदानन्दायै नमः । कौळिन्यै । कुमुद्वत्यै । कोदण्ड-धारिण्यै । क्रोधायै । कूटस्थायै । कोटराश्रयायै । कालकण्ठ्यै । करालाङ्ग्यै । कालाङ्ग्यै । कालभूषणायै । कङ्काळ्यै । कामदाम्ने ।

कङ्काळकृतभूषणायै । कपालकर्त्रिककरायै । करवीरस्वरूपिण्यै । कपर्दिन्यै । कोमलाङ्ग्यै । कृपासिन्धवे । कृपामय्यै नमः । २००

ओं कुशावत्यै नमः । कुण्डसंस्थायै । कौबेर्यै । कौशिक्यै । काश्यप्यै । कद्रुतनयायै । कलिकल्मषनाशिन्यै । कञ्जस्थायै । कञ्जवदनायै । कञ्जकिञ्जल्कचर्चितायै । कञ्जाभायै । कञ्जमध्यस्थायै । कञ्जनेत्रायै । कचोद्भवायै । कामरूपायै । ह्रींकार्यै । कश्यपान्वयवर्धिन्यै । खवायै । खञ्जनद्वन्द्वलोचनायै । खर्ववाहिन्यै नमः । २२०

ओं खड्गिन्यै नमः । खड्गहस्तायै । खेचर्यै । खड्गरूपिण्यै । खगस्थायै। खगरूपायै । खगगायै । खगसंभवायै । खगधात्र्यै । खगानन्दायै । खगयोनिस्वरूपिण्यै । खगेश्यै । खेटककरायै । खगानन्दविवर्धिन्यै । खगमान्यायै । खगाधारायै । खगगर्वविमोचिन्यै । गङ्गायै । गोदावर्यै । गीत्यै नमः । २४०

ओं गायत्र्यै नमः । गगनालयायै । गीर्वाणसुन्दर्यै । गवे । गाधायै । गीर्वाणपूजितायै । गीर्वाणचर्चितपदायै । गान्धार्यै । गोमत्यै । गर्विण्यै । गर्वहन्त्र्यै । गर्भस्थायै । गर्भधारिण्यै । गर्भदायै । गर्भहन्त्र्यै । गन्धर्वकुलपूजितायै । गयायै । गौर्यै । गिरिजायै । गिरिस्थायै नमः । २६०

ओं गिरिसंभवायै नमः। गिरिगह्वरमध्यस्थायै । कुञ्जरेश्वर-गामिन्यै । किरीटिन्यै । गदिन्यै । गुञ्जाहारविभूषणायै । गणपायै । गणकायै । गण्यायै । गणकानन्दकारिण्यै । गणपूज्यायै । गीर्वाण्यै । गणपानन्दवर्धिन्यै । गुरुमात्रे । गुरुरतायै । गुरुभक्तिपरायणायै । गोत्रायै । गवे । कृष्णभगिन्यै । कृष्णसुवे नमः २८०

ओं कृष्णनन्दिन्यै नमः। गोवर्धन्यै। गोत्रधरायै। गोवर्धन-कृतालयायै। गोवर्धनधरायै। गोदायै। गौराङ्ग्यै। गौतमात्मजायै। घर्घरायै। घोररूपायै। घोरायै। घर्घरनादिन्यै। श्यामायै। घनरवायै। अघोरायै। घनायै। घोरार्तिनाशिन्यै। घनस्थायै। घनानन्दायै। दारिद्र्यघननाशिन्यै नमः। ३००

ओं चित्तज्ञायै नमः। चिन्तितपदायै। चित्तस्थायै। चित्त-रूपिण्यै। चक्रिण्यै। चारुचम्पाभायै। चारुचम्पकमालिन्यै। चन्द्रिकायै। चन्द्रकान्त्यै। चापिन्यै। चन्द्रशेखरायै। चण्डिकायै। चण्डदैत्यघ्न्यै। चन्द्रशेखरवल्लभायै। चाण्डालिन्यै। चामुण्डायै। चण्डमुण्डवधोद्यतायै। चैतन्यभैरव्यै। चण्डायै। चैतन्यघनगेहिन्यै नमः। ३२०

ओं चित्स्वरूपायै नमः। चिदाधारायै। चण्डवेगायै। चिदालयायै। चन्द्रमण्डलमध्यस्थायै। चन्द्रकोटिसुशीतलायै। चपलायै। चन्द्रभगिन्यै। चन्द्रकोटिनिभाननायै। चिन्तामणि-गुणाधारायै। चिन्तामणिविभूषणायै। भक्तचिन्तामणिलतायै। चिन्तामणिकृतालयायै। चारुचन्दनलिप्तांग्यै। चतुरायै। चतुर्मुख्यै। चैतन्यदायै। चिदानन्दायै। चारुचामरवीजितायै। छत्रदायै नमः। ३४०

ओं छत्रधार्यै नमः। छलच्छद्मविनाशिन्यै। छत्रहायै। छत्ररूपायै। छत्रच्छायाकृतालयायै। जगज्जीवायै। जगद्धात्र्यै। जगदानन्दकारिण्यै। यज्ञप्रियायै। यज्ञरतायै। जपयज्ञपरायणायै। जनन्यै। जानक्यै। यज्वने। यज्ञहायै। यज्ञनन्दिन्यै। यज्ञदायै। यज्ञफलदायै। यज्ञस्थानकृतालयायै। यज्ञभोक्त्र्यै नमः। ३६०

ओं यज्ञरूपायै नमः । यज्ञविघ्नविनाशिन्यै । जपाकुसुम-संकाशायै । जपाकुसुमशोभितायै । जालन्धर्यै । जयायै । जैत्र्यै । जीमूतचयभाषिण्यै । जयदायै । जयरूपायै । जयस्थायै । जयकारिण्यै । जगदीशप्रियायै । जीवायै । जलस्थायै । जल-जेक्षणायै । जलरूपायै । जह्नुकन्यायै । यमुनायै । जलजोदर्यै नमः । ३८०

ओं जलजास्यायै नमः । जाह्नव्यै । जलजाभायै । जलोदर्यै । यदुवंशोद्भवायै । जीवायै । यादवानन्दकारिण्यै । यशोदायै । यशसां राशये । यशोदानन्दकारिण्यै । ज्वलिन्यै । ज्वालिन्यै । ज्वालायै । ज्वलत्पावकसन्निभायै । ज्वालामुख्यै । जगन्मात्रे । यमलार्जुन-भञ्जन्यै । जन्मदायै । जन्महायै । जन्यायै नमः । ४००

ओं जन्मभुवे नमः । जनकात्मजायै । जनानन्दायै । जाम्बवत्यै । जम्बूद्वीपकृतालयायै । जाम्बूनदसमानाभायै । जाम्बूनदविभूषणायै । जम्भहायै । जातिदायै । जात्यै । ज्ञानदायै । ज्ञानगोचरायै । ज्ञानरूपायै । अज्ञानहायै । ज्ञानविज्ञानशालिन्यै । जिनजैत्र्यै । जिनाधारायै । जिनमात्रे । जिनेश्वर्यै । जितेन्द्रियायै नमः । ४२०

ओं जनाधारायै नमः । अजिनाम्बरधारिण्यै । शम्भुकोटि-दुराधर्षायै । विष्णुकोटिविमर्दिन्यै । समुद्रकोटिगम्भीरायै । वायुकोटिमहाबलायै । सूर्यकोटिप्रतीकाशायै । यमकोटिदुरापहायै । कामधुक्कोटिफलदायै । शक्रकोटिसुराज्यदायै । कन्दर्पकोटि-लावण्यायै । पद्मकोटिनिभाननायै । पृथ्वीकोटिजनाधारायै । अग्निकोटिभयङ्कर्यै । अणिम्ने । महिम्ने । प्राप्त्यै । गरिम्ने । लघिम्ने । प्राकाम्यदायै नमः । ४४०

ओं वशकर्यै नमः । ईशिकायै । सिद्धिदायै । महिमादि-गुणोपेतायै । अणिमाद्यष्टसिद्धिदायै । जवनघ्न्यै । जनाधीनायै । जामिन्यै । जरापहायै । तारिण्यै । तारिकायै । तारायै । तोतलायै । तुलसीप्रियायै । तन्त्रिण्यै । तन्त्ररूपायै । तन्त्रज्ञायै । तन्त्रधारिण्यै । तारहारायै । तुलजायै नमः ४६०

ओं डाकिनीतन्त्रगोचरायै नमः । त्रिपुरायै । त्रिदशायै । त्रिस्थायै । त्रिपुरासुरघातिन्यै । त्रिगुणायै । त्रिकोणस्थायै । त्रिमात्रायै । त्रितनुस्थितायै । त्रैविद्यायै । त्रय्यै । त्रिघ्न्यै । तुरीयायै । त्रिपुरेश्वर्यै । त्रिकोदरस्थायै । त्रिविधायै । त्रैलोक्यायै । त्रिपुरात्मिकायै । त्रिधाढ्यै । त्रिदशाराध्यायै नमः ४८०

ओं त्र्यक्षायै नमः । त्रिपुरवासिन्यै । त्रिवर्ण्यै । त्रिपद्यै । तारायै । त्रिमूर्तिजनन्यै । त्वरायै । त्रिदिवायै । त्रिदिवेशायै । आदये । देव्यै । त्रैलोक्यधारिण्यै । त्रिमूर्त्यै । त्रिजनन्यै । त्रिभुवे । त्रिपुरसुन्दर्यै । तपस्विन्यै । तपोनिष्ठायै । तरुण्यै ।ताररूपिण्यै नमः । ५००

ओं तामस्यै नमः । तापस्यै । तापघ्न्यै । तमोपहायै । तरुणार्कप्रतीकाशायै । तप्तकाञ्चनसन्निभायै । उन्मादिन्यै । तन्तुरूपायै । त्रैलोक्यव्यापिन्यै । ईश्वर्यै । तार्किक्यै । तर्किक्यै । विद्यायै । तापत्रयविनाशिन्यै । त्रिपुष्करायै । त्रिकालज्ञायै । त्रिसन्ध्यायै । त्रिलोचनायै । त्रिवर्गायै । त्रिवर्गस्थायै नमः । ५२०

ओं तपसस्सिद्धिदायिन्यै नमः । अधोक्षजायै । अयोध्यायै । अपर्णायै । अवन्तिकायै । कारिकायै । तीर्थरूपायै । तीरायै । तीर्थकर्यै । दारिद्र्यदुःखदळिन्यै । अदीनायै । दीनवत्सलायै । दीनानाथप्रियायै । दीर्घायै । दयापूर्णायै । दयात्मिवकायै । देवदानवसंपूज्यायै । देवानां प्रियकारिण्यै । दक्षपुत्र्यै । दक्षमात्रे नमः । ५४०

ओं दक्षयज्ञविनाशिन्यै नमः । देवसुवे । दक्षिणायै । दक्षायै । दुर्गायै । दुर्गतिनाशिन्यै । देवकीगर्भसंभूतायै । दुर्गदैत्यविनाशिन्यै । अट्टायै । अट्टहासिन्यै । दोलायै । दोलाकर्माभिनन्दिन्यै । देवक्यै । देविकायै । देव्यै । दुरितघ्न्यै । तटिते । गण्डक्यै । गल्लक्यै । क्षिप्रायै नमः । ५६०

ओं द्वारायै नमः । द्वारवत्यै । आनन्दोदधिमध्यस्थायै । कटिसूत्रैरलङ्कृतायै । घोराग्निदाहदमन्यै । दुःखदुस्स्वप्ननाशिन्यै । श्रीमय्यै । श्रीमत्यै । श्रेष्ठायै । श्रीकर्यै । श्रीविभाविन्यै । श्रीदायै । श्रीशायै । श्रीनिवासायै । श्रीमत्यै । श्रियै । मत्यै । गतये । धनदायै । दामिन्यै नमः । ५८०

ओं दान्तायै नमः । धर्मदायै । धनशालिन्यै । दाडिमीपुष्पसंकाशायै । धनागारायै । धनञ्जयायै । धूम्राभायै । धूम्रदैत्यघ्न्यै । धवलायै । धवलप्रियायै । धूम्रवक्त्रायै । धूम्रनेत्रायै । धूम्रकेश्यै । धूसरायै । धरण्यै । धारिण्यै । धैर्यायै । धरायै । धात्र्यै । धैर्यदायै नमः । ६००

ओं दमिन्यै नमः । धार्मिण्यै । धुरे । दयायै । दोग्ध्र्यै । दुरासदायै । नारायण्यै । नारसिंह्यै । नृसिंहहृदयालयायै । नागिन्यै । नागकन्यायै । नागसुवे । नागनायिकायै । नानारत्नविचित्राङ्ग्यै । नानाभरणमण्डितायै । दुर्गस्थायै । दुर्गरूपायै । दुःखदुष्कृत-नाशिन्यै । ह्रींकार्यै । श्रींकार्यै नमः । ६२०

ओं हुङ्कार्यै नमः । क्लेशनाशिन्यै । नगात्मजायै । नागर्यै । नवीनायै । नूतनप्रियायै । नीरजास्यायै । नीरदाभायै । नवलावण्यसुन्दर्यै । नीतिज्ञायै । नीतिदायै । नीत्यै । निम्ननाभ्यै । नगेश्वर्यै । निष्ठायै । नित्यायै । निरातङ्कायै । नागयज्ञोपवीतिन्यै । निधिदायै । निधिरूपायै नमः । ६४०

ओं निर्गुणायै नमः । नरवाहिन्यै । नरमांसरतायै । नार्यै । नरमुण्डविभूषणायै । निराधारायै । निर्विकारायै । नुत्यै । निर्वाणसुन्दर्यै । नरासृक्पानमत्तायै । निर्वैरायै । नागगामिन्यै । परमायै । प्रमितायै । प्राज्ञायै । पार्वत्यै । पर्वतात्मजायै । पर्वप्रियायै । पर्वरतायै । पर्वपावनपाविन्यै नमः । ६६०

ओं परात्परतरायै नमः । पूर्वायै । पश्चिमायै । पापनाशिन्यै । पशूनांपतिपत्न्यै । पतिभक्तिपरायणायै । परेश्यै । पारगायै । परायै । परंज्योतिःस्वरूपिण्यै । निष्ठुरायै । क्रूरहृदयायै । परायै सिद्ध्यै । परायै गत्यै । पशुघ्न्यै । पशुरूपायै । पशुहायै । पशुवाहिन्यै । पित्रे । मात्रे नमः । ६८०

ओं यन्त्र्यै नमः । पशुपाशविनाशिन्यै । पद्मिन्यै । पद्महस्तायै । पद्मकिञ्जल्कवासिन्यै । पद्मवक्त्रायै । पद्माक्ष्यै । पद्मस्थायै । पद्मसंभवायै । पद्मास्यायै । पञ्चम्यै । पूर्णायै । पूर्णपीठनिवासिन्यै । पद्मरागप्रतीकाशायै । पांचाल्यै । पञ्चमप्रियायै । परब्रह्मस्वरूपायै । परब्रह्मनिवासिन्यै । परमानन्दमुदितायै । परचक्रनिवासिन्यै नमः । ७००

ओं परेश्यै नमः । परमायै । पृथ्व्यै । पीनतुङ्गपयोधरायै । परापरायै । पराविद्यायै । परमानन्ददायिन्यै । पूज्यायै । प्रज्ञावत्यै । पुष्ट्यै । पिनाकिपरिकीर्तितायै । प्राणघ्न्यै । प्राणरूपायै । प्राणदायै । प्रियंवदायै । फणिभूषायै । फणावेश्यै । फकारकण्ठमालिन्यै । फणिराड्वृतसर्वाङ्ग्यै । फलभागविनाशिन्यै नमः । ७२०

ओं बलभद्रस्य भगिन्यै । बालायै । बालप्रदायिन्यै । फल्गुरूपायै । प्रलम्बघ्न्यै । फल्गूत्सवविनोदिन्यै । भवान्यै । भवपत्न्यै । भवभीतिहरायै । भवायै । भवेश्वर्यै । भवाराध्यायै ।

भवेश्यै । भवनायिकायै । भवमात्रे । भवागम्यायै । भवकण्टकनाशिन्यै । भवप्रियायै । भवानन्दायै । भव्यायै नमः । ७४०

ओं भवमोचिन्यै नमः । भावनीयायै । भगवत्यै । भवभारविनाशिन्यै । भूतधात्र्यै । भूतेश्यै । भूतस्थायै । भूतरूपिण्यै । भूतमात्रे । भूतघ्न्यै । भूतपञ्चकवासिन्यै । भोगोपचारकुशलायै । भिस्सादात्र्यै । भूचर्यै । भीतिघ्न्यै । भक्तिगम्यायै । भक्तानामार्तिनाशिन्यै । भक्तानुकंपिन्यै । भीमायै । भगिन्यै नमः । ७६०

ओं भगनायिकायै नमः । भगविद्यायै । भगक्लिन्नायै । भगयोन्यै । भगप्रदायै । भगेश्यै । भगरूपायै । भगगुह्यायै । भगापहायै । भगोदर्यै । भगानन्दायै । भगाद्यायै । भगमालिन्यै । भोगप्रदायै । भोगवाससे । भोगमूलायै । भोगिन्यै । भेरुण्डायै । भेदिन्यै । भीमायै नमः । ७८०

ओं भद्रकाळ्यै नमः । भिदोज्झितायै । भैरव्यै । भुवनेशान्यै । भुवनायै । भुवनेश्वर्यै । भीमाक्ष्यै । भारत्यै । भैरवाष्टकसेवितायै । भास्वरायै । भास्वत्यै । भीत्यै । भास्वदुत्तानशायिन्यै । भागीरथ्यै । भोगवत्यै । भवघ्न्यै । भुवनात्मिकायै । भूतिदायै । भूतिरूपायै । भूतस्थायै नमः । ८००

ओं भूतवर्धिन्यै नमः । माहेश्वर्यै । महामायायै । महातेजसे । महासुर्यै । महाजिह्वायै । महालोलायै । महादंष्ट्रायै । महाभुजायै । महामोहान्धकारघ्न्यै । महामोक्षप्रदायिन्यै । महादारिद्र्यशमन्यै । महाशत्रुविमर्दिन्यै । महाशक्त्यै । महाज्योतिषे । महासुरविमर्दिन्यै । महाकायायै । महावीर्यायै । महापातकनाशिन्यै । महारवायै नमः । ८२०

ओं मन्त्रमय्यै नमः । मणिपूरनिवासिन्यै । मानस्यै । मानदायै । मान्यायै । मनश्चक्षुरगोचरायै । माहेन्द्र्यै । मधुरायै । मायायै । महिषासुरमर्दिन्यै । । महाकुण्डलिन्यै । शक्त्यै । महाविभववर्धिन्यै । मानस्यै । माधव्यै । मेधायै । मतिदायै । मतिधारिण्यै । मेनकागर्भसंभूतायै । मेनकाभगिन्यै नमः । ८४०

ओं मतये नमः । महोदर्यै । मुक्तकेश्यै । मुक्तिकाम्यार्थ-सिद्धिदायै । माहेश्यै । महिषारूढायै । मधुदैत्यविमर्दिन्यै । महाव्रतायै । महामूर्धायै । महाभयविनाशिन्यै । मातङ्ग्यै । मत्तमातङ्ग्यै । मातङ्गकुलमण्डितायै । महाघोरायै । माननीयायै । मत्तमातङ्गगामिन्यै । मुक्ताहारलतोपेतायै । मदघूर्णितलोचनायै । महापराधराशिघ्न्यै । महाचोरभयापहायै । महाचिन्त्यस्वरूपायै नमः । ८६०

ओं मणिमन्त्रमहौषध्यै नमः । मणिमण्डपमध्यस्थायै । मणिमालाविराजितायै । मन्त्रात्मिकायै । मन्त्रगम्यायै । मन्त्रमात्रे । सुमन्त्रिण्यै । मेरुमन्दिरमध्यस्थायै । मकराकृतिकुण्डलायै । मन्थरायै । महासूक्ष्मायै । महादूत्यै । महेश्वर्यै । मालिन्यै । मानव्यै । माध्व्यै । मदरूपायै । मदोत्कटायै । मदिरायै । मधुरायै नमः । ८८०

ओं मोदिन्यै नमः । महोद्धतायै । मङ्गळाङ्ग्यै । मधुमय्यै । मधुपानपरायणायै । मनोरमायै । रमामात्रे । राजराजेश्वर्यै । रमायै । राजमान्यायै । राजपूज्यायै । रक्तोत्पलविभूषणायै । राजीवलोचनायै । रामायै । राधिकायै । रामवल्लभायै । शाकिन्यै । डाकिन्यै । लावण्याम्बुधिवीचिकायै । रुद्राण्यै नमः । ९००

ओं रुद्ररूपायै नमः । रौद्रायै । रुद्रार्तिनाशिन्यै । रक्तप्रियायै । रक्तवस्त्रायै । रक्ताक्ष्यै । रक्तलोचनायै । रक्तकेश्यै । रक्तदंष्ट्रायै ।

रक्तचन्दनचर्चितायै। रक्ताङ्ग्यै। रक्तभूषायै। रक्तबीजनिपातिन्यै। रागादिदोषरहितायै । रतिजायै । रतिदायिन्यै । विश्वेश्वर्यै । विशालाक्ष्यै । विन्ध्यपीठनिवासिन्यै। विश्वभुवे नमः। ९२०

ओं वीरविद्यायै नमः । वीरसुवे । वीरनन्दिन्यै । वीरेश्वर्यै । विशालाक्ष्यै । विष्णुमायाविमोहिन्यै । विद्यावत्यै । विष्णुरूपायै । विशालनयनोज्ज्वलायै । विष्णुमात्रे । विश्वात्मने । विष्णुजायास्वरूपिण्यै । वाराह्यै । वरदायै । वन्द्यायै । विख्यातायै । विलसत्कचायै। ब्रह्मेश्यै। ब्रह्मदायै। ब्राह्म्यै नमः। ९४०

ओं ब्रह्माण्यै । ब्रह्मरूपिण्यै । द्वारकायै । विश्ववन्द्यायै । विश्वपाशविमोचिन्यै । विश्वासकारिण्यै । विश्वायै । विश्वशक्त्यै । विचक्षणायै। बाणचापधरायै। वीरायै। बिन्दुस्थायै। बिन्दुमालिन्यै । षट्चक्रभेदिन्यै। षोढायै। षोडशारनिवासिन्यै। शितिकण्ठप्रियायै। शान्तायै। शाकिन्यै। वातरूपिण्यै नमः। ९६०

ओं शाश्वत्यै नमः । शम्भुवनितायै । शाम्भव्यै । शिवरूपिण्यै । शिवमात्रे। शिवदायै। शिवायै। शिवहृदासनायै। शुक्लाम्बरायै । शीतलायै । शीलाशीलप्रदायिन्यै । शिशुप्रियायै । वैद्यविद्यायै । शालग्रामशिलायै । शुचये । हरिप्रियायै । हरमूर्त्यै । हरिनेत्रकृतालयायै। हरिवक्त्रोद्भवायै। हालायै नमः। ९८०

ओं हरिवक्षस्स्थलस्थितायै । क्षेमङ्कर्यै । क्षित्यै । क्षेत्रायै । क्षुधितस्य प्रपूरण्यै । वैश्यायै । क्षत्रियायै । शूद्रै । क्षत्रियाणाङ्कुलेश्वर्यै । हरपत्न्यै। हराराध्यायै। हरसुवे। हररूपिण्यै । सर्वानन्दमय्यै। सिद्ध्यै। सर्वरक्षास्वरूपिण्यै। सर्वदुष्टप्रशमन्यै। सर्वेप्सितफलप्रदायै। सर्वसिद्धेश्वराराध्यायै। सर्वमङ्गलमङ्गलायै। १०००

# अन्नपूर्णाष्टोत्तरशतनामस्तोत्रम् ।

अस्य श्री अन्नपूर्णाष्टोत्तरशतनामस्तोत्र महामन्त्रस्य, ब्रह्मा ऋषिः, अनुष्टुप्छन्दः, श्री अन्नपूर्णेश्वरी देवता, स्वधा बीजं, स्वाहा शक्तिः, ओं कीलकं, मम सर्वाभीष्टप्रसादसिद्ध्यर्थे पाठे विनियोगः ।

ओं अन्नपूर्णा शिवा देवी भीमा पुष्टिस्सरस्वती ।
सर्वज्ञा पार्वती दुर्गा शर्वाणी शिवल्लभा ।। १
वेदवेद्या महाविद्या विद्यादात्री विशारदा ।
कुमारी त्रिपुरा बाला लक्ष्मीश्श्रीर्भयहारिणी ।। २
भवानी विष्णुजननी ब्रह्मादिजननी तथा ।
गणेशजननी शक्तिः कुमारजननी शुभा ।। ३
भोगप्रदा भगवती भक्ताभीष्टप्रदायिनी ।
भवरोगहरा भव्या शुभ्रा परममङ्गला ।। ४
भवानी चञ्चला गौरी चारुचन्द्रकलाधरा ।
विशालाक्षी विश्वमाता विश्ववन्द्या विलासिनी ।। ५
आर्या कल्याणनिलया रुद्राणी कमलासना ।
शुभप्रदा शुभावर्ता वृत्तपीनपयोधरा ।। ६
अम्बा संहारमथनी मृडानी सर्वमङ्गला ।
विष्णुसंसेविता सिद्धा ब्रह्माणी सुरसेविता ।। ७
परमानन्ददा शांतिः परमानन्दरूपिणी ।
परमानन्दजननी परानन्दप्रदायिनी ।। ८
परोपकारनिरता परमा भक्तवत्सला ।
पूर्णचन्द्राभवदना पूर्णचन्द्रनिभांशुका ।। ९
शुभलक्षणसंपन्ना शुभानन्दगुणार्णवा ।
शुभसौभाग्यनिलया शुभदा च रतिप्रिया ।। १०

चण्डिका चण्डमथनी चण्डदर्पनिवारिणी।
मार्ताण्डनयना साध्वी चन्द्राग्निनयना सती।। ११
पुण्डरीकहरा पूर्णा पुण्यदा पुण्यरूपिणी।
मायातीता श्रेष्ठमाया श्रेष्ठधर्मात्मवन्दिता।। १२
असृष्टिस्सङ्गरहिता सृष्टिहेतुः कपर्दिनी।
वृषारूढा शूलहस्ता स्थितिसंहारकारिणी।। १३
मन्दस्मिता स्कन्दमाता शुद्धचित्ता मुनिस्तुता।
महाभगवती दक्षा दक्षाध्वरविनाशिनी।। १४
सर्वार्थदात्री सावित्री सदाशिवकुटुम्बिनी।
नित्यसुन्दरसर्वाङ्गी सच्चिदानन्दलक्षणा।। १५
नाम्नामष्टोत्तरशतम्बायाः पुण्यकारणम्
सर्वसौभाग्यसिद्ध्यर्थं जपनीयं प्रयत्नतः।
एतानि दिव्यनामानि श्रुत्वा ध्यात्वा निरन्तरम्
स्तुत्वा देवीञ्च सततं सर्वान्कामानवाप्नुयात्।। १७

ब्रह्मोत्तरखण्डे, आगमप्रख्यातिशिवरहस्ये

—*—

## अन्नपूर्णाष्टोत्तरशतनामावलिः।

ओं अन्नपूर्णायै नमः। शिवायै। देव्यै। भीमायै। पुष्ट्यै। सरस्वत्यै। सर्वज्ञायै। पार्वत्यै। दुर्गायै। शर्वाण्यै। शिववल्लभायै। वेदवेद्यायै। महाविद्यायै। विद्यादात्र्यै। विशारदायै। कुमार्यै। त्रिपुरायै। बालायै। लक्ष्म्यै। श्रियै नमः। २०

ओं भयहारिण्यै नमः। भवान्यै। विष्णुजनन्यै। ब्रह्मादिजनन्यै। गणेशजनन्यै। शक्त्यै। कुमारजनन्यै। शुभायै। भोगप्रदायै। भगवत्यै। भक्ताभीष्टप्रदायिन्यै। भवरोगहरायै।

भव्यायै । शुभ्रायै । परममङ्गळायै । भवान्यै । चञ्चलायै । गौर्यै । चारुचन्द्रकलाधरायै । विशालाक्ष्यै नमः । ४०

ओं विश्वमात्रे नमः । विश्ववंद्यायै । विलासिन्यै । आर्यायै । कल्याणनिलयायै । रुद्राण्यै । कमलासनायै । शुभप्रदायै । शुभावतायै । वृत्तपीनपयोधरायै । अंबायै । संहारमथन्यै । मृडान्यै । सर्वमङ्गळायै । विष्णुसंसेवितायै । सिद्धायै । ब्रह्माण्यै । सुरसेवितायै । परमानन्ददायै । शान्त्यै नमः । ६०

ओं परमानन्दरूपिण्यै नमः । परमानन्दजनन्यै । परायै । आनन्दप्रदायिन्यै । परोपकारनिरतायै । परमायै । भक्तवत्सलायै । पूर्णचन्द्राभवदनायै । पूर्णचन्द्रनिभांशुकायै । शुभलक्षणसंपन्नायै । शुभानन्दगुणार्णवायै । शुभसौभाग्यनिलयायै । शुभदायै । रतिप्रियायै । चण्डिकायै । चण्डमथन्यै । चण्डदर्पनिवारिण्यै । मार्ताण्डनयनायै । साध्व्यै । चन्द्राग्निनयनायै नमः । ८०

ओं सत्यै नमः । पुण्डरीकहरायै । पूर्णायै । पुण्यदायै । पुण्यरूपिण्यै । मायातीतायै । श्रेष्ठमायायै । श्रेष्ठधर्मायै । आत्मवन्दितायै । असृष्टयै । संगरहितायै । सृष्टिहेतवे । कपर्दिन्यै । वृषारूढायै । शूलहस्तायै । स्थितिसंहारकारिण्यै । मन्दस्मितायै । स्कन्दमात्रे । शुद्धचित्तायै । मुनिस्तुतायै नमः । १००

ओं महाभगवत्यै । दक्षायै । दक्षाध्वरविनाशिन्यै । सर्वार्थदात्र्यै । सावित्र्यै । सदाशिवकुटुम्बिन्यै । नित्यसुन्दरसर्वाङ्ग्यै । सच्चिदानन्दलक्षणायै नमः । १०८

—*—

# कुलकुण्डलिनीसहस्रनामस्तोत्रम्-सकवचम्

(नामपारायणार्थकमिदं स्तोत्रम् पुष्पाद्यर्चनविधौ नामावलीत्वेन नोपयुज्यते इति वृद्धाः ।)

श्री आनन्दभैरवी उवाच—

अथ कान्त प्रवक्ष्यामि कुण्डलीचेतनादिकम् ।
सहस्रनाम सकलं कुण्डलिन्याः प्रियं सुखम् ।। १

अष्टोत्तरं महापुण्यं साक्षात्सिद्धिप्रदायकम् ।
तव प्रेमवशेनैव कथयामि शृणुष्व तत् ।। २

विना यजनयोगेन विना ध्यानेन यत्फलम् ।
तत्फलं लभते सद्यो विद्यायाः सुकृपा भवेत् ।। ३
या विद्या भुवनेशानी त्रैलोक्यपरिपूजिता ।
सा देवी कुण्डलीमाता त्रैलोक्यं पाति सर्वदा ।। ४

तस्या नाम सहस्राणि अष्टोत्तरशतानि च ।
श्रवणात्पठनान्मन्त्री महाभक्तो भवेदिह ।
ऐहिके स भवेन्नाथ जीवन्मुक्तो महाबली ।। ५

ओं अस्य श्रीमन्महाकुण्डलीसहस्रनामस्तोत्रस्य ब्रह्मा ऋषिः । जगतीछन्दः, भगवती श्रीमन्महाकुण्डलिनी देवता । सर्वयोगसमृद्धिसिद्ध्यर्थे जपे विनियोगः ।

कुलेश्वरी कुलानन्दा कुलीना कुलकुण्डली ।
श्रीमन्महाकुण्डली च कुलकन्या कुलप्रिया ।। १
कुलक्षेत्रस्थिता कौली कुलीनार्थप्रकाशिनी ।
कुलाख्या कुलमार्गस्था कुलशास्त्रार्थपातिनी ।। २

कुलज्ञा कुलयोग्या च कुलपुष्पप्रकाशिनी।
कुलीना च कुलाध्यक्षा कुलचन्दनलेपिता॥ ३

कुलरूपा कुलोद्भूता कुलकुण्डलवासिनी।
कुलाभिन्ना कुलोत्पन्ना कुलाचारविनोदिनी॥ ४

कुलवृक्षसमुत्पन्ना(द्भूता) कुलमाला कुलप्रभा।
कुलज्ञा कुलमध्यस्था कुलकङ्कणशोभिता॥ ५

कुलोत्तरा कौलपूज्या कुलालापा कुलप्रिया।
कुलभेदा कुलप्राणा कुलदेवी कुलस्तुतिः॥ ६

कौलिका कालिका काल्या कलिभिन्ना कुलाकुला।
कलिकल्मषहन्त्री च कलिदोषविनाशिनी॥ ७

कङ्काली केवलानन्दा कालज्ञा कालधारिणी।
कौतुकी कौमुदी केका काला काललयान्तरा(न्तिका)॥ ८

कोमलाङ्गी करालास्या कन्दपूज्या च कोमला।
कैशोरी काकपुच्छ(ञ्ज)स्था कम्बलासनवासिनी॥ ९

कैकेयीपूजिता कोला कोलपुत्री कपिध्वजा।
कमला कमलाक्षी च कम्बलाश्वतरप्रिया॥ १०

कलिकाभङ्गदोषस्था कालज्ञा कालकुण्डली।
काव्यदा कवितावाणी कालसन्दर्भभेदिनी॥ ११

कुमारी करुणाकारा कुरुसैन्यविनाशिनी।
कान्ता कुला(कुंभ)गता कामा कामिनी कामनाशिनी॥ १२

कामोद्भवा कामकन्या(कुल्या) केवला कालघातिनी।
कैलासशिखरारूढा कैलासपतिसेविता॥ १३

कैलासनाथनमिता केयूरहारमण्डिता।
कन्दर्पा कठिनानन्दा कुल(च)गा कीचकृत्य(टकाप)हा॥ १४
कमलास्या(स्था) कठोरा च(रेच्छा) कीटरूपा कटिस्थिता।
कन्देश्वरी कन्दरूपा कोकिला कन्दवासिनी॥ १५
कूटस्था कूटभक्षा च कालकूटविनाशिनी।
कामाख्या कमला काम्या कामराजतनूद्भवा॥ १६
कामरूपधरा कम्रा कमनीया कवि(लि)प्रिया।
कञ्जानना कञ्जहस्ता कञ्जपत्रायतेक्षणा॥ १७
काकिनी कामरूपस्था कामरूपप्रकाशिनी।
कोलाविध्वंसिनी कंका कलङ्कार्का कलङ्किनी॥ १८
महाकुलनदी कर्णा कर्ण(र्म)काण्डविमोहिनी।
काण्डस्था काण्डकरुणा कर्मावासा कुटुम्बिनी॥ १९
कमलाभाभवा कल्ला(मला) करुणा करुणामयी।
करु(र)णेशी करा कर्त्री कर्तृहस्ता कलोदया(रा)॥ २०
कारुण्यसागरोद्भूता कारुण्यसिन्धुवासिनी।
कार्तिकेशी कार्तिकस्था कार्तिकप्राणपालनी॥ २१
करुणानिधिपूज्या च करणीया क्रिया कला।
कल्पस्था कल्पनिलया कल्पातीता च कल्पिता॥ २२
कुलपा कुलविज्ञाना कर्षिणी कालरात्रिका।
कैवल्यदा को(के)करस्था कलमञ्जीररञ्जिनी॥ २३
कलयन्ती कालजिह्वा किङ्करासनकारिणी।
कुमुदा कुशलानन्दा कौशल्या काश(शि)वासिनी॥ २४

कंसोपहासहन्त्री च कैवल्यगुणसम्भवा ।
एकाकिनी कर्करूपा कुचला कर्कटस्थिता ॥ २५

कर्कोटका कोष्ठरूपा कूटवह्निकरस्थिता ।
कूजन्ती मधुरध्वानं काम(र)यन्ती सुलक्षणम् ॥ २६

केतकीकुसुमानन्दा केतकीपुष्पमण्डिता ।
कर्पूरपूररुचिरा कर्पूरभक्षणप्रिया ॥ २७

कपालपात्रहस्ता च कपालचन्द्रधारिणी ।
कामधेनुस्वरूपा च कामधेनुः क्रियान्विता ॥ २८

कश्यपी काश्यपा कुन्ती(कान्तिः) केशान्ता केशमोहिनी ।
कालकर्त्री कूपकर्त्री कुलपा कामचारिणी ॥ २९

कुङ्कुमा(कज्जला)भा कज्जलस्था कामिता कोपघातिनी ।
केलिस्था केलिकलिता कोपना कर्प(र्क)टस्थिता ॥ ३०

कलातीता कालविद्या कालात्मपुरुषोद्भवा ।
कष्टस्था कष्ट(ष्टि)कुष्ठस्था कुष्ठहा कष्टहा कुला(शा) । ३१

कलिकास्फुटकर्त्री च काम्बोजा कमला कुला ।
कुशलाख्या काककुष्ठा कर्मस्था कूर्म(कुंभ)मध्यगा ॥ ३२

कुण्डलाकारचक्रस्था कुण्डगोलोद्भवा कफा ।
कपित्थाग्रवसा काशा कपित्थरोधकारिणी ॥ ३३

काहोडी काहडा कङ्का कंकलाभाषकारिणी ।
कनका कनकाभा च कनकाद्रिनिवासिनी ॥ ३४

करङ्गा कर्पटी कर्पा कृपा कार्पासवासिनी ।
कार्पासयज्ञसूत्रस्था कूटब्रह्मार्थसाधिनी ।
कलञ्जभक्षिणी क्रूरा क्रोधपुञ्जा कपिस्थिता ॥ ३५

कपालीसाधनरता कनिष्ठा काशवासिनी।
कुञ्जरेशी कुञ्जरस्था कुञ्जरा कुञ्जरागतिः॥ ३६

कुञ्जस्था कुञ्जरमणी कुञ्जमन्दिरवासिनी।
कुपिता कोपशून्या च कोपा कोपविवर्जिता॥ ३७

कपिञ्जलस्था कापिञ्जा कपिञ्जलतरूद्भवा।
कुन्तीप्रेमकथाविष्टा कुन्तीमानसपूजिता॥ ३८

कुन्तला कुन्तहस्ता च कुलकुन्तलमोहिनी।
कान्ताङ्घ्रिसेविका कान्तकुशला कोशलावती॥ ३९

केशिहन्त्री ककुत्स्था च ककुस्थवनवासिनी।
कैलासशिखरानन्दा कैलासगिरिपूजिता॥ ४०

कीलालनिर्मलाकारा कीलालस्निग्धकारिणी।
कुतुका कुट्टिनी कूटा कूटनामोदकारिणी॥ ४१

क्रौंकारी क्रौंकरी काशी कुहुशब्दा किरातिनी।
कूजन्ती सर्ववचनं कारयन्ती कृताकृतम्॥ ४२

कृपानिधिस्वरूपा च कृपासागरवासिनी।
केवलानन्दनिरता केवलानन्दकारिणी॥ ४३

कृमिला कृमिदोषघ्नी कृपा कपटकुट्टिता।
कृशाङ्गी क्रमभङ्गस्था किंकरस्था कटिस्थिता॥ ४४

कामरूपा कान्तरता कामरूपस्य सिद्धिदा।
कामरूपपीठदेवी कामरूपाङ्गजा कुजा॥ ४५

कामरूपा कामविद्या कामरूपादिकालिका।
कामरूपकला काम्या कामरूपकुलेश्वरी॥ ४६

कामरूपजनानन्दा कामरूपकुशाग्रधीः ।
कामरूपकराकाशा कामरूपतरुस्थिता ॥ ४७

कामात्मजा कामकला कामरूपविहारिणी ।
कामशास्त्रार्थमध्यस्था कामरूपक्रियाकला ॥ ४८

कामरूपमहाकाली कामरूपयशोमयी ।
कामरूपपरानन्दा कामरूपादिकामिनी ॥ ४९

कूलमूला कामरूपपद्ममध्यनिवासिनी ।
कृताञ्जलिप्रिया कृत्या कृत्यादेवीस्थिता कटा ॥ ५०

कटका काटका कोटिकटिघण्टाविनोदिनी ।
कटिस्थूलतरा काष्ठा कात्यायनसुसिद्धिदा ॥ ५१

कात्यायनी काचलस्था कामचन्द्रानना तथा ।
काश्मीरदेशनिरता काश्मीरकृषिकर्मजा ॥ ५२

कृषिकर्मस्थिता कौर्मा कूर्मपृष्ठनिवासिनी ।
कलघण्टानादरता कलमञ्जीरमोहिनी ॥ ५३

कलयन्ती शत्रुवर्गान् क्रोधयन्ती गुणागुणम् ।
कामयन्ती सर्वकामं काशयन्ती जगत्त्रयम् ॥ ५४

कौलकन्या कालकन्या कौलकालकुलेश्वरी ।
कौलमन्दिरसंस्था च कुलधर्मविडम्बिनी ॥ ५५

कुलधर्मरताकारा कुलधर्मविनाशिनी ।
कुलधर्मपण्डिता च कुलधर्मसमृद्धिदा ॥ ५६

कौलभोगमोक्षदा च कौलभोगेन्द्रयोगिनी ।
कौलधर्मा नवकुला श्वेतचम्पकमालिनी ॥ ५७

कुलपुष्पा कान्तकुला कुलपुष्पभवोद्भवा।
कौलकोलाहलकरा कौलकर्मप्रिया परा॥ ५८

काशीस्थिता काशकन्या काशी चक्षुः कुथाप्रिया।
काष्ठासनप्रिया काका काकपक्षा कपालिका॥ ५९

कपालरसभोज्या च कपालनवमालिनी।
कपालस्था च कापाली कपालसिद्धिदायिनी॥ ६०

कपाला कुलकर्त्री च कपाललिखनस्थिता।
कथना कृपणश्रीदा कृपी कृपणसेविता॥ ६१

कर्महन्त्री कर्मगता कर्माकर्मविवर्जिता।
कर्मसिद्धिरता कामी कर्मज्ञाननिवासिनी॥ ६२

कर्मधर्मसुशीला च कर्मधर्मवंशकरी।
कनकाब्जसुनिर्माणमहासिंहासनस्थिता॥ ६३

कनकग्रन्थिमाल्याढ्या कनकग्रन्थिभेदिनी।
कनकोद्भवकन्या च कनकाम्भोजवासिनी॥ ६४

कालकूटादिकूटस्था किटिशब्दान्तरस्थिता।
कंकपक्षिनादमुखा कामधेनूद्भवा कला॥ ६५

कङ्कणाभाधरा कर्धा कर्दमा कर्दमस्थिता।
कर्दमस्थजलाच्छन्ना कर्दमस्थजन(ल)प्रिया॥ ६६

कमठस्था कार्मुकस्था कम्र(कर्म)स्था कंसनाशिनी।
कंसप्रिया कंसहन्त्री कंसज्ञाना करालिनी॥ ६७

काञ्चनाभा काञ्चनदा कामदा क्रमदा कदा।
कान्तभिन्ना कान्तिचिन्ता कमलासनवासिनी॥ ६८

कमलासनसिद्धिस्था कमलासनदेवता।
कुत्सिता कुत्सितरता कुत्साशा(पा)पविवर्जिता॥ ६९
कुपुत्ररक्षिका कुल्ला कुपुत्रमानसापहा।
कुजरक्षाकरी कौजी कुब्जाख्या कुब्जविग्रहा॥ ७०
कुनखी कुपदी क्षुत्स्था कुकरी कुधनी कुहा।
कुप्रिया कोकिलानन्दा कोकिला कामदायिनी॥ ७१
कुकामिनी कुबुद्धिस्था कूर्पवाहनमोहिनी।
कुलका कुललोकस्था कुशासनसुसिद्धिदा॥ ७२
कौशिकी देवता कन्या कुनदा(कन्नाद)नादसुप्रिया।
कुसौष्ठवा कुमित्रस्था कुमित्रशत्रुघातिनी॥ ७३
कुज्ञाननिकरा कुस्था कुजिस्था कर्जदायिनी।
कुकर्जा कर्जकरणी कर्जबद्धविमोहिनी॥ ७४
कर्जशोधनकर्त्री च सदा कालास्त्रधारिणी।
कुगतिः कालसुगतिः कलिबुद्धिविनाशिनी॥ ७५
कलिकालफलोत्पन्ना कलिपावनकारिणी।
कलिपापहरा काली कलिसिद्धिसुसूक्ष्म(मोक्ष)दा॥ ७६
कालिदासवाक्यगता कालिदाससुसिद्धिदा।
कलिशिक्षा कालशिक्षा कन्दशिक्षापरायणा॥ ७७
कमनीयभावरता कमनीयसुभक्तिदा।
करकाञ्जनरूपा च कक्षावादकराकरा॥ ७८
कञ्चुवर्णा काकवर्णा कोष्टूरूपा कषामला।
क्रोष्टूनादरता क्रीता कातरा कातरप्रिया॥ ७९

कातरस्था कातराज्ञा कातरानन्दकारिणी।
काशमर्दतरूद्भूता काशमर्दविभक्षिणी॥ ८०
कष्टहानिः कष्टदात्री कष्टलोकविरक्तिदा।
कायागता कायसिद्धिः कायानन्दप्रकाशिनी॥ ८१
कायगन्धहरा कुंभा कारकुम्भकठोरिणी।
कठोरतरु संस्था च कठोरलोकनाशिनी॥ ८२
कुमार्गस्थापिता कुप्रा कार्पसतरुसम्भवा।
कार्पासिवृक्षसूत्रस्था कुवर्गस्था करोत्तरा॥ ८३
कर्णाटीकर्णसम्भूता कर्णाटीकर्णपूजिता।
कर्णाख्यरक्षिका कर्णाकर्णहा कणकुण्डला॥ ८४
कुन्तलादेशनमिता कुटुम्बा कुम्भकारिका।
कर्णाशिरासनाकृष्टा कृष्णहस्ताम्बुजार्चिता॥ ८५
कृष्णाङ्गी कृष्णदेहस्था कुदेशस्था कुमङ्गला।
क्रूरकर्मस्थिता कोरा किरातकुलकामिनी॥ ८६
कालरात्रिप्रिया कामा काव्यवाक्यप्रिया क्रुधा (कुथा)।
कज्जलता कौमुदी च कुज्योत्स्ना कलनप्रिया॥ ८७
कलना सर्वभूतानां कपित्थवनवासिनी।
कटुनिम्बस्थिता काख्या कवर्गाख्या कवर्गिका॥ ८८
किरातच्छेदिनी कार्या कार्याकार्यविवर्जिता।
कात्यायनादिकल्पस्था कात्यायनसुखोदया॥ ८९
कुक्षेत्रस्था कुलाविघ्ना करणादिप्रवेशिनी।
काङ्काली किङ्कला कालकलिता सर्वकामिनी॥ ९०

कीलितापेक्षिता कूटा कूटकुङ्कुमचर्चिता।
कुङ्कुमागन्धनिलया कुटुम्बभवन(रण)स्थिता॥ ९१

कृं कृपा करणानन्दा कवितारसमोहिनी।
काव्यशास्त्रानन्दरता काव्यपूज्या कवीश्वरी॥ ९२

कटकादिहस्तिरथहयदुन्दुभिशब्दिनी।
कितवा क्रूरधूर्तस्था केकाशब्दनिवासिनी॥ ९३

कें केवलान्विता केला केतकीपुष्पमोहिनी।
कैं कैवल्यगुणाभासा कैवल्यधनदायिनी॥ ९४

करीश्वरेन्द्रजननी काक्षराख्या कलङ्किनी।
कुडुवान्ता कान्तिशान्ता कांक्षा पारमहंस्यगा॥ ९५

कर्त्रीचि(वि)त्ता कान्तवित्ता कृषणा कृषिभोजिनी।
कुङ्कमासक्तहृदया केयूरहारमालिनी॥ ९६

कीश्वरी केशबन्धस्था कैशोरजनपूजिता।
कलिकामध्यनिरता कोकिलास्वरगामिनी॥ ९७

कूटदेहहरा कुम्भा कुटुम्बांकुरभेदिनी।
कुण्डलीश्वरसंवादा कुण्डलीश्वरमध्यगा॥ ९८

कालसूक्ष्मा कालयज्ञा कालहारा कली कुहा।
कपिलस्था कलहहा कालहा कलहाङ्कुरी॥ ९९

कुरङ्गेशी कुरङ्गस्था कौरङ्गी कुण्डलापहा।
कुकलङ्की (कुललक्ष्मीः) कृष्णबुद्धिः कृष्णध्याननिवासिनी॥

कुतरा कातरमता कृतार्थकरणी कुसी।
कनकस्था कस्वरस्था कलिकादोषभञ्जजा॥ १०१

कुसुमाकारकमला कुसुमस्रग्विभूषिता।
किञ्जल्का कैतवाकाशा कमनीयजलोदया॥ १०२
ककारकूटसर्वाङ्गी ककाराम्बरमालिनी।
कालभेदकरा काटा कर्पवासा ककुत्स्थला॥ १०३
कुवासा कवरीकर्वा कुसवी कुरुपालिनी।
कुरुपृष्ठा कुरुश्रेष्ठा करुणाऽज्ञाननाशिनी॥ १०४
कुतूहलरता कान्ता कुक्ष्यासा कष्टबन्धना।
कषायणतरुस्था च कषायणरसोद्भवा॥ १०५
कविविद्या कुष्ठधात्री कुष्ठिशोकविसर्जिनी।
काष्ठासनगता कार्याश्रया काश्रयकौलिका॥ १०६
कालिका कलिसन्त्रस्ता कौलिकध्यानवासिनी।
कूसस्था कूसजननी कूसच्छन्ना कलिध्व(द्वि)जा॥ १०७
केशवा केशवानन्दा केश्यादिदानवापहा।
केशवाङ्गजकन्या च केशवाङ्गजमोहिनी॥ १०८
किशोरा(केशवा)र्चनयोग्या च किशोरदेवदेवता।
कान्तश्रीकरणी कुल्या कपटाप्रियघातिनी॥ १०९
कुकामजनिता क्रौञ्चा क्रौञ्चस्था क्रौञ्चवासिनी।
कुपथस्था कुबुद्धिस्था कूप(कुल)मालामनोरमा॥ ११०
कूपपुष्पाश्रया कान्तिः क्रमदाऽक्रमदा क्रमा।
कुविक्रमा कुक्रमस्था कुण्डली कुण्ड(ल)देवता॥ १११
कौण्डिल्यनगरोद्भूता कौण्डिल्यगोत्रपूजिता।
कपिराजस्थिता कापी(वी) कपिबुद्धिबलोदया॥ ११२

कपिध्यानपरा कुख्या कुन्यवस्था कुसाक्षिदा।
कुमध्यस्था कुकल्पा च कुलपङ्क्तिप्रकाशिनी॥ ११३

कुलभ्रमरदेहस्था कुलभ्रमरनादिनी।
कुलासञ्ज्ञा कुलाक्षी च कुलमत्ता कुलानि(वि)ला॥ ११४

कलिचिह्ला कालचिह्ला काष्ठचिह्ला कवीन्द्रजा।
करीन्द्रा कमलेशश्रीः कोटिकन्दर्पदर्पहा॥ ११५

कोटितेजोमयी कोटचा कोटीरपद्ममालिनी।
कोटीरमोहिनी कोटिः कोटिकोटिविधूद्भवा॥ ११६

कोटिसूर्यसमानास्या कोटिकालानलोपमा।
कोटीरहारनमिता कोटिपर्वतधारिणी॥ ११७

कुचयुग्मधरा देवी कुचकामप्रकाशिनी।
कुचानन्दा कुचाच्छन्ना कुचकाठिन्यकारिणी। ११८

कुचयुग्ममोहनस्था कुचमायातुरा कुचा।
कुचयौवनसंमोहा कुचमर्दनसौख्यदा॥ ११९

काचस्था काचदेहा च काचपूरनिवासिनी।
काचाग्रस्था काचवर्णा कीचकप्राणनाशिनी॥ १२०

कमलालोचनप्रेमा कमलाक्षीमनुप्रिया।
कमलाक्षी कमलजा कमलास्या करालजा॥ १२१

कमल"ङ्घ्रिद्वया काम्या कराख्या करमालिनी।
करपद्मधरा कन्दा कन्दबुद्धिप्रदायिनी॥ १२२

कमलोद्भवपुत्री च कमलापुत्रकामिनी।
किरन्ती किरणाच्छन्ना किरणप्राणवासिनी॥ १२३

काव्यप्रदा काव्यचित्ता काव्यसारप्रकाशिनी।
कलाम्बा कल्पजननी कल्पभेदासनस्थिता।। १२४
कालेच्छा कालसारस्था कालमारणघातिनी।
किरणक्रमदीपस्था कर्मस्था क्रमदीपिका।। १२५
काललक्ष्मीः कालचण्डा कुलचण्डेश्वरप्रिया।
काकिनीशक्तिदेहस्था कितवा कुलचारिणी।। १२६
करञ्जा कञ्चुका क्रौञ्चा काकचंचुपुटस्थिता।
काकाख्या काकशब्दस्था कालाग्निदहनार्थिका।। १२७
कुचक्षुर्निलया कुत्रा कुपुत्रा क्रतुरक्षिका।
कनकप्रतिभाकारा करबन्धाकृतिस्थिता।। १२८
कृतिरूपा कृतिप्राणा कृतिक्रोध(चक्र)निवारिणी।
कुक्षिरक्षाकरा कुक्षा कुक्षिब्रह्माण्डधारिणी।। १२९
कुक्षिदेव(श)स्थिता कुक्षिः क्रियादक्षा क्रियातुरा।
क्रियानिष्ठा क्रियानन्दा क्रतुकर्मा क्रियाप्रिया।। १३०
कुशलासवसंसक्ता कुशारिप्राणवल्लभा।
कुशारिवृक्षमदिरा काशीराजवशोद्यमा।। १३१
काशीराजगृहस्था च कर्णभ्रातृगृहस्थिता।
कर्णाभरणभूषाढ्या कण्ठभूषा च कण्ठिका।। १३२
कण्ठस्थानगता कण्ठा कण्ठपद्मनिवासिनी।
कण्ठप्रकाशकारिणी कण्ठमाणिक्यमालिनी।। १३३
कण्ठपद्मसिद्धिकरी कण्ठाकाशनिवासिनी।
कण्ठपद्मसाकिनीस्था कण्ठषोडशपत्रिका।। १३४

कृष्णाजिनधरा विद्या कृष्णाजिनसुवाससी।
कुतुकस्था कुखेलस्था कुण्डलालङ्कृताकृतिः ॥ १३५

कलगीता कालघना कलभङ्गपरायणा।
काली चन्द्रकला काव्या कुचस्था कुचलप्रदा ॥ १३६

कुचौरघातिनी कच्छा कच्छादस्था कजानना।
कञ्जाच्छादमुखी कञ्जा कञ्जतुण्डा कुजीवनी ॥ १३७

कामराग सुवाद्यस्था कियद् हुंकारनादिनी।
कणाद(लाय)यज्ञसूत्रस्था कीलालयज्ञसंज्ञका ॥ १३८

कटुहा(टिवा)सा कपाटस्था कंटधूमनिवासिनी।
कटिनादघोरतरा कुट्मला पाटलप्रिया ॥ १३९

कामठा कजनेत्रा च कामठोद्धारसंक्रमा।
काष्ठपर्वतसंदोहा कुष्ठा कष्टनिवारिणी ॥ १४०

कहोडमन्त्रसिद्धस्था काहलीडिण्डिमप्रिया।
कुलडिण्डिमवाद्यस्था कामडामारसिद्धिदा ॥ १४१

कुलडामरमध्यस्था कुलकेका(ठक्का)निनादिनी।
कोजागरढोलनादा कांस्यवीररणास्थिता ॥ १४२

कालादिकरणच्छिद्रा करुणानिधिवत्सला।
क्रतुश्रीदा कृतार्थश्रीः कालतारा कुलोत्तरा ॥ १४३

कथापूज्या कथानन्दा कथना कथनप्रिया।
कार्थ(र्य)च्छन्ना कार्यविद्या काममिथ्यापवादिनी ॥ १४४

कदम्बपुष्पसंकाशा कदम्बपुष्पमालिनी।
कादम्बरीपानतुष्टा कायदम्भा कदोद्यमा ॥ १४५

कुंकुले(कूल)पत्रमध्यस्था कुलाधाराधरप्रिया।
कुलदेवशरीरार्धा कुलधामा क(कु)लाधरा॥ १४६

कामरागा(नागा)भूषणाढ्या कामिनीरगुणप्रिया।
कुलीनानागहस्ता च कुलीननागवाहिनी॥ १४७

कामपूरस्थिता कोपा कपालीबकुलो(न्दनो)द्भवा।
कारागारजनापाल्या कारागारप्रपालिनी॥ १४८

क्रियाशक्तिः कालपङ्क्तिः कार्णपङ्क्तिः कफोदया।
कामफुल्लारविन्दस्था कामरूपफलाफला॥ १४९

कायफला कायफेणा कान्तनाडीफलीश्वरा।
कामफेरुगता गौरी कायवाणी कुवीरगा॥ १५०

कबरीमणिबन्धस्था कावेरीतीर्थसंगमा।
कामभीतिहरा कान्ता(कन्दा)कामवागु(कुलचक्र)भ्रमातुरा॥ १५१

कविभावहरा भामा(कम्रा) कामनीयभयापहा।
कामगर्भ(भर्ग)देवमाता कामकल्पलतामरा॥ १५२

कमठप्रियमांसादा कमठा कमठ(मर्कट)प्रिया।
किमाकारा किमाधारा कुम्भकारमनःस्थिता॥ १५३

काम्ययज्ञस्थिता चण्डा काम्ययज्ञोपवीतिका।
कामयागसिद्धिकरी काममैथुनयामिनी॥ १५४

कामाख्या कामला(ना)शस्था कालयामा कुयोगिनी।
कुरुयागहता(हुति)योग्या कुरुमांसविभक्षिणी॥ १५५

कुरुरक्तप्रियाकारी(ली) किङ्करप्रियकारिणी।
कर्त्रीश्वरी कारणात्मा कविभक्षा कविप्रिया॥ १५६

कविशान्नुपृष्ठलग्ना कैलासोपवनस्थिता।
कलित्रिधा त्रिसिद्धिस्था कलित्रिदिनसिद्धिदा॥ १५७
कलङ्करहिता काली कलिकल्मषकामदा।
कुलपुष्परङ्गसूत्रमणिग्रन्थिसुशोभना॥ १५८
कम्बोजवंगदेशस्था कुलवासुकिरक्षका।
कुलशास्त्रक्रिया शान्तिः कुलशान्तिःकुलेश्वरी॥ १५९
कुशलप्रतिभा काशी कुलषट्चक्रभेदिनी।
कुलषट्पद्ममध्यस्था कुलषट्पद्मदीपनी॥ १६०
कृष्णमार्जारकोलस्था कृष्णमार्जारषष्ठि(ष्टि)का।
कुलमार्जारकुपिता कुलमार्जारषोडशी॥ १६१
कालान्तकवलोत्पन्ना कपिलान्तकघातिनी।
कलहासा कालहश्रीः कलहार्था कलामला॥ १६२
कच्छपपक्षरक्षा च कुक्षेत्रपक्षसंक्षया।
काक्षरक्षासाक्षिणी च महामोक्षप्रतिष्ठिता॥ १६३
अर्ककोटिशतच्छाया आन्वीक्षिकिकरार्चिता।
कावेरीतीरभूमिस्था आग्नेयार्कास्त्रधारिणी॥ १६४

कवचम्

इं किं श्रीं कामकला पातु कैलासरक्षिणी।
मम श्री ईं बीजरूपा पातु काली शिरःस्थलम्॥ १६५
उरुस्थलाब्जं सकलं तमोल्का पातु कालिका।
उडुम्बन्यर्करमणी उष्ट्रोग्रा कुलमातृका॥ १६६
कृतापेक्षा कृतिमती कुङ्करी किंलिपिस्थिता।
कुन्दीर्घस्वरा क्रूसा कैङ्कैलासकरार्चिता॥ १६७

कैशोरी कैंकरी कैं कें बीजाख्या नेत्रयुग्मकम्।
कोमा मतंगयजिता कौशल्यादिकुमारिका ॥ १६४
पातु मे कर्णयुग्मन्तु क्रौं क्रौं जीवकरालिनी।
गण्डयुग्मं सदा पातु कुण्डली अंकवासिनी ॥ १६९
अर्ककोटिशतभामा अक्षराक्षरमालिनी।
आशुतोषकरी हस्ता कुलदेवी निरञ्जना ॥ १७०
पातु मे कुलपुष्पाढ्या पृष्ठदेशं सुकृत्तमा।
कुमारी कामनापूर्णा पार्श्वदेशं सदाऽवतु ॥ १७१
देवी कामाख्या देवी पातु प्रत्यङ्गिरा कटिम्।
कटिस्थदेवता पातु लिङ्गमूलं सदा मम ॥ १७२
गृह्यदेशं काकिनी मे लिङ्गाधः कुलसिंहिका।
कुलनागेश्वरी पातु नितम्बदेशमुत्तमम् ॥ १७३
कङ्कालमालिनी देवी मे पातु चोरुमूलकम्।
जङ्घायुग्मं सदा पातु कीर्तिश्चक्रापहारिणी ॥ १७४
पादयुग्मं पाकसंस्था पाकशासनरक्षिका।
कुलालचक्रभ्रमरा पातु पादाङ्गुलीर्मम ॥ १७५
नखाग्राणि दशविधा तथा हस्तद्वयस्य च।
विंशरूपा कालनाक्षा सर्वदा परिरक्षतु ॥ १७६
कुलच्छत्राधाररूपा कुलमण्डलगोपिता।
कुलकुण्डलिनी माता कुलपण्डितमण्डिता ॥ १७७
काकाननी काकतुण्डी काकायुः प्रखरार्कजा।
काकज्वरा काकजिह्वा काकाजिज्ञासनस्थिता ॥ १७८

कपिध्वजा कपिक्रोशा कपिबाला हिकास्वरा।
काककाञ्ची विंशतिस्था सदाविंशनखा गृहम्।। १७९

पातु देवी कालरूपा कालिकालफलालया।
वाते वा पर्वते वापि शून्यागारे चतुष्पथे।। १८०

कुलेन्द्रसमयाचारा कुलाचारजनप्रिया।
कुलपर्वतसंस्था च कुलकैलासवासिनी।। १८१

महादावानले पातु कुमार्गे कुत्सितग्रहे।
राज्ञोऽप्रिये राजवंश्ये महाशत्रुविनाशने।। १८२

कलिकालमहालक्ष्मीः क्रियालक्ष्मीः कुलाम्बरा।
कलीन्द्रकीलिता(चैव) कीलालस्वर्गवासिनी।। १८३

दशदिक्षु सदा पातु इन्द्रादिदशलोकमा।
नवच्छिन्ने सदा पातु सूर्यादिकनवग्रहा।। १८४

पातु मां कुलभासाढ्या कुलपद्मनिवासिनी।
कुलद्रव्यप्रिया मध्यं षोडशी भुवनेश्वरी।। १८५

विद्यावादे विवादे च मत्तकाले महाभये।
दुर्भिक्षादिभये चैव व्याधिसङ्करपीडिते।। १८६

काली कुल्ला कपाली च कामाख्या कामचारिणी।
सदा मां कुलसंसर्गे पातु कौले सुसंगता।। १८७

सर्वत्र कुलदेशे च कुलरूपा सदाऽवतु।
इत्येतत्कथितं नाथ मातुः प्रसादहेतुना।। १८८

अष्टोत्तरशतं नामसहस्रं कुण्डलीप्रियम्।
कुलकुण्डलिनीदेव्याः सर्वमन्त्रसुसिद्धये।। १८९

सर्वदेवमनूनाञ्च चैतन्याय सुसिद्धये।
अणिमाद्यष्ट-सिद्ध्यर्थं साधकानां हिताय च॥ १९०
ब्राह्मणाय प्रदातव्यं कुलद्रव्यपराय च।
अकुलीनेऽब्राह्मणे च न देयः कुण्डलीस्तवः॥ १९१
प्रवृत्ते कुण्डलीचक्रे सर्वे वर्णाः द्विजातयः।
निवृत्ते भैरवीचक्रे सर्वे वर्णाः पृथक् पृथक्।
कुलीनाय प्रदातव्यं साधकाय विशेषतः॥ १९२
दानादेव हि सिद्धिः स्यान्ममाज्ञाबलहेतुना।
मम क्रियायां यस्तिष्ठेत् स मे पुत्रो न संशयः॥ १९३
स आयाति मम पदं जीवन्मुक्तः स वासवः।
आसवेन समांसेन कुलवह्नौ महानिशि॥ १९४
नाम प्रत्येकमुच्चार्य जुहुयात् कार्यसिद्धये।
पश्चाचाररतो भूत्वा ऊर्ध्वरेता भवेद्यतिः॥ १९५
सम्वत्सरान्मम स्थाने आयाति नात्र संशयः।
ऐहिके कायसिद्धिः स्यात् दैहिके सर्वसिद्धिदः॥ १९६
वशीभूत्वा त्रिमार्गस्थाः स्वर्गभूतलवासिनः।
अस्य भृत्याःप्रभवन्ति इन्द्रादिलोकपालकाः॥ १९७
स एव योगी परमो यस्यार्थेऽयं सुनिश्चलः।
स एव खेचरो भक्तो नारदादिशुकोपमः॥ १९८
यो लोकः प्रजपत्येवं स शिवो न च मानुषः।
स समाधिगतो नित्यो ध्यानस्थो योगिवल्लभः॥ १९९
चतुर्व्यूहगतो देव! सहसा नात्र संशयः।
यः प्रधारयते भक्त्या कण्ठे वा मस्तके भुजे॥ २००

स भवेत्कालिकापुत्रो विद्यानाथः स्वयंभुवि।
धनेशः पुत्रवान् योगी यतीशः सर्वगो भवेत्।। २०१
वामां वामकरे धृत्वा सर्वसिद्धीश्वरो भवेत्।
यदि पठति मनुष्यो मानुषी वा महत्या
सकलधनजनेशी पुत्रिणी जीववत्सा।
कुलपतिरिह लोके स्वर्गमोक्षैकहेतुः
स भवति भवनाथो योगिनीवल्लभेशः। २०२
पठति य इह नित्यं भक्तिभावेन मर्त्यो
हिरणमपि करोति प्राणविप्राणयोगः।
स्तवनपठनपुण्यं कोटिजन्माघनाशं
कथितुमपि न शक्तोऽहं महामांससभक्षा।। २०३

(रुद्रयामले)

—*—

# कुलकुण्डलिनीसहस्रनामावलिः

(ककारादिः)

ओं कुलेश्वर्यै नमः । कुलानन्दायै । कुलीनायै । कुल-कुण्डल्यै । श्रीमन्महाकुण्डल्यै । कुलकन्यायै । कुलप्रियायै । कुलक्षेत्रस्थितायै । कौल्यै । कुलीनार्थप्रकाशिन्यै । कुलाख्यायै । कुलमार्गस्थायै । कुलशास्त्रार्थपातिन्यै । कुलज्ञायै । कुलयोग्यायै । कुलपुष्पप्रकाशिन्यै । कुलीनायै । कुलाध्यक्षायै । कुलचन्दनलेपितायै । कुलरूपायै नमः । २०

ओं कुलोद्भूतायै नमः । कुलकुण्डलवासिन्यै । कुलाभिन्नायै । कुलोत्पन्नायै । कुलाचारविनोदिन्यै । कुलवृक्षसमुत्पन्ना(द्भूता)यै । कुलमालायै । कुलप्रभायै । कुलज्ञायै । कुलमध्यस्थायै । कुलकङ्कणशोभितायै । कुलोत्तरायै । कौलपूज्यायै । कुलालापायै । कुलप्रियायै । कुलभेदायै । कुलप्राणायै । कुलदेव्यै । कुलस्तुत्यै । कौलिकायै नमः । ४०

ओं कालिकायै नमः । काल्यायै । कलिभिन्नायै । कुलाकुलायै । कलिकल्मषहन्त्र्यै । कलिदोषनिवारिण्यै । कंकाल्यै । केवलानन्दायै । कालज्ञायै । कालधारिण्यै । कौतुक्यै । कौमुद्यै । केकायै । कालायै । काललयान्तरा(न्तिका)यै । कोमलाङ्ग्यै । करालास्यायै । कन्दपूज्यायै । कोमलायै । कैशोर्यै नमः । ६०

ओं काकपुच्छ(ञ्ज)स्थायै नमः । कंबलासन-नासिन्यै । कैकेयीपूजितायै । कोलायै । कौलपुत्र्यै । कपिध्वजायै । कमलायै । कमलाक्ष्यै । कंबलाश्वतरप्रियायै । कलिकाभङ्गदोषस्थायै । कालज्ञायै । कालकुण्डल्यै । काव्यदायै । कवितावाण्यै । कालसन्दर्भभेदिन्यै । कुमार्यै । करुणाकारायै । कुरुसैन्यविनाशिन्यै । कान्तायै । कुला(कुम्भ)गतायै नमः । ८०

ओं कामायै नमः । कामिन्यै । कामनाशिन्यै । कामोद्भवायै । कामकन्या(कुल्या)यै । केवलायै । कालघातिन्यै । कैलासशिखरारूढायै । कैलासपति-सेवितायै । कैलासनाथनमितायै । केयूरहारमण्डितायै । कन्दर्पायै । कठिनानन्दायै । कुल(च)गायै । कीचकृत्यहा-(कीटकापहा)यै । कमलास्यायै (कमलस्थायै) । कठोरायै (कठोरेच्छायै) । कीटरूपायै । कटिस्थितायै । कन्देश्वर्यै नमः । १००

ओं कन्दरूपायै नमः । कोकिलायै । कन्दवासिन्यै । कूटस्थायै । कूटभक्षायै । कालकूटविनाशिन्यै । कामाख्यायै । कमलायै । काम्यायै । कामराजतनूद्भवायै । कामरूपधरायै । कम्रायै । कमनीयायै । कवि(लि)प्रियायै । कञ्जाननायै । कञ्जहस्तायै । कञ्जपत्रायतेक्षणायै । काकिन्यै । कामरूपस्थायै । कामरूपप्रकाशिन्यै नमः । १२०

ओं कोलाविध्वंसिन्यै नमः । कंकायै । कलङ्कार्यै । कलङ्किन्यै । महाकुलनद्यै । कर्णायै । कर्ण(र्म)काण्ड-विमोहिन्यै । काण्डस्थायै । काण्डकरुणायै । कर्मावासायै ।

कुटुम्बिन्यै। कमलाभाभवायै। कह्ला(कमला)यै। करुणायै । करुणामय्यै । करु(र)णेश्यै । करायै । कर्त्र्यै । कर्तृहस्तायै । कलोदया(रा)यै नमः । १४०

ओं कारुण्यसागरोद्भूतायै नमः । कारुण्यसिन्धु-वासिन्यै । कार्तिकेश्यै । कार्तिकस्थायै । कार्तिकप्राण-पालिन्यै । करुणानिधिपूज्यायै । करणीयायै । क्रियायै । कलायै । कल्पस्थायै । कल्पनिलयायै । कल्पातीतायै । कल्पितायै । कुलपायै । कुलविज्ञानायै । कर्षिण्यै । कालरात्रिकायै । कैवल्यदायै । को(के)करस्थायै । कलमञ्जीररञ्जिन्यै नमः । १६०

ओं कलयन्त्यै नमः । कालजिह्वायै । किङ्करासन-कारिण्यै । कुमुदायै । कुशलानन्दायै । कौशल्यायै । काश(शि)वासिन्यै । कंसोपहासहन्त्र्यै । कैवल्यगुण-संभवायै । एकाकिन्यै । कर्करूपायै । कुचलायै । कर्कट-स्थितायै । कर्कोटकायै । कोष्ठरूपायै । कूटवह्निकरस्थितायै । मधुरध्वानं कूजन्त्यै । सुलक्षणं काम(र)यन्त्यै । केतकीकुसुमा-नन्दायै । केतकीपुष्पमण्डितायै नमः । १८०

ओं कर्पूरपूररचिरायै नमः । कर्पूरभक्षणप्रियायै । कपालपात्रहस्तायै । कपालचन्द्रधारिण्यै । कामधेनु-स्वरूपायै । कामधेन्वै । क्रियान्वितायै । कश्यप्यै । काश्यपायै । कुन्त्यै (कान्त्यै) । केशान्तायै । केशमोहिन्यै । कालकर्त्र्यै । कूपकर्त्र्यै । कुलपायै । कामचारिण्यै । कुङ्कुमा(कज्जला)भायै । कज्जलस्थायै । कामितायै । कोपघातिन्यै नमः । २००

ओं केलिस्थायै नमः । केलिकलितायै । कोपनायै । कर्प(र्क)टस्थितायै । कलातीतायै । कालविद्यायै । कालात्मपुरुषोद्भवायै । कष्टस्थायै । कष्ट(ष्टि)कुष्ठस्थायै । कुष्ठहायै । कष्ट(कूट)हायै । कुला(शा)यै । कलिकास्फुटकर्त्र्यै । काम्बोजायै । कमलायै । कुलायै । कुशलाख्यायै । काककुष्ठा(म्भा)यै । कर्मस्थायै । कूर्म(कुम्भ)मध्यगायै नमः । २२०

ओं कुण्डलाकारचक्रस्थायै नमः । कुण्डगोलोद्भवायै । कफायै । कपित्थाग्रवसायै । काशायै । कपित्थरोधकारिण्यै । काहोड्यै । काहडायै । कङ्कायै । कङ्कलाभाषकारिण्यै । कनकायै । कनकाभायै । कनकाद्रिनिवासिन्यै । करङ्गायै । कर्पट्यै । कर्पायै । कृपायै । कार्पासवासिन्यै । कार्पासयज्ञसूत्रस्थायै । कूटब्रह्मार्थसाधिन्यै नमः । २४०

ओं कलञ्जभक्षिण्यै नमः । क्रूरायै । क्रोधपुञ्जायै । कपिस्थितायै । कपालीसाधनरतायै । कनिष्ठायै । काशवासिन्यै । कुञ्जरेश्यै । कुञ्जरस्थायै । कुञ्जरायै । कुञ्जरागत्यै । कुञ्जस्थायै । कुञ्जरमण्यै । कुञ्जमन्दिरवासिन्यै । कुपितायै । कोपशून्यायै । कोपायै । कोपविवर्जितायै । कपिञ्जलस्थायै । कापिञ्जायै नमः । २६०

ओं कपिञ्जलतरूद्भवायै नमः । कुन्तीप्रेमकथाविष्टायै । कुन्तीमानसपूजितायै । कुन्तलायै । कुन्तहस्तायै । कुलकुन्तलमोहिन्यै । कान्तांघ्रिसेविकायै । कान्तकुशलायै । कोशलावत्यै । केशिहन्त्र्यै । ककुत्स्थायै । ककुत्स्थवन-

वासिन्यै । कैलासशिखरानन्दायै । कैलासगिरिपूजितायै । कीलालनिर्मलाकारायै । कीलालस्निग्धकारिण्यै । कुतुकायै । कुट्टिन्यै । कूटायै । कूटनामोदकारिण्यै नमः । २८०

ओं क्रौंकार्यै नमः । क्रौंकर्यै । काम्यै । कुहुशब्दायै । किरातिन्यै । सर्ववचनं कूजन्त्यै । कृताकृतं कारयन्त्यै । कृपानिधिस्वरूपायै । कृपासागरवासिन्यै । केवलानन्दनिरतायै । केवलानन्दकारिण्यै । कृमिलायै । कृमिदोषघ्न्यै । कृपायै । कपटकुट्टितायै । कृशाङ्ग्यै । क्रमभङ्गस्थायै । किङ्करस्थायै । कटिस्थितायै । कामरूपायै नमः । ३००

ओं कान्तरतायै नमः । कामरूपस्य सिद्धिदायै । कामरूपपीठदेव्यै । कामरूपाङ्गजायै । कुजायै । कामरूपायै । कामविद्यायै । कामरूपादिकालिकायै । कामरूपकलायै । काम्यायै । कामरूपकुलेश्वर्यै । कामरूपजनानन्दायै । कामरूपकुशाग्रधियै । कामरूपकराकाशायै । कामरूपतरुस्थितायै । कामात्मजायै । कामकलायै । कामरूपविहारिण्यै । कामशास्त्रार्थमध्यस्थायै । कामरूपक्रिया कलायै नमः । ३२०

ओं कामरूपमहाकाल्यै नमः । कामरूपयशोमय्यै । कामरूपपरानन्दायै । कामरूपादिकामिन्यै । कूलमूलायै । कामरूपपद्ममध्यनिवासिन्यै । कृताञ्जलिप्रियायै । कृत्यायै । कृत्यादेवीस्थितायै । कटायै । कटकायै । काटकायै । कोटिकटिघण्टाविनोदिन्यै । कटिस्थूलतरायै । काष्ठायै । कात्यायनसुसिद्धिदायै । कात्यायन्यै । काचलस्थायै । कामचन्द्राननायै । काश्मीरदेशनिरतायै नमः । ३४०

ओं काश्मीरकृषिकर्मजायै नमः। कृषिकर्मस्थितायै। कौमार्यै। कूर्मपृष्ठनिवासिन्यै। कलघण्टानादरतायै। कलमञ्जीरमोहिन्यै। शत्रुवर्गान्कलयन्त्यै। गुणागुणं क्रोधयन्त्यै। सर्वकामं कामयन्त्यै। जगत्त्रयं काशयन्त्यै। कौलकन्यायै। कालकन्यायै। कौलकालकुलेश्वर्यै। कौलमन्दिरसंस्थायै। कुलधर्मविडंबिन्यै। कुलधर्मरताकारायै। कुलधर्मविनाशिन्यै। कुलधर्मपण्डितायै। कुलधर्मसमृद्धिदायै। कौलभोगमोक्षदायै नमः। ३६०

ओं कौलभोगेन्द्रयोगिन्यै नमः। कौलधर्मायै। नवकुलायै। श्वेतचम्पकमालिन्यै। कुलपुष्पायै। कान्तकुलायै। कुलपुष्पोद्भवोद्भवायै। कौलकोलाहलकरायै (लाकारायै)। कौलकर्मप्रियायै परायै। काशीस्थितायै। काशकन्यायै। काशीचक्षुषे। कुथाप्रियायै। काष्ठासनप्रियायै। काकायै। काकपक्षायै। कपालिकायै। कपालरसभोज्यायै। कपालनवमालिन्यै। कपालस्थायै नमः। ३८०

ओं कापाल्यै नमः। कपालसिद्धिदायिन्यै। कपालायै। कुलकर्त्र्यै। कपाललिखनस्थितायै। कथनायै। कृपणश्रीदायै। कृप्यै। कृपणसेवितायै। कर्महन्त्र्यै। कर्मगतायै। कर्माकर्मविवर्जितायै। कर्मसिद्धिरतायै। काम्यै। कर्मज्ञाननिवासिन्यै। कर्मधर्मसुशीलायै। कर्मधर्मवंशकर्यै। कनकाब्जसुनिर्माणमहासिंहासनस्थितायै। कनकग्रन्थिमाल्याढ्यायै। कनकग्रन्थिभेदिन्यै नमः। ४००

ओं कनकोद्भवकन्यायै नमः। कनकांभोजवासिन्यै। कालकूटादिकूटस्थायै। किटिशब्दान्तरस्थितायै। कङ्कपक्षि-

नादमुखायै । कामधेनूद्भवायै कलायै । कङ्कणाभाधरायै । कधर्यै । कर्दमायै । कर्दमस्थितायै । कर्दमस्थजलाच्छन्नायै । कर्दमस्थजन(ल)प्रियायै । कमठस्थायै । कार्मुकस्थायै । कम्र(कर्म)स्थायै । कंसनाशिन्यै । कंसप्रियायै । कंसहन्त्र्यै । कंसज्ञानायै । करालिन्यै नमः । ४२०

ओं काञ्चनाभायै नमः । काञ्चनदायै । कामदायै । क्रमदायै । कदायै । कान्तभिन्नायै । कान्तिचिन्तायै । कमलासनवासिन्यै । कमलासनसिद्धिस्थायै । कमलासनदेवतायै । कुत्सितायै । कुत्सितरतायै । कुत्साशाप(पाप)विवर्जितायै । कुपुत्ररक्षिकायै । कुल्लायै । कुपुत्रमानसापहायै । कुजरक्षाकर्यै । कौज्यै । कुब्जाख्यायै । कुब्जविग्रहायै नमः । ४४०

ओं कुनख्यै नमः । कुपद्यै । क्षुत्स्थायै । कुकर्यै । कुधन्यै । कुहायै । कुप्रियायै । कोकिलानन्दायै । कोकिलायै । कामदायिन्यै । कुकामिन्यै । कुबुद्धिस्थायै । कूर्पवाहनमोहिन्यै । कुलकायै । कुललोकस्थायै । कुशासनसुसिद्धिदायै । कौशिक्यै देवतायै । कन्यायै । कुनदा(कन्नाद)नादसुप्रियायै । कुसौष्ठवायै नमः । ४६०

ओं कुमित्रस्थायै नमः । कुमित्रशत्रुघातिन्यै । कुज्ञाननिकरायै । कुस्थायै । कुजिस्थायै । कर्जदायिन्यै । कुकजायै । कर्जकरण्यै । कर्जबद्धविमोहिन्यै । कर्जशोधनकर्त्र्यै । सदाकालास्त्रधारिण्यै । कुगत्यै । कालसुगत्यै । कलिबुद्धिविनाशिन्यै । कलिकालफलोत्पन्नायै । कलिपावनकारिण्यै । कलिपापहरायै । काल्यै । कलिसिद्धिसुसूक्ष्म(मोक्ष)दायै । कालिदासवाक्यगतायै नमः । ४८०

ओं कालिदाससुसिद्धिदायै नमः । कलिशिक्षायै । कालशिक्षायै । कन्दशिक्षापरायणायै । कमनीयभावरतायै । कमनीयसुभक्तिदायै । करकाञ्जनरूपायै । कक्षावादकराकरायै । कञ्चुवर्णायै । काकवर्णायै । क्रोष्टूरूपायै । कषामलायै । क्रोष्टूनादरतायै । क्रीतायै । कातरायै । कातरप्रियायै । कातरस्थायै । कातराज्ञायै । कातरानन्दकारिण्यै । काशमर्दतरूद्भूतायै नमः । ५००

ओं काशमर्दविभक्षिण्यै नमः । कष्टहान्यै । कष्टदात्र्यै । कष्टलोकविरक्तिदायै । कायागतायै । कायसिद्ध्यै । कायानन्दप्रकाशिन्यै । कायगन्धहरायै । कुंभायै । कारकुम्भकठोरिण्यै । कठोरतरुसंस्थायै । कठोरलोकनाशिन्यै । कुमार्गस्थापितायै । कुप्रायै । कार्पासतरुसंभवायै । कार्पासवृक्षसूत्रस्थायै । कुवर्गस्थायै । करोत्तरायै । कर्णाटीकर्णसंभूतायै । कर्णाटीकर्णपूजितायै नमः । ५२०

ओं कर्णाख्यरक्षिकायै नमः । कर्णाकर्णहायै । कर्णकुण्डलायै । कुन्तलादेशनमितायै । कुटुंबायै । कुम्भकारिकायै । कर्णाशरासनाकृष्टायै । कृष्णहस्ताम्बुजार्चितायै । कृष्णाङ्ग्यै । कृष्णदेहस्थायै । कुदेशस्थायै । कुमङ्गलायै । क्रूरकर्मस्थितायै । कोरायै । किरातकुलकामिन्यै । कालरात्रिप्रियायै । कामायै । काव्यक्यप्रियायै । क्रुधा(कुथा)यै । कज्जलतायै नमः । ५४०

ओं कौमुद्यै नमः । कुज्योत्स्नायै । कलनप्रियायै । सर्वभूतानां कलनायै । कपित्थवनवासिन्यै । कटुनिम्बस्थितायै । काख्यायै । कवर्गाख्यायै । कवर्गिकायै । किरातच्छेदिन्यै । कार्यायै । कार्याकार्यविवर्जितायै ।

कात्यायनादिकल्पस्थायै । कात्यायनसुखोदयायै । कुक्षेत्रस्थायै । कुलाविघ्नायै । करणादिप्रवेशिन्यै । कांकाल्यै । किंकलायै । कालकलितायै नमः । ५६०

ओं सर्वकामिन्यै नमः । कीलितापेक्षितायै । कूटायै । कूटकुङ्कुमचर्चितायै । कुङ्कुमागन्धनिलयायै । कुटुम्ब-भवन(भरण)स्थितायै । कृं । कृपायै । करणानन्दायै । कवितारसमोहिन्यै । काव्यशास्त्रानन्दरतायै । काव्यपूज्यायै । कवीश्वर्यै । कटकादिहस्तिरथहयदुन्दुभिशब्दिन्यै । कितवायै । क्रूरधूर्तस्थायै । केकाशब्दनिवासिन्यै । कें । केवलान्वितायै । केतायै नमः । ५८०

ओं केतकीपुष्पमोहिन्यै नमः । कैं । कैवल्यगुणा-भासायै । कैवल्यधनदायिन्यै । करीश्वरेन्द्रजनन्यै । काक्षराख्यायै । कलंकिन्यै । कुडुवान्तायै । कान्तिशान्तायै । कांक्षापारमहंस्यगायै । कर्त्रीचि(वि)त्तायै । कान्तवित्तायै । कृषणायै । कृषिभोजिन्यै । कुङ्कुमासक्तहृदयायै । केयूरहार-मालिन्यै । कीश्वर्यै । केशबन्धस्थायै । कैशोरजनपूजितायै । कलिकामध्यनिरतायै नमः । ६००

ओं कोकिकास्वरगामिन्यै नमः । कूटदेहहरायै । कुम्भायै । कुटुम्बांकुरभेदिन्यै । कुण्डलीश्वरसंवादायै । कुण्डलीश्वरमध्यगायै । कालसूक्ष्मायै । कालयज्ञायै । कालहारायै । कल्यै । कुहायै । कपिलस्थायै । कलहहायै । कालहायै । कलहाङ्कुर्यै । कुरङ्गेश्यै । कुरङ्गस्थायै । कौरङ्ग्यै । कुण्डलापहायै । कुकलङ्क्यै । (कुललक्ष्म्यै) नमः । ६२०

ओं कृष्णबुद्ध्यै नमः । कृष्णध्याननिवासिन्यै । कुतरायै । कातरमतायै । कृतार्थकरण्यै । कुस्यै । कनकस्थायै । कस्वरस्थायै । कलिकादोषभञ्जायै । कुसुमाकारकमलायै । कुसुमस्रग्विभूषितायै । किञ्जल्कायै । कैतवाकाशायै । कमनीयजलोद्यायै । ककारकूटसर्वाङ्ग्यै । ककाराम्बरमालिन्यै । कालभेदकरायै । काटायै । कर्पवासायै । ककुत्स्थलायै नमः । ६४०

ओं कुवासायै नमः । कवरीकर्वायै । कुसन्यै । कुरुपालिन्यै । कुरुपृष्ठायै । कुरुश्रेष्ठायै । करुणायै अज्ञाननाशिन्यै । कुतूहलरतायै । कान्तायै । कुक्ष्यासायै । कष्टबन्धनायै । कषायणतरुस्थायै । कषायणरसोद्भवायै । कविविद्यायै । कुष्ठधात्र्यै । कुष्ठिशोकविसर्जन्यै । काष्ठासनगतायै । कार्याश्रयायै नमः । काश्रयकौलिकायै नमः । ६६०

ओं कालिकायै नमः । कलिसन्त्रस्तायै । कौलिकध्यानवासिन्यै । कूसस्थायै । कूसजनन्यै । कूसच्छन्नायै । कलिध्व(द्धि)जायै । केशवायै । केशवानन्दायै । केश्यादिदानवापहायै । केशवाङ्गजकन्यायै । केशवाङ्गजमोहिन्यै । किशोरा(केशवा)र्चनयोग्यायै । किशोरदेवदेवतायै । कान्तश्रीकरण्यै । कुल्यायै । कपटाप्रियघातिन्यै । कुकामजनितायै । क्रौञ्चायै । क्रौञ्चस्थायै नमः । ६८०

ओं क्रौञ्चवासिन्यै नमः कुपथस्थायै । कुबुद्धिस्थायै । कूप(कुल)मालामनोरमायै । कूपपुष्पाश्रयायै । कान्त्यै । क्रमदायै । अक्रमदायै । क्रमायै । कुविक्रमायै । कुक्रमस्थायै ।

कुण्डल्यै । कुण्ड(ल)देवतायै । कौण्डिल्यनगरोद्भूतायै । कौण्डिल्यगोत्रपूजितायै। कपिराजस्थितायै। काप्यै(व्यै)। कपिबुद्धिबलोदयायै। कपिध्यानपरायै। कुख्यायै नमः ।७००

ओं कुव्यवस्थायै नमः । कुसाक्षिदायै। कुमध्यस्थायै। कुकल्पायै । कुलपंक्तिप्रकाशिन्यै । कुलभ्रमरदेहस्थायै । कुलभ्रमरनादिन्यै । कुलासञ्ज्ञायै । कुलाक्ष्यै । कुलमत्तायै । कुलानि(गि)लायै । कलिचिह्नायै । कालचिह्नायै । काष्ठचिह्नायै । कवीन्द्रजायै । करीन्द्रायै । कमलेशश्रियै । कोटिकन्दर्पदर्पहायै। कोटितेजोमय्यै। कोट्यायै नमः ।७२०

ओं कोटीर पद्ममालिन्यै । कोटीरमोहिन्यै । कोट्यै । कोटिकोटिविधूद्भवायै । कोटिसूर्यसमानास्यायै । कोटि-कालानलोपमायै । कोटीरहारनमितायै । कोटिपर्वत-धारिण्यै । कुचयुग्मधारायै देव्यै । कुचकामप्रकाशिन्यै । कुचानन्दायै । कुचाच्छन्नायै । कुचकाठिन्यकारिण्यै । कुचयुग्ममोहनस्थायै । कुचमायातुरायै । कुचायै । कुचयौवनसंमोहायै । कुचमर्दनसौख्यदायै । काचस्थायै । काचदेहायै नमः ।७४०

ओं काचपूरनिवासिन्यै नमः । काचाग्रस्थायै । काचवर्णायै । कीचकप्राणनाशिन्यै । कमलालोचनप्रेमायै । कमलाक्षीमनुप्रियायै । कमलाक्ष्यै । कमलजायै । कमलास्यायै । करालजायै । कमलाङ्घ्रिद्वयायै । काम्यायै । कराख्यायै । करमालिन्यै । करपद्मधरायै । कन्दायै । कन्दबुद्धिप्रदायिन्यै । कमलोद्भवपुत्र्यै । कमलापुत्रकामिन्यै । किरन्त्यै नमः ।७६०

ओं किरणाच्छन्नायै नमः । किरणप्राणवासिन्यै । काव्यप्रदायै । काव्यचित्तायै । काव्यसारप्रकाशिन्यै । कलाम्बायै । कल्पजनन्यै । कल्पभेदासनस्थितायै । कालेच्छायै । कालसारस्थायै । कालमारणघातिन्यै । किरणक्रमदीपस्थायै । कर्मस्थायै । क्रमदीपिकायै । काललक्ष्म्यै । कालचण्डायै । कुलचण्डेश्वरप्रियायै । काकिनीशक्तिदेहस्थायै । कितवायै । कुलचारिण्यै नमः । ७८०

ओं करञ्जायै नमः । कञ्जुकायै । क्रौञ्चायै । काकचञ्चुपुटस्थितायै । काकाख्यायै । काकशब्दस्थायै । कालाग्निदहनार्थिकायै । कुचक्षुर्निलयायै । कुत्रायै । कुपुत्रायै । क्रतुरक्षिकायै। कनकप्रतिभाकारायै । करबन्धाकृति-स्थितायै । कृतिरूपायै । कृतिप्राणायै । कृतिक्रोध(चक्र) निवारिण्यै । कुक्षिरक्षाकरायै । कुक्षायै । कुक्षिब्रह्माण्ड-धारिण्यै । कुक्षिदेव(श)स्थितायै नमः । ८००

ओं कुक्ष्यै नमः । क्रियादक्षायै । क्रियातुरायै । क्रियानिष्ठायै । क्रियानन्दायै । क्रतुकर्मणे । क्रियाप्रियायै । कुशलासवसंसक्तायै । कुशारिप्राणवल्लभायै । कुशारिवृक्ष-मदिरायै । काशीराजवशोद्यमायै । काशीराजगृहस्थायै । कर्णभ्रातृगृहस्थितायै । कर्णाभरणभूषाढ्यायै । कण्ठभूषायै । कण्ठिकायै । कण्ठस्थानगतायै । कण्ठायै । कण्ठपद्मनिवासिन्यै । कण्ठप्रकाशकरिण्यै नमः । ८२०

ओं कण्ठमाणिक्यमालिन्यै नमः । कण्ठपद्मसिद्धि-कर्यै । कण्ठाकाशनिवासिन्यै । कण्ठपद्मसाकिनीस्थायै । कण्ठषोडशपत्रिकायै । कृष्णाजिनधरायै विद्यायै ।

कृष्णाजिनसुवासस्यै । कुतुकस्थायै । कुखेलस्थायै । कुण्डलालङ्कृताकृत्यै । कलगीतायै । कालघनायै । कलभङ्गपरायणायै । कालीचन्द्रकलायै । काव्यायै । कुचस्थायै । कुचलप्रदायै । कुचौरघातिन्यै । कच्छायै । कच्छादस्थायै नमः । ८४०

ओं कजाननायै नमः । कञ्जाच्छादमुख्यै । कञ्जायै । कञ्जतुण्डायै । कुजीवन्यै । कामरागसुवाद्यस्थायै । कियद्धुङ्कारनादिन्यै । कणाद(लाय)यज्ञसूत्रस्थायै । कीलालयज्ञसंज्ञकायै । कटुहा(टिवा)सायै । कपाटस्थायै । कटधूमनिवासिन्यै । कटिनादघोरतरायै । कुट्मलापाटल-प्रियायै । कामठायै । कजनेत्रायै । कामठोद्धारसंक्रमायै । काष्ठपर्वतसन्दोहायै । कुष्ठायै । कष्टनिवारिण्यै नमः । ८६०

ओं कहोडमन्त्रसिद्धिस्थायै नमः । काहलीडिण्डि-मप्रियायै । कुलडिण्डिमवाद्यस्थायै । कामडामारसिद्धिदायै । कुलडामरमध्यस्थायै । कुलकेका(ढक्का)निनादिन्यै । कोजागरढोलनादायै । कांस्यवीररणस्थितायै । कालादि-करणच्छिद्रायै । करुणानिधिवत्सलायै । क्रतुश्रीदायै । कृतार्थश्रियै । काललारायै । कुलोत्तरायै । कथापूज्यायै । कथानन्दायै । कथनायै । कथनप्रियायै । कार्थ(र्य)च्छन्नायै । कार्यविद्यायै नमः । ८८०

ओं काममिथ्यापनादिन्यै नमः । कदम्बपुष्प-सङ्काशायै । कदम्बपुष्पमालिन्यै । कादम्बरीपानतुष्टायै । कायदम्भायै । कदोद्यमायै । कुङ्कुले(कूल)पत्रमध्यस्थायै । कुलाधाराधरप्रियायै । कुलदेवशरीरार्धायै । कुलधाम्ने ।

क(कु)लाधरायै । कामरागा(नागा)भूषणाढ्यायै । कामिनीरगुणप्रियायै । कुलीनानागहस्तायै । कुलीननागवाहिन्यै । कामपूरस्थितायै । कोपायै । कपालीवकुलो-(न्दनो)द्भवायै । कारागारजनापाल्यायै । कारागारप्रपालिन्यै नमः ।९००

ओं क्रियाशक्त्यै नमः । कालपंक्त्यै । कार्णपंक्त्यै । कफोदयायै । कामफुल्लारविन्दस्थायै । कामरूपफलाफलायै । कायफलायै । कायफेणायै । कान्तनाडीफलेश्वरायै । कामफेरुगतायै । गौर्यै । कायवाण्यै । कुवीरगायै । कबरीमणिबन्धस्थायै । कावेरीतीर्थसङ्गमायै । कामभीतिहरायै । कान्तायै (कन्दायै) । कामवागु(कुलचक्र)भ्रमातुरायै । कविभावहरायै । भामायै (कम्रायै) नमः ।९२०

ओं कामनीयभयापहायै नमः । कामगर्भ(भर्ग)-देवमात्रे । कामकल्पलतामरायै । कमठप्रियमांसादायै । कमठायै । कमठ(मर्कट)प्रियायै । किमाकारायै । किमाधारायै । कुम्भकारमनःस्थितायै । काम्ययज्ञस्थितायै । चण्डायै । काम्ययज्ञोपवीतिकायै । कामयागसिद्धिकर्यै । काममैथुनयामिन्यै । कामाख्यायै । कामला-(ना)शस्थायै । कालयामायै । कुयोगिन्यै । कुरुयागहता-(हृती)योग्यायै । कुरुमांसविभक्षिण्यै नमः ।९४०

ओं कुरुरक्तप्रियायै नमः । कार्यै(ल्यै) । किङ्करप्रियकारिण्यै । कर्त्र्यै । ईश्वर्यै । कारणात्मने । कविभक्षायै । कविप्रियायै । कविशत्रुपृष्ठलग्नायै । कैलासो-पवनस्थितायै । कलित्रिधायै । त्रिसिद्धिस्थायै । कलित्रिदिन-सिद्धिदायै ।

कलंकरहितायै । काल्यै । कलिकल्मषकामदायै । कुल-पुष्परङ्गसूत्रमणिग्रन्थिसुशोभनायै। कंभोजवङ्गदेश-स्थायै । कुलवासुकिरक्षकायै। कुलशास्त्रक्रियायै नमः। ९६०

ओं शान्त्यै नमः। कुलशान्त्यै। कुलेश्वर्यै। कुशलप्रति-भायै। काश्यै। कुलषट्चक्रभेदिन्यै। कुलषट्पद्ममध्यस्थायै। कुलषट्पद्मदीपन्यै। कृष्णमार्जारकोलस्थायै। कृष्णमार्जार-षष्टिकायै । कुलमार्जारकुपितायै । कुलमार्जारषोडश्यै । कालान्तकबलोत्पन्नायै । कपिलान्तकघातिन्यै । कलहा-सायै । कालहश्रियै । काहार्थायै । कलामलायै । कच्छप-पक्षरक्षायै। कुक्षेत्रपक्षसंक्षयायै नमः। ९८०

ओं काक्षरक्षासाक्षिण्यै नमः। महामोक्षप्रतिष्ठितायै। अर्ककोटिशतच्छायायै। आन्वीक्षिकिकरार्चितायै। कावेरी-तीरभूमिस्थायै। आग्नेयार्कास्त्रधारिण्यै। (इं किं श्रीं काम-कमलायै । कैलासरक्षिण्यै । श्रीं ईं बीजरूपायै काल्यै । तमोल्कायै कालिकायै । उडुंबन्यै अर्करमण्यै । उष्ट्रोग्रायै । कुलमातृकायै । कृतापेक्षायै । कृतिमत्यै । कुङ्कर्यै । किंलि-पिस्थितायै। कुन्दीर्धस्वरायै। क्लृप्तायै। कैं कैलासकरार्चितायै नमः। १०००

ओं कैशोर्यै नमः। कैंकर्यै। कैंकें बीजाख्यायै। कोमायै । मतङ्गयजितायै । कौशल्यादिकुमारिकायै । क्रौं क्रौं जीवकरालिन्यै। कुण्डल्यै अंकवासिन्यै।) १००८

——*——

# कुमारीसहस्रनामस्तोत्रम्

(ककारादिहकारान्तनामभिः घटितम्)

आनन्दभैरव उवाच—

वद कान्ते सदानन्दस्वरूपानन्दवल्लभे।
कुमार्या देवतामुख्याः परमानन्दवर्धनम्॥ १
अष्टोत्तरसहस्राख्यं नाममङ्गलमद्भुतम्।
यदि मे वर्तते विद्या यदि स्नेहकलामला॥ २
तदा वदस्व कौमारीकृतकर्मफलप्रदम्।
महास्तोत्रं कोटिकोटिकन्यादानफलं भवेत्॥ ३

आनन्दभैरवी उवाच—

महापुण्यप्रदं नाथ शृणु सर्वेश्वरप्रिय।
अष्टोत्तरसहस्राख्यं कुमार्याः परमाद्भुतम्॥ ४
पठित्वा धारयित्वा वा नरो मुच्येत सङ्कटात्।
सर्वत्र दुर्लभं धन्यं धन्यलोकनिषेवितम्॥ ५
अणिमाद्यष्टसिद्ध्यङ्गं सर्वानन्दकरं परम्।
मायामन्त्रनिरस्ताङ्गं मन्त्रसिद्धिप्रदं नृणाम्॥ ६
न पूजा न जपः स्नानं पुरश्चर्याविधिश्च न।
अकस्मात्सिद्धिमाप्नोति सहस्रनाम पाठतः॥ ७
सर्वयज्ञफलं नाथ ! प्राप्नोति साधकः क्षणात्।
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रास्वरूपकम्॥ ८
कोटिवर्षशतेनापि फलं वक्तुं न शक्यते।
तथापि वक्तुमिच्छामि हिताय जगतां प्रभो॥ ९

अस्य श्रीकुमार्याः सहस्रनामकवचस्य, बटुकभैरव ऋषिः अनुष्टुप् छन्दः कुमारीदेवता। सर्वमन्त्रसिद्धिसमृद्धये विनियोगः ॥

ओं कुमारी कौशिकी काली कुरुकुल्ला कुलेश्वरी।
कनकाभा काञ्चनाभा कमला कालकामिनी ॥ १०
कपालिनी कालरूपा कौमारी कुलपालिका।
कान्ता कुमारकान्ता च कारणा करिगामिनी ॥ ११
स्कन्दकान्ता कौलकान्ता कृतकर्मफलप्रदा।
कार्याकार्यप्रिया कक्षा कंसहन्त्री कुरुक्षया ॥ १२
कृष्णा कान्ता कालरात्रिः कर्णेषुधारिणीकरा।
कामहा कपिला काला कालिका कुरुकामिनी ॥१३
कुरुक्षेत्रप्रिया कौला कुन्ती कामातुरा कचा।
कलञ्जभक्षा कैकेयी काकपुच्छध्वजा कला ॥ १४
कमला कामलक्ष्मीश्च कमलाननकामिनी।
कामधेनुस्वरूपा च कामहा काममर्दिनी ॥ १५
कामदा कामपूज्या च कामातीता कलावती।
भैरवी कारणाढ्या च कैशोरी कुशलाङ्गला ॥ १६
कम्बुग्रीवा कृष्णनिभा कामराजप्रियाकृतिः।
कंकणालङ्कृता कङ्का केवला काकिनी किरा ॥ १७
किरातिनी काकभक्षा करालवदना कृशा।
केशिनी केशिहा केशा कासाम्बष्ठा करिप्रिया ॥ १८
कविनाथस्वरूपा च कटुवाणी कटुस्थिता।
कोटरा कोटराक्षी च करनाटकवासिनी ॥ १९

कटकस्था काष्ठसंस्था कन्दर्पा केतकीप्रिया ।
केलिप्रिया कम्बलस्था कालदैत्यविनाशिनी ।। २०

केतकीपुण्य(ष्प)शोभाढ्या कर्पूरापूर्णजिह्विका ।
कर्पूरा करका कोला कैलासगिरिवासिनी ।। २१

कुशासनस्था कादम्बा कुञ्जरेशी कुलानना ।
खर्वा खड्गधरा खड्गा खलहा खलबुद्धिदा ।। २२

खञ्जना खररूपा च क्षाराम्लतिक्तमध्यगा ।
खेलना खेटककरा खरवाक्या खरोत्कटा ।। २३

खद्योतचञ्चला खेला खद्योता खगवाहिनी ।
खेटकस्था खला खस्था खेचरी खेचरप्रिया ।। २४

खच्चरा खचरप्रेमा खलाढ्या खच्चरानना ।
खेच्चरेशी खरोग्रा च खेचरप्रियभाषिणी ।। २५

खर्जूरासवसंमत्ता खर्जूरफलभोगिनी ।
खातमध्यस्थिता खाता खाताम्बुपरिपूरिणी ।। २६

ख्यातिः ख्यातजलानन्दा खुलना खञ्जनागतिः ।
खल्वा खलतरा खारी खरोद्वेगनिकृन्तनी ।। २७

गगनस्था च गीता च गभीरनादिनी गया ।
गङ्गा गभीरा गौरी च गणनाथप्रिया गतिः ।। २८

गुरुभक्ता ग्वालि(ग्लानि)हीना गेहिनी गोपिनी गिरा ।
गौगणस्था गाणपत्या गिरिजा गिरिपूजिता ।। २९

गिरिकान्ता गणस्था च गिरिकन्या गणेश्वरी ।
गाधिराजसुता ग्रीवा गुर्वी गुर्व्यम्बशाङ्करी ।। ३०

गन्धर्वकामिनी गीता गायत्री गुणदा गुणा।
गुग्गुलुस्था गुरोः पूज्या गीतानन्दप्रकाशिनी।। ३१

गयासुरप्रिया गेहा गवाक्षजालमध्यगा।
गुरुकन्या गुरोः पत्नी गहना गुरुनागिनी।। ३२

गुल्फवायुस्थिता गुल्फा गर्दभा गर्दभप्रिया।
गुह्या गुह्यगणस्था च गरिमा गौरिका गुदा।। ३३

गुदोर्ध्वस्था च गलिता गणिका गोलका गला।
गान्धर्वी गाननगरी गन्धर्वगणपूजिता।। ३४

घोरनादा घोरमुखी घोरा धर्मनिवारिणी।
घनदा घनवर्णा च घनवाहनवाहना।। ३५

घर्घरध्वनिचपला घटा घटपटा घटा।
घटिता घटना घोना घनरूपा घनेश्वरी।। ३६

घुण्यातीता घर्घरा च घोराननविमोहिनी।
घोरनेत्रा घनरुचा घोरभैरवकन्यका।। ३७

घाता घातकहा घात्या घ्राणा घ्राणेशवायवी।
घोरान्धकारसंस्था च घसना घर्घरस्वना।। ३८

घोटकस्था घोटका च घोटकेश्वरवाहना।
घननीलमणिश्यामा घर्घरेश्वरकामिनी।। ३९

ङकारकूटसम्पन्ना ङकारचक्रगामिनी।
ङकारी ङसशा चैव ङीपनीता ङकारिणी।। ४०

चन्द्रमण्डलमध्यस्था चतुरा चारुहासिनी।
चारुचन्द्रमुखी चैव चलङ्गमगतिप्रिया।। ४१

चञ्चला चपला चण्डी चेकिताना चरुस्थिता।
चलिता चानना चार्वी चारुभ्रमरनादिनी ।। ४२
चौरहा चन्द्रनिलया चैन्द्री चन्द्रपुरःस्थिता।
चक्रकौला चक्ररूपा चक्रस्था चक्रसिद्धिदा ।। ४३
चक्रिणी चक्रहस्ता च चक्रनाथकुलप्रिया।
चक्राभेद्या चक्रकुला चक्रमण्डलशोभिता ।। ४४
चक्रेश्वरप्रिया चेला चेलाजिनकुशोत्तरा।
चतुर्वेदस्थिता चण्डा चन्द्रकोटिसुशीतला ।। ४५
चतुर्गुणा चन्द्रवर्णा चातुरी चतुरप्रिया।
चक्षुःस्था चक्षुर्वसतिश्चणका चणकप्रिया ।। ४६
चार्वङ्गी चन्द्रनिलया चलदम्बुजलोचना।
चर्वरीशा चारुमुखी चारुदन्ता चरस्थिता ।। ४७
चषकस्थासवा चेता चेतःस्था चैत्रपूजिता।
चाक्षुषी चन्द्रमलिनी चन्द्रहासमणिप्रभा ।। ४८
छलस्था छद्मरूपा च छत्रच्छाया छलस्थिता।
छलज्ञा छेश्वरा छाया छायाच्छिन्नशिवा छला ।। ४९
छत्रचामरशोभाढ्या छत्रिणां छत्रधारिणी।
छिन्नातीता छिन्नमस्ता छिन्नकेशा छलोद्भवा ।। ५०
छलहा छलदा छाया छन्ना छन्नजनप्रिया।
छलच्छिन्ना छद्मवती छद्मसद्मनिवासिनी ।। ५१
छद्मगन्धा छदाच्छन्ना छद्मवेशा छकारिका।
छगलारक्तभक्षा च छागलामोदरक्तपा ।। ५२

छगलण्डेशकन्या च छगलण्डकुमारिका।
छुरिका छुरिकाकारा छुरिकारिविनाशिनी॥ ५३

छिन्ननासा छिन्नहस्ता छोणलोला छलोदरी।
छलोद्वेगा छाङ्गबीजमाला छाङ्गवरप्रदा॥ ५४

जटिला जठरश्रीदा जरा जङ्गप्रिया जया।
जन्त्रस्था जीवहा जीवा जयदा जीवयोगदा॥ ५५

जयिनी जामलस्था च जामलोद्भवनायिका।
जामलप्रियकन्या च जामलेशी जवा(पा)प्रिया॥ ५६

जवा(पा)कोटिसमप्रख्या जवापुष्पप्रिया जना।
जलस्था जागविषया जरातीला जलस्थिता॥ ५७

जीवहा जीवकन्या च जनार्दन-कुमारिका।
जतुका जलपूज्या च जगन्नाथादिकामिनी॥ ५८

जीर्णाङ्गी जीर्णहीना च जीमूतात्यन्तशोभिता।
जामदा जमदा जृम्भा जृम्भणास्त्रादिधारिणी॥ ५९

जघन्या जारजप्रीता जगदानन्दवर्धिनी।
जमलार्जुनदर्पघ्नी जमलार्जुनभञ्जिनी॥ ६०

जयित्री जगदानन्दा जामलोल्लास-सिद्धिदा।
जपमाला जाप्यसिद्धिर्जपयज्ञ-प्रकाशिनी॥ ६१

जाम्बवती जाम्बवतः कन्यका जनवाजपा।
जवाहन्त्री जगद्बुद्धिर्जगत्कर्त्री जगद्गतिः॥ ६२

जननी जीवनी जाया जगन्माता जनेश्वरी।
झङ्कला झङ्कमध्यस्था झणत्कारस्वरूपिणी॥ ६३

झणद्झणद् वह्निरूपा झनना झन्दरीश्वरी।
झटिताक्षा झरा झञ्झा झर्झरा झरकन्यका॥ ६४
झणत्कारी झना झम्भा झकारमालयावृता।
झङ्कारी झर्जरी झल्ली झल्वेश्वरनिवासिनी॥ ६५
ञकारी ञकिराती च ञकारबीजमालिनी।
ञनयोऽन्ता ञकारान्ता ञकारपरमेश्वरी॥ ६६
ञान्तबीजपुटाकरा ञेकला ञैकगामिनी।
ञैकेनेला ञस्वरूपा ञहारा ञहरीतकी॥ ६७
टुन्टुनी टङ्कहस्ता च टान्तवर्गा टलावती।
टपला टापबालाख्या टङ्कारध्वनिरूपिणी॥ ६८
टलाती टाक्षरातीता टित्कारादिकुमारिका।
टाङ्कास्त्रधारिणी टाना टमोटार्णलभाषिणी॥ ६९
टङ्कारीविघना टाका टकाटकविमोहिनी।
टङ्कारधरनामाहा टिवीखेचरनादिनी॥ ७०
ठठङ्कारी ठाठरूपा ठकारबीजकारणा।
डमरूप्रियवाद्या च डामरस्था डबीजिका॥ ७१
डान्तवर्गा डमरुका डरस्था डोरडामरा।
डगराधा डलातीता डदारुकेश्वरी डुला॥ ७२
ढार्द्धनारीश्वरा ढामा ढकारी ढलना ढला।
ढकेस्था ढेश्वरसुता ढेमनाभावढोनना॥ ७३
णोमाकान्तेश्वरी णान्तवर्गस्था णतुनावती।
णनोमा णाङ्ककल्याणी णाक्षवी णाक्षबीजिका॥ ७४

तुलसी तन्तुसूक्ष्माख्या तारल्या तैलगन्धिका ।
तपस्या तापससुता तारिणी तरुणी तला ।। ७५

तन्त्रस्था तारकब्रह्मस्वरूपा तनुमध्यगा ।
तालभक्षा त्रिधामूर्तिस्तारका तैलभक्षिका ।। ७६

तारोग्रा तालमाला च तकरा तिन्तिडीप्रिया ।
तपसा तालसन्दर्भा तर्जयन्ती कुमारिका ।। ७७

तोकाचारा तलोद्वेगा तक्षका तक्षकप्रिया ।
तक्षकालङ्कृता तोषा तावद्रूपा तलप्रिया ।। ७८

तलास्र(स्त्र)धारिणी तापा तपसां फलदायिनी ।
तल्वल्वप्रहरातीता तलारिगणनाशिनी ।। ७९

तूला तौली तोलका च तलस्था तलपालिका ।
तरुणा तप्तबुद्धिस्था तप्तप्रधारिणी तपा ।। ८०

तन्त्रप्रकाशकरणी तन्त्रार्थदायिनी तथा ।
तुषारकिरणाङ्गी च तुषारांशु समप्रभा ।। ८१

तैलमार्गाभिसूता च तन्त्रसिद्धिफलप्रदा ।
ताम्रपर्णी ताम्रकेशा ताम्रपात्रप्रिया तमा ।। ८२

तमोगुणप्रिया तोला तक्षकारिनिवारिणी ।
तोषयुक्ता तमायाची तमषोढेश्वरप्रिया ।। ८३

तुलना तुल्यरुचिरा तुल्यबुद्धिस्त्रिधामतिः ।
तक्रभक्षा तालसिद्धिः तन्त्रस्था तन्त्रगामिनी ।। ८४

तलया तैलभा ताली तन्त्रगोपनतत्परा ।
तन्त्रमन्त्रप्रकाशा च त्रसरेणुस्वरूपिणी ।। ८५

त्रिंशदर्थप्रिया तुष्टा तुष्टिस्तुष्टजनप्रिया।
थाकारकूटदण्डीशा थदण्डीशप्रियाऽथवा ॥ ८६
थकाराक्षररूढाङ्गी थान्तवर्गार्थकारिका।
थांता थमीश्वरी थाका थकारबीजमालिनी ॥ ८७
दक्षदामप्रिया दोषा दोषजालवनाश्रिता।
दशा दशनघोरा च देवी दासप्रिया दया ॥ ८८
दैत्यहंत्री परा दैत्या दैत्यानां मर्दिनी दिशा।
दांता दांतप्रिया दामा दामन्ता दीर्घकेशिका ॥ ८९
दशनारक्तवर्णा च दरीगृहनिवासिनी।
देवमाता दुर्लभा च दीर्घाङ्गी दासकन्यका ॥ ९०
दशनश्रीर्दीर्घनेत्रा दीर्घनासा च दोषहा।
दमयन्ती दलस्था च द्वेषहन्त्री दशास्थिता ॥ ९१
दे(दै)शोषिका दिशिगता दशनास्त्रविनाशिनी।
दारिद्र्यहा दरिद्रस्था दरिद्रधनदायिनी ॥ ९२
दन्तुरा देशभाषा च देशस्था देशनायिका।
द्वेषरूपा द्वेषहन्त्री द्वेषारिगणमोहिनी ॥ ९३
दामोदरस्थाननादा दलानां बलदायिनी।
दिग्दर्शना दर्शनस्था दर्शनप्रियवादिनी ॥ ९४
दामोदरप्रिया दान्ता दामोदरकलेवरा।
द्रविणी द्राविणी दाशा दक्षकन्या दला दृढा ॥ ९५
दृढासना दासशक्तिर्द्वन्द्वयुद्धप्रकाशिनी।
दधिप्रिया दधिस्था च दधिमङ्गलकारिणी ॥ ९६

दर्पहा दर्पदा दर्पा दर्भपुण्यप्रिया दधिः ।
दर्भस्था द्रुपदसुता द्रौपदी द्रुपदप्रिया ।। ९७

धर्मचिन्ता धनाध्यक्षा धनेश्वरवरप्रदा ।
धनहा धनदा धन्वी धनुर्हस्ता धनुःप्रिया ।। ९८

धरणीवीर्यरूपा च धनस्था धनमोहिनी ।
धीरा धीराप्रिया धारा धरा धरणतत्परा ।। ९९

धान्यदा धान्यबीजा च धर्माधर्मस्वरूपिणी ।
धाराधरस्था धन्या च धर्मपुञ्जनिवासिनी ।। १००

धनाढ्यप्रियकन्या च धन्यलोकैश्च सेविता ।
धर्मार्थकाममोक्षाङ्गी धर्मार्थकाममोक्षदा ।। १०१

धराधरा धुरीणा च धवला धवलामुखी ।
धरा च धामरूपा च ध्रुवा ध्रौव्या ध्रुवप्रिया ।। १०२

धनेशी धारणाख्या च धर्मनिन्दाविनाशिनी ।
धर्मतेजोमयी धर्म्या धैर्याग्रगर्भमोहिनी ।। १०३

धारणा धौतवसना धत्तूरफलभोगिनी ।
नारायणी नरेन्द्रस्था नारायणकलेवरा ।। १०४

नरनारायणप्रीता नीता नयनमोहिता ।
नित्या नापितकन्या च नयनस्था नरप्रिया ।। १०५

नाम्नी नामप्रिया नारा नारायणसुता नरा ।
नवीननायकप्रीता नव्या नवफलप्रिया ।। १०६

नवीनकुसुमप्रीता नवीनानां ध्वजानुता ।
नारी निम्न(म्ब)स्थिता निन्दा नन्दिनी नन्दकारिका ।। १०७

नवपुष्पमहाप्रीता नवपुष्पसुगन्धिका।
नन्दनस्था नन्दकन्या नन्दमोक्षप्रदायिनी॥ १०७
नमिता नमभेदा च नाम्नार्तवनमोहिनी।
नवबुद्धिप्रिया ने(नै)का नाकस्था नागकन्यका॥ १०९
निन्दाहीना नवोल्लासा नाकस्थानप्रदायिनी।
निम्बचक्षुः (वृक्ष) स्थिता निंबा नानाक्षेत्रनिवासिनी॥ ११०
नाश्यातीता नीलवर्णा नीला नीलसरस्वती।
नभःस्था नायकप्रीता नायकप्रियकामिनी॥ १११
नववर्णा निराहारा निरीहाणां रजःप्रिया।
निम्ननाभिप्रभाकारा नरेन्द्रहस्तपूजिता॥ ११२
नलस्थिता नलप्रीता नलराजकुमारिका।
परेश्वरी परानन्दा परापरविभेदिका॥ ११३
परमा परच्चक्रस्था पार्वती पर्वतप्रिया।
परमेशी पर्वनानापुष्पमाल्यप्रिया परा॥ ११४
परा प्रिया प्रीतिदात्री प्रीता प्रथमकामिनी।
प्रथमा प्रथमप्रीता पुष्पगन्धप्रिया परा॥ ११५
पैष्टीपानरता पीना पीनस्तनसुशोभना।
परमानरता पुंसां पाशहस्ता पशुप्रिया॥ ११६
पललानन्दरसिका पलालधूमरूपिणी।
पलाशपुष्पसङ्काशा पलाशपुष्पमालिनी॥ ११७
प्रेत(म)भूता पद्ममुखी पद्मरागसुमानि(लि)नी।
पद्ममाला पापहरा पतिप्रेमविलासिनी॥ ११८

पञ्चाननमनोहारी पञ्चवक्त्रप्रकाशिनी।
फलमूलाशना फाली फलदा फाल्गुनप्रिया।। ११९

फलनाथप्रिया फल्ली फल्गुकन्या फलोन्मुखी।
फेत्कारीतन्त्रमुख्या च फेत्कारगणपूजिता।। १२०

फेरवी फेरवसुता फलभोगोद्भवा फला।
फलप्रिया फलासक्ता फाल्गुनानन्ददायिनी।। १२१

फालभोगोत्तरा फेला फुल्लाम्भोजनिवासिनी।
वासुदेवगृहस्था च वासवी वीरपूजिता।। १२२

विषभक्षा बुधसुधा ब्लुङ्कारी ल्बुवरप्रदा।
ब्राह्मी बृहस्पतिर्वाचा वाचस्पतिवरप्रदा।। १२३

वेदाचारी वेद्यपरा वसु(व्यास)वक्त्रस्थिता विभा।
बोधज्ञा वौषडाख्या च वंशीवदनपूजिता।। १२४

वज्रकान्ता वक्रगतिर्बदरीवंशवर्द्धिनी।
भारती भवरश्रीदा भवपत्नी भवात्मजा।। १२५

भवानी भाविनी भीमा भिषग्भाव्या भुविस्थिता।
भुर्भूवः स्वः स्वरूपा च भृशार्ता भेकनादिनी।। १२६

भीतिर्भङ्गप्रिया भङ्गा भङ्गहा भङ्गहारिणी।
भर्त्ता भगवती भाग्या भगीरथनमस्कृता।। १२७

भगमाला भूतनाथेश्वरी भार्गवपूजिता।
भृगुवंशा भीतिहरा भूमिर्भुजगहारिणी।। १२८

भालचन्द्रा भल्व(ल्ल)बाला भवभूतिविभूतिदा।
मकरस्था मत्तगतिर्मदमत्ता मदप्रिया।। १२९

मदिराष्टादशभुजा मदिरामत्तगामिनी।
मदिरासिद्धिदा मध्या मदान्तर्गतिसिद्धिदा ।। १३०
मीनभक्षा मीनरूपा मुद्रा मुद्गप्रिया मतिः।
मुशला मुक्तिदा मूर्ता मूकीकरणतत्परा ।। १३१
मूषार्ता मृगतृष्णा च मेषभक्षणतत्परा।
मैथुनानन्दसिद्धिश्च मैथुनानलसिद्धिदा ।। १३२
महालक्ष्मीर्भैरवी च महेन्द्रपीठनायिका।
मनःस्था माधवी मुख्या महादेवमनोरमा ।। १३३
यशोदा याचना यास्या यमराजप्रिया यमा।
यशोराशिविभूषाङ्गी यतिप्रेमकलावती ।। १३४
रमणी रामपत्नी च रिपुहा रीतिमध्यगा।
रुद्राणी रूपदा रूपा रूपसुन्दरधारिणी ।। १३५
रेतःस्था रेतः संप्रीता रेतःस्थाननिवासिनी।
रैन्द्रदेवसुता रेदा(रैन्द्रचा) रिपुवर्गान्तकप्रिया ।। १३६
रोमावलीन्द्रजननी रोमकूपजगत्पतिः।
रौप्यवर्णा रौद्रवर्णा रौप्यालङ्कारभूषणा। १३७
रङ्गिणी रङ्गरागस्था रणवह्निकुलेश्वरी।
लक्ष्मीर्लांगलहस्ता च लाङ्गलीकुलकामिनी ।। १३८
लिपिरूपा लीढपादा लतातन्तुस्वरूपिणी।
लिम्पती लेलिहा लोला लोमशप्रियसिद्धिदा ।। १३९
लौकिकी लोकसिद्धिर्हि लङ्कानाथकुमारिका।
लक्ष्मीहीना लक्ष(क्ष्म)णा च लप्रिया लार्णमध्यगा ।। १४०

विवासा वसनावेशा विवस्वत्कुलकन्यका ।

वातस्था वातरूपा च वेत्रमध्यनिवासिनी ।। १४१

श्मशानभूमिमध्यस्था श्मशानसाधनप्रिया ।

शवस्था शरसिद्धार्था शववक्षसि शोभिता ।। १४२

शरणागतपाल्या च शिवकन्या शिवप्रिया ।

षट्चक्रभेदिनी षोढान्यासजालदृढानना ।। १४३

सन्ध्या सरस्वती सुन्धा सूर्यगा शारदा सती ।

हरिप्रिया हरा हाला लावण्यस्था क्षमा क्षुधा ।। १४४

क्षेत्रज्ञा सिद्धिदात्री च अम्बिका चापराजिता ।

आद्या इन्द्रप्रिया ईशा उमा ऊढा ऋतुप्रिया ।। १४५

सुतुण्डा स्वरबीजान्ता हरिवेशादिसिद्धिदा ।

एकादशीव्रतस्था च हौन्द्री ह्यौषधिसिद्धिदा ।। १४६

औपकारी अंशरूपा अस्त्रबीजप्रकाशिनी ।

इत्येतत्कामुकीनाथ कुमारीणां सुमङ्गलम् ।। १४७

त्रैलोक्यफलदं नित्यमष्टोत्तरसहस्रकम् ।

महास्तोत्रं धर्मसारं धनधान्यसुतप्रदम् ।। १४८

सर्वविद्याफलोल्लासं भक्तिमान् यः पठेत्सुधीः ।

सर्वत्र जयमाप्नोति वीराणां वल्लभो भवेत् ।। १४९

सर्वे देवा वशं यान्ति वशीभूताश्च मानवाः ।

तस्य शान्तिर्भवेत्क्षिप्रं कन्यास्तोत्रं पठेत्ततः ।

एकवारं पठेन्मन्त्री धर्मकामार्थमोक्षभाक् ।। १५०

——रुद्रयामलतः

——*——

# कुमारीसहस्रनामावलिः

ओं। कुमार्यै नमः। कौशिक्यै। काल्यै। कुरुकुल्लायै। कुलेश्वर्यै। कनकाभायै। काञ्चनाभायै। कमलायै। कालकामिन्यै। कपालिन्यै। कालरूपायै। कौमार्यै। कुलपालिकायै। कान्तायै। कुमारकान्तायै। कारणायै। करिगामिन्यै। स्कन्दकान्तायै। कौलकान्तायै। कृतकर्मफलप्रदायै नमः। २०

ओं कार्याकार्यप्रियायै नमः। कक्षायै। कंसहन्त्र्यै। कुरुक्षयायै। कृष्णायै। कान्तायै। कालरात्र्यै। कर्णेषुधारिणीकरायै। कामहायै। कपिलायै। कालायै। कालिकायै। कुरुकामिन्यै। कुरुक्षेत्रप्रियायै। कौलायै। कुन्त्यै। कामातुरायै। कचायै। कलञ्जभक्षायै। कैकेय्यै नमः। ४०

ओं काकपुच्छध्वजायै नमः। कलायै। कमलायै। कामलक्ष्म्यै। कमलाननकामिन्यै। कामधेनुस्वरूपायै। कामहायै। काममर्दिन्यै। कामदायै। कामपूज्यायै। कामातीतायै। कलावत्यै। भैरव्यै। कारणाढ्यायै। कैशोर्यै। कुशलाङ्गलायै। कम्बुग्रीवायै। कृष्णनिभायै। कामराजप्रियाकृत्यै। कङ्कणालङ्कृतायै नमः। ६०

ओं कङ्कायै नमः। केवलायै। काकिन्यै। किरायै। किरातिन्यै। काकभक्षायै। करालवदनायै। कृशायै। केशिन्यै। केशिहायै। केशायै। कासांबष्ठायै। करिप्रियायै। कविनाथस्वरूपाय। कटुवाण्यै। कटुस्थितायै। कोटरायै। कोटराक्ष्यै। करनाटक-वासिन्यै। कटकस्थायै नमः। ८०

ओं काष्ठसंस्थायै नमः। कन्दर्पायै। केतकीप्रियायै। केलिप्रियायै। कम्बलस्थायै। कालदैत्यविनाशिन्यै। केतकीपुण्य-(ष्प)शोभाढ्यायै। कर्पूरापूर्णजिह्विकायै। कर्पूरायै। करकायै।

कोलायै । कैलासगिरिवासिन्यै । कुशासनस्थायै । कादम्बायै । कुञ्जरेश्यै । कुलाननायै । खर्वायै । खड्गधरायै । खड्गायै । खलहायै नमः । १००

ओं खलबुद्धिदायै नमः । खञ्जनायै । खररूपायै । क्षाराम्लतिक्तमध्यगायै । खेलनायै । खेटककरायै । खरवाक्यायै । खरोत्कटायै । खद्योतचञ्चलायै । खेलायै । खद्योतायै । खगवाहिन्यै । खेटकस्थायै । खलायै । खस्थायै । खेचर्यै । खेचरप्रियायै । खचरायै । खचरप्रेमायै । खलाढ्यायै नमः । १२०

ओं खचराननायै नमः । खेचरेश्यै । खरोग्रायै । खेचरप्रियभाषिण्यै । खर्जूरासवसंमत्तायै । खर्जूरफलभोगिन्यै । खातमध्यस्थितायै । खातायै । खाताम्बुपरिपूरण्यै । ख्यात्यै । ख्यातजलानन्दायै । खुलनायै । खञ्जनागत्यै । खल्वायै । खलतरायै । खार्यै । खरोद्वेगनिकृन्तन्यै । गगनस्थायै । गीतायै । गभीरनादिन्यै नमः । १४०

ओं गयायै नमः । गङ्गायै । गभीरायै । गौर्यै । गणनाथप्रियायै । गत्यै । गुरुभक्तायै । ग्वालि(ग्लानि)हीनायै । गेहिन्यै । गोपिन्यै । गिरायै । गौगणस्थायै । गाणपत्यायै । गिरिजायै । गिरिपूजितायै । गिरिकान्तायै । गणस्थायै । गिरिकन्यायै । गणेश्वर्यै । गाधिराजसुतायै नमः । १६०

ओं ग्रीवायै नमः । गुर्व्यै । गुर्व्यम्बशाङ्कर्यै । गन्धर्वकामिन्यै । गीतायै । गायत्र्यै । गुणदायै । गुणायै । गुग्गुलुस्थायै । गुरोः पूज्यायै । गीतानन्दप्रकाशिन्यै । गयासुरप्रियायै । गेहायै । गवाक्षजालमध्यगायै । गुरुकन्यायै । गुरोः पत्न्यै । गहनायै । गुरुनागिन्यै । गुल्फवायुस्थितायै । गुल्फायै नमः । १८०

ओं गर्दभायै नमः। गर्दभप्रियायै। गुह्यायै। गुह्यगणस्थायै। गरिम्णे। गौरिकायै। गुदायै। गुदोर्ध्वस्थायै। गलितायै। गणिकायै । गोलकायै। गलायै। गान्धर्व्यै। गाननगर्यै। गन्धर्वगणपूजितायै। घोरनादायै। घोरमुख्यै। घोरायै। घर्मनिवारिण्यै। घनदायै नमः। २००

ओं घनवर्णायै नमः। घनवाहनवाहनायै। घर्घरध्वनिच-पलायै । घटायै। घटपटाघटायै। घटितायै। घटनायै। घोनायै। घनरूपायै। घनेश्वर्यै। घुण्यातीतायै। घर्घरायै। घोराननविमोहिन्यै । घोरनेत्रायै। घनरुचायै। घोरभैरवकन्यकायै। घातायै। घातकहायै। घात्यायै। घ्राणायै नमः। २२०

ओं घ्राणेशवायव्यै नमः। घोरान्धकारसंस्थायै। घसनायै। घर्घरस्वनायै । घोटकस्थायै । घोटकायै । घोटकेश्वरवाहनायै । घननीलमणिश्यामायै । घर्घरेश्वरकामिन्यै । ङकारकूटसंपन्नायै । ङकारचक्रगामिन्यै। ङकायै। ङसशायै। ङीपनीतायै। ङकारिण्यै। चन्द्रमण्डलमध्यस्थायै। चतुरायै। चारुहासिन्यै। चारुचन्द्रमुख्यै। चलङ्गमपतिप्रियायै नमः। २४०

ओं चञ्चलायै नमः । चपलायै । चण्डच्यै । चेकितानायै । चरुस्थितायै। चलितायै। चाननायै। चार्व्यै। चारुभ्रमरनादिन्यै। चौरहायै। चन्द्रनिलयायै। चैन्द्र्यै। चन्द्रपुरःस्थितायै। चक्रकौलायै । चक्ररूपायै। चक्रस्थायै। चक्रसिद्धिदायै। चक्रिण्यै। चक्रहस्तायै। चक्रनाथकुलप्रियायै नमः। २६०

ओं चक्राभेद्यायै नमः। चक्रकुलायै। चक्रमण्डलशोभितायै। चक्रेश्वरप्रियायै। चेलायै। चेलाजिनकुशोत्तरायै। चतुर्वेदस्थितायै। चण्डायै। चन्द्रकोटिसुशीतलायै। चतुर्गुणायै। चन्द्रवर्णायै। चातुर्यै ।

चतुरप्रियायै। चक्षुःस्थायै। चक्षुर्वसत्यै। चणकायै। चणकप्रियायै। चार्वङ्ग्यै। चन्द्रनिलयायै। चलदम्बुजलोचनायै नमः। २८०

ओं चर्वरीशायै नमः। चारुमुख्यै। चारुदन्तायै। चरस्थितायै। चषकस्थासवायै। चेतायै। चेतःस्थायै। चैत्रपूजितायै। चाक्षुष्यै। चन्द्रमलिन्यै। चन्द्रहासमणिप्रभायै। छलस्थायै। छद्मरूपायै। छत्रछायायै। छलस्थितायै। छलज्ञायै। छेश्वरायै। छायायै। छायाच्छिन्नशिवायै। छलायै नमः। ३००

ओं छत्रचामरशोभाढ्यायै नमः। छत्रिणां छत्रधारिण्यै। छिन्नातीतायै। छिन्नमस्तायै। छिन्नकेशायै। छलोद्भवायै। छलहायै। छलदायै। छायायै। छन्नायै। छन्नजनप्रियायै। छलच्छिन्नायै। छद्मवत्यै। छद्मसद्मनिवासिन्यै। छद्मगन्धायै। छदाच्छन्नायै। छद्मवेशायै। छकारिकायै। छगलारक्तभक्षायै। छगलामोदरक्तपायै नमः। ३२०

ओं छगलण्डेशकन्यायै नमः। छगलण्डकुमारिकायै। छुरिकायै। छुरिकाकारायै। छुरिकारिविनाशिन्यै। छिन्ननासायै। छिन्नहस्तायै। छोणालोलायै। छलोदर्यै। छलोद्वेगायै। छाङ्गबीजमालायै। छाङ्गवरप्रदायै। जटिलायै। जठरश्रीदायै। जरायै। जङ्गप्रियायै। जयायै। जन्त्रस्थायै। जीवहायै। जीवायै नमः। ३४०

ओं जयदायै नमः। जीवयोगदायै। जयिन्यै। जामलस्थायै। जामलोद्भवनयिकायै। जामलप्रियकन्यायै। जामलेश्यै। जवा-(पा)प्रियायै। जवा(पा)कोटिसमप्रख्यायै। जवा(पा)पुष्प-प्रियायै। जनायै। जलस्थायै। जागविषयायै। जरातीतायै। जलस्थितायै। जीवहायै। जीवकन्यायै। जनार्दनकुमारिकायै। जतुकायै। जलपूज्यायै नमः। ३६०

ओं जगन्नाथादिकामिन्यै नमः । जीर्णाङ्ग्यै । जीर्णहीनायै । जीमूतात्यन्तशोभितायै । जामदायै । जमदायै । जृम्भायै । जृम्भणास्त्रादिधारिण्यै । जघन्यायै । जारजप्रीतायै । जगदानन्द-वर्धिन्यै । जमलार्जुनदर्पघ्न्यै । जमलार्जुनभञ्जिन्यै। जयिन्यै । जगदानन्दायै । जामलोल्लाससिद्धिदायै । जपमालायै । जाप्य-सिद्ध्यै । जपयज्ञप्रकाशिन्यै । जाम्बवत्यै नमः । ३८०

ओं जाम्बवतः कन्यकायै नमः । जनवाजपायै । जवाहन्त्र्यै । जगद्बुद्ध्यै । जगत्कर्त्र्यै । जगद्वत्यै । जनन्यै । जीवन्यै । जायायै । जगन्मात्रे । जनेश्वर्यै । झंकलायै । झंकमध्यस्थायै । झणत्कार-स्वरूपिण्यै । झणज्झणद्बह्लिरूपायै । झननायै । झन्दरीश्वर्यै । झटिताक्षायै । झरायै । झञ्झायै नमः । ४००

ओं झर्झरायै नमः । झरकन्यकायै । झणत्कार्यै । झनायै । झन्नायै । झकारमालयावृतायै । झङ्कार्यै । झर्झर्यै । झल्ल्यै । झल्वेश्वरनिवासिन्यै । ञकार्यै । ञकिरात्यै । ञकारबीजमालिन्यै । ञनयोऽन्तायै । ञकारान्तायै । ञकारपरमेश्वर्यै । ञान्तबीजपुटा-कारायै । ञेकलायै । ञैकगामिन्यै । ञैकेनेलायै नमः । ४२०

ओं ञस्वरूपायै नमः । ञहारायै । ञहरीतक्यै । टुन्टुन्यै । टङ्कहस्तायै । टान्तवर्गायै । टलावत्यै । टपलायै । टापबालाख्यायै । टङ्कारध्वनिरूपिण्यै । टलात्यै । टाक्षरातीतायै । टित्कारादि कुमारिकायै । टाङ्कास्त्रधारिण्यै । टानायै । टमोटार्णलभाषिण्यै । टङ्कारीविघनायै । टाकायै । टकाटकविमोहिन्यै । टङ्कारधरनामाहायै नमः । ४४०

ओं टिवीखेचरनादिन्यै नमः । ठठङ्कार्यै । ठाठरूपायै । ठकारबीजकारणायै । डमरूप्रियवाद्यायै । डामरस्थायै ।

डबीजिकायै । डान्तवर्गायै । डमरुकायै । डरस्थायै । डोरडामरायै । डगराधार्यै । डलातीतायै । डदारुकेश्वर्यै । डुतायै । ढार्धनारीश्वरायै । ढामायै । ढक्कार्यै । ढलनायै । ढलायै नमः । ४६०

ओं ढकेस्थायै नमः । ढेश्वरसुतायै । ढेमनाभावढोननायै । णोमाकान्तेश्वर्यै । णान्तवर्गस्थायै । णतुनावत्यै । णनोमायै । णाङ्ककल्याण्यै । णाक्षण्यै । णाक्षबीजिकायै । तुलस्यै । तन्तुसूक्ष्माख्यायै । तारल्यायै । तैलगन्धिकायै । तपस्यायै । तापससुतायै । तारिण्यै । तरुण्यै । तलायै । तन्त्रस्थायै नमः । ४८०

ओं तारकब्रह्मस्वरूपायै । तनुमध्यमायै । तालभक्षायै । त्रिधामूर्त्यै । तारकायै । तैलभक्षिकायै । तारोग्रायै । तालमालायै । तकारायै । तिन्तिडीप्रियायै । तपसातालसन्दर्भायै । तर्जयन्त्यै कुमारिकायै । तोकाचारायै । तलोद्वेगायै । तक्षकायै । तक्षकप्रियायै । तक्षकालङ्कृतायै । तोषायै । तावद्रूपायै । तलप्रियायै नमः । ५००

ओं तलास्त्रधारिण्यै नमः । तापायै । तपसां फलदायिन्यै । तल्वल्वप्रहरातीतायै । तलारिगणनाशिन्यै । तूलायै । तौल्यै । तोलकायै । तलस्थायै । तलपालिकायै । तरुणायै । तप्तबुद्धिस्थायै । तप्तप्रधारिण्यै । तपायै । तन्त्रप्रकाशकरण्यै । तन्त्रार्थदायिन्यै । तुषारकिरणाङ्ग्यै । तुषारांशुसमप्रभायै । तैलमार्गाभिभूतायै । तन्त्रसिद्धिफलप्रदायै नमः । ५२०

ओं ताम्रपर्ण्यै नमः । ताम्रकेशायै । ताम्रपात्रप्रियायै । तमायै । तमोगुणप्रियायै । तोलायै । तक्षकारिनिवारिण्यै । तोषयुक्तायै । तमायाच्यै । तमषोढेश्वरप्रियायै । तुलनायै । तुल्यरुचिरायै । तुल्यबुद्ध्यै । त्रिधामत्यै । तक्रभक्षायै । तालसिद्ध्यै । तन्त्रस्थायै । तन्त्रगामिन्यै । तलयायै । तैलभायै नमः । ५४०

ओं ताल्यै नमः । तन्त्रगोपनतत्परायै । तन्त्रमन्त्रप्रकाशायै । त्रसरेणुस्वरूपिण्यै । त्रिंशदर्थप्रियायै । तुष्टायै । तुष्ट्यै । तुष्टजन-प्रियायै । थाकारकूटदण्डीशायै । थदण्डीशप्रियायै । थकाराक्षर-रूढाङ्ग्यै । थान्तवर्गार्थकारिकायै । थान्तायै । थमीश्वर्यै । थाकायै । थकारबीजमालिन्यै । दक्षदामप्रियायै । दोषायै । दोषजालवना-श्रितायै । दशायै नमः । ५६०

ओं दशनघोरायै नमः । देव्यै । दासप्रियायै । दयायै । दैत्यहन्त्र्यै । परायै दैत्यायै । दैत्यानां मर्दिन्यै । दिशायै । दान्तायै । दान्तप्रियायै । दाम्नायै । दामन्तायै । दीर्घकेशिकायै । दशनारक्तवर्णायै । दरीगृहनिवासिन्यै । देवमात्रे । दुर्लभायै । दीर्घाङ्ग्यै । दासकन्यकायै । दशनश्रियै नमः । ५८०

ओं दीर्घनेत्रायै नमः । दीर्घनासायै । दोषहायै । दमयन्त्यै । दलस्थायै । द्वेषहन्त्र्यै । दशास्थितायै । दे(दै)शोषिकायै । दिशिगतायै । दशनास्त्रविनाशिन्यै । दारिद्र्यहायै । दरिद्रस्थायै । दरिद्रधनदायिन्यै । दन्तुरायै । देशभाषायै । देशस्थायै । देशनायिकायै । द्वेषरूपायै । द्वेषहन्त्र्यै । द्वेषारिगणमोहिन्यै नमः । ६००

ओं दामोदरस्थाननादायै नमः । दलानां बलदायिन्यै । दिग्दर्शनायै । दर्शनस्थायै । दर्शनप्रियवादिन्यै । दामोदरप्रियायै । दान्तायै । दामोदरकलेवरायै । द्रविण्यै । द्राविण्यै । दाशायै । दक्षकन्यायै । दलायै । दृढायै । दृढासनायै । दासशक्त्यै । द्वन्द्वयुद्धप्रकाशिन्यै । दधिप्रियायै । दधिस्थायै । दधिमङ्गलकारिण्यै नमः । ६२०

ओं दर्पहायै नमः । दर्पदायै । दर्पायै । दर्भपुण्यप्रियायै । दध्यै । दर्भस्थायै । द्रुपदसुतायै । द्रौपद्यै । द्रुपदप्रियायै । धर्मचिन्तायै । धनाध्यक्षायै । धनेश्वरवरप्रदायै । धनहायै । धनदायै । धन्व्यै । धनुर्हस्तायै । धनुःप्रियायै । धरणीवीर्यरूपायै । धनस्थायै । धनमोहिन्यै नमः । ६४०

ओं धीरायै नमः । धीराप्रियायै । धारायै । धरायै । धरणतत्परायै । धान्यदायै । धान्यबीजायै । धर्माधर्मस्वरूपिण्यै । धाराधरस्थायै । धन्यायै । धर्मपुञ्जनिवासिन्यै । धनाढ्यप्रिय-कन्यायै । धन्यलोकैश्च सेवितायै । धर्मार्थकाममोक्षाङ्ग्यै । धर्मार्थकाममोक्षदायै । धराधरायै । धुरीणायै । धवलायै । धवलामुख्यै । धरायै नमः । ६६०

ओं धामरूपायै नमः । ध्रुवायै । ध्रौव्यायै । ध्रुवप्रियायै । धनेश्यै । धारणाख्यायै । धर्मनिन्दाविनाशिन्यै । धर्मतेजोमय्यै । धर्म्यायै । धैर्याग्रगर्भमोहिन्यै । धारणायै । धौतवसनायै । धत्तूरफलभोगिन्यै । नारायण्यै । नरेन्द्रस्थायै । नारायणकलेवरायै । नरनारायणप्रीतायै । नीतायै । नयनमोहितायै । नित्यायै नमः । ६८०

ओं नापितकन्यायै नमः । नयनस्थायै । नरप्रियायै । नाङ्ग्यै । नामप्रियायै । नारायै । नारायणसुतायै । नरायै । नवीननायक-प्रीतायै । नव्यायै । नवफलप्रियायै । नवीनकुसुमप्रीतायै । नवीनानां ध्वजानुगायै । नार्यै । (निम्न(म्ब)स्थितायै । निन्दायै । नन्दिन्यै । नन्दकारिकायै । नवपुष्पमहाप्रीतायै । नवपुष्पसुगन्धिकायै नमः । ७००

ओं नन्दनस्थायै नमः । नन्दकन्यायै । नन्दमोक्षप्रदायिन्यै । नमितायै । नमभेदायै । नाम्नाऽऽर्तवनमोहिन्यै । नवबुद्धिप्रियायै ।

ने(नै)कायै । नाकस्थायै । नागकन्यकायै । निन्दाहीनायै । नवोल्लासायै ।नाकस्थानप्रदायिन्यै। निम्बचक्षुः(वृक्ष)स्थितायै। निम्बायै । नानाक्षेत्रनिवासिन्यै । नाम्थ्यातीतायै । नीलवर्णायै । नीलायै ।नीलसरस्वत्यै नमः। ७२०

ओं नभःस्थायै नमः। नायकप्रीतायै। नायकप्रियकामिन्यै। नववर्णायै । निराहारायै । निरीहाणां रजः प्रियायै । निम्ननाभि प्रभाकारायै । नरेन्द्रहस्तपूजितायै । नलस्थितायै । नलप्रीतायै । नलराजकुमारिकायै। परेश्वर्यै। परानन्दायै। परापरविभेदिकायै। परमायै । परचक्रस्थायै । पार्वत्यै । पर्वतप्रियायै । परमेश्यै । पर्वनानापुष्पमाल्यप्रियायै। ७४०

ओं परायै नमः । परायै प्रियायै । प्रीतिदात्र्यै । प्रीतायै । प्रथमकामिन्यै। प्रथमायै। प्रथमप्रीतायै। पुष्पगन्धप्रियायै परायै। पीनायै । पैष्टीपानरतायै । पीनस्तनसुशोभनायै । पुंसां परमान-रतायै ।पाशहस्तायै। पशुप्रियायै। पललानन्दरसिकायै। पलाल-धूमरूपिण्यै । पलाशपुष्पसंकाशायै । पलाशपुष्पमालिन्यै । प्रेत(म)भूतायै। पद्ममुख्यै नमः । ७६०

ओं पद्मरागसुमानि(लि)न्यै नमः। पद्ममालायै। पापहरायै। पतिप्रेमविलासिन्यै । पश्चाननमनोहार्यै । पञ्चवक्त्रप्रकाशिन्यै । फलमूलाशनायै। फाल्यै। फलदायै। फाल्गुनप्रियायै। फलनाथ-प्रियायै । फल्ल्यै । फल्गुकन्यायै । फलोन्मुख्यै । फेत्कारीतन्त्र-मुख्यायै । फेत्कारगणपूजितायै । फेरव्यै । फेरवसुतायै । फल-भोगोद्भवायै। फलायै नमः । ७८०

ओं फलप्रियायै नमः। फलासक्तायै। फाल्गुनानन्ददायिन्यै। फालभोगोत्तरायै। फेलायै। फुल्लांभोजनिवासिन्यै। वासुदेवगृह-

स्थायै । वासव्यै । वीरपूजितायै । विषभक्षायै । बुधसुधायै । ब्लुंकार्यै । ब्लुवरप्रदायै । ब्राह्मयै । वाचा बृहस्पत्यै । वाचस्पति-वरप्रदायै । वेदाचार्यै । वेद्यपरायै । वसु(व्यास)वक्त्रस्थितायै । विभायै नमः । ८००

ओं बोधज्ञायै नमः । वौषडाख्यायै । वंशीवदनपूजितायै । वज्रकान्तायै । वक्रगत्यै । बदरीवंशवर्धन्यै । भारत्यै । भवरश्रीदायै । भवपत्न्यै । भवात्मजायै । भवान्यै । भाविन्यै । भीमायै । भिषजे । भाव्यायै । भुविस्थितायै । भूर्भुवःस्वःस्वरूपायै । भृशार्तायै । भेकनादिन्यै । भीत्यै नमः । ८२०

ओं भङ्गप्रियायै नमः । भङ्गायै । भङ्गहायै । भङ्गहारिण्यै । भर्त्रे । भगवत्यै । भाग्यायै । भगीरथनमस्कृतायै । भगमालायै । भूतनाथेश्वर्यै । भार्गवपूजितायै । भृगुवंशायै । भीतिहरायै । भूम्यै । भुजगहारिण्यै । भालचन्द्रायै । भल्व(ल्ल)बालायै । मवभूतिविभूतिदायै । मकरस्थायै । मत्तगत्यै नमः । ८४०

ओं मदमत्तायै नमः । मदप्रियायै । मदिराष्टादशभुजायै । मदिरामत्तगामिन्यै । मदिरासिद्धिदायै । मध्यायै । मदान्तर्गति-सिद्धिदायै । मीनभक्षायै । मीनरूपायै । मुद्रायै । मुद्गप्रियायै । मत्यै । मुशलायै । मुक्तिदायै । मूर्तायै । मूकीकरणतत्परायै । मूषार्तायै । मृगतृष्णायै । मेषभक्षणतत्परायै । मैथुनानन्दसिद्ध्यै नमः । ८६०

ओं मैथुनानलसिद्धिदायै नमः । महालक्ष्मीभैरव्यै । महेन्द्र-पीठनायिकायै । मनःस्थायै । माधव्यै । मुख्यायै । महादेव मनो रमायै । यशोदायै । याचनायै । यास्यायै । यमराजप्रियायै । यमायै । यशोराशिविभूषाङ्ग्यै । यतिप्रेमकलावत्यै । रमण्यै । रामपत्न्यै । रिपुहायै । रीतिमध्यगायै । रुद्राण्यै । रूपदायै नमः । ८८०

ओं रूपायै नमः । रूपसुन्दरधारिण्यै । रेतःस्थायै । रेतःसंप्रीतायै । रेतःस्थाननिवासिन्यै । रैन्द्रादेवसुतायै । रेदायै-(रैन्द्रयायै) । रिपुवर्गान्तकप्रियायै । रोमावलीन्द्रजनन्यै । रोमकूप-जगत्पत्यै । रौप्यवर्णायै । रौद्रवर्णायै । रौप्यालङ्कारभूषणायै । रङ्गिण्यै । रङ्गरागस्थायै । रणवह्निकुलेश्वर्यै । लक्ष्म्यै । लाङ्गलह-स्तायै । लाङ्गलीकुलकामिन्यै । लिपिरूपायै नमः । ९००

ओं लीढपादायै नमः । लतातन्तुस्वरूपिण्यै । लिंपत्यै। लेलिहायै । लोलायै । लोमशप्रियसिद्धिदायै । लौकिक्यै । लोकसिद्ध्यै । लङ्कानाथकुमारिकायै । लक्ष्मीहीनायै । लक्ष-(क्ष्म)णायै । लप्रियायै । लार्णमध्यगायै । विवासायै । वसना-वेशायै । विवस्वत्कुलकन्यकायै । वातस्थायै । वातरूपायै । वेत्रमध्यनिवासिन्यै । श्मशानभूमिमध्यस्थायै नमः । ९२०

ओं श्मशानसाधनप्रियायै नमः । शवस्थायै । शरसिद्धार्थायै । शववक्षसि शोभितायै । शरणागतपाल्यायै । शिवकन्यायै । शिवप्रियायै । षट्चक्रभेदिन्यै । षोढान्यासजालदृढाननायै । सन्ध्यायै । सरस्वत्यै । सुन्धा(ध्या)यै । सूर्यगायै । शारदायै । सत्यै । हरिप्रियायै । हरायै । हालायै । लावण्यस्थायै । क्षमायै नमः । ९४०

ओं क्षुधायै नमः । क्षेत्रज्ञायै । सिद्धिदात्र्यै । अम्बिकायै । अपराजितायै । आद्यायै । इन्द्रप्रियायै । ईशायै । उमायै । ऊढायै । ऋतुप्रियायै । सुतुण्डायै । स्वरबीजान्तायै । हरिवेशादि सिद्धिदायै । एकादशीव्रतस्थायै । ऐन्द्र्यै । ओषधिसिद्धिदायै । औपकार्यै । अंशरूपायै । अस्त्रबीजप्रकाशिन्यै नमः । ९६०

—*—

॥ श्री ॥

# गङ्गासहस्रनामस्तोत्रम्

(अकारादिक्षकारान्त नामघटितम्)

अगस्त्य उवाच—

विना स्नानेन गङ्गायां नृणां जन्म निरर्थकम्।
उपायान्तरमस्त्यन्यद् येन स्नानफलं लभेत्॥ १

अशक्तानां च पङ्गूनामालस्योपहतात्मनाम्।
दूरदेशान्तरस्थानां गङ्गास्नानं कथं भवेत्॥ २

दानं वाथ व्रतं वाथ मन्त्रः स्तोत्रं जपोऽथवा।
तीर्थान्तराभिषेको वा देवतोपासनं तु वा॥ ३

यद्यस्ति किंचित् षड्वक्त्र गङ्गास्नानफलप्रदम्।
विधानान्तरमात्रेण तद् वद प्रणताय मे॥ ४

त्वत्तो न वेद स्कन्दान्यो गङ्गागर्भसमुद्भव।
परं स्वर्गतरङ्गिण्यां महिमानं महामते॥ ५

स्कन्द उवाच—

सन्ति पुण्यजलानीह सरांसि सरितो मुने।
स्थाने स्थाने च तीर्थानि जितात्माध्युषितानि च॥ ६

दृष्टप्रत्यकारीणि महामहिमभाञ्ज्यपि।
परं स्वर्गतरङ्गिण्याः कोट्यंशोऽपि न तत्र वै॥ ७

अनेनैवानुमानेन बुध्यस्व कलशोद्भव।
दध्रे गङ्गोत्तमाङ्गेन देवदेवेन शम्भुना॥ ८

स्नानकालेऽन्यतीर्थेषु जप्यते जाह्नवी जनैः ।
विना विष्णुपदीं क्वान्यत् समर्थमघमोचने ।। ९

गङ्गास्नानफलं ब्रह्मन् गङ्गायामेव लभ्यते ।
यथा द्राक्षाफलस्वादो द्राक्षायामेव नान्यतः ।। १०

अस्त्युपाय इह त्वेकः स्याद् येनाविकलं फलम् ।
स्नानस्य देवसरितो महागुह्यतमो मुने ।। ११

शिवभक्ताय शान्ताय विष्णुभक्तिपराय च ।
श्रद्धालवे त्वास्तिकाय गर्भवासमुमुक्षवे ।। १२

कथनीयं न चान्यस्य कस्यचित् केनचित् क्वचित् ।
इदं रहस्यं परमं महापातकनाशनम् ।। १३

महाश्रेयस्करं पुण्यं मनोरथकरं परम् ।
द्युनदीप्रीतिजनकं शिवसन्तोषसंततिः ।। १४

नाम्नां सहस्रं गङ्गायाः स्तवराजेषु शोभनम् ।
जप्यानां परमं जप्यं वेदोपनिषदां समम् ।। १५

जपनीयं प्रयत्नेन मौनिना वाचकं विना ।
शुचिस्थानेषु शुचिना सुस्पष्टाक्षरमेव च ।। १६

ओं नमो गङ्गादेव्यै

ओङ्काररूपिण्यजराऽतुलाऽनन्ताऽमृतस्रवा ।
अत्युदाराऽभयाऽशोकाऽलकनन्दाऽमृताऽमला ।। १७

अनाथवत्सलाऽमोघाऽपांयोनिरमृतप्रदा ।
अव्यक्तलक्षणाऽक्षोभ्याऽनवच्छिन्नाऽपराऽजिता ।। १८

अनाथनाथाऽभीष्टार्थसिद्धिदाऽनङ्गवर्द्धिनी ।
अणिमादिगुणाऽधाराऽग्रगण्याऽलीकहारिणी ।। १९

अचिन्त्यशक्तिरनघाऽद्भुतरूपाऽघहारिणी।
अद्रिराजसुताऽष्टाङ्गयोगसिद्धिप्रदाऽच्युता॥ २०
अक्षुण्णशक्तिरसुदाऽनन्ततीर्थाऽमृतोदका।
अनन्तमहिमाऽपाराऽनन्तसौख्यप्रदाऽन्नदा॥ २१
अशेषदेवतामूर्तिरघोराऽमृतरूपिणी।
अविद्याजालशमनी ह्यप्रतर्क्यगतिप्रदा॥ २२
अशेषविघ्नसंहर्त्री त्वशेषगुणगुम्फिता।
अज्ञानतिमिरज्योतिरनुग्रहपरायणा॥ २३
अभिरामाऽनवद्याङ्ग्यनन्तसाराऽकलङ्किनी।
आरोग्यदाऽऽनन्दवल्ली त्वापन्नार्तिविनाशिनी॥ २४
आश्चर्यमूर्तिरायुष्या ह्याढ्याऽऽद्याऽऽप्राऽऽर्यसेविता।
आप्यायिन्याप्तविद्याख्या त्वानन्दाऽऽश्वासदायिनी॥ २५
आलस्यघ्न्यापदां हन्त्री ह्यानन्दामृतवर्षिणी।
इरावतीष्टदात्रीष्टा त्विष्टापूर्तफलप्रदा॥ २६
इतिहासश्रुतीड्यार्था त्विहामुत्रशुभप्रदा।
इज्याशीलसमिज्येष्ठा त्विन्द्रादिपरिवन्दिता॥ २७
इलालङ्कारमालेद्धा त्विन्दिरारम्यमन्दिरा।
इदिन्दिरादिसंसेव्या त्वीश्वरीश्वरवल्लभा॥ २८
ईतिभीतिहरेड्या च त्वीडनीयचरित्रभृत्।
उत्कृष्टशक्तिरुत्कृष्टोडुपमण्डलचारिणी॥ २९
उदिताम्बरमार्गोस्रोरगलोकविहारिणी।
उक्षोर्वरोत्पलोत्कुम्भा उपेन्द्रचरणद्रवा॥ ३०

उदन्वत्पूर्तिहेतुश्चोदारोत्साहप्रवर्द्धिनी।
उद्वेगघ्न्युष्णशमनी ह्युष्णरश्मिसुताप्रिया॥ ३१
उत्पत्तिस्थितिसंहारकारिण्युपरिचारिणी।
ऊर्जं वहन्त्यूर्जधरोर्जावती चोर्मिमालिनी॥ ३२
ऊर्ध्वरेतःप्रियोर्ध्वाध्वा ह्यूर्मिलोर्ध्वगतिप्रदा।
ऋषिवृन्दस्तुतर्द्धिश्च ऋणत्रयविनाशिनी॥ ३३
ऋतम्भरर्द्धिदात्री च ऋक्स्वरूपा ऋजुप्रिया।
ऋक्षमार्गवहर्क्षार्चिर्ऋजुमार्गप्रदर्शिनी॥ ३४
एधिताखिलधर्मार्था त्वेकैकामृतदायिनी।
एधनीयस्वभावैज्या त्वेजिताशेषपातका॥ ३५
ऐश्वर्यदैश्वर्यरूपा ह्यैतिह्यं ह्यैन्दवीद्युतिः।
ओजस्विन्योषधीक्षेत्रमोजोदौदनदायिनी॥ ३६
ओष्ठामृतौन्नत्यदात्री त्वौषधं भवरोगिणाम्।
औदार्यचञ्चुरौपेन्द्री त्वौग्री ह्यौमेयरूपिणी॥ ३७
अम्बराध्ववहाम्बष्ठाम्बरमालाम्बुजेक्षणा।
अम्बिकाम्बुमहायोनिरन्धोदान्धकहारिणी॥ ३८
अंशुमाला ह्यंशुमती त्वङ्गीकृतषडानना।
अन्धतामिस्रहन्त्र्यन्धुरञ्जना ह्यञ्जनावती॥ ३९
कल्याणकारिणी काम्या कमलोत्पलगन्धिनी।
कुमुद्वती कमलिनी कान्तिः कल्पितदायिनी॥ ४०
काञ्चनाक्षी कामधेनुः कीर्तिकृत् क्लेशनाशिनी।
क्रतुश्रेष्ठा क्रतुफला कर्मबन्धविभेदिनी॥ ४१

कमलाक्षी क्लमहरा कृशानुतपनद्युतिः ।
करुणार्द्रा च कल्याणी कलिकल्मषनाशिनी ॥ ४२
कामरूपा क्रियाशक्तिः कमलोत्पलमालिनी ।
कूटस्था करुणा कान्ता कूर्मयाना कलावती ॥ ४३
कमला कल्पलतिका काली कलुषवैरिणी ।
कमनीयजला कम्रा कपर्दिसुकपर्दगा ॥ ४४
कालकूटप्रशमनी कदम्बकुसुमप्रिया ।
कालिन्दी केलिललिता कलकल्लोलमालिका ॥ ४५
क्रान्तलोकत्रया कण्डूः कण्डूतनयवत्सला ।
खड्गिनी खड्गधाराभा खगा खण्डेन्दुधारिणी ॥ ४६
खेखेलगामिनी खस्था खण्डेन्दुतिलकप्रिया ।
खेचरी खेचरीवन्द्या ख्यातिः ख्यातिप्रदायिनी ॥ ४७
खण्डितप्रणताघौघा खलबुद्धिविनाशिनी ।
खातैनः कन्दसन्दोहा खड्गखट्वाङ्गखेटिनी ॥ ४८
खरसन्तापशमनी खनिः पीयूषपाथसाम् ।
गङ्गा गन्धवती गौरी गन्धर्वनगरप्रिया ॥ ४९
गम्भीराङ्गी गुणमयी गतातङ्का गतिप्रिया ।
गणनाथाम्बिका गीता गद्यपद्यपरिष्टुता ॥ ५०
गान्धारी गर्भशमनी गतिभ्रष्टगतिप्रदा ।
गोमती गुह्यविद्या गौर्गोप्त्री गगनगामिनी ॥ ५१
गोत्रप्रवर्द्धिनी गुण्या गुणातीता गुणाग्रणीः ।
गुहाम्बिका गिरिसुता गोविन्दाङ्घ्रिसमुद्भवा ॥ ५२

गुणनीयचरित्रा च गायत्री गिरिशप्रिया।
गूढरूपा गुणवती गुर्वी गौरववर्द्धिनी ॥ ५३

ग्रहपीडाहरा गुन्द्रा गरघ्नी गानवत्सला।
घर्महन्त्री घृतवती घृततुष्टिप्रदायिनी ॥ ५४

घण्टारवप्रिया घोराघौघविध्वंसकारिणी।
घ्राणतुष्टिकरी घोषा घनानन्दा घनप्रिया ॥ ५५

घातुका घूर्णितजला घृष्टपातकसन्ततिः।
घटकोटिप्रपीतापा घटिताशेषमङ्गला ॥ ५६

घृणावती घृणिनिधिर्घस्मरा घूकनादिनी।
घुसृणापिञ्जरतनुर्घर्घरा घर्घरस्वना ॥ ५७

चन्द्रिका चन्द्रकान्ताम्बुश्चञ्चदापा चलद्युतिः।
चिन्मयी चितिरूपा च चन्द्रायुतशतानना ॥ ५८

चाम्पेयलोचना चारुश्चार्वङ्गी चारुगामिनी।
चार्या चारित्रनिलया चित्रकृच्चित्ररूपिणी ॥ ५९

चम्पूश्चन्दनशुच्यम्बुश्चर्चनीया चिरस्थिरा।
चारुचम्पकमालाढ्या चमिताशेषदुष्कृता ॥ ६०

चिदाकाशवहा चिन्त्या चञ्चच्चामरवीजिता।
चोरिताशेषवृजिना चरिताशेषमण्डला ॥ ६१

छेदिताखिलपापौघा छद्मघ्नी छलहारिणी।
छन्नत्रिविष्टपतला छोटिताशेषबन्धना ॥ ६२

छुरितामृतधारौघा छिन्नैनाश्छन्दगामिनी।
छत्रीकृतमरालौघा छटीकृतनिजामृता ॥ ६३

जाह्नवी ज्या जगन्माता जप्या जङ्घालवीचिका।
जया जनार्दनप्रीता जुषणीया जगद्धिता।। ६४

जीवनं जीवनप्राणा जगज्ज्येष्ठा जगन्मयी।
जीवजीवातुलतिका जन्मिजन्मनिबर्हिणी।। ६५

जाड्यविध्वंसनकरी जगद्योनिर्जलाविला।
जगदानन्दजननी जलजा जलजेक्षणा।। ६६

जनलोचनपीयूषा जटातटविहारिणी।
जयन्ती जञ्जपूकघ्नी जनितज्ञानविग्रहा।। ६७

झल्लरीवाद्यकुशला झलज्झालजलावृता।
झिण्टीशवन्द्या झङ्कारकारिणी झर्झरावती।। ६८

टीकिताशेषपाताला टङ्किकैनोऽद्रिपाटने।
टङ्कारनृत्यत्कल्लोला टीकनीयमहातटा।। ६९

डंबरप्रवहा डीनराजहंसकुलाकुला।
डमड्डमरुहस्ता च डामरोक्तमहाण्डका।। ७०

ढौकिताशेषनिर्वाणा ढक्कानादचलज्जला।
ढुण्ढिविघ्नेशजननी ढणड्डुणितपातका।। ७१

तर्पणी तीर्थतीर्था च त्रिपथा त्रिदशेश्वरी।
त्रिलोकगोप्त्री तोयेशी त्रैलोक्यपरिवन्दिता।। ७२

तापत्रितयसंहर्त्री तेजोबलविवर्द्धिनी।
त्रिलक्ष्या तारणी तारा तारापतिकरार्चिता। ७३

त्रैलोक्यपावनी पुण्या तुष्टिदा तुष्टिरूपिणी।
तृष्णाच्छेत्री तीर्थमाता त्रिविक्रमपदोद्भवा।। ७४

तपोमयी तपोरूपा तपःस्तोमफलप्रदा।
त्रैलोक्यव्यापिनी तृप्तिस्तृप्तिकृत्तत्त्वरूपिणी ॥ ७५

त्रैलोक्यसुन्दरी तुर्या तुर्यातीतफलप्रदा।
त्रैलोक्यलक्ष्मीस्त्रिपदी तथ्या तिमिरचन्द्रिका ॥ ७६

तेजोगर्भा तपस्सारा त्रिपुरारिशिरोगृहा।
त्रयीस्वरूपिणी तन्वी तपनाङ्गजभीतिनुत् ॥ ७७

तरिस्तरणिजामित्रं तर्पिताशेषपूर्वजा।
तुलाविरहिता तीव्रपापतूलतनूनपात् ॥ ७८

दारिद्र्यदमनी दक्षा दुष्प्रेक्षा दिव्यमण्डना।
दीक्षावती दुरावाप्या द्राक्षामधुरवारिभृत् ॥ ७९

दर्शितानेककुतुका दुष्टदुर्जयदुःखहृत्।
दैन्यहृद् दुरितघ्नी च दानवारिपदाब्जजा ॥ ८०

दंदशूकविषघ्नी च दारिताघौघसन्ततिः।
द्रुता देवद्रुमच्छन्ना दुर्वाराघविघातिनी ॥ ८१

दमग्राह्या देवमाता देवलोकप्रदर्शिनी।
देवदेवप्रिया देवी दिक्पालपददायिनी ॥ ८२

दीर्घायुःकारिणी दीर्घा दोग्ध्री दूषणवर्जिता।
दुग्धाम्बुवाहिनी दोह्या दिव्या दिव्यगतिप्रदा ॥ ८३

द्युनदी दीनशरणं देहिदेहनिवारिणी।
द्राघीयसी दाघहन्त्री दितपातकसन्ततिः ॥ ८४

दूरदेशान्तरचरी दुर्गमा देववल्लभा।
दुर्वृत्तघ्नी दुर्विगाह्या दयाधारा दयावती ॥ ८५

दुरासदा दानशीला द्राविणी द्रुहिणस्तुता।
दैत्यदानवसंशुद्धिकर्त्री दुर्बुद्धिहारिणी॥ ८६

दानसारा दयासारा द्यावाभूमिविगाहिनी।
दृष्टादृष्टफलप्राप्तिर्देवतावृन्दवन्दिता॥ ८७

दीर्घव्रता दीर्घदृष्टिर्दीप्ततोया दुरालभा।
दण्डयित्री दण्डनीतिर्दुष्टदण्डधरार्चिता॥ ८८

दुरोदरघ्नी दावार्चिर्द्रवद्द्रव्यैकशेवधिः।
दीनसन्तापशमनी दात्री दवथुवैरिणी॥ ८९

दरीविदारणपरा दान्ता दान्तजनप्रिया।
दारिताद्रितटा दुर्गा दुर्गारण्यप्रचारिणी॥ ९०

धर्मद्रवा धर्मधुरा धेनुर्धीरा धृतिर्ध्रुवा।
धेनुदानफलस्पर्शा धर्मकामार्थमोक्षदा॥ ९१

धर्मोर्मिवाहिनी धुर्या धात्री धात्रीविभूषणम्।
धर्मिणी धर्मशीला च धन्विकोटिकृतावना॥ ९२

ध्यातृपापहरा ध्येया धावनी धूतकल्मषा।
धर्मधारा धर्मसारा धनदा धनवर्द्धिनी॥ ९३

धर्माधर्मगुणच्छेत्री धत्तूरकुसुमप्रिया।
धर्मेशी धर्मशास्त्रज्ञा धनधान्यसमृद्धिकृत्॥ ९४

धर्मलभ्या धर्मजला धर्मप्रसवधर्मिणी।
ध्यानगम्यस्वरूपा च धरणी धातृपूजिता॥ ९५

धूर्धूर्जटिजटासंस्था धन्या धीर्धारणावती।
नन्दा निर्वाणजननी नन्दिनी नुन्नपातका॥ ९६

निषिद्धविघ्ननिचया निजानन्दप्रकाशिनी।
नभोऽङ्गणचरी नूतिर्नम्या नारायणी नुता।। ९७
निर्मला निर्मलाख्याना नाशिनी तापसम्पदाम्।
नियता नित्यसुखदा नानाश्चर्यमहानिधिः।। ९८
नदी नदसरोमाता नायिका नाकदीर्घिका।
नष्टोद्धरणधीरा च नन्दना नन्ददायिनी।। ९९
निर्णिक्ताशेषभुवना निस्सङ्गा निरुपद्रवा।
निरालम्बा निष्प्रपञ्चा निर्णाशितमहामला।। १००
निर्मलज्ञानजननी निःशेषप्राणितापहृत्।
नित्योत्सवा नित्यतृप्ता नमस्कार्या निरञ्जना।। १०१
निष्ठावती निरातङ्का निर्लेपा निश्चलात्मिका।
निरवद्या निरीहा च नीललोहितमूर्द्धगा।। १०२
नन्दिभृङ्गिगणस्तुत्या नागा नन्दा नगात्मजा।
निष्प्रत्यूहा नाकनदी निरयार्णवदीर्घनौः।। १०३
पुण्यप्रदा पुण्यगर्भा पुण्या पुण्यतरङ्गिणी।
पृथुः पृथुफला पूर्णा प्रणतार्तिप्रभञ्जनी।। १०४
प्राणदा प्राणिजननी प्राणेशी प्राणरूपिणी।
पद्मालया पराशक्तिः पुरजित्परमप्रिया।। १०५
परा परफलप्राप्तिः पावनी च पयस्विनी।
परानन्दा प्रकृष्टार्था प्रतिष्ठा पालिनी परा।। १०६
पुराणपठिता प्रीता प्रणवाक्षररूपिणी।
पार्वती प्रेमसम्पन्ना पशुपाशविमोचनी।। १०७

परमात्मस्वरूपा च परब्रह्मप्रकाशिनी।
परमानन्दनिष्यन्दा प्रायश्चित्तस्वरूपिणी॥ १०८

पानीयरूपनिर्वाणा परित्राणपरायणा।
पापेन्धनदवज्वाला पापारिः पापनामनुत्॥ १०९

परमैश्वर्यजननी प्रज्ञा प्राज्ञा परापरा।
प्रत्यक्षलक्ष्मीः पद्माक्षी परव्योमामृतस्रवा॥ ११०

प्रसन्नरूपा प्रणिधिः पूता प्रत्यक्षदेवता।
पिनाकिपरमप्रीता परमेष्ठिकमण्डलुः॥ १११

पद्मनाभपदार्घ्येण प्रसूता पद्ममालिनी।
परर्द्धिदा पुष्टिकरी पथ्या पूर्तिः प्रभावती॥ ११२

पुनाना पीतगर्भघ्नी पापपर्वतनाशिनी।
फलिनी फलहस्ता च फुल्लाम्बुजविलोचना॥ ११३

फालितैनोमहाक्षेत्रा फणिलोकविभूषणम्।
फेनच्छलप्रणुन्नैनाः फुल्लकैरवगन्धिनी॥ ११४

फेनिलाच्छाम्बुधाराभा फडुच्चाटितपातका।
फाणितस्वादुसलिला फाण्टपथ्यजलाविला॥ ११५

विश्वमाता च विश्वेशी विश्वा विश्वेश्वरप्रिया।
ब्रह्मण्या ब्रह्मकृद् ब्राह्मी ब्रह्मिष्ठा विमलोदका॥ ११६

विभावरी च विरजा विक्रान्तानेकविष्टपा।
विश्वमित्रं विष्णुपदी वैष्णवी वैष्णवप्रिया॥ ११७

विरूपाक्षप्रियकरी विभूतिर्विश्वतोमुखी।
विपाशा वैबुधी वेद्या वेदाक्षररसस्रवा॥ ११८

विद्या वेगवती वन्द्या बृंहणी ब्रह्मवादिनी।
वरदा विप्रकृष्टा च वरिष्ठा च विशोधनी॥ ११९

विद्याधरी विशोका च वयोवृन्दनिषेविता।
बहूदका बलवती व्योमस्था विबुधप्रिया॥ १२०

वाणी वेदवती वित्ता ब्रह्मविद्यातरङ्गिणी।
ब्रह्माण्डकोटिव्यासाम्बुर्ब्रह्महत्यापहारिणी॥ १२१

ब्रह्मेशविष्णुरूपा च बुद्धिर्विभववर्द्धिनी।
विलासिसुखदा वश्या व्यापिनी च वृषारणिः॥ १२२

वृषाङ्कमौलिनिलया विपन्नार्तिप्रभञ्जनी।
विनीता विनता ब्रध्नतनया विनयान्विता॥ १२३

विपञ्ची वाद्यकुशला वेणुश्रुतिविचक्षणा।
वर्चस्करी बलकरी बलोन्मूलितकल्मषा॥ १२४

विपाप्मा विगतातङ्का विकल्पपरिवर्जिता।
वृष्टिकर्त्री वृष्टिजला विधिर्विच्छिन्नबन्धना॥ १२५

व्रतरूपा वित्तरूपा बहुविघ्नविनाशकृत्।
वसुधारा वसुमती विचित्राङ्गी विभावसुः॥ १२६

विजया विश्वबीजं च वामदेवी वरप्रदा।
वृषाश्रिता विषघ्नी च विज्ञानोर्म्यंशुमालिनी॥ १२७

भव्या भोगवती भद्रा भवानी भूतभाविनी।
भूतधात्री भयहरा भक्तदारिद्र्यघातिनी॥ १२८

भुक्तिमुक्तिप्रदा भेशी भक्तस्वर्गापवर्गदा।
भागीरथी भानुमती भाग्यं भोगवती भृतिः॥ १२९

भवप्रिया भवद्वेष्ट्री भूतिदा भूतिभूषणा।
भाललोचनभावज्ञा भूतभव्यभवत्प्रभुः ॥ १३०
भ्रान्तिज्ञानप्रशमनी भिन्नब्रह्माण्डमण्डपा।
भूरिदा भक्तसुलभा भाग्यवद्दृष्टिगोचरी ॥ १३१
भञ्जितोपप्लवकुला भक्ष्यभोज्यसुखप्रदा।
भिक्षणीया भिक्षुमाता भावा भावस्वरूपिणी ॥ १३२
मन्दाकिनी महानन्दा माता मुक्तितरङ्गिणी।
महोदया मधुमती महापुण्या मुदाकरी ॥ १३३
मुनिस्तुता मोहहन्त्री महातीर्था मधुस्रवा।
माधवी मानिनी मान्या मनोरथपथातिगा ॥ १३४
मोक्षदा मतिदा मुख्या महाभाग्यजनाश्रिता।
महावेगवती मेध्या महा महिमभूषणा ॥ १३५
महाप्रभावा महती मीनचञ्चललोचना।
महाकारुण्यसम्पूर्णा महर्द्धिश्च महोत्पला ॥ १३६
मूर्तिमन्मुक्तिरमणी मणिमाणिक्यभूषणा।
मुक्ताकलापनेपथ्या मनोनयननन्दिनी ॥ १३७
महापातकराशिघ्नी महादेवार्धहारिणी।
महोर्मिमालिनी मुक्ता महादेवी मनोन्मनी ॥ १३८
महापुण्योदयप्राप्या मायातिमिरचन्द्रिका।
महाविद्या महामाया महामेधा महौषधम् ॥ १३९
मालाधरी महोपाया महोरगविभूषणा।
महामोहप्रशमनी महामङ्गलमङ्गलम् ॥ १४०

मार्तण्डमण्डलञ्चरी महालक्ष्मीर्मदोज्झिता।
यशस्विनी यशोदा च योग्या युक्तात्मसेविता ॥ १४१

योगसिद्धिप्रदा याज्या यज्ञेशपरिपूरिता।
यज्ञेशी यज्ञफलदा यजनीया यशस्करी ॥ १४२

यमिसेव्या योगयोनिर्योगिनी युक्तबुद्धिदा।
योगज्ञानप्रदा युक्ता यमाद्यष्टाङ्गयोगयुक् ॥ १४३

यन्त्रिताघौघसंचारा यमलोकनिवारिणी।
यातायातप्रशमनी यातनानामकृन्तनी ॥ १४४

यामिनीशहिमाच्छोदा युगधर्मविवर्जिता।
रेवती रतिकृद् रम्या रत्नगर्भा रमा रतिः ॥ १४५

रत्नाकरप्रेमपात्रं रसज्ञा रसरूपिणी।
रत्नप्रासादगर्भा च रमणीयतरङ्गिणी ॥ १४६

रत्नार्ची रुद्ररमणी रागद्वेषविनाशिनी।
रमा रामा रम्यरूपा रोगिजीवानुरूपिणी ॥ १४७

रुचिकृद् रोचनी रम्या रुचिरा रोगहारिणी।
राजहंसा रत्नवती राजत्कल्लोलराजिका ॥ १४८

रामणीयकरेखा च रुजारी रोगरोषिणी।
राका रङ्कार्तिशमनी रम्या रोलम्बराविणी ॥ १४९

रागिणी रञ्जितशिवा रूपलावण्यशेवधिः।
लोकप्रसूर्लोकवन्द्या लोलत्कल्लोलमलिनी ॥ १५०

लीलावती लोकभूमिर्लोकलोचनचन्द्रिका।
लेखस्रवन्ती लटभा लघुवेगा लघुत्वहृत् ॥ १५१

लास्यत्तरङ्गहस्ता च ललिता लयभङ्गिगा।
लोकबन्धुर्लोकधात्री लोकोत्तरगुणोर्जिता ॥ १५२

लोकत्रयहिता लोका लक्ष्मीर्लक्षणलक्षिता।
लीला लक्षितनिर्वाणा लावण्यामृतवर्षिणी ॥ १५३

वैश्वानरी वासवेड्या वन्ध्यत्वपरिहारिणी।
वासुदेवाङ्घ्रिरेणुघ्नी वज्रिवज्रनिवारिणी ॥ १५४

शुभावती शुभफला शान्तिः शन्तनुवल्लभा।
शूलिनी शैशववया शीतलामृतवाहिनी ॥ १५५

शोभावती शीलवती शोषिताशेषकिल्बिषा।
शरण्या शिवदा शिष्टा शरजन्मप्रसूः शिवा ॥ १५६

शक्तिः शशाङ्कविमला शमनस्वसृसम्मता।
शमा शमनमार्गघ्नी शितिकण्ठमहाप्रिया ॥ १५७

शुचिः शुचिकरी शेषा शेषशायिपदोद्भवा।
श्रीनिवासश्रुतिः श्रद्धा श्रीमती श्रीः शुभव्रता ॥ १५८

शुद्धविद्या शुभावर्ता श्रुतानन्दा श्रुतिस्तुतिः।
शिवतेरघ्नी शबरी शाम्बरीरूपधारिणी ॥ १५९

श्मशानशोधनी शान्ता शश्वच्छतधृतिस्तुता।
शालिनी शालिशोभाढ्या शिखिवाहनगर्भभृत् ॥ १६०

शंसनीयचरित्रा च शातिताशेषपातका।
षड्गुणैश्वर्यसम्पन्ना षडङ्गश्रुतिरूपिणी ॥ १६१

षण्ढताहारिसलिला स्त्यायन्नदनदीशता।
सरिद्वारा च सुरसा सुप्रभा सुरदीर्घिका ॥ १६२

स्वःसिन्धुः सर्वदुःखघ्नी सर्वव्याधिमहौषधम्।
सेव्या सिद्धिः सती सूक्तिः स्कन्दसूश्च सरस्वती ॥ १६३

सम्पत्तरङ्गिणी स्तुत्या स्थाणुमौलिकृतालया।
स्थैर्यदा सुभगा सौख्या स्त्रीषु सौभाग्यदायिनी ॥ १६४

स्वर्गनिःश्रेणिका सूमा स्वधा स्वाहा सुधाजला।
समुद्ररूपिणी स्वर्ग्या सर्वपातकवैरिणी ॥ १६५

स्मृताघहारिणी सीता संसाराब्धितरण्डिका।
सौभाग्यसुन्दरी सन्ध्या सर्वसारसमन्विता ॥ १६६

हरप्रिया हृषीकेशी हंसरूपा हिरण्मयी।
हृताघसंघा हितकृद्धेला हेलाघगर्वहृत् ॥ १६७

क्षेमदा क्षालिताघौघा क्षुद्रविद्राविणी क्षमा।
गङ्गेति नामसाहस्रं गङ्गायाः कलशोद्भव।
कीर्तयित्वा नरः सम्यग्गङ्गास्नानफलं लभेत् ॥ १६८

सर्वपापप्रशमनं सर्वविघ्नविनाशनम्।
सर्वस्तोत्रजपाच्छ्रेष्ठं सर्वपावनपावनम् ॥ १६९

श्रद्धयाभीष्टफलदं चतुर्वर्गसमृद्धिकृत्।
सकृज्जपादवाप्नोति ह्येकक्रतुफलं मुने ॥ १७०

सर्वतीर्थेषु यः स्नातः सर्वयज्ञेषु दीक्षितः।
तस्य यत्फलमुद्दिष्टं त्रिकालपठनाच्च तत् ॥ १७१

सर्वव्रतेषु यत्पुण्यं सम्यक्चीर्णेषु वाडव।
तत्फलं समवाप्नोति त्रिसन्ध्यं नियतः पठन् ॥ १७२

स्नानकाले पठेद्यस्तु यत्र कुत्र जलाशये।
तत्र संनिहिता नूनं गङ्गा त्रिपथगा मुने ॥ १७३

श्रेयोऽर्थी लभते श्रेयो धनार्थी लभते धनम्।
कामी कामानवाप्नोति मोक्षार्थी मोक्षमाप्नुयात्।। १७४
वर्षं त्रिकालपठनाच्छ्रद्धया शुचिमानसः।
ऋतुकालाभिगमनादपुत्रः पुत्रवान् भवेत्।। १७५
नाकालमरणं तस्य नाग्निचोराहिसाध्वसम्।
नाम्नां सहस्रं गङ्गाया यो जपेच्छ्रद्धया मुने।। १७६
गङ्गानामसहस्रं तु जप्त्वा ग्रामान्तरं व्रजेत्।
कार्यसिद्धिमवाप्नोति निर्विघ्नो गेहमाविशेत्।। १७७
तिथिवारर्क्षयोगानां न दोषः प्रभवेत्तदा।
यदा जप्त्वा व्रजेदेतत् स्तोत्रं ग्रामान्तरं नरः।। १७८
आयुरारोग्यजननं सर्वोपद्रवनाशनम्।
सर्वसिद्धिकरं पुंसां गङ्गानामसहस्रकम्।। १७९
जन्मान्तरसहस्रेषु यत्पापं सम्यगर्जितम्।
गङ्गानामसहस्रस्य जपनात्तत्क्षयं व्रजेत्।। १८०
ब्रह्मघ्नो मद्यपः स्वर्णस्तेयी च गुरुतल्पगः।
तत्संयोगी भ्रूणहन्ता मातृहा पितृहा मुने।। १८१
विश्वासघाती गरदः कृतघ्नो मित्रघातकः।
अग्निदो गोवधकरो गुरुद्रव्यापहारकः।। १८२
महापातकयुक्तोऽपि संयुक्तोऽप्युपपातकैः।
मुच्यते श्रद्धया जप्त्वा गङ्गानामसहस्रकम्।। १८३
आधिव्याधिपरिक्षिप्तो घोरतापपरिप्लुतः।
मुच्यते सर्वदुःखेभ्यः स्तवस्यास्यानुकीर्तनात्।। १८४

संवत्सरेण युक्तात्मा पठन् भक्तिपरायणः ।
अभीप्सितां लभेत्सिद्धिं सर्वैः पापैः प्रमुच्यते ।। १८५

संशयाविष्टचित्तस्य धर्मविद्वेषिणोऽपि च ।
दाम्भिकस्यापि हिंस्रस्य चेतो धर्मपरं भवेत् ।। १८६

वर्णाश्रमपथीनस्तु कामक्रोधविवर्जितः ।
यत्फलं लभते ज्ञानी तदाप्नोत्यस्य कीर्तनात् ।। १८७

गायत्र्ययुतजप्येन यत्फलं समुपार्जितम् ।
सकृत्पठनतः सम्यक्तदशेषमवाप्नुयात् ।। १८८

गां दत्त्वा वेदविदुषे यत्फलं लभते कृती ।
तत्पुण्यं सम्यगाख्यातं स्तवराजसकृज्जपात् ।। १८९

गुरुशुश्रूषणं कुर्वन् यावज्जीवं नरोत्तमः ।
यत्पुण्यमर्जयेत्तद्भाग्वर्षं त्रिषवणं जपन् ।। १९०

वेदपारायणात् पुण्यं यदत्र परिपठ्यते ।
तत्षण्मासेन लभते त्रिसन्ध्यं परिकीर्तनात् ।। १९१

गङ्गायाः स्तवराजस्य प्रत्यहं परिशीलनात् ।
शिवभक्तिमवाप्नोति विष्णुभक्तोऽथवा भवेत् ।। १९२

यः कीर्तयेदनुदिनं गङ्गानामसहस्रकम् ।
तत्समीपे सहचरी गङ्गादेवी सदा भवेत् ।। १९३

सर्वत्र पूज्यो भवति सर्वत्र विजयी भवेत् ।
सर्वत्र सुखमाप्नोति जाह्नवीस्तोत्रपाठतः ।। १९४

सदाचारी स विज्ञेयः स शुचिस्तु सदैव हि ।
कृतसर्वसुरार्चः स कीर्तयेद्य इमां स्तुतिम् ।। १९५

तस्मिंस्तृप्ते भवेत् तृप्ता जाह्नवी नात्र संशयः ।
तस्मात्सर्वप्रयत्नेन गङ्गाभक्तं समर्चयेत् ।। १९६

स्तवराजमिमं गाङ्गं शृणुयाद्यश्च वै पठेत् ।
श्रावयेदथ तद्भक्तान् दम्भलोभविवर्जितः ।। १९७

मुच्यते त्रिविधैः पापैर्मनोवाक्कायसम्भवैः ।
क्षणान्निष्पापतामेति पितॄणां च प्रियो भवेत् ।। १९८

सर्वदेवप्रियश्चापि सर्वर्षिगणसम्मतः ।
अन्ते विमानमारुह्य दिव्यस्त्रीशतसंवृतः ।। १९९

दिव्याभरणसम्पन्नो दिव्यभोगसमन्वितः ।
नन्दनादिवने स्वैरं देववत्स प्रमोदते ।। २००

भुज्यमानेषु विप्रेषु श्राद्धकाले विशेषतः ।
जपन्निदं महास्तोत्रं पितॄणां तृप्तिकारकम् ।। २०१

यावन्ति तत्र सिक्थानि यावन्तोऽम्बुकणाः स्थिताः ।
तावन्त्येव हि वर्षाणि मोदन्ते स्वपितामहाः ।। २०२

यथा पितरः प्रीणन्ति गङ्गायां पिण्डदानतः ।
तथैव तृप्नुयुः श्राद्धे स्तवस्यास्यानुसंश्रवात् ।। २०३

एतत्स्तोत्रं गृहे यस्य लिखितं परिपूज्यते ।
तत्र पापभयं नास्ति शुचि तद्भवनं सदा ।। २०४

अगस्ते किं बहूक्तेन शृणु मे निश्चितं वचः ।
संशयो नात्र कर्तव्यः संदेग्धरि फलं नहि ।। २०५

यावन्ति मर्त्ये स्तोत्राणि मन्त्रजालान्यनेकशः ।
तावन्ति स्तवराजस्य गाङ्गेयस्य समानि न ।। २०६

यावज्जन्म जपेद्यस्तु नाम्नामेतत्सहस्रकम्।
स कीकटेष्वपि मृतो न पुनर्गर्भमाविशेत्॥ २०७
नित्यं नियमवानेतद्यो जपेत् स्तोत्रमुत्तमम्।
अन्यत्रापि विपन्नः स गङ्गातटे मृतो भवेत्॥ २०८
एतत्स्तोत्रवरं रम्यं पुरा प्रोक्तं पिनाकिना।
विष्णवे निजभक्ताय मुक्तिबीजाक्षरास्पदम्॥ २०९
गङ्गास्नानप्रतिनिधिः स्तोत्रमेतन्मयेरितम्।
सिस्नासुर्जाह्नवीं तस्मादेतत् स्तोत्रं जपेत्सुधीः॥ २१०

—श्री स्कन्दपुराणे काशीखण्डतः

—*—

## श्री गङ्गासहस्रनामावलिः।

सितमकरनिषण्णां शुभ्रवर्णां त्रिनेत्रां
करधृतकलशोद्यत्सोत्पलाभीत्यभीष्टाम्।
विधिहरिहररूपां सेन्दुकोटीरजूटां
कलितसितदुकूलां जाह्नवीं तां नमामि॥ १

ओं ओङ्काररूपिण्यै नमः। अजरायै। अतुलायै। अनन्तायै। अमृतस्रवायै। अत्युदारायै। अभयायै। अशोकायै। अलकनन्दायै। अमृतायै। अमलायै। अनाथवत्सलायै। अमोघायै। अपां योनये। अमृतप्रदायै। अव्यक्तलक्षणायै। अक्षोभ्यायै। अनवच्छिन्नायै। अपरायै। अजितायै नमः। २०

ओं अनाथनाथायै नमः। अभीष्टार्थसिद्धिदायै। अनङ्गवर्धिन्यै। अणिमादिगुणायै। अधारायै। अग्रगण्यायै। अलीकहारिण्यै। अचिन्त्यशक्तये। अनघायै। अद्भुतरूपायै।

अघहारिण्यै । अद्रिराजसुतायै । अष्टाङ्गयोगसिद्धिप्रदायै । अच्युतायै । अक्षुण्णशक्तये । असुदायै । अनन्ततीर्थायै । अमृतोदकायै । अनन्तमहिम्ने । अपारायै नमः ४०

ओं अनन्तसौख्यप्रदायै नमः । अन्नदायै । अशेषदेवतामूर्तये । अघोरायै । अमृतरूपिण्यै । अविद्याजालशमन्यै । अप्रतर्क्य-गतिप्रदायै । अशेषविघ्नसंहर्त्र्यै । अशेषगुणगुम्फितायै । अज्ञान-तिमिरज्योतिषे । अनुग्रहपरायणायै । अभिरामायै । अनवद्याङ्ग्यै । अनन्तसारायै । अकलङ्किन्यै । आरोग्यदायै । आनन्दवल्ल्यै । आपन्नार्तिविनाशिन्यै । आश्चर्यमूर्तये । आयुष्यायै नमः । ६०

ओं आढ्यायै नमः । आद्यायै । आप्रायै । आर्यसेवितायै । आप्यायन्यै । आप्तविद्यायै । आख्यायै । आनन्दायै । आश्वास-दायिन्यै । आलस्यघ्न्यै । आपदां हन्त्र्यै । आनन्दामृत-वर्षिण्यै । इरावत्यै । इष्टदात्र्यै । इष्टायै । इष्टापूर्तफलप्रदायै । इतिहास-श्रुतीड्यार्थायै । इहामुत्रशुभप्रदायै । इज्याशीलसमिज्ज्येष्ठायै । इन्द्रादिपरिवन्दितायै नमः । ८०

ओं इलालङ्कारमालायै नमः । इद्धायै । इन्दिरारम्यमन्दिरायै । इते । इन्दिरादिसंसेव्यायै । ईश्वर्यै । ईश्वरवल्लभायै । ईतिभीतिहरायै । ईड्यायै । ईडनीयचरित्रभृते । उत्कृष्टशक्तये । उत्कृष्टायै । उडुपमण्डल-चारिण्यै । उदिताम्बरमार्गायै । उस्रायै । उरगलोकविहारिण्यै । उक्षायै । उर्वरायै । उत्पलायै । उत्कुम्भायै नमः । १००

ओं उपेन्द्रचरणद्रवायै नमः । उदन्वत्पूर्तिहेतवे । उदारायै । उत्साहप्रवर्धिन्यै । उद्वेगघ्न्यै । उष्णशमन्यै । उष्णरश्मिसुताप्रियायै । उत्पत्तिस्थितिसंहारकारिण्यै । उपरिचारिण्यै । ऊर्जंवहन्त्यै । ऊर्जधरायै । ऊर्जावत्यै । ऊर्मिमालिन्यै । ऊर्ध्वरेतःप्रियायै । ऊर्ध्वाध्वायै । ऊर्मिलायै । ऊर्ध्वगतिप्रदायै । ऋषिवृन्दस्तुतायै । ऋद्धये । ऋणत्रयविनाशिन्यै नमः । १२०

ओं ऋतम्भरायै नमः । ऋद्धिदात्र्यै । ऋक्स्वरूपायै । ऋजुप्रियायै । ऋक्षमार्गवहायै । ऋक्षार्चिषे । ऋजुमार्गप्रदर्शिन्यै । एधिताखिलधर्मार्थायै । । एकस्यै । एकामृतदायिन्यै । एतनीयस्वभावायै । एज्यायै । एजिताशेषपातकायै । ऐश्वर्यदायै । ऐश्वर्यरूपायै । ऐतिह्याय । ऐन्दवद्युतये । ओजस्विन्यै । ओषधीक्षेत्राय । ओजोदायै नमः । १४०

ओं ओदनदायिन्यै नमः । ओष्ठामृतायै । औन्नत्यदात्र्यै । भवरोगिणामौषधाय । औदार्यचञ्चवे । औपेन्द्यै । औग्र्यै । औमेयरूपिण्यै । अम्बराध्ववहायै । अम्बष्ठायै । अम्बरमालायै । अम्बुजेक्षणायै । अम्बिकायै । अम्बुमहायोनये । अन्धोदायै । अन्धकहारिण्यै । अंशुमालायै । अंशुमत्यै । अङ्गीकृतषडाननायै । अन्धतामिस्रहन्त्र्यै नमः । १६०

ओं अन्धवे नमः । अञ्जनायै । अञ्जनावत्यै । कल्याणकारिण्यै । काम्यायै । कमलोत्पलगन्धिन्यै । कुमुद्वत्यै । कमलिन्यै । कान्तये । कल्पितदायिन्यै । काञ्चनाक्ष्यै । कामधेनवे । कीर्तिकृते । क्लेशनाशिन्यै । क्रतुश्रेष्ठायै । क्रतुफलायै । कर्मबन्धविभेदिन्यै । कमलाक्ष्यै । क्लमहरायै । कृशानुतपनद्युतये नमः । १८०

ओं करुणार्द्रायै नमः । कल्याण्यै । कलिकल्मषनाशिन्यै । कामरूपायै । क्रियाशक्तये । कमलोत्पलमालिन्यै । कूटस्थायै । करुणायै । कान्तायै । कूर्मयानायै । कलावत्यै । कमलायै । कल्पलतिकायै । काल्यै । कलुषवैरिण्यै । कमनीयजलायै । कम्रायै । कपर्दिसुकपर्दगायै । कालकूटप्रशमन्यै । कदम्बकुसुमप्रियायै नमः । २००

ओं कालिन्द्यै नमः । केलिललितायै । कलकल्लोलमालिकायै । क्रान्तलोकत्रयायै । कण्डूवे । कण्डूतनयवत्सलायै । खड्गिन्यै ।

खड्गधाराभायै । खगायै । खण्डेन्दुधारिण्यै । खेखेलगामिन्यै । खस्थायै । खण्डेन्दुतिलकप्रियायै । खेचर्यै । खेचरीवन्द्यायै । ख्यात्यै । ख्यातिप्रदायिन्यै । खण्डितप्रणताघौघायै । खलबुद्धि-विनाशिन्यै । खातैनःकन्दसंदोहायै नमः । २२०

ओं खड्गखट्वाङ्गखेटिन्यै नमः । खरसन्तापशमन्यै । पीयूषपाथसां खनये । गङ्गायै । गन्धवत्यै । गौर्यै । गन्धर्वनगर-प्रियायै । गम्भीराङ्ग्यै । गुणमय्यै । गतातङ्कायै । गतिप्रियायै । गणनाथाम्बिकायै । गीतायै । गद्यपद्यपरिष्टुतायै । गान्धार्यै । गर्भशमन्यै । गतिभ्रष्टगतिप्रदायै । गोमत्यै । गुह्यविद्यायै । गवे नमः । २४०

ओं गौप्त्र्यै नमः । गगनगामिन्यै । गोत्रप्रवर्धिन्यै । गुण्यायै । गुणातीतायै । गुणाग्रण्यै । गुहाम्बिकायै । गिरिसुतायै । गोविन्दांघ्रिसमुद्भवायै । गुणनीयचरित्रायै । गायत्र्यै । गिरिश-प्रियायै । गूढरूपायै । गुणवत्यै । गुर्व्यै । गौरववर्धिन्यै । ग्रहपीडा-हरायै । गुन्द्रायै । गरघ्न्यै । गानवत्सलायै नमः । २६०

ओं घर्महन्त्र्यै नमः । घृतवत्यै । घृततुष्टिप्रदायिन्यै । घण्टारवप्रियायै । घोराघौघविध्वंसकारिण्यै । घ्राणतुष्टिकर्यै । घोषायै । घनानन्दायै । घनप्रियायै । घातुकायै । घूर्णितजलायै । घृष्टपातकसन्तत्यै । घटकोटिप्रपीतापायै । घटिताशेषमङ्गलायै । घृणावत्यै । घृणिनिधये । घस्मरायै । घूकनादिन्यै । घुसृणापिञ्ज-रतनवे । घर्घरायै नमः । २८०

ओं घर्घरस्वनायै नमः । चन्द्रिकायै । चन्द्रकान्ताम्बवे । चञ्चदापायै । चलद्युतये । चिन्मय्यै । चितिरूपायै । चन्द्रायुतशताननायै । चाम्पेयलोचनायै । चारवे । चार्वङ्ग्यै । चारुगामिन्यै । चार्यायै । चारित्रनिलयायै । चित्रकृते । चित्ररूपिण्यै । चम्प्वै । चन्दनशुच्यम्बवे । चर्चनीयायै । चिरस्थिरायै नमः । ३००

ओं चारुचम्पकमालाढ्यायै नमः । चमिताशेषदुष्कृतायै । चिदाकाशवहायै । चिन्त्यायै । चञ्चते । चामरवीजितायै । चोरिताशेषवृजिनायै । चरिताशेषमण्डलायै । छेदिताखिलपापौघायै । छद्मघ्न्यै । छलहारिण्यै । छन्नत्रिविष्टपतलायै । छोटिताशेषबन्धनायै । छुरितामृतधारौघायै । छिन्नैनसे । छन्दगामिन्यै । छत्रीकृतमरालौघायै । छटीकृतनिजामृतायै । जाह्नव्यै । ज्यायै नमः । ३२०

ओं जगन्मात्रे नमः । जप्यायै । जङ्घालवीचिकायै । जयायै । जनार्दनप्रीतायै । जुषणीयायै । जगद्धितायै । जीवनाय । जीवनप्राणायै । जगते । ज्येष्ठायै । जगन्मय्यै । जीवजीवातुलतिकायै । जन्मिजन्मनिबर्हिण्यै । जाड्यविध्वंसनकर्यै । जगद्योनये । जलाविलायै । जगदानन्दजनन्यै । जलजायै । जलजेक्षणायै नमः । ३४०

ओं जनलोचनपीयूषायै नमः । जटातटविहारिण्यै । जयन्त्यै । जञ्जपूकघ्न्यै । जनितज्ञानविग्रहायै । झल्लरीवाद्यकुशलायै । झलज्झालजलावृतायै । झिण्टीशवन्द्यायै । झङ्कारकारिण्यै । झर्झरावत्यै । टीकिताशेषपातालायै । एनोद्रिपाटने टङ्किकायै । टङ्कारनृत्यत्कल्लोलायै । टीकनीयमहातटायै । डम्बरप्रवहायै । डीनराजहंसकुलाकुलायै । डमड्डमरुहस्तायै । डामरोक्तमहाण्डकायै । ढौकिताशेषनिर्वाणायै । ढक्कानादचलज्जलायै नमः । ३६०

ओं ढुण्ढिविघ्नेशजनन्यै नमः । ढणड्ढणितपातकायै । तर्पण्यै । तीर्थतीर्थायै । त्रिपथायै । त्रिदशेश्वर्यै । त्रिलोकगोप्त्र्यै । तोयेश्यै । त्रैलोक्यपरिवन्दितायै । तापत्रितयसंहर्त्र्यै । तेजोबलविवर्धिन्यै । त्रिलक्ष्यायै । तारण्यै । तारायै । तारापतिकरार्चितायै । त्रैलोक्यपावनीपुण्यायै । तुष्टिदायै । तुष्टिरूपिण्यै । तृष्णाच्छेत्र्यै । तीर्थमात्रे नमः । ३८०

ओं त्रिविक्रमपदोद्भवायै नमः । तपोमय्यै । तपोरूपायै । तपःस्तोमफलप्रदायै । त्रैलोक्यव्यापिन्यै । तृप्त्यै । तृप्तिकृते । तत्वरूपिण्यै । त्रैलोक्यसुन्दर्यै । तुर्यायै । तुर्यातीतफलप्रदायै । त्रैलोक्यलक्ष्म्यै । त्रिपद्यै । तथ्यायै । तिमिरचन्द्रिकायै । तेजोगर्भायै । तपःसारायै । त्रिपुरारिशिरोगृहायै । त्रयीस्वरूपिण्यै । तन्व्यै नमः । ४००

ओं तपनाङ्गजभीतिनुदे नमः । तरये । तरणिजामित्राय । तर्पिताशेषपूर्वजायै । तुलाविरहितायै । तीव्रपापतूलतनूनपाते । दारिद्र्यदमन्यै । दक्षायै । दुष्प्रेक्षायै । दिव्यमण्डनायै । दीक्षावत्यै । दुरावाप्यायै । द्राक्षामधुरवारिभृते । दर्शितानेककुतुकायै । दुष्टदुर्जयदुःखहृते । दैन्यहृते । दुरितघ्न्यै । दानवारिपदाब्जजायै । दन्दशूकविषघ्न्यै । दारिताघौघसन्तयै नमः । ४२०

ओं द्रुतायै नमः । देवद्रुमच्छन्नायै । दुर्वाराघविघातिन्यै । दमग्राह्यायै । देवमात्रे । देवलोकप्रदर्शिन्यै। देवदेवप्रियायै । देव्यै । दिक्पालपददायिन्यै । दीर्घायुष्कारिण्यै । दीर्घायै । दोग्ध्र्यै । दूषणवर्जितायै । दुग्धाम्बुवाहिन्यै । दोह्यायै । दिव्यायै । दिव्यगतिप्रदायै । द्युनद्यै । दीनशरणाय । देहिदेहनिवारिण्यै नमः । ४४०

ओं द्राघीयस्यै नमः । दाघहन्त्र्यै । दितपातकसंतत्यै । दूरदेशान्तरचर्यै । दुर्गमायै । देववल्लभायै । दुर्वृत्तघ्न्यै । दुर्विगाह्यायै । दयाधारायै । दयावत्यै । दुरासदायै । दानशीलायै । द्राविण्यै । द्रुहिणस्तुतायै । दैत्यदानवसंशुद्धिकर्त्र्यै । दुर्बुद्धिहारिण्यै । दानसारायै । दयासारायै । द्यावाभूमिविगाहिन्यै । दृष्टादृष्टफलप्राप्त्यै नमः । ४६०

ओं देवताबृन्दवन्दितायै नमः । दीर्घव्रतायै । दीर्घदृष्ट्यै । दीप्ततोयायै । दुरालभायै । दण्डयित्र्यै । दण्डनीतये । दुष्टदण्ड-धरार्चितायै । दुरोदरघ्न्यै । दावार्चिषे नमः । द्रवते । द्रव्यैकशेवधये । दीनसन्तापशमन्यै । दात्र्यै । दवथुवैरिण्यै । दरीविदारपरायै । दान्तायै । दान्तजनप्रियायै । दारिताद्रितटायै । दुर्गायै नमः । ४८०

ओं दुर्गारण्यप्रचारिण्यै नमः । धर्मद्रवायै । धर्मधुरायै । धेनवे । धीरायै । धृतये । ध्रुवायै । धेनुदानफलस्पर्शायै । धर्मकामार्थमोक्षदायै । धर्मोर्मिवाहिन्यै । धुर्यायै । धात्र्यै । धात्रीविभूषणाय । धर्मिण्यै । धर्मशीलायै । धन्विकोटिकृतावनायै । ध्यातृपापहरायै । ध्येयायै । धावन्यै । धूतकल्मषायै नमः । ५००

ओं धर्मधारायै नमः । धर्मसारायै । धनदायै । धनवर्धिन्यै । धर्माधर्मगुणच्छेत्र्यै । धत्तूरकुसुमप्रियायै । धर्मेश्यै । धर्मशास्त्रज्ञायै । धनधान्यसमृद्धिकृते । धर्मलभ्यायै । धर्मजलायै । धर्मप्रसवधर्मिण्यै । ध्यानगम्यस्वरूपाय । धरण्यै । धातृपूजितायै । धुरे । धूर्जटिजटा-संस्थायै । धन्यायै । धिये । धारणावत्यै नमः । ५२०

ओं नन्दायै नमः । निर्वाणजनन्यै । नन्दिन्यै । नुन्नपातकायै । निषिद्धविघ्ननिचयायै । निजानन्दप्रकाशिन्यै । नभोङ्गणचर्यै । नूतये । नम्यायै । नारायण्यै । नुतायै । निर्मलायै । निर्मलाख्यानायै । तापसंपदां नाशिन्यै । नियतायै । नित्यसुखदायै । नानाश्चर्यमहानिधये । नद्यै । नदसरोमात्रे । नायिकायै नमः । ५४०

ओं नाकदीर्घिकायै नमः । नष्टोद्धरणधीरायै । नन्दनायै । नन्ददायिन्यै । निर्णिक्ताशेषभुवनायै । निस्सङ्गायै । निरुपद्रवायै । निरालम्बायै । निष्प्रपञ्चायै । निर्णाशितमहामलायै । निर्मलज्ञान-जनन्यै । निश्शेषप्राणितापहृते । नित्योत्सवायै । नित्यतृप्तायै । नमस्कार्यायै । निरञ्जनायै । निष्ठावत्यै । निरातङ्कायै । निर्लेपायै । निश्चलात्मिकायै नमः । ५६०

ओं निरवद्यायै नमः । निरीहायै । नीललोहितमूर्धगायै । नन्दिभृङ्गिगणस्तुत्यायै । नागायै । नन्दायै । नगात्मजायै । निष्प्रत्यूहायै । नाकनद्यै । निरयार्णवदीर्घनावे । पुण्यप्रदायै । पुण्यगर्भायै । पुण्यायै । पुण्यतरङ्गिण्यै । पृथवे । पृथुफलायै । पूर्णायै । प्रणतार्तिप्रभञ्जिन्यै । प्राणदायै । प्राणिजनन्यै नमः । ५८०

ओं प्राणेश्यै नमः । प्राणरूपिण्यै । पद्मालयायै । परायै । शक्त्यै । पुरजित्परमप्रियायै । परायै । परफलप्राप्त्यै । पावन्यै । पयस्विन्यै । परानन्दायै । प्रकृष्टार्थायै । प्रतिष्ठायै । पालिन्यै । परायै । पुराणपठितायै । प्रीतायै । प्रणवाक्षररूपिण्यै । पार्वत्यै । प्रेमसम्पन्नायै । पशुपाश विमोचिन्यै नमः । ६००

ओं परमात्मस्वरूपायै नमः । परब्रह्मप्रकाशिन्यै । परमानन्दनिष्यन्दायै । प्रायश्चित्तस्वरूपिण्यै । पानीयरूपनिर्वाणायै । परित्राणपरायणायै । पापेन्धनदवज्वालायै । पापारये । पापनामनुदे । परमैश्वर्यजनन्यै । प्रज्ञायै प्राज्ञायै । परापरायै । प्रत्यक्षलक्ष्म्यै । पद्माक्ष्यै । परव्योमामृतस्रवायै । प्रसन्नरूपायै । प्रणिधये । पूतायै । प्रत्यक्षदेवतायै । पिनाकिपरमप्रीतायै नमः । ६२०

ओं परमेष्ठिकमण्डलवे नमः । पद्मनाभपदार्घ्येण प्रसूतायै । पद्ममालिन्यै । परर्द्धिदायै । पुष्टिकर्यै । पथ्यायै । पूर्त्यै । प्रभावत्यै । पुनानायै । पीतगर्भघ्न्यै । पापपर्वतनाशिन्यै । फलिन्यै । फलहस्तायै । फुल्लाम्बुजविलोचनायै । फलितैनोमहाक्षेत्रायै । फणिलोकविभूषणाय । फेनच्छलप्रणुन्नैनसे । फुल्लकैरवगन्धिन्यै । फेनिलाच्छाम्बुधाराभायै । फडुच्चाटितपातकायै नमः । ६४०

ओं फाणितस्वादुसलिलायै नमः । फाण्टपथ्यजलाविलायै । विश्वमात्रे । विश्वेश्यै । विश्वायै । विश्वेश्वरप्रियायै । ब्रह्मण्यायै । ब्रह्मकृते । ब्राह्मचै । ब्रह्मिष्ठायै । विमलोदकायै । विभावर्यै ।

विरजायै । विक्रान्तानेकविष्टपायै । विश्वमित्राय । विष्णुपद्यै । वैष्णव्यै । वैष्णवप्रियायै । विरूपाक्षप्रियकर्यै । विभूत्यै नमः । ६६०

ओं विश्वतोमुख्यै नमः । विपाशायै । वैबुध्यै । वेद्यायै । वेदाक्षररसस्रवायै । विद्यायै । वेगवत्यै । वन्द्यायै । बृंहण्यै । ब्रह्मवादिन्यै । वरदायै । विप्रकृष्टायै । वरिष्ठायै । विशोधन्यै । विद्याधर्यै । विशोकायै । वयोबृन्दनिषेवितायै । बहूदकायै । बलवत्यै । व्योमस्थायै । विबुधप्रियायै नमः । ६८०

ओं वाण्यै नमः । वेदवत्यै । वित्तायै । ब्रह्मविद्यान्तरङ्गिण्यै । ब्रह्माण्टकोटिव्यासाम्ब्वै । ब्रह्महत्यापहारिण्यै । ब्रह्मेशविष्णुरूपायै । बुद्ध्यै । विभववर्द्धिन्यै । विलासिसुखदायै । वश्यायै । व्यापिन्यै । वृषारण्यै । वृषांकमौलिनिलयायै । विपन्नार्तिप्रभञ्जिन्यै । विनीतायै । विनतायै । । ब्रध्नतनयायै । विनयान्वितायै । विपञ्च्यै नमः । ७००

ओं वाद्य(विपञ्चीवादा)कुशलायै नमः । वेणुश्रुतिविचक्षणायै । वर्चस्कर्यै । बलकर्यै । बलोन्मूलितकल्मषायै। विपाप्मने । विगतातङ्कायै । विकल्पपरिवर्जितायै । वृष्टिकर्त्र्यै । वृष्टिजलायै । विधये । विच्छिन्नबन्धनायै । व्रतरूपायै । वित्तरूपायै । बहुविघ्नविनाशकृते । वसुधारायै । वसुमत्यै । विचित्राङ्ग्यै । विभायै । वसवे नमः । ७२०

ओं विजयायै नमः । विश्वबीजाय । वामदेव्यै । वरप्रदायै । वृषाश्रितायै । विषघ्न्यै । विज्ञानोर्म्यंशुमालिन्यै । भव्यायै । भोगवत्यै । भद्रायै । भवान्यै । भूतभाविन्यै । भूतधात्र्यै । भयहरायै । भक्तदारिद्र्यघातिन्यै । भुक्तिमुक्तिप्रदायै । भेश्यै । भक्तस्वर्गापवर्गदायै । भागीरथ्यै । भानुमत्यै नमः । ७४०

ओं भाग्याय नमः । भोगवत्यै । भृतये । भवप्रियायै । भवद्वेष्ट्र्यै । भूतिदायै । भूतिभूषणायै । भाललोचनभावज्ञायै । भूतभव्यभवत्प्रभवे । भ्रान्तिज्ञानप्रशमन्यै । भिन्नब्रह्माण्डमण्डपायै । भूरिदायै । भक्तिसुलभायै । भाग्यवद्दृष्टिगोचर्यै । भञ्जितोपप्लव-कुलायै । भक्ष्यभोज्यसुखप्रदायै । भिक्षणीयायै । भिक्षुमात्रे । भावायै । भावस्वरूपिण्यै नमः । ७६०

ओं मन्दाकिन्यै नमः । महानन्दायै । मात्रे । मुक्तितरङ्गिण्यै । महोदयायै । मधुमत्यै । महापुण्यायै । मुदाकर्यै । मुनिस्तुतायै । मोहहन्त्र्यै । महातीर्थायै । मधुस्रवायै । माधव्यै । मानिन्यै । मान्यायै । मनोरथपथातिगायै । मोक्षदायै । मतिदायै । मुख्यायै । महाभाग्यजनाश्रितायै नमः । ७८०

ओं महावेगवत्यै नमः । मेध्यायै । महायै । महिमभूषणायै । महाप्रभावायै । महत्यै । मीनचञ्चललोचनायै । महाकारुण्य-संपूर्णायै । महर्द्ध्यै । महोत्पलायै । मूर्तिमते । मुक्ति( मूर्तिमन्मुक्ति)-रमण्यै । मणिमाणिक्यभूषणायै । मुक्ताकलापनेपथ्यायै । मनोनयननन्दिन्यै । महापातकराशिघ्न्यै । महादेवार्धहारिण्यै । महोर्मिमालिन्यै । मुक्तायै । महादेव्यै नमः । ८००

ओं मनोन्मन्यै नमः । महापुण्योदयप्राप्यायै । मायातिमिर-चन्द्रिकायै । महाविद्यायै । महामायायै । महामेधायै । महौषधाय । मालाधर्यै । महोपायायै । महोरगविभूषणायै । महामोहप्रशमन्यै । महामङ्गलमङ्गलाय । मार्तण्डमण्डलचर्यै । महालक्ष्म्यै । मदोज्झि-तायै । यशस्विन्यै । यशोदायै । योग्यायै । युक्तात्मसेवितायै । योगसिद्धिप्रदायै नमः । ८२०

ओं याज्यायै नमः । यज्ञेशपरिपूरितायै । यज्ञेश्यै । यज्ञफलदायै । यजनीयायै । यशस्कर्यै । यमिसेव्यायै । योगयोनये ।

योगिन्यै । युक्तबुद्धिदायै । योगज्ञानप्रदायै । युक्तायै । यमाद्यष्टाङ्गयोगयुजे । यन्त्रिताघौघसंचारायै । यमलोकनिवारिण्यै । यातायातप्रशमन्यै । यातनानामकृन्तन्यै । यामिनीशहिमाच्छोदायै । युगधर्मविवर्जितायै । रेवत्यै नमः । ८४०

ओं रतिकृते नमः । रम्यायै । रत्नगर्भायै । रमायै । रतये । रत्नाकरप्रेमपात्राय । रसज्ञायै । रसरूपिण्यै । रत्नप्रासादगर्भायै । रमणीयतरङ्गिण्यै । रत्नार्चिषे । रुद्ररमण्यै । रागद्वेषविनाशिन्यै । रमायै । रामायै । रम्यरूपायै । रोगिजीवानुरूपिण्यै । रुचिकृते । रोचन्यै । रम्यायै नमः । ८६०

ओं रुचिरायै नमः । रोगहारिण्यै । राजहंसायै । रत्नवत्यै । राजत्कल्लोलराजिकायै । रामणीयकरेखायै । रुजारये । रोगशोषिण्यै । राकायै । रङ्कार्तिशमन्यै । रम्यायै । रोलम्बराविण्यै । रागिण्यै । रञ्जितशिवायै । रूपलावण्यशेवधये । लोकप्रसुवे । लोकवन्द्यायै । लोलत्कल्लोलमालिन्यै । लीलावत्यै । लोकभूमये नमः । ८८०

ओं लोकलोचनचन्द्रिकायै नमः । लेखस्रवन्त्यै । लटभायै । लघुवेगायै । लघुत्वहृते । लास्यत्तरङ्गहस्तायै । ललितायै । लयभङ्गिगायै । लोकबन्धवे । लोकधात्र्यै । लोकोत्तरगुणोर्जितायै । लोकत्रयहितायै । लोकायै । लक्ष्म्यै । लक्षणलक्षितायै । लीलायै । लक्षितनिर्वाणायै । लावण्यामृतवर्षिण्यै । वैश्वानर्यै । वासवेड्यायै नमः । ९००

ओं वन्ध्यत्वपरिहारिण्यै नमः । वासुदेवाङ्घ्रिरेणुघ्न्यै । वज्रिवज्रनिवारिण्यै । शुभावत्यै । शुभफलायै । शान्त्यै । शन्तनुवल्लभायै । शूलिन्यै । शैशववयसे । शीतलामृतवाहिन्यै । शोभावत्यै । शीलवत्यै । शोषिताशेषकिल्बिषायै । शरण्यायै । शिवदायै । शिष्टायै । शरजन्मप्रसुवे । शिवायै । शक्तये ।

शशाङ्कविमलायै नमः। ९२०

ओं शमनस्वसृसंमतायै नमः । शमायै । शमनमार्गघ्न्यै । शितिकण्ठमहाप्रियायै । शुचये । शुचिकर्यै । शोणायै । शेषशायिपदोद्भवायै। श्रीनिवासश्रुत्यै। श्रद्धायै। श्रीमत्यै। श्रियै। शुभव्रतायै। शुद्धविद्यायै। शुभावर्तायै। श्रुतानन्दायै। श्रुतिस्तुतये। शिवेतरघ्न्यै। शबर्यै। शाम्बरीरूपधारिण्यै नमः। ९४०

ओं श्मशानशोधन्यै नमः। शान्तायै । शश्वते । शतधृति-(शश्वच्छतधृति)स्तुतायै । शालिन्यै। शालिशोभाढ्यायै। शिखिवाहनगर्भभृते । शंसनीयचरित्रायै । शातिताशेषपातकायै । षड्गुणैश्वर्यसम्पन्नायै। षडङ्गश्रुतिरूपिण्यै। षण्ढताहारिसलिलायै । सत्यायन्नदनदीशतायै । सरिद्वरायै । सुरसायै । सुप्रभायै । सुरदीर्घिकायै । स्वःसिन्धवे। सर्वदुःखघ्न्यै। सर्वव्याधिमहौषधाय नमः। ९६०

ओं सेव्यायै नमः । सिद्धये । सत्यै । सूक्तये । स्कन्दसुवे । सरस्वत्यै। सम्परत्तङ्गिण्यै। स्तुत्यायै। स्थाणुमौलिकृतालयायै। स्थैर्यदायै । सुभगायै । सौख्यायै । स्त्रीषुसौभाग्यदायिन्यै । स्वर्गनिःश्रेणिकायै। सूक्ष्मायै। स्वधायै। स्वाहायै। सुधाजलायै। समुद्ररूपिण्यै। स्वर्ग्यायै नमः। ९८०

ओं सर्वपातकवैरिण्यै । स्मृताघहारिण्यै नमः । सीतायै । संसाराब्धितरण्डिकायै । सौभाग्यसुन्दर्यै । सन्ध्यायै । सर्वसारसमन्वितायै । हरप्रियायै । हृषीकेश्यै । हंसरूपायै । हिरण्मय्यै । हृताघसंघायै । हितकृते । हेलायै । हेलाघगर्वहृते । क्षेमदायै। क्षालिताघौघायै। क्षुद्रविद्राविण्यै। क्षमायै। गंगायै नमः। १०००

——*——

# गङ्गाष्टोत्तरशतनामस्तोत्रम्

श्रीगङ्गा विष्णुपादाब्जसंभूता हरवल्लभा।
हिमाचलेन्द्रतनया गिरिमण्डलगामिनी ॥ १
तारकातिजननी सगरात्मजतारिका।
सरस्वतीसमायुक्ता सुघोषा सिन्धुगामिनी ॥ २
भागीरथी भाग्यवती भगीरथरथानुगा।
त्रिविक्रमपदोद्भूता त्रिलोकपथगामिनी ॥ ३
क्षीरशुभ्रा बहुक्षीरा क्षीरिवृक्षसमाकुला।
त्रिलोचनजटावासा ऋणत्रयविमोचिनी ॥ ४
त्रिपुरारिशिरश्चूडा जाह्नवी नतभीतिहृत्।
अव्यया नयनानन्ददायिनी नगपुत्रिका ॥ ५
निरञ्जना नित्यशुद्धा नीरजालिपरिष्कृता।
सावित्री सलिलावासा सागराम्बुसमेधिनी ॥ ६
रम्या बिन्दु सरोऽव्यक्ता बृन्दारकसमाश्रिता।
उमासपत्नी शुभ्राङ्गी श्रीमती धवलाम्बरा ॥ ७
आखण्ड लवनावासा खण्डेन्दुकृतशेखरा।
अमृताकारसलिला लीलालङ्घितपर्वता ॥ ८
विरिञ्चिकलशावासा त्रिवेणी त्रिगुणात्मिका।
सङ्गताघौघशमनी शङ्खदुन्दुभिनिस्वना ॥ ९
भीतिहृद्भाग्यजननी भिन्नब्रह्माण्डदर्पिणी।
नन्दिनी शीघ्रगा सिद्धा शरण्या शशिशेखरा ॥ १०
शाङ्करी शफरीपूर्णा भर्गमूर्धकृतालया।
भवप्रिया सत्यसन्धप्रिया हंसस्वरूपिणी ॥ ११

भगीरथसुताऽनन्ता शरच्चन्द्रनिभानना।
ओङ्काररूपिण्यतुला क्रीडाकल्लोलकारिणी॥ १२

स्वर्गसोपानसरणिः सर्वदेवस्वरूपिणी।
अंभःप्रदा दुःखहन्त्री शान्तिसन्तानकारिणी॥ १३

दारिद्र्यहन्त्री शिवदा संसारविषनाशिनी।
प्रयागनिलया सीता तापत्रय विमोचिनी॥ १४

शरणागतदीनार्तपरित्राण परायणा।
सुमुक्तिदा तथा चैव सिद्धयोगनिषेविता॥ १५

पापहन्त्री पावनाङ्गी परब्रह्मस्वरूपिणी।
पूर्णा पुरातना पुण्या पुण्यदा पुण्यवाहिनी॥ १६

पुलोमजार्चिता पूता पूतत्रिभुवना जपा।
जङ्गमा जङ्गमाधारा जलरूपा जगद्धिता॥ १७

जह्नुपुत्री जगन्माता जम्बूद्वीपविहारिणी।
भवपत्नी भीष्ममाता सिद्धा रम्याऽत्र कीर्त्यते॥ १८

उमाकराब्ज सञ्जाता चाज्ञानतिमिरापहा।
इतीदं कीर्तितं देव्या नाम्नामष्टोत्तरं शतम्।
स्मृतं शुभं पातकघ्नं पावनं दिव्यमङ्गलम्॥ १९

—*—

## श्री गङ्गाष्टोत्तरशतनामावलिः।

ओं श्रीगङ्गायै नमः। विष्णुपादाब्जसंभूतायै। हरवल्लभायै। हिमाचलेन्द्रतनयायै। गिरिमण्डलगामिन्यै। तारकारातिजनन्यै। सगरात्मजतारिकायै। सरस्वतीसमायुक्तायै। सुघोषायै। सिन्धुगामिन्यै। भागीरथ्यै। भाग्यवत्यै। भगीरथरथानुगायै।

त्रिविक्रमपदोद्भूतायै । त्रिलोकपथगामिन्यै । क्षीरशुभ्रायै । बहुक्षीरायै । क्षीरिवृक्षसमाकुलायै । त्रिलोचनजटावासायै । ऋणत्रयविमोचिन्यै नमः । २०

ओं त्रिपुरारिशिरश्चूडायै नमः । जाह्नव्यै । नतभीतिहृते । अव्ययायै । नयनानन्ददायिन्यै । नगपुत्रिकायै । निरञ्जनायै । नित्यशुद्धायै । नीरजालिपरिष्कृतायै । सावित्र्यै । सलिलावासायै । सागराम्बुसमेधिन्यै । रम्यायै । बिन्दुसरसे । अव्यक्तायै । वृन्दारकसमाश्रितायै । उमासपत्न्यै । शुभ्राङ्ग्यै । श्रीमत्यै । धवलाम्बरायै नमः । ४०

ओं आखण्डलवनावासायै नमः । खण्डेन्दुकृतशेखरायै । अमृताकारसलिलायै । लीलालङ्घितपर्वतायै । विरिंचिकलशावासायै । त्रिवेण्यै । त्रिगुणात्मिकायै । संगताघौघशमन्यै । शङ्खदुन्दुभिनिस्वनायै । भीतिहृते । भाग्यजनन्यै । भिन्नब्रह्माण्डदर्पिण्यै । नन्दिन्यै । शीघ्रगायै । सिद्धायै । शरण्यायै । शशिशेखरायै । शाङ्कर्यै । शफरीपूर्णायै । भर्गमूर्धकृतालयायै नमः । ६०

ओं भवप्रियायै नमः । सत्यसन्धप्रियायै । हंसस्वरूपिण्यै । भगीरथसुतायै । अनन्तायै । शरच्चन्द्रनिभाननायै । ओङ्काररूपिण्यै । अतुलायै । क्रीडाकल्लोलकारिण्यै । स्वर्गसोपानसरण्यै । सर्वदेवस्वरूपिण्यै । अम्भः प्रदायै । दुःखहन्त्र्यै । शान्तिसन्तानकारिण्यै । दारिद्र्यहन्त्र्यै । शिवदायै । संसारविषनाशिन्यै । प्रयागनिलयायै । सीतायै । तापत्रयविमोचिन्यै नमः । ८०

ओं शरणागतदीनार्तपरित्राणपरायणायै । सुमुक्तिदायै । सिद्धयोगनिषेवितायै । पापहन्त्र्यै । पावनाङ्ग्यै । परब्रह्मस्वरूपिण्यै । पूर्णायै । पुरातनायै । पुण्यायै । पुण्यदायै ।

पुण्यवाहिन्यै ।पुलोमजार्चितायै। पूतायै। पूतत्रिभुवनायै। जपायै । जङ्गमायै । जङ्गमाधारायै । जलरूपायै । जगद्धितायै । जह्नुपुत्र्यै नमः । १००

ओं जगन्मात्रे नमः । जम्बूद्वीपविहारिण्यै । भवपत्न्यै। भीष्ममात्रे । सिद्धायै । रम्यायै । उमाकराब्जसंजातायै । अज्ञानतिमिरापहायै नमः । १०८

—*—

# श्री गङ्गाशतनामस्तोत्रम्

विष्णुपादप्रसूताऽसि वैष्णवी विष्णुदेवता।
त्राहि नस्त्वमघादस्मादाजन्ममरणान्तिकात् ।। १
ओं। नमः शिवायै गङ्गायै शिवदायै नमो नमः ।
नमस्ते विष्णुरूपिण्यै ब्रह्ममूर्त्यै नमोऽस्तु ते ।। २
नमस्ते रुद्ररूपिण्यै शाङ्कर्यै ते नमो नमः ।
सर्वदेवस्वरूपिण्यै नमो भेषजमूर्तये ।। ३
संसारविषनाशिन्यै जीवनायै नमोऽस्तु ते ।
तापत्रितयसंहन्त्र्यै प्राणेश्यै ते नमो नमः । ४
सर्वस्य सर्वव्याधीनां भिषक्श्रेष्ठे नमोऽस्तु ते ।
स्थाणुजङ्गमसंभूतविषहन्त्र्यै नमोऽस्तु ते ।। ५
शान्तिसन्तानकारिण्यै नमस्ते शुद्धमूर्तये ।
सर्वसंशुद्धिकारिण्यै नमः पापारिमूर्तये ।। ६
भुक्तिमुक्तिप्रदायिन्यै भद्रदायै नमो नमः ।
भोगोपभोगदायिन्यै भोगवत्यै नमोऽस्तु ते ।। ७

मन्दाकिन्यै नमस्तेऽस्तु स्वर्गदायै नमो नमः ।
नमस्त्रैलोक्यभूषायै त्रिपथायै नमो नमः ।। ८

नमस्त्रिशुक्लसंस्थायै क्षमावत्यै नमो नमः ।
त्रिहुताशनसंस्थायै तेजोवत्यै नमो नमः । ९

नन्दायै लिङ्गधारिण्यै सुधाधारात्मने नमः ।
नमस्ते विश्वमुख्यायै रेवत्यै ते नमो नमः । १०

बृहत्यै ते नमस्तेऽस्तु लोकधात्र्यै नमोऽस्तु ते ।
नमस्ते विश्वमित्रायै नन्दिन्यै ते नमो नमः ।। ११

पृथ्व्यै शिवामृतायै च सुवृषायै नमो नमः ।
परावरशताढ्यायै तारायै ते नमो नमः । १२

पाशजालनिकृन्तिन्यै अभिन्नायै नमोऽस्तु ते।
शान्तायै च वरिष्ठायै वरदायै नमो नमः ।। १३

उग्रायै सुखजग्ध्यै च सञ्जीविन्यै नमोऽस्तु ते ।
ब्रह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमो नमः ।। १४

प्रणतार्तिप्रमार्जिन्यै जगन्मात्रे नमोऽस्तु ते ।
सर्वापत्प्रतिपक्षायै मङ्गलायै नमो नमः ।। १५

शरणागतदीनार्तपरित्राणपरायणे।
सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तुते ।। १६

निर्लेपायै दुःखहन्त्र्यै दक्षायै ते नमो नमः ।
परापरपरायै च गङ्गे निर्वाणदायिनि ।। १७

गंगे ममाग्रतो भूयाः गङ्गे मे तिष्ठ पृष्ठतः ।
गङ्गे मे पार्श्वयोरेधि गङ्गे त्वय्यस्तु मे स्थितिः ।। १८

आदौ त्वमन्ते मध्ये च सर्वत्र त्वं नमः शिवे ।
त्वमेव मूलप्रकृतिस्त्वं पुमान्पर एव हि ।
गङ्गे त्वं परमात्मा च शिवस्तुभ्यं नमः शिवे ।। १९
न कार्तिकसमो मासो न कृतेन समं युगम् ।
न च वेदसमं शास्त्रं न तीर्थं गंगया समम् ।। २०
जाह्नवी वृद्धगङ्गा च कालिन्दी च सरस्वती ।
कावेरी नर्मदा वेणी सप्त गङ्गाः प्रकीर्तिताः ।। २१

—*—

# यमुनासहस्रनामस्तोत्रम्

(कालिन्दीसहस्रनामस्तोत्रम्)

मान्धातोवाच—

नाम्नां सहस्रं कृष्णायाः सर्वसिद्धिकरं परम् ।
वद मां मुनिशार्दूल त्वं सर्वज्ञो निरामयः ।। १

सौभरिरुवाच—

नाम्नां सहस्रं कालिन्द्या मान्धातस्ते वदाम्यहम् ।
सर्वसिद्धिकरं दिव्यं श्रीकृष्णवशाकारकम् ।। २

अस्य श्रीकालिन्दीसहस्रनामस्तोत्रमन्त्रस्य सौभरिर्ऋषिः । श्रीयमुना देवता । अनुष्टुप् छन्दः । मायाबीजमिति कीलकम् । रमाबीजमिति शक्तिः । श्री कलिन्दनन्दिनीप्रसादसिद्ध्यर्थे पाठे विनियोगः । अथ ध्यानम्—

ओं श्यामामंभोजनेत्रां सघनघनरुचिं रत्नमञ्जीरकूजत्
काञ्चीकेयूरयुक्तां कनकमणिमये बिभ्रतीं कुण्डले द्वे ।
भ्राजच्छ्रीनीलवस्त्रां स्फुरदमलचलद्धारभारां मनोज्ञां
ध्यायेन्मार्तण्डपुत्रीं तनुकिरणचयोद्दीप्तदीपाभिरामाम् ।। ३

ओं कालिन्दी यमुना कृष्णा कृष्णरूपा सनातनी।
कृष्णवामांससंभूता परमानन्दरूपिणी ॥ ४

गोलोकवासिनी श्यामा वृन्दावनविनोदिनी।
राधासखी रासलीला रासमण्डलमण्डिता ॥ ५

निकुञ्जमाधवीवल्ली रङ्गवल्लीमनोहरा।
श्रीरासमण्डलीभूता यूथीभूता हरिप्रिया ॥ ६

गोलोकतटिनी दिव्या निकुंजतलवासिनी।
दीर्घोर्मिवेगगंभीरा पुष्पपल्लववासिनी ॥ ७

घनश्यामा मेघमाला बलाका पद्ममालिनी।
परिपूर्णतमा पूर्णा पूर्णब्रह्मप्रिया परा ॥ ८

महावेगवती साक्षान्निकुंजद्वारनिर्गता।
महानदी मन्दगतिर्विरजा वेगभेदिनी ॥ ९

अनेकब्रह्माण्डगता ब्रह्मद्रवसमाकुला।
गङ्गा मिश्रा निर्मलाभा निर्जला सरितां वरा ॥ १०

रत्नबद्धोभयतटा हंसपद्मादिसंकुला।
नदी निर्मलपानीया सर्वब्रह्माण्डपावनी ॥ ११

वैकुण्ठपरिखीभूता परिखा पापहारिणी।
ब्रह्मलोकागता ब्राह्मी स्वर्गा स्वर्गनिवासिनी ॥ १२

उल्लसंती प्रोत्पतन्ती मेरुमाला महोज्ज्वला।
श्रीगङ्गांभःशिखरिणी गण्डशैलविभेदिनी ॥ १३

देशान्पुनन्ती गच्छन्ती महती भूमिमध्यगा।
मार्तण्डतनुजा पुण्या कलिन्दगिरिनन्दिनी ॥ १४

यमस्वसा मन्दहासा सुद्विजा रचिताम्बरा।
नीलाम्बरा पद्ममुखी चरन्ती चारुदर्शना॥ १५

रम्भोरूः पद्मनयना माधवी प्रमदोत्तमा।
तपश्चरन्ती सुश्रोणी कूजन्नूपुरमेखला॥ १६

जलस्थिता श्यामलाङ्गी खाण्डवाभा विहारिणी।
गाण्डीविभाषिणी वन्या श्रीकृष्णाम्बरमिच्छती॥ १७

द्वारकागमना राज्ञी पट्टराज्ञी परङ्गता।
महाराज्ञी रत्नभूषा गोमतीतीरचारिणी॥ १८

स्वकीया स्वसुखा स्वार्था स्वीयकार्यार्थसाधिनी।
नवलाङ्गाऽबला मुग्धा वराङ्गा वामलोचना॥ १९

अज्ञातयौवनाऽदीना प्रभा कान्तिर्द्युतिश्छविः।
सोमाभा परमा कीर्तिः कुशला ज्ञातयौवना॥ २०

नवोढा मध्यगा मध्या प्रौढिः प्रौढा प्रगल्भका।
धीराऽधीरा धैर्य्यधरा ज्येष्ठा श्रेष्ठा कुलाङ्गना॥ २१

क्षणप्रभा चञ्चलार्चा विद्युत्सौदामिनी तडित्।
स्वाधीनपतिका लक्ष्मीः पुष्टा स्वाधीनभर्तृका॥ २२

कलहान्तरिता भीरुरिच्छा प्रोत्कण्ठिताऽऽकुला।
कशिपुस्था दिव्यशय्या गोविन्दहृतमानसा॥ २३

खण्डिताऽखण्डशोभाढ्या विप्रलब्धाऽभिसारिका।
विरहार्ता विरहिणी नारी प्रोषितभर्तृका॥ २४

मानिनी मानदा प्राज्ञा मन्दारवनवासिनी।
झङ्कारिणी झणत्कारी रणन्मञ्जीरनूपुरा॥ २५

मेखला मेखलाकाञ्ची श्रीकाञ्ची काञ्चनामयी।
कञ्चुकी कञ्चुकमणिः श्रीकण्ठाढ्या महामणिः ॥ २६

श्रीहारिणी पद्महरा मुक्ता मुक्ताफलार्चिता।
रत्नकङ्कणकेयूरा स्फुरदङ्गुलिभूषणा ॥ २७

दर्पणा दर्पणीभूता दुष्टदर्पविनाशिनी।
कम्बुग्रीवा कम्बुधरा ग्रैवेयकविराजिता ॥ २८

ताटंकिनी दन्तधरा हेमकुण्डलमण्डिता।
शिखाभूषा भालपुष्पा नासामौक्तिकशोभिता ॥ २९

मणिभूमिगता देवी रैवताद्रिविहारिणी।
वृन्दावनगता वृन्दा वृन्दारण्यनिवासिनी ॥ ३०

वृन्दावनलता माध्वी वृन्दारण्यविभूषणा।
सौन्दर्यलहरी लक्ष्मीर्मधुरातीर्थवासिनी ॥ ३१

विश्रान्तवासिनी काम्या रम्या गोकुलवासिनी।
रमणस्थलशोभाढ्या महावनमहानदी ॥ ३२

प्रणता प्रोन्नता पुष्टा भारती भारतार्चिता।
तीर्थराजगतिर्गोत्रा गङ्गासागरसंगमा ॥ ३३

सप्ताब्धिभेदिनी लोला सप्तद्वीपगता बलात्।
लुठन्ती शैलभिद्यन्ती स्फुरन्ती वेगवत्तरा ॥ ३४

काञ्चनी काञ्चनीभूमिः काञ्चनीभूमिभाविता।
लोकदृष्टिर्लोकलीला लोकालोकाचलार्चिता ॥ ३५

शैलोद्गता स्वर्गगता स्वर्गार्च्या स्वर्गपूजिता।
वृन्दावनवनाध्यक्षा रक्षा कक्षा तटी पटी ॥ ३६

अिसकुण्डगता कच्छा स्वच्छन्दोच्छलिताद्रिजा।
कुहरस्था रयप्रस्था प्रस्था शान्तेतरातुरा ॥ ३७

अम्बुच्छटा सीकराभा दर्दुरा दर्दुरीधरा।
पापाङ्कुशा पापसिंही पापद्रुमकुठारिणी ॥ ३८

पुण्यसंघा पुण्यकीर्तिः पुण्यदा पुण्यवर्द्धिनी।
मधोर्वननदीमुख्या तुला तालवनस्थिता ॥ ३९

कुमुद्वननदी कुब्जा कुमुदाम्भोजवर्द्धिनी।
प्लवरूपा वेगवती सिंहसर्वादिवाहिनी ॥ ४०

बहुली बहुदा बह्वी बहुला वनवन्दिता।
राधाकुण्डकुलाराध्या कृष्णाकुण्डजलाश्रिता ॥ ४१

ललिताकुण्डगा घण्टा विशाखाकुण्डमण्डिता।
गोविन्दकुण्डनिलया गोपकुण्डतरङ्गिणी ॥ ४२

श्रीगङ्गा मानसी गङ्गा कुसुमांबर भाविनी।
गोवर्धिनी गोधनाढ्या मयूरी वरवर्णिनी ॥ ४३

सारसी नीलकण्ठाभा कूजत्कोकिलपोतकी।
गिरिराजप्रभूर्भूरिरातपत्रातपत्रिणी ॥ ४४

गोवर्द्धनाङ्का गोदन्ती दिव्यौषधिनिधिः श्रुतिः।
पारदी पारदमयी नारदी शारदी भृतिः ॥ ४५

श्रीकृष्णचरणाङ्कस्था कामा कामवनाञ्चिता।
कामाटवी नन्दिनी च नन्दग्राममहीधरा ॥ ४६

बृहत्सानुद्युतिः प्रोता नन्दीश्वरसमन्विता।
काकली कोकिलमयी भाण्डारकुशकौशला ॥ ४७

लोहार्गलप्रदाकारा काश्मीरवसनावृता।
बर्हिषदी शोणपुरी शूरक्षेत्रपुराधिका॥ ४८

नानाभरणशोभाढ्या नानावर्णसमन्विता।
नानानारीकदम्बाढ्या नानावस्त्रविराजिता॥ ४९

नानालोकगता वीचिर्नानाजलसमन्विता।
स्त्रीरत्नं रत्ननिलया ललनारत्नरञ्जिनी॥ ५०

रङ्गिणी रङ्गभूमाढ्या रङ्गा रङ्गमहीरुहा।
राजविद्या राजगुह्या जगत्कीर्तिर्घनापहा॥ ५१

विलोलघण्टा कृष्णाङ्गी कृष्णदेहसमुद्भवा॥
नीलपङ्कजवर्णाभा नीलपङ्कजहारिणी॥ ५२

नीलाभा नीलपद्माढ्या नीलाम्भोरुहवासिनी।
नागवल्ली नागपुरी नागवल्लीदलार्चिता॥ ५३

ताम्बूलचर्चिता चर्चा मकरन्दमनोहरा।
सकेसरा केसरिणी केशपाशाभिशोभिता॥ ५४

कज्जलाभा कज्जलाक्ता कज्जलीकलिताञ्जना॥
अलक्तचरणा ताम्रा लालाताम्रकृताम्बरा॥ ५५

सिन्दूरिता लिप्तवाणी सुश्रीः श्रीखण्डमण्डिता।
पाटीरपङ्कवसना जटामांसीरुचाम्बरा॥ ५६

आगर्य्यगरुगन्धाक्ता तगराश्रितमारुता।
सुगन्धितैलरुचिरा कुन्तलालिः सुकुन्तला॥ ५७

शकुन्तलाऽपांसुला च पातिव्रत्यपरायणा।
सूर्यकोटिप्रभा सूर्यकन्या सूर्यसमुद्भवा॥ ५८

कोटिसूर्यप्रतीकाशा सूर्यजा सूर्यनन्दिनी।
संज्ञा संज्ञासुता स्वेच्छा संज्ञामोदप्रदायिनी ॥ ५९

संज्ञापुत्री स्फुरच्छाया तपन्ती तापकारिणी।
सावर्ण्यानुभवा वेदी वडवा सौख्यदायिनी ॥ ६०

शनैश्चरानुजा कीला चन्द्रवंशविवर्धिनी।
चन्द्रवंशवधूश्चन्द्रा चन्द्रावलिसहायिनी ॥ ६१

चन्द्रावती चन्द्रलेखा चन्द्रकान्तानुगांशुका।
भैरवी पिङ्गलाशङ्की लीलावत्यागरीमयी ॥ ६२

धनश्रीर्देवगान्धारी स्वर्मणिर्गुणवर्द्धिनी।
व्रजमल्लार्यधकरी विचित्रा जयकारिणी ॥ ६३

गान्धारी मञ्जरी टोढी गुर्ज्जर्य्यासावरी जया।
कर्णाटी रागिणी गौडी वैराटी गारवाटिका ॥ ६४

चतुश्चन्द्रकला हेरी तैलङ्गी विजयावती।
ताली तालस्वरा गानक्रिया मात्राप्रकाशिनी ॥ ६५

वैशाखी चञ्चला चारुर्माचारी घुंघटी घटा।
वैरागरी सोरठी सा कैदारी जलधारिका ॥ ६६

कामाकरश्रीकल्याणी गौडकल्याणमिश्रिता।
रामसंजीवनी हेला मन्दारी कामरूपिणी ॥ ६७

सारङ्गी मारुती होढा सागरी कामवादिनी।
वैभासी मङ्गला चान्द्री रासमण्डलमण्डना ॥ ६८

कामधेनुः कामलता कामदा कमनीयका।
कल्पवृक्षस्थली स्थूला क्षुधा सौधनिवासिनी ॥ ६९

गोलोकवासिनी सुभ्रूर्यष्टिभृद्द्वारपालिका।
शृङ्गारप्रकरा शृङ्गा स्वच्छाक्षय्योपकारिका ॥ ७०

पार्षदा सुमुखी सेव्या श्रीवृन्दावनपालिका।
निकुञ्जभृत्कुञ्जपुञ्जा गुञ्जाभरणभूषिता ॥ ७१

निकुञ्जवासिनी प्रेष्या गोवर्धनतटीभवा।
विशाखा ललिता रामा नीरजा मधुमाधवी ॥ ७२

एकानेकसखी शुक्ला सखीमध्या महामनाः ।
श्रुतिरूपा ऋषिरूपा मैथिलाः कौशलाः स्त्रियः ॥ ७३

अयोध्यापुरवासिन्यो यज्ञसीताः पुलिन्दकाः ।
रमा वैकुण्ठवासिन्यः श्वेतद्वीपसखीजनाः ॥ ७४

ऊर्ध्ववैकुण्ठवासिन्यो दिव्याजितपदाश्रिताः ।
श्रीलोकाचलवासिन्यः श्रीसख्यः सागरोद्भवाः ॥ ७५

दिव्या अदिव्या दिव्याङ्गा व्याप्तास्त्रिगुणवृत्तयः ।
भूमिगोप्यो देवनार्य्यो लता ओषधिवीरुधः ॥ ७६

जालन्धर्यः सिन्धुसुताः पृथुबर्हिष्मतीभवाः ।
दिव्याम्बरा अप्सरसः सौतला नागकन्यकाः ॥ ७७

परं धाम परं ब्रह्म पौरुषा प्रकृतिः परा।
तटस्था गुणभूर्गीता गुणागुणमयी गुणा ॥ ७८

चिद्घना सदसन्माला दृष्टिर्दृश्या गुणाकरा।
महत्तत्त्वमहङ्कारो मनो बुद्धिः प्रचेतना ॥ ७९

चेतोवृत्तिः स्वान्तरात्मा चतुर्धा चतुरक्षरा।
चतुर्व्यूहश्चतुर्मूर्तिर्व्योम वायुरदो जलम् ॥ ८०

महीं शब्दो रसो गन्धः स्पर्शो रूपमनेकधा।
कर्मेन्द्रियं कर्ममयी ज्ञानं ज्ञानेन्द्रियं द्विधा ।। ८१

त्रिधाधिभूतमध्यात्ममधिदैवमधिस्थितम् ।
ज्ञानशक्तिः क्रियाशक्तिः सर्वदेवाधिदेवता ।। ८२

तत्त्वसङ्घा विराण्मूर्तिर्धारणा धारणामयी ।
श्रुतिः स्मृतिर्वेदमूर्तिः संहिता गर्गसंहिता ।। ८३

पाराशरी सैव सृष्टिः पारहंसी विधातृका ।
याज्ञवल्की भागवती श्रीमद्भागवतार्चिता ।। ८४

रामायणमयी रम्या पुराणपुरुषप्रिया ।
पुराणमूर्तिः पुण्याङ्गी शास्त्रमूर्तिर्महोन्नता ।। ८५

मनीषा धिषणा बुद्धिर्वाणी धीः शेमुषी मतिः ।
गायत्री वेदसावित्री ब्रह्माणी ब्रह्मलक्षणा ।। ८६

दुर्गाऽपर्णा सती सत्या पार्वती चण्डिकाम्बिका ।
आर्या दाक्षायणी दाक्षी दक्षयज्ञविघातिनी ।। ८७

पुलोमजा शचीन्द्राणी वेदी देववरार्पिता ।
वायुना धारिणी धन्या वायवी वायुवेगगा ।। ८८

यमानुजा संयमनी संज्ञा च्छाया स्फुरद्द्युतिः ।
रत्नदेवी रत्नवृन्दा तारा तरणिमण्डला ।। ८९

रुचिः शान्तिः क्षमा शोभा दया दक्षा द्युतिस्त्रपा ।
तलतुष्टिर्विभा पुष्टिः सन्तुष्टिः पुष्टभावना ।।९०

चतुर्भुजा चारुनेत्रा द्विभुजाष्टभुजा बला ।
शङ्खहस्ता पद्महस्ता चक्रहस्ता गदाधरा ।। ९१

निषङ्गधारिणी चर्मखड्गपाणिर्धनुर्धरा।
धनुष्टङ्कारिणी योद्ध्री दैत्योद्भटविनाशिनी ।। ९२

रथस्था गरुडारूढा श्रीकृष्णहृदयस्थिता ।।
वंशीधरा कृष्णवेषा स्रग्विणी वनमालिनी ।। ९३

किरीटधारिणी याना मन्दा मन्दगतिर्गतिः ।
चन्द्रकोटिप्रतीकाशा तन्वी कोमलविग्रहा ।। ९४

भैष्मी भीष्मसुता भीमा रुक्मिणी रुक्मरूपिणी ।
सत्यभामा जाम्बवती सत्या भद्रा सुदक्षिणा ।। ९५

मित्रविन्दा सखीवृन्दा वृन्दारण्यध्वजोर्ध्वगा ।।
शृङ्गारकारिणी शृङ्गा शृङ्गभूः शृङ्गदाशुगा ।। ९६

तितिक्षेक्षा स्मृतिः स्पर्धा स्पृहा श्रद्धा स्वनिर्वृतिः ।
ईशा तृष्णाभिधा प्रीतिर्हिता याच्ञा क्षमा कृषिः ।। ९७

आशा निद्रा योगनिद्रा योगिनी योगदा युगा।
निष्ठा प्रतिष्ठा समितिः सत्त्वप्रकृतिरुत्तमा ।। ९८

तमःप्रकृतिर्दुर्मर्षा रजःप्रकृतिरानतिः ।
क्रियाऽक्रियाकृतिर्ग्लानिः सात्त्विक्याध्यात्मिकी वृषा ।। ९९

सेवा शिखामणिर्वृद्धिराहूतिः सुमतिर्द्युभूः ।
राज्जुर्द्विदाम्नी षड्वर्गा संहिता सौख्यदायिनी ।। १००

मुक्तिः प्रोक्तिर्देशभाषा प्रकृतिः पिङ्गलोद्भवा ।
नागभावा नागभूषा नागरी नगरी नगा ।। १०१

नौर्नौका भवनौर्भाव्या भवसारगसेतुका ।
मनोमयी दारुमयी सैकती सिकतामयी ।। १०२

लेख्या लेप्या मणिमयी प्रतिमा हेमनिर्मिता ।
शैला शैलभवा शीला शीलरामा चलाऽचला ॥ १०३

अस्थिता स्वस्थिता तूली वैदिकी तान्त्रिकी विधिः ।
सन्ध्या सन्ध्याभ्रवसना वेदसन्धिः सुधामयी ॥ १०४

सायन्तनी शिखावेद्या सूक्ष्मा जीवकला कृतिः ।
आत्मभूता भाविताऽण्वी प्रह्वा कमलकर्णिका ॥ १०५

नीराजनी महाविद्या कन्दली कार्यसाधिनी ।
पूजा प्रतिष्ठा विपुला पुनन्ती पारलौकिकी ॥ १०६

शुक्लशुक्तिर्मौक्तिका च प्रतीतिः परमेश्वरी ।
विराजोष्णिग् विराड् वेणी वेणुका वेणुनादिनी ॥ १०७

आवर्तिनी वार्तिकदा वार्त्ता वृत्तिर्विमानगा ।
सासाढ्यरासिनी सासी रासमण्डलमण्डली ॥ १०८

गोपगोपीश्वरी गोपी गोपीगोपालवन्दिता ।
गोचारिणी गोपनदी गोपानन्दप्रदायिनी ॥ १०९

पशव्यदा गोपसेव्या कोटिशो गोगणावृता ।
गोपानुगा गोपवती गोविन्दपदपादुका ॥ ११०

वृषभानुसुता राधा श्रीकृष्णवशकारिणी ।
कृष्णप्राणाधिका शश्वद्रसिका रसिकेश्वरी ॥ १११

अवटोदा ताम्रपर्णी कृतमाला विहायसी ।
कृष्णा वेणी भीमरथी तापी रेवा महापगा ॥ ११२

वैयासकी च कावेरी तुङ्गभद्रा सरस्वती ।
चन्द्रभागा वेत्रवती गोविन्दपदपादुका ॥ ११३

गोमती कौशिकी सिन्धुर्बाणगङ्गातिसिद्धिदा।
गोदावरी रत्नमाला गङ्गा मन्दाकिनी बला॥ ११४

स्वर्णदी जाह्नवी वेला वैष्णवी मङ्गलालया।
बाला विष्णुपदीप्रोक्ता सिन्धुसागरसङ्गता॥ ११५

गङ्गासागर शोभाढ्या सामुद्री रत्नदा धुनी।
भागीरथी स्वर्धुनी भूः श्रीवामनपदच्युता॥ ११६

लक्ष्मी रमा रामणीया भार्गवी विष्णुवल्लभा।
सीतार्चिर्जानकी माता कलङ्करहिता कला॥ ११७

कृष्णपादाब्जसंभूता सर्वा त्रिपथगामिनी।
धरा विश्वम्भराऽनन्ता भूमिर्धात्री क्षमामयी॥ ११८

स्थिरा धरित्री धरणिरुर्वी शेषफणस्थिता।
अयोध्या राघवपुरी कौशिकी रघुवंशजा॥ ११९

मथुरा माथुरी पन्था यादवी ध्रुवपूजिता।
माया पूर्बिल्वनीला द्वार्गंगाद्वारविनिर्गता॥ १२०

कुशावर्तमयी ध्रौव्या ध्रुवमण्डलमध्यगा।
काशी शिवपुरी शेषा विन्ध्या वाराणसी शिवा॥ १२१

अवन्तिका देवपुरी प्रोज्वलोज्जयिनी जिता।
द्वारावती द्वारकामा कुशभूता कुशस्थली॥ १२२

महापुरी सप्तपुरी नन्दिग्रामस्थलस्थिता।
शास्त्रग्रामशिलादित्या शम्भलग्राममध्यगा॥ १२३

वंशा गोपालिनी क्षिप्रा हरिमन्दिरवर्त्तिनी।
बर्हिष्मती हस्तिपुरी शक्रप्रस्थनिवासिनी॥ १२४

दाडिमी सैन्धवी जम्बुः पौष्करी पुष्करप्रसूः ।
उत्पलावर्तगमना नैमिषी नैमिषावृता ।। १२५

कुरुजाङ्गलभूः काली हैमवत्यर्बुदी बुधा ।
शूकरक्षेत्रविदिता श्वेतवाराहधारिता ।। १२६

सर्वतीर्थमयी तीर्था तीर्थानां कीर्तिकारिणी ।
हारिणी सर्वदोषाणां दायिनी सर्वसम्पदाम्।। १२७

वर्द्धिनी तेजसां साक्षाद्गर्भवासनिकृन्तनी ।
गोलोकधामधनिनी निकुंजनिजमञ्जरी ।। १२८

सर्वोत्तमा सर्वपुण्या सर्वसौन्दर्यशृङ्खला ।
सर्वतीर्थोपरिगता सर्वतीर्थाधिदेवता ।। १२९

नाम्नां सहस्रं कालिन्द्याः कीर्तिदं कामदं परम् ।
महापापहरं पुण्यमायुर्वर्द्धनमुत्तमम् ।। १३०

एकवारं पठेद्रात्रौ चोरेभ्यो न भयं भवेत् ।
द्विवारं प्रपठेन्मार्गे दस्युभ्यो न भयं क्वचित् ।। १३१

द्वितीयां तु समारभ्य पठेत्पूर्णावधिं द्विजः ।
दशवारमिदं भक्त्या ध्यात्वा देवीं कलिन्दजाम् ।। १३२

रोगी रोगात्प्रमुच्येत बद्धो मुच्येत बन्धनात् ।
गुर्विणी जनयेत्पुत्रं विद्यार्थी पण्डितो भवेत् ।। १३३

मोहनं स्तम्भनं शश्वद्वशीकरणमेव च ।
उच्चाटनं घातनं च शोषणं दीपनं तथा ।। १३४

उन्मादनं तापनं च निधिदर्शनमेव च ।
यद्यद्वाञ्छति चित्तेन तत्तत्प्राप्नोति मानवः ।। १३५

ब्राह्मणो ब्रह्मवर्चस्वी राजन्यो जगतीपतिः ।
वैश्यो निधिपतिर्भूयाच्छूद्रः श्रुत्वा तु निर्मलः ॥ १३६

पूजाकाले तु यो नित्यं पठते भक्तिभावतः ।
लिप्यते न स पापेन पद्मपत्रमिवांभसा ॥ १३७

शतवारं पठेन्नित्यं वर्षावधिमतः परम् ।
पटलं पद्धतिं कृत्वा स्तवं च कवचं तथा ॥ १३८

सप्तद्वीपमहीराज्यं प्राप्नुयान्नात्र संशयः ।
निष्कारणं पठेद्यस्तु यमुनाभक्तिसंयुतः ॥ १३९

त्रैवर्ग्यमेत्य सुकृती जीवन्मुक्तो भवेदिह ॥ १४०

निकुञ्जलीलाललितं मनोहरं
 कलिन्दजाकूलतताकदम्बकम् ।
वृन्दावनोन्मत्तमिलिन्दशब्दितं
 व्रजेत्स गोलोकमिदं पठेच्च यः ॥ १४१

—गर्गसंहितातः

—*—

# यमुनासहस्रनामावलिः

(कालिन्दी सहस्रनामावलिः)

ओं कालिन्द्यै नमः । यमुनायै । कृष्णायै । कृष्णरूपायै । सनातन्यै । कृष्णवामांससम्भूतायै । परमानन्दरूपिण्यै । गोलोकवासिन्यै । श्यामायै । वृन्दावनविनोदिन्यै । राधासख्यै । रासलीलायै । रासमण्डलमण्डितायै । निकुञ्जमाधवीवल्ल्यै । रङ्गवल्लीमनोहरायै । श्रीरासमण्डलीभूतायै । यूथीभूतायै । हरिप्रियायै । गोलोकतटिन्यै । दिव्यायै नमः । २०

ओं निकुञ्जतलवासिन्यै नमः । दीर्घोर्मिवेगगम्भीरायै । पुष्पपल्लववासिन्यै । घनश्यामायै । मेघमालायै । बलाकायै । पद्ममालिन्यै । परिपूर्णतमायै । पूर्णायै । पूर्णब्रह्मप्रियायै । परायै । महावेगवत्यै । साक्षान्निकुञ्जद्वारनिर्गतायै । महानद्यै । मन्दगत्यै । विरजायै । वेगभेदिन्यै । अनेकब्रह्माण्डगतायै । ब्रह्मद्रवसमाकुलायै । गङ्गायै नमः । ४०

ओं मिश्रायै नमः । निर्मलाभायै । निर्जलायै । सरितां वरायै । रत्नबद्धोभयतटायै । हंसपद्मादिसंकुलायै । नद्यै । निर्मलपानीयायै । सर्वब्रह्माण्डपावन्यै । वैकुण्ठपरिखीभूतायै । परिखायै । पापहारिण्यै । ब्रह्मलोकागतायै । ब्राह्मचै । स्वर्गायै । स्वर्गनिवासिन्यै । उल्लसन्त्यै । प्रोत्पतन्त्यै । मेरुमालायै । महोज्ज्वलायै नमः । ६०

ओं श्रीगङ्गायै नमः । अंभसे शिखरिण्यै । गण्डशैलविभेदिन्यै । देशान् पुनन्त्यै । गच्छन्त्यै । महत्यै । भूमिमध्यगायै । मार्ताण्डतनुजायै । पुण्यायै । कलिन्दगिरिनन्दिन्यै । यमस्वस्त्रे । मन्दहासायै । सुद्विजायै । रचिताम्बरायै । नीलाम्बरायै । पद्ममुख्यै । चरन्त्यै । चारुदर्शनायै । रम्भोरवे नमः । ८०

ओं पद्मनयनायै नमः । माधव्यै । प्रमदोत्तमायै । तपश्चरन्त्यै । सुश्रोण्यै । कूजन्नूपुरमेखलायै । जलस्थितायै । श्यामलाङ्गचै । खाण्डवाभायै । विहारिण्यै । गाण्डीविभाषिण्यै । वन्यायै । श्रीकृष्णाम्बरमिच्छन्त्यै । द्वारकागमनायै । राज्यै । पट्टराज्यै । परङ्गतायै । महाराज्यै । रत्नभूषायै । गोमतीतीरचारिण्यै नमः । १००

ओं स्वकीयायै नमः । स्वसुखायै । स्वार्थायै । स्वीयकार्यार्थसाधिन्यै । नवलाङ्गायै । अबलायै । मुग्धायै । वराङ्गायै ।

वामलोचनायै। अज्ञातयौवनायै। अदीनायै। प्रभायै। कान्त्यै। द्युत्यै । छवये । सोमाभायै । परमायै । कीर्त्यै । कुशलायै । ज्ञातयौवनायै नमः । १२०

ओं नवोढायै नमः । मध्यगायै । मध्यगायै । प्रौढये । प्रौढायै । प्रगल्भकायै । धीरायै । अधीरायै । धैर्यधरायै । ज्येष्ठायै । श्रेष्ठायै । कुलाङ्गनायै । क्षणप्रभायै । चञ्चलाचायै । विद्युते । सौदामिन्यै । तडिते । स्वाधीनपतिकायै । लक्ष्म्यै । पुष्टायै नमः । १४०

ओं स्वाधीनभर्तृकायै नमः । कलहान्तरितायै । भीरवे । इच्छायै । प्रोत्कण्ठितायै। आकुलायै। कशिपुस्थायै। दिव्यशय्यायै । गोविन्दहृतमानसायै । खण्डितायै । अखण्डशोभाढ्यायै । विप्रलब्धायै । अभिसारिकायै। विरहार्तायै । विरहिण्यै । नार्यै । प्रोषितभर्तृकायै। मानिन्यै। मानदायै। प्राज्ञायै नमः । १६०

ओं मन्दारवनवासिन्यै नमः । झङ्कारिण्यै । झणत्कार्यै । रणन्मञ्जीरनूपुरायै । मेखलायै । मेखलाकाञ्च्यै । श्रीकाञ्च्यै । काञ्चनामय्यै। कञ्चुक्यै। कञ्चुकमण्यै। श्रीकण्ठाढ्यायै। महामण्यै। श्रीहारिण्यै । पद्महरायै । मुक्तायै । मुक्ताफलार्चितायै । रत्नकङ्कणकेयूरायै। स्फुरदङ्गुलिभूषणायै। दर्पणायै। दर्पणीभूतायै नमः । १८०

ओं दुष्टदर्पविनाशिन्यै नमः । कम्बुग्रीवायै । कम्बुधरायै । ग्रैवेयकविराजितायै । ताटङ्किन्यै । दन्तधरायै । हेमकुण्डल-मण्डितायै । शिखाभूषायै । भालपुष्पायै । नासामौक्तिक शोभितायै । मणिभूमिगतायै । देव्यै । रैवताद्रिविहारिण्यै । वृन्दावनगतायै। वृन्दायै। वृन्दारण्यनिवासिन्यै। वृन्दावनलतायै। माध्व्यै। वृन्दारण्यविभूषणायै। सौन्दर्यलहर्यै नमः । २००

ओं लक्ष्म्यै नमः । मधुरातीर्थवासिन्यै । विश्रान्तवासिन्यै । काम्यायै । रम्यायै । गोकुलवासिन्यै । रमणस्थलशोभाढ्यायै । महावनमहानद्यै । प्रणतायै । प्रोन्नतायै । पुष्टायै । भारत्यै । भारतार्चितायै । तीर्थराजगत्यै । गात्रायै । गङ्गासागरसङ्गमायै । सप्ताब्धिभेदिन्यै । लोलायै । बलात् सप्तद्वीपगतायै । लुठन्त्यै नमः । २२०

ओं शैलभिदे नमः । यन्त्यै । स्फुरन्त्यै । वेगवत्तरायै । काञ्चन्यै । काञ्चनीभूम्यै । काञ्चनीभूमिभावितायै । लोकदृष्ट्यै । लोकलीलायै । लोकालोकाचलार्चितायै । शैलोद्गतायै । स्वर्गगतायै । स्वर्गार्च्यायै । स्वर्गपूजितायै । बृन्दावनवनाध्यक्षायै । रक्षायै । कक्षायै । तट्यै । पट्यै । असिकुण्डगतायै नमः । २४०

ओं कच्छायै नमः । स्वच्छन्दायै । उच्छलितायै । अद्रिजायै । कुहरस्थायै । रयप्रस्थायै । प्रस्थायै । शान्तेतरायै । आतुरायै । अम्बुच्छटायै । सीकराभायै । दर्दुरायै । दर्दुरीधरायै । पापाङ्कुशायै । पापसिंह्यै । पापद्रुमकुठारिण्यै । पुण्यसन्धायै । पुण्यकीर्त्यै । पुण्यदायै । पुण्यवर्धिन्यै नमः । २६०

ओं मधोर्वननदीमुख्यायै नमः । तुलायै । तालवनस्थितायै । कुमुद्वननद्यै । कुब्जायै । कुमुदाम्भोजवर्धिन्यै । प्लवरूपायै । वेगवत्यै । सिंहसर्वादिवाहिन्यै । बहुल्यै । बहुदायै । बह्व्यै । बहुलावनवन्दितायै । राधाकुण्डकुलाराध्यायै । कृष्णाकुण्डकुलाश्रितायै । ललिताकुण्ड-गायै । घण्टायै । विशाखाकुण्डमण्डितायै । गोविन्दकुण्डनिलयायै । गोपकुण्डतरङ्गिण्यै नमः । २८०

ओं श्रीगङ्गायै नमः । मानसीगङ्गायै । कुसुमाम्बरभाविन्यै । गोवर्धिन्यै । गोधनाढ्यायै । मयूर्यै । वरवर्णिन्यै । सारस्यै । नीलकण्ठाभायै । कूजत्कोकिलपोतक्यै । गिरिराजप्रभवे । भूर्यै ।

आतपत्रायै । आतपत्रिण्यै । गोवर्धनाङ्कायै । गोदन्त्यै । दिव्यौषधिनिध्यै । श्रुत्यै । पारद्यै । पारदमय्यै नमः । ३००

ओं नारद्यै नमः । शारद्यै । भृत्यै । श्रीकृष्णचरणाङ्कस्थायै । कामायै । कामवनाश्रितायै । कामाटव्यै । नन्दिन्यै । नन्दिग्राममहीधरायै । बृहत्सानुद्युत्यै । प्रोतायै । नन्दीश्वर-समन्वितायै । काकल्यै । कोकिलमय्यै । भाण्डारकुशकौशलायै । लोहार्गलप्रदाकारायै । काश्मीरवसनावृतायै । बर्हिषद्यै । शोणपुर्यै । शूरक्षेत्रपुराधिकायै नमः । ३२०

ओं नानाभरणशोभाढ्यायै नमः । नानावर्णसमन्वितायै । नानानारीकदम्बाढ्यायै । नानावस्त्रविराजितायै । नानालोकगतायै । वीच्यै । नानाजालसमन्वितायै । स्त्रीरत्नाय । रत्ननिलयायै । ललनारत्नरञ्जिन्यै । रङ्गिण्यै । रङ्गभूमाढ्यायै । रङ्गायै । रङ्गमही-रुहायै । राजविद्यायै । राजगुह्यायै । जगत्कीर्त्यै । घनापहायै । विलोलघण्टायै । कृष्णाङ्ग्यै नमः । ३४०

ओं कृष्णदेहसमुद्भवायै नमः । नीलपङ्कजवर्णाभायै । नीलपङ्कजहारिण्यै । नीलाभायै । नीलपद्माढ्यायै । नीलाम्भोरुह-वासिन्यै । नागवल्ल्यै । नागपुर्यै । नागवल्लीदलार्चितायै । ताम्बूलचर्चितायै । चर्चायै । मकरन्दमनोहरायै । सकेसरायै । केसरिण्यै । केशपाशाभिशोभितायै । कज्जलाभायै । कज्जलाक्तायै । कज्जलीकलिताञ्जनायै । अलक्तचरणायै । ताम्रायै नमः । ३६०

ओं लालाताम्रकृताम्बरायै नमः । सिन्दूरितायै । लिप्तवाण्यै । सुश्रियै । श्रीखण्डमण्डितायै । पाटीरपङ्कवसनायै । जटामांसीरु-चाम्बरायै । आगर्यगरुगन्धाक्तायै । तगराश्रितमारुतायै । सुगन्धितैलरुचिरायै । कुन्तलालये । सुकुन्तलायै । शकुन्तलायै । अपांसुलायै । पातिव्रत्यपरायणायै । सूर्यकोटिप्रभायै । सूर्यकन्यायै । सूर्यसमुद्भवायै । कोटिसूर्यप्रतीकाशायै । सूर्यजायै नमः । ३८०

ओं सूर्यनन्दिन्यै नमः । संज्ञायै । संज्ञासुतायै । स्वेच्छायै । संज्ञामोदप्रदायिन्यै । संज्ञापुत्र्यै । स्पुरच्छायायै । तपन्त्यै । तापकारिण्यै । सावर्ण्यानुभवायै । वेद्यै । वडवायै । सौख्यदायिन्यै । शनैश्चरानुजायै । कीलायै । चन्द्रवंशविवर्धिन्यै । चन्द्रवंशवध्वै । चन्द्रायै । चन्द्रावलिसहायिन्यै । चन्द्रावत्यै नमः । ४००

ओं चन्द्रलेखायै नमः । चन्द्रकान्तानुगांशुकायै । भैरव्यै । पिङ्गलाशङ्क्यै । लीलावत्यै । आगरीमय्यै । धनश्रियै । देवगान्धार्यै । स्वर्मण्यै । गुणवर्धिन्यै । व्रजमल्लार्यै । अन्धकर्यै । विचित्रायै । जयकारिण्यै । गान्धार्यै । मञ्जर्यै । टोड्यै । गुर्जर्यै । आसावर्यै । जयायै नमः । ४२०

ओं कर्णाट्यै नमः । रागिण्यै । गौड्यै । वैराट्यै । गारवाटिकायै । चतुश्चन्द्रकलायै । हेर्यै । तैलङ्ग्यै । विजयावत्यै । ताल्यै । तालस्वरायै । गानक्रियायै । मात्राप्रकाशिन्यै । वैशाख्यै । चञ्चलायै । चारवे । माचार्यै । घुङ्कट्यै । घटायै । वैरागर्यै नमः । ४४०

ओं सोरठ्यै नमः । कैदार्यै । जलधारिकायै । कामाकर श्री कल्याण्यै । गौडकल्याणमिश्रितायै । रामसञ्जीवन्यै । हेलायै । मन्दार्यै । कामरूपिण्यै । सारङ्ग्यै । मारुत्यै । होढायै । सागर्यै । कामवादिन्यै । वैभासायै । मङ्गलायै । चान्द्र्यै । रासमण्डलमण्डनायै । कामधेन्वै । कामलतायै नमः । ४६०

ओं कामदायै नमः । कमनीयकायै । कल्पवृक्षस्थल्यै । स्थूलायै । क्षुधायै । सौधनिवासिन्यै । गोलोकवासिन्यै । सुभ्रुवे । यष्टिभृते । द्वारपालिकायै । शृङ्गारप्रकरायै । शृङ्गायै । स्वच्छायै । अक्षय्यायै । उपकारिकायै । पार्षदायै । सुमुख्यै । सेव्यायै । श्रीवृन्दावनपालिका । निकुञ्जभृते नमः । ४८०

ओं कुञ्जपुञ्जायै नमः। गुञ्जाभरणभूषितायै। निकुञ्ज-वासिन्यै । प्रेष्यायै। गोवर्धनतटीभवायै। विशाखायै। ललितायै। रामायै। नीरुजायै। मधुने। माधव्यै। एकायै। अनेकसख्यै। शुक्लायै । सखीमध्यायै। महामनसे। श्रुतिरूपायै। ऋषिरूपायै। मैथिलाभ्यः स्त्रीभ्यः। कौशलाभ्यः स्त्रीभ्यो नमः। ५००

ओं अयोध्यापुरवासिनीभ्यो नमः। यज्ञसीताभ्यः। पुलिन्दकाभ्यः। रमायै। वैकुण्ठवासिनीभ्यः। श्वेतद्वीपसखी-जनेभ्यः। ऊर्ध्ववैकुण्ठवासिनीभ्यः। दिव्याजितपदाश्रिताभ्यः। श्रीलोकाचलवासिनीभ्यः। श्रीसखीभ्यः। सागरोद्भवाभ्यः। दिव्याभ्यः। अदिव्याभ्यः। दिव्याङ्गाभ्यः। व्यासाभ्यः। त्रिगुणवृत्तिभ्यः। भूमिगोपीभ्यः। देवनारीभ्यः। लताभ्यः। ओषधिवीरुद्भ्यो नमः। ५२०

ओं जालन्धरीभ्यो नमः। सिन्धुसुताभ्यः। पृथुबर्हिष्मती भवाभ्यः। दिव्याम्बराभ्यः। अप्सरोभ्यः। सौतलाभ्यः। नागकन्यकाभ्यः। परस्मै धाम्ने। परस्मै ब्रह्मणे। पौरुषायै। प्रकृत्यै । परायै। तटस्थायै। गुणभुवे। गीतायै। गुणागुणमय्यै। गुणायै। चिद्घनायै। सदसन्मालायै। दृष्ट्यै नमः। ५४०

ओं दृश्यायै नमः। गुणाकरायै। महत्तत्वाय। अहङ्काराय। मनसे। बुद्ध्यै। प्रचेतनायै। चेतोवृत्त्यै। स्वान्तरात्मने। चतुर्धा। चतुरक्षरायै। चतुर्व्यूहायै। चतुर्मूर्त्यै। व्योम्ने। वायवे। अमुष्मै। जलाय । मह्यै। शब्दाय। रसाय नमः। ५६०

ओं मह्यै नमः। शब्दाय। रसाय। गन्धाय। स्पर्शाय। रूपाय । अनेकधा। कर्मेन्द्रियाय। कर्ममय्यै। ज्ञानाय। ज्ञानेन्द्रियाय। द्विधा । त्रिधा। अधिभूताय। अध्यात्माय। अधिदैवाय। अधिस्थिताय। ज्ञानशक्त्यै। क्रियाशक्त्यै। सर्वदेवाधिदेवतायै नमः। ५८०

ओं तत्वसङ्ख्यायै नमः । विराण्मूर्त्यै । धारणायै । धारणामय्यै । श्रुत्यै । स्मृत्यै । वेदमूर्त्यै । संहितायै । गर्गसंहितायै । पाराशर्यै । तस्यै । सृष्ट्यै । पारहंस्यै । विधातृकायै । याज्ञवल्क्यै । भागवत्यै । श्रीमद्भागवतार्चितायै । रामायणमय्यै । रम्यायै । पुराणपुरुषप्रियायै । पुरामूर्त्यै नमः । ६००

ओं पुण्याङ्ग्यै नमः । शास्त्रमूर्त्यै । महोन्नतायै । मनीषायै । धिषणायै । बुद्ध्यै । वाण्यै । धियै । शेमुष्यै । मत्यै । गायत्र्यै । वेदसावित्र्यै । ब्रह्माण्यै । ब्रह्मलक्षणायै । दुर्गायै । अपर्णायै । सत्यै । सत्यायै । पार्वत्यै । चण्डिकायै नमः । ६२०

ओं अम्बिकायै नमः । आर्यायै । दाक्षायण्यै । दाक्ष्यै । दक्षयज्ञविघातिन्यै । पुलोमजायै । शच्यै । इन्द्राण्यै । वेद्यै । देववरार्पितायै । वायुनाधारिण्यै । धन्यायै । वायव्यै । वायुवेगगायै । यमानुजायै । संयमन्यै । संज्ञायै । छायायै । स्फुरद्द्युत्यै । रत्नदेव्यै नमः । ६४०

ओं रत्नवृन्दायै नमः । तारायै । तरणिमण्डलायै । रुच्यै । शान्त्यै । क्षमायै । शोभायै । दयायै । दक्षायै । द्युत्यै । त्रपायै । तलतुष्ट्यै । विभायै । पुष्ट्यै । सन्तुष्ट्यै । पुष्टभावनायै । चतुर्भुजायै । चारुनेत्रायै । द्विभुजायै । अष्टभुजायै नमः । ६६०

ओं बलायै नमः । शंखहस्तायै । पद्महस्तायै । चक्रहस्तायै । गदाधरायै । निषङ्गधारिण्यै । चर्मखड्गपाण्यै । धनुर्धरायै । धनुष्टङ्कारिण्यै । योद्ध्यै । दैत्योद्भटविनाशिन्यै । रथस्थायै । गरुडारूढायै । श्रीकृष्णहृदयस्थितायै । वंशीधरायै । कृष्णवेषायै । स्रग्विण्यै । वनमालिन्यै । किरीटधारिण्यै । यानायै नमः । ६८०

ओं मन्दायै नमः । मन्दगत्यै । गत्यै । चन्द्रकोटिप्रतीकाशायै । तन्व्यै । कोमलविग्रहायै । भैष्म्यै । भीष्मसुतायै । भीमायै । रुक्मिण्यै ।

रुक्मरूपिण्यै । सत्यभामायै । जाम्बवत्यै । सत्यायै । भद्रायै । सुदक्षिणायै । मित्रविन्दायै । सखीवृन्दायै । बृन्दारण्यध्वजोर्ध्वगायै । शृङ्गारकारिण्यै नमः । ७००

ओं शृङ्गायै नमः । शृङ्गभुवे । शृङ्गदायै । आशुगायै । तितिक्षायै । ईक्षायै । स्मृत्यै । स्पर्धायै । स्पृहायै । श्रद्धायै । स्वनिर्वृत्यै । ईशायै । तृष्णाभिधायै । प्रीत्यै । हितायै । याच्ञायै । क्लमायै । कृष्यै । आशायै । निद्रायै नमः । ७२०

ओं योगनिद्रायै नमः । योगिन्यै । योगदायै । युगायै । निष्ठायै । प्रतिष्ठायै । समित्यै । सत्वप्रकृत्यै । उत्तमायै । तमःप्रकृत्यै । दुर्मर्षायै । रजः प्रकृत्यै । आनत्यै । क्रियायै । अक्रियायै । आकृत्यै । ग्लान्यै । सात्विक्यै । आध्यात्मिक्यै । वृषायै नमः । ७४०

ओं सेवायै नमः । शिखामण्यै । वृद्ध्यै । आहूत्यै । सुमत्यै । द्युभुवे । रज्ज्वै । द्विदाम्न्यै । षड्वर्गायै । संहितायै । सौख्यदायिन्यै । मुक्त्यै । प्रोक्त्यै । देशभाषायै । प्रकृत्यै । पिङ्गलोद्भवायै । नागभावायै । नागभूषायै । नागर्यै । नगर्यै नमः । ७६०

ओं नगायै नमः । नावे । नौकायै । भवनावे । भाव्यायै । भवसागरसेतुकायै । मनोमय्यै । दारुमय्यै । सैकत्यै । सिकतामय्यै । लेख्यायै । लेप्यायै । मणिमय्यै । प्रतिमायै । हेमनिर्मितायै । शैलायै । शैलभवायै । शीलायै । शीलारामायै । चलायै नमः । ७८०

ओं अचलायै नमः । अस्थितायै । स्वस्थितायै । तूल्यै । वैदिक्यै । तान्त्रिक्यै । विध्यै ।सन्ध्यायै । सन्ध्याभ्रवसनायै । वेदसन्ध्यै । सुधामय्यै । सायन्तन्यै । शिखावेद्यायै । सूक्ष्मायै । जीवकलायै । कृत्यै । आत्मभूतायै । भावितायै । अण्व्यै । प्रह्वायै नमः । ८००

ओं कमलकर्णिकायै नमः । नीराजन्यै । महाविद्यायै । कन्दल्यै । कार्यसाधिन्यै । पूजायै । प्रतिष्ठायै । विपुलायै । पुनन्त्यै । पारलौकिक्यै । शुक्लशुक्त्यै । मौक्तिकायै । प्रतीत्यै । परमेश्वर्यै । विराजायै । उष्णिहे । विराजे । वेण्यै । वेणुकायै । वेणुवादिन्यै नमः । ८२०

ओं आवर्तिन्यै नमः । वार्तिकदायै । वार्तायै । वृत्त्यै । विमानगायै । सासाढ्यरासिन्यै । सास्यै । रासमण्डलमण्डल्यै । गोपगोपीश्वर्यै । गोप्यै । गोपीगोपालवन्दितायै । गोचारिण्यै । गोपनद्यै । गोपानन्दप्रदायिन्यै । पशव्यदायै । गोपसेव्यायै । कोटिशो गोगणवृतायै । गोपानुगायै । गोपवत्यै । गोविन्दपदपादुकायै नमः । ८४०

ओं वृषभानुसुतायै नमः । राधायै । श्रीकृष्णवशकारिण्यै । कृष्णप्राणाधिकायै । शश्वद्रसिकायै । रसिकेश्वर्यै । अवटोदायै । ताम्रपर्ण्यै । कृतमालायै । विहायस्यै । कृष्णायै । वेण्यै । भीमरथ्यै । ताप्यै । रेवायै । महापगायै । वैयासक्यै । कावेर्यै । तुङ्गभद्रायै । सरस्वत्यै नमः । ८६०

ओं चन्द्रभागायै नमः । वेत्रवत्यै । गोविन्दपदपादुकायै । गोमत्यै । कौशिक्यै । सिन्धवे । बाणगङ्गायै । अतिसिद्धिदायै । गोदावर्यै । रत्नमालायै । गङ्गायै । मन्दाकिन्यै । बलायै । स्वर्णदायै । जाह्नव्यै । वेलायै । वैष्णव्यै । मङ्गलालयायै । बालायै । विष्णुपदीप्रोक्तायै नमः । ८८०

ओं सिन्धुसागरसंगतायै नमः। गङ्गासागरशोभाढ्यायै । सामुद्र्यै । रत्नदायै । धुन्यै । भागीरथ्यै । स्वर्धुन्यै । भुवे । श्रीवामनपदच्युतायै । लक्ष्म्यै । रमायै । रामणीयायै । भार्गव्यै ।

विष्णुवल्लभायै । सीतार्चिषे । जानक्यै । मात्रे । कलङ्करहितायै । कलायै । कृष्णपादाब्जसंभूतायै नमः । ९००

ओं सर्वायै नमः । त्रिपथगामिन्यै । धरायै । विश्वंभरायै । अनन्तायै । भूम्यै । धात्र्यै । क्षमामय्यै । स्थिरायै । धरित्र्यै । धरण्यै । उर्व्यै । शेषफणस्थितायै । अयोध्यायै । राघवपुर्यै । कौशिक्यै । रघुवंशजायै । मधुरायै । माधुर्यै । पथे नमः । ९२०

ओं यादव्यै नमः । ध्रुवपूजितायै । मायायै पुरे । बिल्वनीलायै । द्वारे । गङ्गाद्वारविनिर्गतायै । कुशावर्तमय्यै । ध्रौव्यायै । ध्रुवमण्डल-निर्गतायै । काश्यै । शिवपुर्यै । शेषायै । विन्ध्यायै । वाराणस्यै । शिवायै । अवन्तिकायै । देवपुर्यै । प्रोज्ज्वलायै । उज्जयिन्यै नमः । ९४०

ओं जितायै नमः । द्वारावत्यै । द्वारकामायै । कुशभूतायै । कुशस्थल्यै । महापुर्यै । सप्तपुर्यै । नन्दिग्रामस्थलस्थितायै । शालग्रामशिलायै । आदित्यायै । शंभलग्राममध्यगायै । वंशायै । गोपालिन्यै । क्षिप्रायै । हरिमन्दिरवर्तिन्यै । बर्हिष्मत्यै । हस्तिपुर्यै । शक्रप्रस्थनिवासिन्यै । दाडिम्यै । सैन्धव्यै नमः । ९६०

ओं जम्ब्वै नमः । पौष्कर्यै । पुष्करप्रस्वे । उत्पलावर्तगमनायै । नैमिष्यै । निमिषावृतायै । कुरुजाङ्गलभुवे । काल्यै । हैमवत्यै । अर्बुदायै । बुधायै । शूकरक्षेत्रविदितायै । श्वेतवाराहधारितायै । सर्वतीर्थमय्यै । तीर्थायै । तीर्थानां कीर्तिकारिण्यै। सर्वदोषाणां हारिण्यै । सर्वसंपदां दायिन्यै । तेजसां वर्धिन्यै । साक्षाद्गर्भवासनिकृन्तन्यै नमः । ९८०

ओं गोलोकधाम्ने। धनिन्यै। निकुजनिजमञ्जर्यै। सर्वोत्तमायै । सर्वपुण्यायै । सर्वसौन्दर्यशृङ्खलायै । सर्वतीर्थोपरिगतायै । सर्वतीर्थाधिदेवतायै। कालिन्द्यै नमः ।। ९८९

—*—

चिदंबरब्रह्मकृता

# शिवगङ्गासहस्रनामावलिः

(चिदंबरस्थशिवगङ्गानामतीर्थस्तुतिपरा)

अस्य श्रीशिवगङ्गासहस्रनामस्तोत्रमहामन्त्रस्य, मध्यन्दिन-व्याघ्रपादपतञ्जलिजैमिन्युपमन्यव ऋषयः । गायत्रीत्रिष्टुबनुष्टुब् बृहतीपङ्क्तयश्छन्दांसि, श्रीशिवगङ्गास्वरूपचित्सभानाथो देवता । गायत्री बीजम् । सावित्री शक्तिः । सरस्वती कीलकम् । ब्रह्मादिलोकगमनद्वारा श्रीशिवसायुज्यसिद्ध्यर्थे जपे विनियोगः । ऋग्वेदाय अङ्गुष्ठाभ्यां नमः । यजुर्वेदाय तर्जनीभ्यां नमः । सामवेदाय मध्यमाभ्यां नमः । अथर्ववेदाय अनामिकाभ्यां नमः । अथर्वाङ्गिरसे कनिष्ठिकाभ्यां नमः । इतिहासपुराणाभ्यां करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । ओं भूर्भुवस्सुवरोमिति दिग्बन्धः । ध्यानम्—

यद्दर्शस्पर्शनाचामस्नानैः पुण्यकृतो जनाः ।
वागीशवैकुण्ठरुद्रान् दृष्ट्वा शिवतनुं व्रजेत् ॥

तां तीर्थरूपां हरिवह्निनेत्रां घट्टैश्चतुःषष्टिभिरङ्किताशाम् ।
सोपानसन्मण्टपशोभमानां नमामि गङ्गां शिवशब्दपूर्वाम् ॥

लमित्यादिपञ्चपूजा ।

अर्घ्यायाः अंबिकाया अहमहमितिभान्त्या अनन्तात्मिकायै
अक्षय्यायाः अधीष्ट्या अभिमतघटनापाटवप्रापयित्र्यै ।
अर्चाया अग्रिमाया अतनुतनुभृतेऽमृताया अमूर्त्यै
अश्रान्ताया अभीत्या अविकृतवपुषेऽहं भिदायै नमोऽस्तु ॥

ओं अध्यायै नमः । अंबिकायै । अहमंहमितिभान्त्यै । अनन्तात्मिकायै । अक्षय्यायै । अधीष्ट्यै । अभिनवघटनापाटवप्रापयित्र्यै । अर्चायै । अग्रिमायै । अतनुतनुभृते । अमृतायै । अमूर्त्यै । अश्रान्तायै । अभीत्यै । अविकृतवपुषे । अहंभिदायै । अर्चिष्मत्यै । अशेषार्त्यपहृतिपटवे । अहंपदार्थापयित्र्यै । अच्छायै नमः ।। २०

ओं अङ्गनायै नमः । अरममृतदुहे । अकारणायै । अकर्त्र्यै । अस्तोकायै । अजायै ।अनवधिसमनुक्रोश वाराशयेष्ट्यै । अभ्यस्यायै । अदित्यै । अविदितविदितद्रष्टृकायै । अवन्यै । अल्पायै । अत्यनण्वै । अरिनिकरहृते । अनीश्वरायै । अटव्यै । अद्वैतायै । अनष्ट्यै । अमृतरसवृषे । अहंयवे नमः । ४०

ओं अहंक्रियायै नमः । अत्यष्ट्यै । अभ्रये । अह्ने । अधिकतमसुहृदे । अभ्यर्हणायै । अवित्र्यै । अब्रूपायै । अमायै । अखिलजनपुषे । अनादये । अलङ्कृतायै । अग्र्यायै । अन्ययायै । अनवरतपरीवाहभाजे । अन्तिमायै । आढ्यायै । आदृतायै । अनवमतनुवे । अभिष्टुतायै नमः । ६०

ओं इडायै नमः । इज्यायै । इन्दिरायै । इतिकरणविदे । अभ्युत्थितायै । इरायै । ईड्यायै । ईहितायै । उदयभरकृते । उत्थितायै । उपास्यै । आद्यायै । आदिशक्त्यै । अनभिमतनदे । अभ्युत्थितायै । अमुष्यै । अस्यै । अब्दायै । ऋद्ध्यायै । उचिततमप्राप्तिकायै नमः । ८०

ओं उमायै नमः । ईशान्यै । इन्दुमत्यै । ऋचे । ऋगभिहितस्वात्मने । अनन्यशक्त्यै । एकस्यै । आदिनाथाकृतये । उपमितिप्रोज्झितायै । उखायै । ओषध्यै । ओडुलोमिप्रभृतिमुनि-

गणाभ्यर्थितायै । लृकृत्यै । लृंबीजायै । ऋनुत्यै । अनुगतमहसे । ख्यातये । अत्यूर्जितायै । अम्बायै । अङ्गनायै नमः । १००

ओं अनुमतये नमः । उपश्लोकिकायै नमः । इतायै । अष्टम्यै । ईशायै । ऐरावत्यै । शतरुचे । ऊर्ध्वाधरव्यापिकायै । कल्यायै । कापिशायिन्यपचितिरुचये । किङ्करप्रेष्यदेव्यै । कीशाद्युन्मुक्ति-दायै । कुहकमतभिदे । कूटसाक्ष्युन्मथन्यै । कूत्यै । क्लृप्त्यै । केलीविरचितजगते । कैशिकोद्यद्धराङ्ग्यै । कोशाद्यन्ताभिवृद्ध्यर्पण-निपुणदृशे । कौलगूढार्थगोप्त्र्यै नमः । १२०

ओं कंबीजाङ्ग्यै नमः । कलङ्कोन्मथनचणहृदे । कष्टदा-हौर्वहेत्यै । कल्याण्यै । कल्पवल्यै । कलिमलहृतये । कामदोग्ध्र्यै । कलिघ्न्यै । काञ्च्यै । काश्यै । कलायै । कनकमयसभालङ्करिण्यै । कृशाङ्ग्यै । कामाक्ष्यै । कुक्षिपूर्त्यै । कुटिलकचभृते । कुष्ठहन्त्र्यै । कमन्यै । कालिन्द्यै । कामवल्ल्यै नमः ।। १४०

ओं कविकुलनुतये नमः । कालकालाश्रितायै । कौमार्यै । कामदायै । कलकलनिनदद्वीचये । कालहन्त्र्यै । काल्यै । कालोत्तरस्यै । कनककमलिनीमण्डिताङ्ग्यै । कुमार्यै । कावेर्यै । कान्तिमत्यै । कुशलतटभुवे । कल्पनावर्जितायै । कान्त्यै । कामार्चितायै । कमलरुहघनामोदधम्मिल्लकायै । कार्यायै । कामदेव्यै । कमलझषदृशे नमः । १६०

ओं कर्मकर्यै नमः । क्रियायै । कामायै । कम्बुकण्ठ्यै । कमलजमुखवाण्यङ्घ्रये । कामपाल्यै । आद्यायै । कोमलाङ्ग्यै । कलशपृथुकुचाभोगभासे । कुच्चायै । कावेरीपञ्चशाखाकलित-शुचिनलच्छत्रशाल्युत्तमाङ्ग्यै । कालिन्दीजह्नुकन्याकरकमलयुग-प्रोच्चलच्चामरायै । कौशिक्युत्सृष्टभास्वत्खपुरखदिरकर्पूरयुग्वी-

टिकायै । कामिन्याकार ताम्राकरकमललसद्गन्धसाराञ्चितायै । कान्तायै । कृष्णवेणीकलितकबरये। कुण्डलिन्युसमुक्ताताटङ्कायै। कपोलालिकतलकृतमालावतकाश्मीरभूत्यै। कल्यादत्ताञ्जनाक्ष्यै। करितुरगभटस्यन्दनानीकदायै नमः। १८०

ओं कृष्णायै नमः। कृष्णवेण्यै। कलितसुमनसे। कृष्टये। कल्पनायै। कल्प्यायै। कल्पितायै। करतलविलसद्वल्लकायै। कफघ्न्यै। काम्यायै। कामचर्यै। कटितटकलितस्वर्णकाञ्च्यै। कुलायै। कौसुम्भच्छन्नसक्थ्यै। कलनिनदमणीनूपुरासेचनांघ्र्यै। कोटीषट्षष्टितीर्थव्रजविहितमहानृत्तलास्यप्रियायै। कस्यै। कस्य लोकावनहितमनसे। कर्कितन्व्यै। कृपायै नमः। २००

ओं कस्तूरीचर्चितायै। कृतकलिवपुषे। कृष्णमूर्त्यै। कमठ्यै। कामेश्वर्यै। कषायीकृतसकलहरिद्वीटिकाचन्द्रिकायै। कालुष्यध्वंसदीक्षाविधिनिभृतपदे। कोटिकन्दर्पजेत्र्यै। कामक्रोधादिवर्गप्रबलदवशिखाप्रावृषेण्याम्बुवाह्यै। कल्पान्तानेककोटिप्रलयविरहितैश्वर्यदायै। कथायै। कल्पघ्न्यै। कल्पसूत्रग्रथनधृतियुजे। कुण्डलिन्यै। कलन्त्यै। कात्यायन्यै। कटीसंप्रसरणविकसद्वामहस्तांबुजायै। कीर्त्यै। कल्माषपादप्रमुखनृपतिसंपूजितायै। कवीष्टयै नमः। २२०

ओं कल्माष्यै। कामधेन्वै। करदितनवतत्त्वात्मभक्तानुगायै। कथ्यायै। कार्तवीर्यार्जुनमहिमकृते। कावषेयेष्टसिद्ध्यै। कक्ष्यायै। कारयित्र्यै। कणमुखमुनिसंस्तूयमानात्मशक्त्यै। कौशिक्यै। कर्मसिद्ध्यै। करजनुरुडवे। कर्मसिद्धिप्रदात्र्यै। काल्यस्नानप्रियायै। कुरवकसुमनश्छायदिव्याङ्गयष्ट्यै। कुन्दक्षाराग्रदन्त्यै। कवनवितरणाकर्मठायै। कमूर्त्यै। कौषीतक्यै। कदम्बप्रसवनिगलितस्रक्चयायै नमः। २४०

ओं कचयै नमः । खव्यापिन्यै । खमूर्ध्न्यै । खलहृदयदवी-यस्तमायै । खगायै । खाण्डिक्यर्ष्यै । खमन्यै । खचितनवमणी-निक्वणत्कङ्कणायै । खव्यापारप्रबोद्ध्र्यै । खपवनहुतभुग्वारि-भूकल्पितायै। खर्जूरश्रीप्रदायै। खरकिरणनिशानाथ वह्नीक्षणायै। खिन्नार्तिव्रातहन्त्र्यै। खरकलभमुखब्रह्मभाव प्रदात्र्यै। खट्वाशय्या-प्रियायै । खरमथनयशोराशिसंवर्धयित्र्यै । खेलावत्यै । खनित्र्यै । खचरदुपनिद्धुष्टये। खड्गसिद्ध्यै नमः । २६०

खर्जूखर्वीकरण्यै नमः । खसुमितरिपवे । खण्डना-पण्डितायै । गद्यप्रीत्यै । गदन्त्यै । गणपतितनवे । गानसिद्ध्यै । गदघ्न्यै । गण्डद्वन्द्वद्विनीलोत्पलविरचितस्रक्कर्णिकायै । गयायै । गन्तव्यायै । गदायै । गणितविधिविदे । गायिकायै । गुणिन्यै । गन्धर्व्यै । गन्धवत्यै। गणगणकृतसंगीतये। गीतकीर्त्यै। गत्यै नमः । २८०

ओं गाधातिगायै नमः । गलितविषहरप्राणसंरक्षकायै । गीतायै । गुह्यतीर्थप्रभृतिनवतनूधारिकायै । गुडायै । गूढायै । गुह्यपूजारसिकजनमुदे। गीतिमत्यै। गृणत्यै। गेहस्थायै। गृहिण्यै। गृहसुखिगृहमेध्यर्चितायै । गिरायै । गैरिक्यक्ष्वेलवीर्यप्रहृतिचण-निजाख्यामनूच्चारणायै । गैरिक्यै । गैरिकान्तार्बुदनियुत-परार्धापगाब्धिप्रवाह्यै। गोदावर्यै। गमण्यै। गलरुचिरुचिरस्थायि-माङ्गल्यगत्यै। गोधूमव्रीहिमुख्यप्रचुरजनपदग्रामदायै नमः ॥ ३००

ओं गणेश्यै नमः । गौण्यै । गोविन्दराजप्रतिदिनविहित स्वावगाहार्चनायै । गोमत्यै । गोमहिष्यव्रजमृगविहगस्तोमवश्य प्रयोक्त्र्यै । गण्डक्यै । गण्डशैलाहतरिपुततये । गाथ(ध)ये । गर्वहार्यै । गाधायै । गाधिजायै । गणगणनिधये । गौडजन्यै ।

गुहायै । गर्भिण्यै। गर्भदुःखप्रशमनपयसे। गुप्तये। गोधनैकप्रीत्यै । गोमेदरत्नप्रकलसदवाचीन सोपानपंक्त्यै। गीत्यै नमः। ३२०

ओं गारुत्मताश्मव्रजपरिकलितोदक्तटारोहणायै नमः। गौड्यै । गौड्यण्डजात्र्यै । गुहमयवपुषे । गीर्धृतोद्यत्कलाच्यै । गोमेधाभिख्ययागप्रमदभरजुषे । गव्यहोमाप्यर्भूत्यै । गोप्त्र्यै । गैष्पत्यदायै । गरलभयहृते । गर्तवत्यै । गलन्त्यै । ग्रामण्यै । ग्रासयित्र्यै । ग्रसनधृतिकृते । ग्राहयित्र्यै । ग्रहीत्यै । ग्राह्यायै । गालवर्ष्यै। ग्रहरचितपरिक्रान्तये नमः। ३४०

गौतमर्द्ध्यै नमः । गायत्रीमातृकाद्यामनन विकलुषस्वान्त विद्योतिताख्यै (यै)। गायत्र्यै। गोजनित्र्यै। गजवदनगुहोपासितोपान्तभूत्यै। गुह्यायै। गुह्यकार्चासमुपचितिमुदे। गुह्यभक्तप्रियायै। गोरक्षीनित्यसेवाबहुविधसकलाभीष्टसिद्धिप्रदायै । घट्टस्थित्यै । घटोघ्न्यै। घटपटविभिदाघस्मरायै। घटायै। घण्टाकर्णात्मिकायै। घुसृणरससमाघट्टिताङ्ग्यै । घकृत्यै । घण्टारावोत्सुकायै । घटितघनसदानन्दसन्दोहनायै । घस्राघस्रस्फुटाब्जोत्पलकुमुदमकरन्दाप्तघर्मालिकायै। ङा ङी ङू संज्ञितायै नमः। ३६०

ङमनुरिपुभिदे। ङार्णमूर्त्यै। ङशक्त्यै। चक्रिण्यै। चक्रदायै। चरविसरभुजे । चक्रवर्त्यै । चरन्त्यै । चार्यै । चार्वाकभेत्र्यै । चरणरतपरीचारिकायै। चरिण्यै। चित्यै। चीर्णव्रतालीचिरपरिचितस्वांघ्रये। चारयित्र्यै। चुल्ल्यै। चूतप्रियायै। च्युतिहरनुतये। चूर्णितस्वाहितायै। चेत्यायै नमः। ३८०

ओं चेतनायै नमः। चलनविधुतये। चक्रवर्तीश्वरायै। चित्यै। चैतन्यमय्यै। च्यवनकुलपति श्री महादेवतायै। चोर्यै। चौर्यापहन्त्र्यै । चिरपरिचरणापूजितस्वाश्रितायै। चर्चायै। चर्चितायै। चकितभय-

मुषे । चर्चिकायै । चरण्टचै । चण्डेशस्नानतुष्टचै । चरतदितरवन्न्मूर्तये । चिन्तितायै । चण्डचै । चण्डत्वशान्त्यै । चिरपरिचितये नमः । ४००

ओं चन्द्रिकायै नमः । चलायै । चण्डीकोटीसहस्रप्रयुतशतचतुर्लक्षसामर्थ्यदात्र्यै । चण्डोच्चण्डार्चितायै । चरमजननसंप्राप्यनिर्वर्णनायै । चामुण्डायै । चकोरस्वरवचनवदे । चारुचामीकराङ्ग्यै । चित्रिण्यै । चूचुकाग्रस्फुरितनवमणीमालिकाजालिकायै । चक्रस्तन्यै । चितायै । चतुरकरवधूवीज्यमानाङ्गयष्टचै । चित्राङ्ग्यै । चीरवत्यै । चुलुकमधुरसाभ्यर्चनाभीष्टदात्र्यै । चूलीपालीचकासच्छशिशुरविभाजाल लालाटिकायै । चेटीसाम्राज्य लक्ष्म्यै । चकितमृगदृशे । चैत्यचैतन्यजायै नमः । ४२०

ओं चित्रेष्टचै नमः । चैत्ररथ्यप्रसवभरकृतस्रग्धरायै । च्यवन्यै । छन्नायै । छादितायै । छलवचनजितस्वर्द्विषे । छद्महन्त्र्यै । छिन्नाकीर्तिप्ररूढ्यै । छुरितनिजवपुर्ज्योतिषे । छातलण्डचै । छाश्यै । छागाधिरूढचै । छिदमदग्रहण्यै । छर्दये । छर्दयित्र्यै । छायायै । छेदनायै । छमनुपवपुषे । छन्दसे । छन्दयित्र्यै नमः । ४४०

ओं जन्यै नमः । जात्यै । जितायै । जिततमजगते । जीवितायै । जगत्यै । जुंमध्यायै । जटिन्यै । जटिलजनपुषे । जूर्तिहार्यै । जयायै । ज्येयायै । जैतृकायै । जननमृतिनुदे । जह्ववे । ज्योत्स्निकायै । ज्यौतिष्यै । जर्जरायै । जललवकणिकास्वादुसर्वेष्टदायै । ज्वालिन्यै नमः । ४६०

ओं ज्वालवत्यै नमः । ज्वरहरमहसे । जार्णमूर्त्यै । जरायै । जीवन्यै । जीवदायै । जयदकमणये । जीवजीवत्वहन्त्र्यै । जीवायै । जीवयित्र्यै । जठरहुतभुजे । जीर्णये । जारिकायै । जम्भायै ।

जम्भहन्त्र्यै । जयविजययुतद्वारवेद्यै । जशक्त्यै । जातीपुष्पप्रियायै । जघनविलसितक्षौमवासोवरायै । ज्वालायै नमः । ४८०

ओं जातवेदोमनुकृतवपुषे नमः । जीविकायै । जयन्त्यै । जायायै । जामदग्न्यान्वयसुखकृतये । जन्तवे । जित्वरायै । जातीपत्रीफलैलासुरकुसुमसिताभ्राढ्यताम्बूलमुख्यै । झंकुर्वद्भृङ्गिकायै । झलझलरणितक्षीरपूर्त्यै । झशक्त्यै । झाटल्यै । झारिकायै । झरविजितसमुद्रप्रवाहैधनायै । झंझावातप्रभेत्त्र्यै । झमनुपतिजुषे । झारिकाधारिकायै । झंबीजाङ्ग्यै । ञशक्त्यै । ञविदितमनवे नमः । ५००

ओं ञेश्वरायै नमः । ञतुष्ट्यै । टङ्कच्छिन्नप्रवालप्रचयपरिचितप्राक्तटारोहणायै । टीकायै । टिट्टिभादिप्रबलबलदिशे । टिप्पणार्थप्रणेत्र्यै । टाटीदूवाद्यशब्दप्रणयनसुमनोमर्त्यदैत्यस्तुतायै । टङ्कारिण्यै । टमूर्त्यै । टमनुजपमुदे । टार्णसिद्ध्यै । टशक्त्यै । ठात्कारिण्यै । ठसिद्ध्यै । ठमिति मनुमहःस्तंभिताशेषशक्त्यै । ठार्णैकोद्धात चञ्चच्छशिगलदमृताप्लाव्य मानाखिलाङ्ग्यै । डाकिन्यै । डामरघ्न्यै । डमरुकधृतये । डिण्डिमाडम्बरेष्ट्यै नमः । ५२०

ओं डोलारूढ्यै नमः । डसिद्ध्यै । डममुखकृतये । डौण्डये । डम्भहन्त्र्यै । ढक्यै । ढात्कारभूतापरिमितकनकाण्डौघवास्तव्यकायै । ढक्कूल्यै । ढार्णशक्त्यै । ढणढणढणितिध्वाननिस्साणकायै । णाकिन्यै । णार्णसिद्ध्यै । णसुमनुपतये । णादिनामान्वितायै । णा णी णू णे ण णै णो णि णु रवविलसन्नाकिनी सेवितायै । तत्त्वज्ञायै । ततायै । ततमुखगणपाराधितायै । तशक्त्यै । तापिन्यै नमः । ५४०

ओं तापयित्र्यै नमः । तपकृततपसे । तापहन्त्र्यै । तपिन्यै । तप्तायै । तप्तहेमप्रतिभटवपुषे । तप्तलोकाघनुत्यै । तत्त्वातीतात्ममूर्त्यै । तपनमुखपरिश्रान्तिसंपूजितायै । तन्व्यै । ताराधिपायै । तिथिमनुवपुषे । तीर्थराजाधिराजे । तुष्ट्यै । तूर्ण्यै । तृषे । त्रिप्रभृति समतळूधातुमन्त्रार्थमूर्त्यै । तेवन्यै । तैत्तरीयामिषगुडजभुजे । तोत्रवेत्राग्रपाण्यै नमः । ५६०

ओं तौल्यै नमः । तन्त्रीमृदङ्गप्रियतममनसे । तष्टशत्रुप्रजायै । तस्यै । तारार्थवर्त्यै । तृणितदिनकृते । तीक्ष्णहेत्यै । त्वरिण्यै । तारायै । तारकायै । तरणबलकृते । तारयन्त्यै । तरण्यै । तीर्णायै । ताम्रपर्ण्यै । तलयुतपयसे । तालहिन्तालवत्यै । तीव्रस्वानुग्रहायै । तटिदधिकरुचे । तोलयन्त्यै नमः । ५८०

ओं तटिन्यै नमः । ताप्यै । तापोपशान्त्यै । तुरगखुरसमुद्धूलिताम्भोधितत्यै । तीव्रायै । तीक्ष्णदृष्ट्यै । तनुकरणविदे । तुङ्गभद्रात्मिकायै । तेजस्विन्यै । तरुण्यै । तरलिततरवे । तन्त्रकर्त्र्यै । तुलायै । तापस्यै । ताटकारिप्रभृतिबलपुषे । तामसघ्न्यै । तपन्त्यै । त्रेतायै । त्रैसहस्रद्विजवरविलसत्तीरभूम्यै । तिलोष्ठ्यै नमः । ६००

ओं तिन्त्रिण्यै नमः । तिल्ववन्यै । तिलकितसुदृशे । तीरवासादितुष्ट्यै । तालस्तन्यै । तुरङ्गीकृतसममनसे । त्रिस्वरायै । त्रिपूर्यै । त्र्यस्यद्विघ्नव्रजायै । त्रिषवणदिविषन्मज्जनाराधितायै । तत्त्वावेदप्रमाण श्रुतिशिखरलसत्कीर्तये । ताण्डवेश्यै । तत्त्वोक्त्यै । तत्वविद्यापरिहृतमनसे । तत्त्वविद्योपदेष्ट्र्यै । तार्क्ष्यै । तत्वासनायै । तनुकरणकृते । ताण्डवोल्लासितव्यै । ताण्डव्यै नमः ६२०

ओं तत्त्वविद्यास्फुटनिजवपुषे नमः । तण्डुसिद्धान्नदायै । ताम्बूल्यै । तुण्डिकेरीफलविजयिरदच्छादनायै । तमायै । तालाङ्काराधितायै । तरुणरविगवे । तालमूल्यै । तमोघ्न्यै । त्रैकालिक्यै । त्रिवेदीरचितशुभदृशे । त्रिक्रमायै । त्रिवेण्यै । त्रैसाहस्र्यै । त्रिवर्ग्यै । त्रिणतशरभृते । त्र्यङ्गभङ्ग्यै । त्रिलोक्यै । तर्क्यायै । तर्किकायै नमः । ६४०

ओं तर्कितकमतये नमः । ताण्डवे तर्कयुक्त्यै । तर्कानासादितायै । तटनिकटशिलारूपरोहद्घटायै । तार्किक्यै । तार्किकर्द्धिप्रतरचणदृशे । तर्कशास्त्रप्रशास्त्र्यै । तार्यायै । तारितायै । तिथिपदतिथये । तर्कयन्त्यै । तरन्त्यै । तृप्तायै । तर्पयन्त्यै । तनयितजगते । तृप्तये । तर्पणेष्ट्यै । ताटङ्कीभूततारापतिदिनमणये । ताटकार्यर्चितायै । तौरुष्कीसप्तधात्वभ्यवहरणहृषे नमः । ६६०

ओं तर्षयन्त्यै नमः । तुरुष्कव्रात्यव्यूहाभिशोष्यन्निपतदशनये । त्रैसाहस्रद्विजर्द्धयै । तौरुष्कस्तोमक्लृप्तप्रचुरतरतमोलीढ दुष्कृत्यवातज्वालाजाज्वल्यमानाखिलभुवनसमाह्लादिजीवातुकायै । त्रस्यद्भूलोकपीडाकरयवनवनीशाल्मलीतूलजालोत्सर्पत्स्थूलाम्बरान्तः प्रसृमरदनिलव्यूहकृद्धीचिवत्यै । ताल्यै । तालीरसायै। तरलितजनतादुर्लभायै । त्वरायै । तुर्यायै । तूलिकायै । तुलनरहितये । तुल्यदृष्ट्यै । तुदन्त्यै । त्रिस्सप्तक्षत्रगोत्रप्रमथनजमदग्न्यात्मजप्राणदात्र्यै । त्रिस्थायै । तैत्तिरियै (रीय्यै) । त्रिदशशतमुदे । तोषयन्त्यै । त्रिमूर्त्यै नमः । ६८०

ओं तुन्दिन्यै नमः । तोदहन्त्र्यै । तरुजमृदुपदे । तार्क्ष्यपृष्ठस्थितायै । तृष्णायै । तिग्महेत्यै । त्रिगुणतनुभृते । त्रिस्वतन्त्रार्चितायै । तीव्राज्ञायै । त्रिदोषप्रशमनपयसे । त्रित्रिचक्रस्थितायै ।

तीर्थाग्र्यै । तीर्थदात्र्यै । त्रिविधपथमहास्रोतसे । त्रिस्थलायै । थान्त्याकद्व्यष्टवर्णत्रिकललितहलक्षान्तकौलासनायै । थंबीजाङ्ग्यै । थशक्त्यै । थविद्दितगणपाराधितायै । थसिद्ध्यै नमः । ७००

ओं थं मन्त्रातिप्रियायै नमः । थहचरममुखाकाखदाद्याख्यपीठश्रीमात्रे । थप्रभूतध्वनिजितसमित्प्रोज्ज्वलत्प्राक्कटायै । दक्षायै । दारयन्त्यै । दितिजमदनुदे । दीक्षितारधितायै । दुर्गायै । दूतिकायै । दृशिदलितभिदे । देवदेव्यै । दृढायै । दैवज्ञायै । दयायै । दरहसितहृदे । दोषपेटीदमन्यै । दौर्भाग्यध्वान्तदैवाकरकरपटलीकोटये । दण्डयन्त्यै । दर्भाग्राभ्यर्चितायै । दिनरजनिकृते नमः । ७२०

ओं दीपिकायै नमः । दृगास्यै । दीक्षायै । दीक्षितायै । दमनकरुचये । दण्डनापण्डितायै । दण्ड्यायै । दण्डितायै । द्रुपदतनुभुवे । दण्डिनीसेवितायै । दुष्टघ्न्यै । दुःसहार्तिप्रशमकणमुचे । दण्डनीत्यै । दरिष्ट्यै । देव्यै । दीप्त्यै । दवार्चिस्समुषितरिपवे । दण्डनेष्ट्यै । दवीयः स्मृत्यत्यन्तप्रियायै । दलितहरिमणिश्यामलायै नमः । ७४०

ओं दशायै नमः । दिक्चक्रव्याप्तकीर्त्यै । दशदिशवसवे नमः । दण्डनायै । दिशायै । दिव्यस्त्रीकारितस्वोपचरणविधये । दूरदृष्टिप्रदायै । दीव्यत्सौवर्णदर्वीविधरणललितावामहस्तोत्पलायै । दुग्धाम्भः पूर्णरक्तावपनधलधलद्वामपाण्यम्बुजायै । दासश्रेण्यात्मदत्ताभिमतविततये । दिव्यमाणिक्यबद्धप्रत्यक्सोपानपंक्त्यै । दृढतररतये । दृश्यवस्तुप्रदायै । दास्यै । दासानुगायै । दलितदनुभुवे । दग्धसर्वामयायै । दित्यै । दन्वै । दमीष्ट्यै नमः । ७६०

ओं दधिकृतशुचये नमः । दापयन्त्यै । दधन्त्यै । दीष्ट्यै । दृष्ट्यै । दधीचिप्रभृतिसुकृतये । दान्तये । दण्डधार्यै ।

दत्तात्रेयार्चितायै । दुरितसमुदयाविर्भवद् दुर्गतिघ्न्यै । द्राविण्यै । दीर्घिकायै । दरहरनुतये । दृसये । दर्पयन्त्यै । दत्ताघ्र्यायै । दमेष्ट्यै । दयिततमपरिष्वक्तगात्र्यै । दलिन्यै । दूर्वायै नमः । ७८०

ओं दूषितान्तःकरणजनदुराराध्यपादाम्बजायै नमः । दीनारौघप्रदायै । छित्तदशशिरसे । दीक्षयन्त्यै । दलायै । धम्मिल्लानद्धमाल्यै । धनदनिधिहृते (दे) । धान्यदोग्ध्र्यै । धमन्यै । धीष्ण्यांश्यै । धीरवृत्त्यै । धुरिकरणधृषे । धूपदीपामृतेष्ट्यै । धृष्ट्यै । धेन्वै । धृतायै । धमनितवपुषे । धैवतादिस्वरर्द्ध्यै । धोरण्यै । धौतमायाणवकृतिरजसे नमः । ८००

ओं धिन्वदायै नमः । धुरायै । ध्वस्तक्लेशव्रजायै । ध्वनिजितमदभृत्कोकिलायै । धरन्त्यै । धार्यायै । धारणायै । ध्रुवफलजनुषे । धारयन्त्यै । ध्रुवर्द्ध्यै । धर्माधर्मादिबद्धच्छिदुरजललवत्रुट्यणुप्राशनायै । धार्यायै । धर्मवृद्ध्यै । धवयजनमुदे । धार्यमाणाखिलाङ्ग्यै । धूम्रार्चीरूपवत्यै । धृतिमयतनवे । ध्यानमय्यै । ध्वजिन्यै । धूम्रायै नमः । ८२०

ओं धातुमूर्त्यै नमः । ध्वजपटपवनोत्सारितारातिवत्यै । ध्येयायै । धामवत्यै । धरनिवसतये । धातवे । धातुमत्यै । धावन्त्यै । धूर्वहायै । धुततमजगते । धूर्तसंहारिकायै । नव्यायै । नायिकायै । निहतदितिभुवे । नीतये । नित्यशक्त्यै । नूत्नप्रालेयपुष्पप्रचुरसुरभये । नृत्तराजाप्लुतायै । नेयायै । नैकशक्त्यै नमः । ८४०

ओं नवनवकृतये नमः । नोदनोद्युक्तनेत्र्यै । नौकायै । नन्दनोद्यत्प्रसवविसरजस्यन्दनोहारवेण्यै । नष्टार्थांशुप्रदात्र्यै । नृहरिपरशुरामादिसंसेवितायै । नर्दन्त्यै । नर्दयन्त्यै । निधिनिचयभृते । नान्दये । नन्दितायै । नाथायै । नाथवत्यै । नवनवतनवे । नाटिकायै । नमन्त्यै । नष्टेष्ट्यायै । नटेभ्यै । नटनगतिविदे । नाटयन्त्यै नमः । ८६०

ओं नटन्त्यै नमः । पत्ये । पल्यै । परायै । परिकलितपरामुख्य चातुर्विधायै । पायायै । पालयन्त्यै । पिशुनजशुचे । पीतये । पीतकायै । पूर्यै । पूरार्चितायै । पृषदणुमरुते । पेशलायै । पठन्त्यै । पैलर्ष्यै । पोषयन्त्यै । पुरितदुदितये । पौरुषास्यै । परेभ्यै नमः । ८८०

ओं पक्तिद्युत्पञ्चपञ्चाशदधिकशतसंख्येन्दुमुख्यै । नटेशश्रीमन्नृत्यत्पदाब्जार्पणकृतमुखदाधानचातुर्यसीम्ने । पर्श्येयस्त्री-पराधार्बुदशततटिनीपूरसन्दोहदोह प्रौठिप्राज्याधिराज्यप्रकटतम-निजप्राभवीमूलिकायै । फुल्लाक्ष्यै । फूत्क्रियातिद्रवदरिततये । फेरुसप्ताश्वतत्यै । फालाग्राकृष्टवत्यै । फलितफलिनये । फालकृष्टा-चलेष्टचै । बद्धायै । बाधहायै । बिलशयललनालालितायै । बलिन्यै । बीजोत्पत्त्यै । बुभुक्षापरिहरपयसे । ब्लूंवशीकारिकायै । बृन्दायै । ब्राह्मणायै । बकझषबलये । बैन्दवाख्यासनायै नमः । ९००

ओं बोधिन्यै नमः । बौद्धभेत्र्यै । बलिभुगमृतये । बन्धवे । बर्हकेभ्यै । भक्तायै । भावबोद्ध्यै । भिषगमृतदुहे । भीमसेनार्चितायै । भुज्यायै । भूतहन्त्र्यै । भृतकजनमुदे । भेदवादिप्रभेत्र्यै । भैम्यै । भोगप्रदायै । भ्रमरकबरये । भौतिकध्र्व्यै । भवायै । भण्डघ्न्यै । भक्ततुष्ट्यै नमः । ९२०

ओं भवभयहृतये नमः । भावसिद्ध्यै । भवान्यै । मण्यै । माणिक्यदायै । मिथुनितवपुषे । मीनदृक्पूजितायै । मुद्रायै । मूर्तिमत्यै । मृगपिशितभुजे । मेनकायै । मृडान्यै । मैत्रेय्यै । मोहदोग्ध्र्यै । मदनजयदृशे । मङ्गलायै । मराल्यै । मर्दिन्यै । मादिपञ्चार्चनधृतरुचये । मत्तमातङ्गगत्यै नमः । ९४०

ओं यक्षिण्यै नमः । यामवत्यै । यतिकृतनुतये । यज्वतुष्ट्यै । यियक्ष्व्यै । युक्त्यै । यूथार्चितायै । युवतिजनधृषे । योधयन्त्यै ।

यमित्र्यै । रक्षायै । राज्यलक्ष्म्यै । रिपुजननधहे । रीतये । रुद्रशक्त्यै । रूपिण्यै । रेणुकायै । रणरणकहृते । रैप्रदायै । रमायै नमः । ९६०

ओं लक्ष्यायै नमः । लाजतुष्ट्यै । लिखितचरधृषे । लीढषड्भोजनायै । लुङ्नेष्ट्यै । लूतिकायै । लवकुशजनये । लेखयन्त्यै । लतायै । वल्लक्यै । वादयन्त्यै । विविधविधिकृते । वीवधस्तोमभाजे । व्युष्ट्यै । व्यूताखिलायै । वृतसकलदिशे । वेददीक्षाविधायै । शच्यै । शान्त्यै । शिवायै नमः । ९८०

ओं शकुनकुलभुजे नमः । शीतलायै । शितायै । शुद्धायै । शूरहन्त्र्यै । (तदनु च) शिवगङ्गाम्बिकायै । शिवाङ्ग्यै । षण्मुख्यै । षण्णवत्यै । षड्तुकुसुमसंपूजितायै । षडङ्ग्यै । षष्ठ्यै । षड्जप्रियायै । षडमृतरुहसत्कारतुष्ट्यै । षडर्ण्यै । सत्यै । साम्यै । सिरायै । सितमतमनसे । सीरशक्त्यै नमः । १०००

ओं सुरेष्ट्यै नमः । सूत्यै । स्रुत्यै । सरव्यै । सुरभिलवपुषे । सेवनायै । सभायै । सैन्धव्यै । सोमदायै । सुरतरतिजषे । सौम्यमुख्यै । सुषुप्त्यै । संविद्धट्टारिकायै । समरसमतये । सुश्रितायै । सुसख्यै । हाहाहूहूहयस्थाहयवदनहरिन्नाथहैरण्यवर्मव्याघ्रांघ्र्यादिप्रसिद्धा-खिलजनकलितस्तोत्रपाठक्रमायै । ळम्बीजोत्कृष्टतुष्ट्यै । क्षमित-सकललोकापराधक्रियायै नमः । १०१९

(भूयो भूयोऽस्मदीयाः प्रणतिविततयः स्युःपरार्धातिरिक्ताः ।)

(स्रग्धरावृत्ते चवैतुहितथैवेत्यादिपादपूरकाव्यय योजनारहितं चतुर्थ्यन्तनाम सङ्ग्रथनं मनोरममिति भावुकाः ।)



# गायत्रीसहस्रनामस्तोत्रम् - १

(गायत्र्यक्षरघटितम्)

मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैः
युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम्।
गायत्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गुणं
शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥

तत्काररूपा तत्त्वज्ञा तत्पदार्थस्वरूपिणी।
तपस्स्वाध्यायनिरता तपस्विजनसंनुता ॥ १ ॥
तत्कीर्तिगुणसम्पन्ना तथ्यवाक्च तपोनिधिः।
तत्त्वोपदेशसम्बन्धा तपोलोकनिवासिनी ॥ २ ॥
तरुणादित्यसंकाशा तप्तकाञ्चनभूषणा।
तमोऽपहारिणी तन्त्री तारिणीताररूपिणी ॥ ३ ॥
तलादिभुवनान्तःस्था तर्कशास्त्रविधायिनी।
तन्त्रसारा तन्त्रमाता तन्त्रमार्गप्रदर्शिनी ॥ ४ ॥
तत्त्वा तन्त्रविधानज्ञा तन्त्रस्था तन्त्रसाक्षिणी।
तदेकध्याननिरता तत्त्वज्ञानप्रबोधिनी ॥ ५ ॥
तन्नाममन्त्रसुप्रीता तपस्विजनसेविता।
सकाररूपा सावित्री सर्वरूपा सनातनी ॥ ६ ॥
संसारदुःखशमनी सर्वयागफलप्रदा।
सकला सत्यसंकल्पा सत्यासत्यप्रदायिनी ॥ ७ ॥
संतोषजननी सारा सत्यलोकनिवासिनी।
समुद्रतनयाराध्या सामगानप्रिया सती ॥ ८ ॥

समाना सामदेवी च समस्तसुरसेविता ।
सर्वसम्पत्तिजननी सद्गुणा सकलेष्टदा ।। ९ ।।
सनकादिमुनिध्येया समानाधिकवर्जिता ।
साध्या सिद्धा सुधावासा सिद्धिः साध्यप्रदायिनी ।। १० ।।
सद्युगाराध्यनिलया समुत्तीर्णा सदाशिवा ।
सर्ववेदान्तनिलया सर्वशास्त्रार्थगोचरा ।। ११ ।।
सहस्रदलपद्मस्था सर्वज्ञा सर्वतोमुखी ।
समया समयाचारा सदसद्ग्रन्थिभेदिनी ।। १२
सप्तकोटिमहामन्त्रमाता सर्वप्रदायिनी ।
सगुणा सम्भ्रमा साक्षा सर्वचैतन्यरूपिणी ।। १३ ।।
सत्कीर्तिः सात्त्विकी साध्वी सच्चिदानन्दरूपिणी ।
संकल्परूपिणी संध्या सालग्रामनिवासिनी ।। १४ ।।
सर्वोपाधिविनिर्मुक्ता सत्यज्ञानप्रबोधिनी ।
विकाररूपा विप्रश्रीर्विप्राराधनतत्परा ।। १५ ।।
विप्रप्रीर्विप्रकल्याणी विप्रवाक्यस्वरूपिणी ।
विप्रमन्दिरमध्यस्था विप्रवादविनोदिनी ।। १६ ।।
विप्रोपाधिविनिर्भेत्री विप्रहत्याविमोचनी ।
विप्रत्रात्री विप्रगोत्रा विप्रगोत्रविवर्धिनी ।। १७ ।।
विप्रभोजनसंतुष्टा विष्णुरूपा विनोदिनी ।
विष्णुमाया विष्णुवन्द्या विष्णुगर्भा विचित्रिणी ।। १८ ।।
वैष्णवी विष्णुभगिनी विष्णुमायाविलासिनी ।
विकाररहिता विश्वविज्ञानघनरूपिणी ।। १९ ।।

विबुधा विष्णुसंकल्पा विश्वामित्रप्रसादिनी।
विष्णुचैतन्यनिलया विष्णुस्वा विश्वसाक्षिणी ।। २० ।।
विवेकिनी वियद्रूपा विजया विश्वमोहिनी।
विद्याधरी विधानज्ञा वेदतत्त्वार्थरूपिणी ।। २१ ।।
विरूपाक्षी विराड्रूपा विक्रमा विश्वमङ्गला।
विश्वम्भरासमाराध्या विश्वभ्रमणकारिणी ।। २२ ।।
विनायकी विनोदस्था वीरगोष्ठीविवर्धिनी।
विवाहरहिता विन्ध्या विन्ध्याचलनिवासिनी ।। २३ ।।
विद्याविद्याकरी विद्या विद्याविद्याप्रबोधिनी।
विमला विभवा वेद्या विश्वस्था विविधोज्ज्वला ।। २४ ।।
वीरमध्या वरारोहा वितन्त्रा विश्वनायिका।
वीरहत्याप्रशमनी विनम्रजनपालिनी ।। २५ ।।
वीरधीर्विविधाकारा विरोधिजननाशिनी।
तुकाररूपा तुर्यश्रीस्तुलसीवनवासिनी ।। २६ ।।
तुरङ्गी तुरगारूढा तुलादानफलप्रदा।
तुलामाघस्नानतुष्टा तुष्टिपुष्टिप्रदायिनी ।। २७।।
तुरङ्गमप्रसंतुष्टा तुलिता तुल्यमध्यगा।
तुङ्गोत्तुङ्गा तुङ्गकुचा तुहिनाचलसंस्थिता ।। २८ ।।
तुम्बुरादिस्तुतिप्रीता तुषारशिखरीश्वरी।
तुष्टा च तुष्टिजननी तुष्टलोकनिवासिनी ।। २९ ।।
तुलाधारा तुलामध्या तुलास्था तुर्यरूपिणी।
तुरीयगुणगम्भीरा तूर्यनादस्वरूपिणी ।। ३० ।।

तूर्यविद्यालास्यतुष्टा तूर्यशास्त्रार्थवादिनी ।
तुरीयशास्त्रतत्त्वज्ञा तूर्यवादविनोदिनी ।। ३१ ।।
तूर्यनादान्तनिलया तुर्यानन्दस्वरूपिणी ।
तुरीयभक्तिजननी तुर्यमार्गप्रदर्शिनी ।। ३२ ।।
वकाररूपा वागीशी वरेण्या वरसंविधा ।
वरा वरिष्ठा वैदेही वेदशास्त्रप्रदर्शिनी ।। ३३ ।।
विकल्पशमनी वाणी वाञ्छितार्थफलप्रदा ।
वयःस्था च वयोमध्या वयोऽवस्थाविवर्जिता ।। ३४ ।।
वन्दिनी वादिनी वर्या वाङ्मयी वीरवन्दिता ।
वानप्रस्थाश्रमस्था च वनदुर्गा वनालया ।। ३५ ।।
वनजाक्षी वनचरी वनिता विश्वमोहिनी ।
वसिष्ठवामदेवादिवन्द्या वन्द्यस्वरूपिणी ।। ३६ ।।
वैद्या वैद्यचिकित्सा च वषट्कारी वसुन्धरा ।
वसुमाता वसुत्राता वसुजन्मविमोचनी ।। ३७ ।।
वसुप्रदा वासुदेवी वासुदेवमनोहरी ।
वासवार्चितपादश्रीर्वासवारिविनाशिनी ।। ३८ ।।
वागीशी वाङ्मनःस्थायी वशिनी वनवासभूः ।
वामदेवी वरारोहा वाद्यघोषणतत्परा ।। ३९ ।।
वाचस्पतिसमाराध्या वेदमाता विनोदिनी ।
रेकाररूपा रेवा च रेवातीरनिवासिनी ।। ४० ।।
राजीवलोचना रामा रागिणी रतिवन्दिता ।
रमणी रामजप्ता च राज्यपा रजताद्रिगा ।। ४१ ।।

राकिणी रेवती रक्षा रुद्रजन्मा रजस्वला।
रेणुका रमणी रम्या रतिवृद्धा रता रतिः ॥ ४२ ॥
रावणानन्दसन्धायी राजश्री राजशेखरी।
रणमध्या रथारूढा रविकोटिसमप्रभा ॥ ४३ ॥
रविमण्डलमध्यस्था रजनी रविलोचना।
रथाङ्गपाणी रक्षोघ्नी रागिणी रावणार्चिता ॥ ४४ ॥
रम्भादिकन्यकाराध्या राज्यदा राज्यवर्धिनी।
रजताद्रीशसक्थिस्था रम्या राजीवलोचना ॥ ४५ ॥
रम्यवाणी रमाराध्या राज्यधात्री रतोत्सवा।
रेवती च रतोत्साहा राजहृद्रोगहारिणी ॥ ४६ ॥
रङ्गप्रवृद्धमधुरा रङ्गमण्डपमध्यगा।
रंजिता राजजननी रम्या राकेन्दुमध्यगा ॥ ४७ ॥
राविणी रागिणी रंज्या राजराजेश्वरार्चिता।
राजन्वती राजनीती रजताचलवासिनी ॥ ४८ ॥
राघवार्चितपादश्रीः राघवी राघवप्रिया।
रत्ननूपुरमध्याढ्या रत्नद्वीपनिवासिनी ॥ ४९ ॥
रत्नप्राकारमध्यस्था रत्नमण्डपमध्यगा।
रत्नाभिषेकसंतुष्टा रत्नाङ्गी रत्नदायिनी ॥ ५० ॥
णिकाररूपिणी नित्या नित्यतृप्ता निरंजना।
निद्रात्ययविशेषज्ञा नीलजीमूतसंनिभा ॥ ५१ ॥
नीवारशूकवत्तन्वी नित्यकल्याणरूपिणी।
नित्योत्सवा नित्यपूज्या नित्यानन्दस्वरूपिणी ॥ ५२ ॥

निर्विकल्पा निर्गुणस्था निश्चिन्ता निरुपद्रवा ।
निस्संशया निरीहा च निर्लोभा नीलमूर्धजा ॥ ५३ ॥
निखिलागममध्यस्था निखिलागमसंस्थिता ।
नित्योपाधिविनिर्मुक्ता नित्यकर्मफलप्रदा ॥ ५४ ॥
नीलग्रीवा निराहारा निरंजनवरप्रदा ।
नवनीतप्रिया नारी नरकार्णवतारिणी ॥ ५५ ॥
नारायणी निरीहा च निर्मला निर्गुणप्रिया ।
निश्चिन्ता निगमाचारनिखिलागमवेदिनी ॥ ५६ ॥
निमिषानिमिषोत्पन्ना निमेषाण्डविधायिनी ।
निवातदीपमध्यस्था निर्विघ्ना नीचनाशिनी ॥ ५७ ॥
नीलवेणी नीलखण्डा निर्विषा निष्कशोभिता ।
नीलांशुकपरीधाना निन्दाघ्नी च निरीश्वरी ॥ ५८ ॥
निश्वासोच्छ्वासमध्यस्था नित्ययानविलासिनी ।
यंकाररूपा यन्त्रेशी यन्त्री यन्त्रयशस्विनी ॥ ५९ ॥
यन्त्राराधनसंतुष्टा यजमानस्वरूपिणी ।
योगिपूज्या यकारस्था यूपस्तम्भनिवासिनी ॥ ६० ॥
यमघ्नी यमकल्पा च यशःकामा यतीश्वरी ।
यमादियोगनिरता यतिदुःखापहारिणी ॥ ६१ ॥
यज्ञा यज्वा यजुर्गेया यज्ञेश्वरपतिव्रता ।
यज्ञसूत्रप्रदा यष्ट्री यज्ञकर्मफलप्रदा ॥ ६२ ॥
यवाङ्कुरप्रिया यन्त्री यवदघ्नी यवार्चिता ।
यज्ञकर्त्री यज्ञभोक्त्री यज्ञाङ्गी यज्ञवाहिनी ॥ ६३ ॥

यज्ञसाक्षी यज्ञमुखी यजुषी यज्ञरक्षणी।
भकाररूपा भद्रेशी भद्रकल्याणदायिनी ॥ ६४ ॥
भक्तप्रिया भक्तसखी भक्ताभीष्टस्वरूपिणी।
भगिनी भक्तसुलभा भक्तिदा भक्तवत्सला ॥ ६५ ॥
भक्तचैतन्यनिलया भक्तबन्धविमोचनी।
भक्तस्वरूपिणी भाग्या भक्तारोग्यप्रदायिनी ॥ ६६ ॥
भक्तमाता भक्तगम्या भक्ताभीष्टप्रदायिनी।
भास्करी भैरवी भोग्या भवानी भयनाशिनी ॥ ६७ ॥
भद्रात्मिका भद्रदायी भद्रकाली भयंकरी।
भगनिष्यन्दिनी भूम्नी भवबन्धविमोचनी ॥ ६८ ॥
भीमा भवसखी भङ्गी भङ्गुरा भीमदर्शिनी।
भल्ली भल्लीधरा भीरुर्भेरुण्डा भीमपापहा ॥ ६९ ॥
भावज्ञा भोगदात्री च भवघ्नी भूतिभूषणा।
भूतिदा भूमिदात्री च भूपतित्वप्रदायिनी ॥ ७० ॥
भ्रामरी भ्रमरी भारी भवसागरतारिणी।
भण्डासुरवधोत्साहा भाग्यदा भावनोदिनी ॥ ७१ ॥
गोकाररूपा गोमाता गुरुपत्नी गुरुप्रिया।
गोरोचनप्रिया गौरी गोविन्दगुणवर्धिनी ॥ ७२ ॥
गोपालचेष्टासंतुष्टा गोवर्धनविवर्धिनी।
गोविन्दरूपिणी गोप्त्री गोकुलानां विवर्धिनी ॥ ७३ ॥
गीता गीतप्रिया गेया गोदा गोरूपधारिणी।
गोपी गोहत्यशमनी गुणिनी गुणिविग्रहा ॥ ७४ ॥

गोविन्दजननी गोष्ठा गोप्रदा गोकुलोत्सवा।
गोचरी गौतमी गोप्त्री गोमुखी गुरुवासिनी ॥ ७५ ॥
गोपाली गोमयी गुम्फा गोष्ठी गोपुरवासिनी।
गरुडी गमनश्रेष्ठा गारुडी गरुडध्वजा ॥ ७६ ॥
गम्भीरा गण्डकी गुंभा गरुडध्वजवल्लभा।
गगनस्था गयावासा गुणवृत्तिर्गुणोद्भवा ॥ ७७ ॥
देकाररूपा देवेशी दृग्रूपा देवतार्चिता।
देवराजेश्वरार्धाङ्गी दीनदैन्यविमोचनी ॥ ७८ ॥
देशकालपरिज्ञाना देशोपद्रवनाशिनी।
देवमाता देवमोहा देवदानवमोहिनी ॥ ७९ ॥
देवेन्द्रार्चितपादश्रीर्देवदेवप्रसादिनी।
देशान्तरी देशरूपा देवालयनिवासिनी ॥ ८० ॥
देशभ्रमणसंतुष्टा देशस्वास्थ्यप्रदायिनी।
देवयाना देवता च देवसैन्यप्रपालिनी ॥ ८१ ॥
वकाररूपा वाग्देवी वेदमानसगोचरा।
वैकुण्ठदेशिका वेद्या वायुरूपा वरप्रदा ॥ ८२ ॥
वक्रतुण्डार्चितपदा वक्रतुण्डप्रसादिनी।
वैचित्र्यरूपा वसुधा वसुस्थाना वसुप्रिया ॥ ८३ ॥
वषट्कारस्वरूपा च वरारोहा वरासना।
वैदेहीजननी वेद्या वैदेहीशोकनाशिनी ॥ ८४ ॥
वेदमाता वेदकन्या वेदरूपा विनोदिनी।
वेदान्तवादिनी चैव वेदान्तनिलयप्रिया ॥ ८५ ॥

वेदश्रवा वेदघोषा वेदगीता विनोदिनी ।
वेदशास्त्रार्थतत्त्वज्ञा वेदमार्गप्रदर्शिनी ।। ८६ ।।
वेदोक्तकर्मफलदा वेदसागरवाडवा ।
वेदवन्द्या वेदगुह्या वेदाश्वरथवाहिनी ।। ८७ ।।
वेदचक्रा वेदवन्द्या वेदाङ्गी वेदवित्कविः ।
स्यकाररूपा सामान्ता सामगानविचक्षणा ।। ८८ ।।
साम्राज्ञी सामरूपा च सदानन्दप्रदायिनी ।
सर्वदृक्संनिविष्टा च सर्वसम्प्रेषिणी सहा ।। ८९ ।।
सव्यापसव्यदा सव्यसध्रीची च सहायिनी ।
सकला सागरा सारा सार्वभौमस्वरूपिणी ।। ९० ।।
संतोषजननी सेव्या सर्वेशी सर्वरंजनी ।
सरस्वती समाराध्या सामदा सिन्धुसेविता ।। ९१ ।।
सम्मोहिनी सदामोहा सर्वमाङ्गल्यदायिनी ।
समस्तभुवनेशानी सर्वकामफलप्रदा ।। ९२ ।।
सर्वसिद्धिप्रदा साध्वी सर्वज्ञानप्रदायिनी ।
सर्वदारिद्र्यशमनी सर्वदुःखविमोचनी ।। ९३ ।।
सर्वरोगप्रशमनी सर्वपापविमोचनी ।
समदृष्टिः समगुणा सर्वगोप्त्री सहायिनी ।। ९४ ।।
सामर्थ्यवाहिनी सांख्या सान्द्रानन्दपयोधरा ।
संकीर्णमन्दिरस्थाना साकेतकुलपालिनी ।। ९५ ।।
संहारिणी सुधारूपा साकेतपुरवासिनी ।
सम्बोधिनी समस्तेशी सत्यज्ञानस्वरूपिणी ।। ९६ ।।

सम्पत्करी समानाङ्गी सर्वभावसुसंस्थिता।
संध्यावन्दनसुप्रीता सन्मार्गकुलपालिनी ॥ ९७ ॥
संजीविनी सर्वमेधा सभ्या साधुसुपूजिता।
समिद्धा सामिधेनी च सामान्या सामवेदिनी ॥ ९८ ॥
समुत्तीर्णा सदाचारा संहारा सर्वपावनी।
सर्पिणी सर्पमाला च सामदानसुखप्रदा ॥ ९९ ॥
सर्वरोगप्रशमनी सर्वज्ञत्वफलप्रदा।
संक्रमा समदा सिन्धुः सर्गादिकरणक्षमा ॥ १०० ॥
संकटा संकटहरा सकुङ्कुमविलेपना।
सुमुखी सुमुखप्रीता समानाधिकवर्जिता ॥ १०१ ॥
संस्तुता स्तुतिसुप्रीता सत्यवादी सदास्पदा।
धीकाररूपा धीमाता धीरा धीरप्रसादिनी ॥ १०२ ॥
धीरोत्तमा धीरधीरा धीरस्था धीरशेखरा।
धृतिरूपा धनाढ्या च धनपा धनदायिनी ॥ १०३ ॥
धीरूपा धीरवन्द्या च धीप्रभा धीरमानसा।
धीगेया धीपदस्था च धीशानी धीप्रसादिनी ॥ १०४ ॥
मकाररूपा मैत्रेयी महामङ्गलदेवता।
मनोवैकल्यशमनी मलयाचलवासिनी ॥ १०५ ॥
मलयध्वजराजश्रीर्मायामोहविभेदिनी।
महादेवी महारूपा महाभैरवपूजिता ॥ १०६ ॥
मनुप्रीता मन्त्रमूर्तिर्मन्त्रवश्या महेश्वरी।
मत्तमातङ्गगमना मधुरा मेरुमण्डपा ॥ १०७ ॥

महागुप्ता महाभूतमहाभयविनाशिनी।
महाशौर्या मन्त्रिणी च महावैरिविनाशिनी ॥ १०८॥
महालक्ष्मीर्महागौरी महिषासुरमर्दिनी।
मही च मण्डलस्था च मधुरागमपूजिता ॥ १०९॥
मेधा मेधाकरी मेध्या माधवी मधुमर्दिनी।
मन्त्रा मन्त्रमयी मान्या मायामाधवमन्त्रिणी ॥ ११०॥
मायादूरा च मायावी मायाज्ञा मानदायिनी।
मायासंकल्पजननी मायामयविनोदिनी ॥ १११॥
मायाप्रपञ्चशमनी मायासंहाररूपिणी।
मायामन्त्रप्रसादा च मायाजनविमोहिनी ॥ ११२॥
महापथा महाभोगा महाविघ्नविनाशिनी।
महानुभावा मन्त्राढ्या महामङ्गलदेवता ॥ ११३॥
हिकाररूपा हृद्या च हितकार्यप्रवर्धिनी।
हेयोपाधिविनिर्मुक्ता हीनलोकविनाशिनी ॥ ११४॥
ह्रींकारी ह्रींमती हृद्या ह्रींदेवी ह्रींस्वभाविनी।
ह्रींमन्दिरा हितकरी हृष्टा च ह्रींकुलोद्भवा ॥ ११५॥
हितप्रज्ञा हितप्रीता हितकारुण्यवर्धिनी।
हिताशिनी हितक्रोधा हितकर्मफलप्रदा ॥ ११६॥
हिमा हैमवती हैम्नी हेमाचलनिवासिनी।
हिमागजा हितकरी हितकर्मस्वभाविनी ॥ ११७॥
धिकाररूपा धिषणा धर्मरूपा धनेश्वरी।
धनुर्धरा धराधारा धर्मकर्मफलप्रदा ॥ ११८॥

धर्माचारा धर्मसारा धर्ममध्यनिवासिनी।
धनुर्विद्या धनुर्वेदा धन्या धूर्तविनाशिनी ॥ ११९ ॥
धनधान्या धेनुरूपा धनाढ्या धनदायिनी।
धनेशी धर्मनिरता धर्मराजप्रसादिनी ॥ १२० ॥
धर्मस्वरूपा धर्मेशी धर्माधर्मविचारिणी।
धर्मसूक्ष्मा धर्मगेहा धर्मिष्ठा धर्मगोचरा ॥ १२१ ॥
योकाररूपा योगेशी योगस्था योगरूपिणी।
योग्या योगीशवरदा योगमार्गनिवासिनी ॥ १२२ ॥
योगासनस्था योगेशी योगमायाविलासिनी।
योगिनी योगरक्ता च योगाङ्गी योगविग्रहा ॥ १२३ ॥
योगवासा योगभोग्या योगमार्गप्रदर्शिनी।
योकाररूपा योधाढ्या योद्ध्री योधसुतत्परा ॥ १२४ ॥
योगिनी योगिनीसेव्या योगज्ञानप्रबोधिनी।
योगेश्वरप्राणनाथा योगीश्वरहृदिस्थिता ॥ १२५ ॥
योगा योगक्षेमकर्त्री योगक्षेमविधायिनी।
योगराजेश्वराराध्या योगानन्दस्वरूपिणी ॥ १२६ ॥
नकाररूपा नादेशी नामपारायणप्रिया।
नवसिद्धिसमाराध्या नारायणमनोहरी ॥ १२७ ॥
नारायणी नवाधारा नवब्रह्मार्चिताङ्घ्रिका।
नगेन्द्रतनयाराध्या नामरूपविवर्जिता ॥ १२८ ॥
नरसिंहार्चितपदा नवबन्धविमोचनी।
नवग्रहार्चितपदा नवमीपूजनप्रिया ॥ १२९ ॥

नैमित्तिकार्थफलदा नन्दितारिविनाशिनी ।
नवपीठस्थिता नादा नवर्षिगणसेविता ।। १३० ।।
नवसूत्रविधानज्ञा नैमिषारण्यवासिनी ।
नवचन्दनदिग्धाङ्गी नवकुङ्कुमधारिणी ।। १३१ ।।
नववस्त्रपरीधाना नवरत्नविभूषणा ।
नव्यभस्मविदिग्धाङ्गी नवचन्द्रकलाधरा ।। १३२ ।।
प्रकाररूपा प्राणेशी प्राणसंरक्षणी परा ।
प्राणसंजीविनी प्राच्या प्राणिप्राणप्रबोधिनी ।। १३३ ।।
प्रज्ञा प्राज्ञा प्रभापुष्पा प्रतीची प्रबुधप्रिया ।
प्राचीना प्राणिचित्तस्था प्रभा प्रज्ञानरूपिणी ।। १३४ ।।
प्रभातकर्मसंतुष्टा प्राणायामपरायणा ।
प्रायज्ञा प्रणवा प्राणा प्रवृत्तिः प्रकृतिः परा ।। १३५ ।।
प्रबन्धा प्रथमा चैव प्रज्ञा प्रारब्धनाशिनी ।
प्रबोधनिरता प्रेक्ष्या प्रबन्धा प्राणसाक्षिणी ।। १३६ ।।
प्रयागतीर्थनिलया प्रत्यक्षपरमेश्वरी ।
प्रणवाद्यन्तनिलया प्रणवादिः प्रजेश्वरी ।। १३७ ।।
चोकाररूपा चोरघ्नी चोरबाधाविनाशिनी ।
चैतन्यचेतनस्था च चतुरा च चमत्कृतिः ।। १३८ ।।
चक्रवर्तिकुलाधारा चक्रिणी चक्रधारिणी ।
चित्तगेया चिदानन्दा चिद्रूपा चिद्विलासिनी ।। १३९ ।।
चिन्ता चित्तप्रशामनी चिन्तितार्थफलप्रदा ।
चाम्पेयी चम्पकप्रीता चण्डी चण्डाट्टहासिनी ।। १४० ।।

चण्डेश्वरी चण्डमाता चण्डमुण्डविनाशिनी।
चकोराक्षी चिरप्रीता चिकुरा चिकुरालका ॥ १४१ ॥
चैतन्यरूपिणी चैत्री चेतना चित्तसाक्षिणी।
चित्रा चित्रविचित्राङ्गी चित्रगुप्तप्रसादिनी ॥ १४२ ॥
चलना चक्रसंस्था च चाम्पेयी चलचित्रिणी।
चन्द्र मण्डलमध्यस्था चन्द्रकोटिसुशीतला ॥ १४३ ॥
चन्द्रानुजसमाराध्या चन्द्रा चण्डमहोदरी।
चर्चितारिश्चन्द्रमाता चन्द्रकान्ता चलेश्वरी ॥ १४४ ॥
चराचरनिवासी च चक्रपाणिसहोदरी।
दकाररूपा दत्तश्रीर्दारिद्रयच्छेदकारिणी ॥ १४५ ॥
दत्तात्रेयस्य वरदा दयालुर्दीनवत्सला।
दक्षाराध्या दक्षकन्या दक्षयज्ञविनाशिनी ॥ १४६ ॥
दक्षा दाक्षायणी दीक्षा दृष्टा दक्षवरप्रदा।
दक्षिणा दक्षिणाराध्या दक्षिणामूर्तिरूपिणी ॥ १४७ ॥
दयावती दमस्वान्ता दनुजारिर्दयानिधिः।
दन्तशोभानिभा देवी दमनी दाडिमस्तनी ॥ १४८ ॥
दण्डा च दमयित्री च दण्डिनी दमनप्रिया।
दण्डकारण्यनिलया दण्डकारिविनाशिनी ॥ १४९ ॥
दंष्ट्राकरालवदना दण्डशोभा दरोदरी।
दरिद्रारिष्टशमनी दम्या दमनपूजिता ॥ १५० ॥
दानवार्चितपादश्रीर्द्रविणा द्राविणी दया।
दामोदरी दानवारिर्दामोदरसहोदरी ॥ १५१ ॥

दात्री दानप्रिया दाम्री दानश्रीर्द्विजवन्दिता।
दन्तिगा दण्डिनी दूर्वा दधिदुग्धस्वरूपिणी ।। १५२ ।।
दाडिमीबीजसंदोहदन्तपङ्क्तिविराजिता।
दर्पणा दर्पणस्वच्छा द्रुममण्डलवासिनी ।। १५३ ।।
दशावतारजननी दशदिग्दैवपूजिता।
दमा दशदिशा दृश्या दशदासी दयानिधिः ।। १५४ ।।
देशकालपरिज्ञाना देशकालविशोधिनी।
दशम्यादिकलाराध्या दशग्रीवविरोधिनी ।। १५५ ।।
दशापराधशमनी दशवृत्तिफलप्रदा।
यात्काररूपिणी याज्ञी यादवी यादवार्चिता ।। १५६ ।।
ययातिपूजनप्रीता याज्ञिकी याजकप्रिया।
यजमाना यदुप्रीता यामपूजाफलप्रदा ।। १५७ ।।
यशस्विनी यमाराध्या यमकन्या यतीश्वरी।
यमादियोगसंतुष्टा योगीन्द्रहृदया यमा ।। १५८ ।।
यमोपाधिविनिर्मुक्ता यशस्यविधिसंनुता।
यवीयसी युवप्रीता यात्रानन्दा यतीश्वरी ।। १५९ ।।
योगप्रिया योगगम्या योगिध्येया यथेच्छगा।
यागप्रिया याज्ञसेनी योगरूपा यथेष्टदा ।। १६० ।।

* * *

## गायत्रीसहस्रनामावलिः-१

ओं त । तत्काररूपायै नमः । तत्त्वज्ञायै । तत्पदार्थस्वरूपिण्यै । तपः स्वाध्यायनिरतायै । तपस्विजनसंनुतायै । तत्कीर्तिगुणसंपन्नायै । तथ्यवाचे । तपोनिधये । तत्त्वोपदेशसंबन्धायै । तपोलोकनिवासिन्यै । तरुणादित्यसंकाशायै । तप्तकाञ्चनभूषणायै । तमोऽपहारिण्यै । तन्त्र्यै । तारिण्यै ।ताररूपिण्यै । तलादिभुवनान्तःस्थायै । तर्कशास्त्रविधायिन्यै । तन्त्रसारायै। तन्त्रमात्रे । (२०) तन्त्रमार्गप्रदर्शिन्यै । तत्त्वायै । तन्त्रविधानज्ञायै । तन्त्रस्थायै । तन्त्रसाक्षिण्यै । तदेकध्याननिरतायै । तत्वज्ञानप्रबोधिन्यै। तन्नाममन्त्रसुप्रीतायै। तपस्विजनसेवितायै नमः । २९

स । सकाररूपायै नमः । सावित्र्यै । सर्वरूपायै । सनातन्यै । संसारदुःखशमन्यै । सर्वयागफलप्रदायै । सकलायै। सत्यसङ्कल्पायै । सत्यासत्यप्रदायिन्यै। सन्तोषजनन्यै। सारायै। (४०) सत्यलोकनिवासिन्यै । समुद्रतनयाराध्यायै । सामगानप्रियायै । सत्यै । समानायै। सामदेव्यै। समस्तसुरसेवितायै। सर्वसंपत्तिजनन्यै । सद्गुणायै । सकलेष्टदायै । सनकादिमुनिध्येयायै । समानाधिकवर्जितायै। साध्यायै। सिद्धायै। सुधावासायै। सिद्ध्यै। साध्यप्रदायिन्यै। सद्युगाराध्यनिलयायै। समुत्तीर्णायै। सदाशिवायै । (६०) सर्ववेदान्तनिलयायै । सर्वशास्त्रार्थगोचरायै । सहस्रदलपद्मस्थायै । सर्वज्ञायै । सर्वतोमुख्यै । समयायै । समयाचारायै । सदसद्ग्रन्थिभेदिन्यै । सप्तकोटिमहामन्त्रमात्रे । सर्वप्रदायिन्यै । सगुणायै । संभ्रमायै । साक्षायै । सर्वचैतन्यरूपिण्यै । सत्कीर्त्यै । सात्त्विक्यै । साध्व्यै । सच्चिदानन्दरूपिण्यै । संकल्परूपिण्यै । सन्ध्यायै । (८०) सालग्रामनिवासिन्यै । सर्वोपाधिविनिर्मुक्तायै । सत्यज्ञानप्रबोधिन्यै नमः । (८३)

वि । विकाररूपायै नम । विप्रश्रियै । विप्राराधनतत्परायै । विप्रप्रियै । विप्रकल्याण्यै । विप्रवाक्यस्वरूपिण्यै । विप्रमन्दिर-मध्यस्थायै । विप्रवादविनोदिन्यै । विप्रोपाधिविनिर्भेत्र्यै । विप्रहत्याविमोचन्यै । विप्रत्रात्र्यै । विप्रगोत्रायै । विप्रगोत्रवि-वर्धिन्यै । विप्रभोजनसन्तुष्टायै । विष्णुरूपायै । विनोदिन्यै । विष्णुमायायै। (१००) विष्णुवन्द्यायै। विष्णुगर्भायै। विचित्रिण्यै । वैष्णव्यै। विष्णुभगिन्यै। विष्णुमायाविलासिन्यै। विकाररहितायै। विश्वविज्ञानघनरूपिण्यै । विबुधायै । विष्णुसंकल्पायै । विश्वामित्रप्रसादिन्यै । विष्णुचैतन्यनिलयायै । विष्णुस्वायै । विश्वसाक्षिण्यै। विवेकिन्यै। वियद्रूपायै। विजयायै। विश्वमोहिन्यै। विद्याधर्यै । विधानज्ञायै । (१२०) वेदतत्त्वार्थरूपिण्यै । विरूपाक्ष्यै । विराड्रूपायै । विक्रमायै । विश्वमङ्गलायै । विश्वंभरासमाराध्यायै । विश्वभ्रमणकारिण्यै । विनायक्यै । विनोदस्थायै। वीरगोष्ठीविवर्धिन्यै। विवाहरहितायै। विन्ध्यायै। विन्ध्याचलनिवासिन्यै । विद्याविद्याकर्यै । विद्यायै । विद्याविद्याप्रबोधिन्यै। विमलायै। विभवायै। वेद्यायै। विश्वस्थायै। (१४०) विविधोज्ज्वलायै। वीरमध्यायै। वरारोहायै। वितन्त्रायै। विश्वनायिकायै। वीरहत्याप्रशमन्यै। विनम्रजनपालिन्यै। वीरधियै । विविधाकारायै। विरोधिजननाशिन्यै नमः। (१५०)

तुर्। तुकाररूपायै नमः । तुर्यश्रियै । तुलसीवनवासिन्यै । तुरङ्ग्यै। तुरगारूढायै। तुलादानफलप्रदायै। तुलामाघस्नानतुष्टायै। तुष्टिपुष्टिप्रदायिन्यै । तुरङ्गमप्रसन्तुष्टायै । तुलितायै । (१६०) तुल्यमध्यगायै। तुङ्गोत्तुङ्गायै। तुङ्गकुचायै। तुहिनाचलसंस्थितायै। तुम्बुरादिस्तुतिप्रीतायै। तुषारशिखरीश्वर्यै। तुष्टायै। तुष्टिजनन्यै। तुष्टलोकनिवासिन्यै । तुलाधारायै । तुलामध्यायै । तुलास्थायै । तुर्यरूपिण्यै ।तुरीयगुणगम्भीरायै । तूर्यनादस्वरूपिण्यै ।

तूर्यविद्यालास्य तुष्टायै। तूर्यशास्त्रार्थवादिन्यै। तुरीयशास्त्रतत्वज्ञायै । तूर्यवादविनोदिन्यै । तूर्यनादान्तनिलयायै । (१८०) तुर्यानन्द-स्वरूपिण्यै। तुरीयभक्तिजनन्यै। तुर्यमार्गप्रदर्शिन्यै नमः। (१८३)

वकाररूपायै नमः । वागीश्यै । वरेण्यायै । वरसंविधायै । वरायै । वरिष्ठायै । वैदेह्यै । वेदशास्त्रप्रदर्शिन्यै । विकल्पशमन्यै । वाण्यै । वाञ्छितार्थफलप्रदायै । वयःस्थायै । वयोमध्यायै । वयोऽवस्थाविवर्जितायै । वन्दिन्यै । वादिन्यै । वर्यायै । (२००) वाङ्मय्यै । वीरवन्दितायै । वानप्रस्थाश्रमस्थायै । वनदुर्गायै । वनालयायै ।वनजाक्ष्यै। वनचर्यै। वनितायै। विश्वमोहिन्यै। वसिष्ठ-वामदेवादिवन्द्यायै। वन्द्यस्वरूपिण्यै। वैद्यायै। वैद्यचिकित्सायै। वषट्कार्यै। वसुन्धरायै। वसुमात्रे। वसुत्रात्रे। वसुजन्मविमोचन्यै। वसुप्रदायै। वासुदेव्यै। (२२०) वासुदेवमनोहर्यै। वासवार्चित-पादश्रियै । वासवारिविनाशिन्यै । वागीश्यै । वाङ्मनःस्थाय्यै । वशिन्यै । वनवासभुवे । वामदेव्यै । वरारोहायै । वाद्यघोषण-तत्परायै ।वाचस्पतिसमाराध्यायै। वेदमात्रे। विनोदिन्यै नमः ॥ (२३३)

रे । रेकाररूपायै नमः । रेवायै । रेवातीरनिवासिन्यै । राजीवलोचनायै । रामायै । रागिण्यै । रतिवन्दितायै । (२४०) रमण्यै ।रामजप्तायै। राज्यपायै। रजताद्रिगायै। राकिण्यै। रेवत्यै । रक्षायै । रुद्रजन्मने । रजस्वलायै । रेणुकायै । रमण्यै । रम्यायै । रतिवृद्धायै । रतायै । रत्यै । रावणानन्दसन्धाय्यै । राजश्रियै । राजशेखर्यै । रणमध्यायै । रथारूढायै । (२६०) रविकोटिसमप्रभायै । रविमण्डलमध्यस्थायै । रजन्यै । रविलोचनायै। रथाङ्गपाण्यै। रक्षोघ्न्यै ।रागिण्यै ।रावणार्चितायै । रंभादिकन्यकाराध्यायै । राज्यदायै । राज्यवर्धिन्यै । रजताद्रीशसक्थिस्थायै। रम्यायै। राजीवलोचनायै। रम्यवाण्यै।

रमाराध्यायै। राज्यधात्र्यै। रतोत्सवायै । रेवत्यै। रतोत्साहायै। (२८०) राजहृद्रोगहारिण्यै। रङ्गप्रवृद्धमधुरायै। रङ्गमण्डपमध्यगायै । रञ्जितायै। राजजनन्यै। रम्यायै। राकेन्दुमध्यगायै। राविण्यै । रागिण्यै। रज्यायै। राजराजेश्वरार्चितायै। राजन्वत्यै। राजनीत्यै। रजताचलवासिन्यै। राघवार्चितपादश्रियै। राघव्यै। राघवप्रियायै। रत्ननूपुरमध्याढ्यायै। रत्नद्वीपनिवासिन्यै। रत्नप्राकारमध्यस्थायै। (३००) रत्नमण्डपमध्यगायै। रत्नाभिषेकसंतुष्टायै। रत्नाङ्ग्यै। रत्नदायिन्यै नमः ॥ ३०४

णि। णिकाररूपिण्यै नमः। नित्यायै। नित्यतृप्तायै। निरञ्जनायै। निद्रात्ययविशेषज्ञायै। नीलजीमूतसंनिभायै। नीवारशूकवत्तन्व्यै। नित्यकल्याणरूपिण्यै। नित्योत्सवायै। नित्यपूज्यायै। नित्यानन्दस्वरूपिण्यै। निर्विकल्पायै। निर्गुणस्थायै। निश्चिन्तायै। निरुपद्रवायै। निःसंशयायै। (३२०) निरीहायै। निर्लोभायै। नीलमूर्धजायै। निखिलागममध्यस्थायै। निखिलागमसंस्थितायै। नित्योपाधिविनिर्मुक्तायै। नित्यकर्मफलप्रदायै। नीलग्रीवायै। निराहारायै। निरञ्जनवरप्रदायै। नवनीतप्रियायै। नार्यै। नरकार्णवतारिण्यै। नारायण्यै। निरीहायै। निर्मलायै। निर्गुणप्रियायै। निश्चिन्तायै। निगमाचारनिखिलागमवेदिन्यै। निमिषानिमिषोत्पन्नायै। (३४०) निमेषाण्डविधायिन्यै। निवातदीपमध्यस्थायै। निर्विघ्नायै। नीचनाशिन्यै। नीलवेण्यै। नीलखण्डायै। निर्विषायै। निष्कशोभितायै। नीलांशुकपरीधानायै। निन्दाघ्न्यै। निरीश्वर्यै। निःश्वासोच्छ्वासमध्यस्थायै। नित्ययानविलासिन्यै नमः ॥ (३५३)

यं। यंकाररूपायै नमः। यन्त्रेश्यै। यन्त्र्यै। यन्त्रयशस्विन्यै। यन्त्राराधनसन्तुष्टायै। यजमानस्वरूपिण्यै। योगिपूज्यायै। (३६०) यकारस्थायै। यूपस्तंभनिवासिन्यै। यमघ्न्यै। यमकल्पायै।

यशःकामायै । यतीश्वर्यै । यमादियोगनिरतायै । यतिदुःखाप-हारिण्यै । यज्ञायै । यज्वने । यजुर्गेयायै । यज्ञेश्वरपतिव्रतायै । यज्ञसूत्रप्रदायै । यष्ट्र्यै । यज्ञकर्मफलप्रदायै । यवांकुरप्रियायै । यन्त्र्यै । यवदघ्न्यै । यवार्चितायै । यज्ञकर्त्र्यै । (३८०) यज्ञभोक्त्र्यै । यज्ञाङ्गयै । यज्ञवाहिन्यै । यज्ञसाक्ष्यै । यज्ञमुख्यै । यजुष्यै । यज्ञरक्षिण्यै । (३८७)

भर् । भकाररूपायै नमः । भद्रेश्यै । भद्रकल्याणदायिन्यै । भक्तप्रियायै । भक्तसख्यै । भक्ताभीष्टस्वरूपिण्यै । भगिन्यै । भक्तसुलभायै । भक्तिदायै । भक्तवत्सलायै । भक्तचैतन्यनिलयायै । भक्तबन्धविमोचनायै । भक्तस्वरूपिण्यै । (४००) भाग्यायै । भक्तारोग्यप्रदायिन्यै । भक्तमात्रे । भक्तगम्यायै । भक्ताभीष्ट-प्रदायिन्यै । भास्कर्यै । भैरव्यै । भोग्यायै । भवान्यै । भयनाशिन्यै । भद्रात्मिकायै । भद्रदाय्यै । भद्रकाल्यै । भयङ्कर्यै । भगनिष्यन्दिन्यै । भूम्यै । भवबन्धविमोचन्यै । भीमायै । भवसख्यै । भङ्ग्यै । (४२०) भङ्गुरायै । भीमदर्शिन्यै । भल्ल्यै । भल्लीधरायै । भीरवे । भेरुण्डायै । भीमपापहायै । भावज्ञायै । भोगदात्र्यै । भवघ्न्यै । भूतिभूषणायै । भूतिदायै । भूमिदात्र्यै । भूपतित्वप्रदायिन्यै । भ्रामर्यै । भ्रमर्यै । भार्यै । भवसागरतारिण्यै । भण्डासुरवधोत्साहायै । भाग्यदायै । भावनोदिन्यै नमः ।। ४४१

गो । गोकाररूपायै । गोमात्रे । गुरुपत्न्यै । गुरुप्रियायै । गोरोचनप्रियायै । गौर्यै । गोविन्दगुणवर्धिन्यै । गोपालचेष्टा-सन्तुष्टायै । गोवर्धनविवर्धिन्यै । गोविन्दरूपिण्यै । गोप्त्र्यै । गोकुलानां विवर्धिन्यै । गीतायै । गीतप्रियायै । गेयायै । गोदायै । गोरूपधारिण्यै । गोप्यै । गोहत्यशमन्यै । (४६०) गुणिन्यै । गुणिविग्रहायै । गोविन्दजनन्यै । गोष्ठायै । गोप्रदायै । गोकुलो-

त्सवायै । गोचर्यै । गौतम्यै । गोप्त्र्यै । गोमुख्यै । गुरुवासिन्यै । गोपाल्यै । गोमय्यै । गुंभायै । गोष्ठ्यै । गोपुरवासिन्यै । गरुड्यै । गमनश्रेष्ठायै । गारुड्यै । गरुडध्वजायै । (४८०) गंभीरायै । गण्डक्यै । गङ्गायै । गरुडध्वजवल्लभायै । गगनस्थायै । गयावासायै । गुणवृत्त्यै । गुणोद्भवायै नमः ।। ४८८

दे । देकाररूपायै नमः । देवेश्यै । दृग्रूपायै । देवतार्चितायै । देवराजेश्वरार्धाङ्ग्यै । दीनदैन्यविमोचन्यै । देशकालपरिज्ञानायै । देशोपद्रवनाशिन्यै । देवमात्रे । देवमोहायै । देवदानवमोहिन्यै । देवेन्द्रार्चितपादश्रियै । (५००) देवदेवप्रसादिन्यै । देशान्तर्यै । देशरूपायै । देवालयनिवासिन्यै । देशभ्रमणसन्तुष्टायै । देशस्वास्थ्यप्रदायिन्यै । देवयानायै । देवतायै । देवसैन्यप्रपालिन्यै नमः ।। ५०९

व । वकाररूपायै नमः । वाग्देव्यै । वेदमानसगोचरायै । वैकुण्ठदेशिकायै । वेद्यायै । वायुरूपायै । वरप्रदायै । वक्रतुण्डार्चित-पदायै । वक्रतुण्डप्रसादिन्यै । वैचित्र्यरूपायै । वसुधायै । (५२०) वसुस्थानायै । वसुप्रियायै । वषट्कारस्वरूपायै । वरारोहायै । वरासनायै । वैदेहीजनन्यै । वेद्यायै । वैदेहीशोकनाशिन्यै । वेदमात्रे । वेदकन्यायै । वेदरूपायै । विनोदिन्यै । वेदान्तवादिन्यै । वेदान्तनिलयप्रियायै । वेदश्रवायै । वेदघोषायै । वेदगीतायै । विनोदिन्यै । वेदशास्त्रार्थतत्त्वज्ञायै । वेदमार्गप्रदर्शिन्यै । (५४०) वेदोक्तकर्मफलदायै । वेदसागरवाडवायै । वेदवन्द्यायै । वेदगुह्यायै । वेदाश्वरथवाहिन्यै । वेदचक्रायै । वेदवन्द्यायै । वेदाङ्ग्यै । वेदवित्कवये नमः ।। (५४९)

स्य । स्यकाररूपायै नमः । सामान्तायै । सामगान-विचक्षणायै । साम्राज्ञ्यै । सामरूपायै । सदानन्दप्रदायिन्यै ।

सर्वदक्सन्निविष्टायै । सर्वसंप्रेषिण्यै । सहायै । सव्यापसव्यदायै । सव्यसध्रीच्यै । (५६०) सहायिन्यै । सकलायै । सागरायै । सारायै । सार्वभौमस्वरूपिण्यै । सन्तोषजनन्यै । सेव्यायै । सर्वेश्यै । सर्वरञ्जन्यै । सरस्वत्यै । समाराध्यायै । सामदायै । सिन्धुसेवितायै । संमोहिन्यै । सदामोहायै । सर्वमांगल्यदायिन्यै । समस्तभुवनेशान्यै । सर्वकामफलप्रदायै । सर्वसिद्धिप्रदायै । साध्व्यै । (५८०) सर्वज्ञानप्रदायिन्यै । सर्वदारिद्र्यशमन्यै । सर्वदुःखविमोचन्यै । सर्वरोगप्रशमन्यै । सर्वपापविमोचन्यै । समदृष्ट्यै । समगुणायै । सर्वगोप्त्र्यै । सहायिन्यै । सामर्थ्यवाहिन्यै । सांख्यायै । सान्द्रानन्दपयोधरायै । संकीर्णमन्दिरस्थानायै । साकेतकुल-पालिन्यै । संहारिण्यै । सुधारूपायै । साकेतपुरवासिन्यै । संबोधिन्यै । समस्तेश्यै । सत्यज्ञानस्वरूपिण्यै । (६००) संपत्कर्यै । समानाङ्ग्यै । सर्वभावसुसंस्थितायै । सन्ध्यावन्दनसु-प्रीतायै । सन्मार्गकुलपालिन्यै । सञ्जीवन्यै । सर्वमेधायै । सभ्यायै । साधुसुपूजितायै । समिद्धायै । सामिधेन्यै । सामान्यायै । सामवेदिन्यै । समुत्तीर्णायै । सदाचारायै । संहारायै । सर्वपावन्यै । सर्पिण्यै । सर्पमात्रे । सामदानसुखप्रदायै । (६२०) सर्वरोग-प्रशमन्यै । सर्वज्ञत्वफलप्रदायै । संक्रमायै । समदायै । सिन्धवे । सर्गादिकरणक्षमायै । संकटायै । संकटहरायै । सकुङ्कुमविलेपनायै । सुमुख्यै । सुमुखप्रीतायै । समानाधिकवर्जितायै । संस्तुतायै । स्तुतिसुप्रीतायै । सत्यवाद्यै । सदास्पदायै नमः ।। ६३६

धी । धीकाररूपायै नमः । धीमात्रे । धीरायै । धीरप्रसादिन्यै । (६४०) धीरोत्तमायै । धीरधीरायै । धीरस्थायै । धीरशेखरायै । धृतिरूपायै । धनाढ्यायै । धनपायै । धनदायिन्यै । धीरूपायै । धीरवन्द्यायै । धीप्रभायै । धीरमानसायै । धीगेयायै । धीपदस्थायै । धीशान्यै । धीप्रसादिन्यै नमः ।। (६५६)

म । मकाररूपायै नमः । मैत्रेय्यै । महामङ्गलदेवतायै । मनोवैकल्यशमन्यै । (६६०) मलयाचलवासिन्यै । मलयध्वज-राजश्रियै । मायामोहविभेदिन्यै । महादेव्यै । महारूपायै । महाभैरवपूजितायै। मनुप्रीतायै। मन्त्रमूर्त्यै। मन्त्रवश्यायै। महेश्वर्यै । मत्तमातङ्गगमनायै। मधुरायै। मेरुमण्डपायै। महागुप्तायै। महाभूत-महाभयविनाशिन्यै। महाशौर्यायै। मन्त्रिण्यै। महावैरिविनाशिन्यै । महालक्ष्म्यै । महागौर्यै । (६८०) महिषासुरमर्दिन्यै । मह्यै । मण्डलस्थायै । मधुरागमपूजितायै । मेधायै । मेधाकर्यै । मेध्यायै । माधव्यै। मधुमर्दिन्यै। मन्त्रायै। मन्त्रमय्यै। मान्यायै। मायामाधव मन्त्रिण्यै । मायादूरायै । मायाव्यै । मायाज्ञायै । मानदायिन्यै । मायासंकल्पजनन्यै । मायामयविनोदिन्यै । मायाप्रपञ्चशमन्यै । (७००) मायासंहाररूपिण्यै । मायामन्त्रप्रसादायै । मायाजन-विमोहिन्यै । महापथायै । महाभोगायै । महाविघ्नविनाशिन्यै । महानुभावायै। मन्त्राढ्यायै। महामङ्गलदेवतायै नमः ।। (७०९)

हि । हिकाररूपायै नमः । हृद्यायै । हितकार्यप्रवर्धिन्यै । हेयोपाधिविनिर्मुक्तायै। हीनलोकविनाशिन्यै। ह्रींकार्यै। ह्रींमत्यै। हृद्यायै। ह्रींदेव्यै। ह्रींस्वभाविन्यै। ह्रींमन्दिरायै। (७२०) हितकर्यै। हृष्टायै। ह्रींकुलोद्भवायै। हितप्रज्ञायै। हितप्रीतायै। हितकारुण्य-वर्धिन्यै। हिताशिन्यै। हितक्रोधायै। हितकर्मफलप्रदायै । हिमायै। हैमवत्यै । हैम्न्यै । हेमाचलनिवासिन्यै । हिमागजायै । हितकर्यै । हितकर्मस्वभाविन्यै नमः ।। (७३६)

धि। धिकाररूपायै नमः। धिषणायै। धर्मरूपायै। धनेश्वर्यै। (७४०) धनुर्धरायै। धराधारायै। धर्मकर्मफलप्रदायै। धर्माचारायै। धर्मसारायै। धर्ममध्यनिवासिन्यै। धनुर्विद्यायै। धनुर्वेदायै। धन्यायै । धूर्तविनाशिन्यै। धनधान्यायै। धेनुरूपायै। धनाढ्यायै। धनदायिन्यै ।

धनेश्यै। धर्मनिरतायै। धर्मराजप्रसादिन्यै। धर्मस्वरूपायै। धर्मेश्यै । धर्माधर्मविचारिण्यै। (७६०) धर्मसूक्ष्मायै। धर्मगेहायै। धर्मिष्ठायै । धर्मगोचरायै नमः ।। (७६४)

यो - यो । योकाररूपायै नमः । योगेश्यै । योगस्थायै । योगरूपिण्यै । योग्यायै । योगीशवरदायै । योगमार्गनिवासिन्यै । योगासनस्थायै । योगेश्यै । योगमायाविलासिन्यै । योगिन्यै । योगरक्तायै। योगाङ्ग्यै। योगविग्रहायै। योगवासायै। योगभोग्यायै । (७८०) योगमार्गप्रदर्शिन्यै। योकाररूपायै। योगाढ्यायै। योद्ध्र्यै । योधसुतत्परायै। योगिन्यै। योगिनीसेव्यायै। योगज्ञानप्रबोधिन्यै। योगेश्वरप्राणनाथायै। योगीश्वरहृदिस्थितायै। योगायै। योगक्षेम-कर्त्र्यै । योगक्षेमविधायिन्यै। योगराजेश्वराराध्यायै। योगानन्द-स्वरूपिण्यै नमः । (७९५)

नः । नकाररूपायै । नादेश्यै । नामपारायणप्रियायै । नवसिद्धिसमाराध्यायै। नारायणमनोहर्यै। (८००) नारायण्यै। नवाधारायै । नवब्रह्मार्चितांघ्रिकायै । नगेन्द्रतनयाराध्यायै । नामरूपविवर्जितायै। नरसिंहार्चितपदायै। नवबन्धविमोचिन्यै। नवग्रहार्चितपदायै । नवमीपूजनप्रियायै । नैमित्तिकार्थफलदायै । नन्दितारिविनाशिन्यै । नवपीठस्थितायै । नादायै । नवर्षिगण-सेवितायै । नवसूत्रविधानज्ञायै । नैमिषारण्यवासिन्यै । नवचन्दनदिग्धाङ्ग्यै । नवकुंकुमधारिण्यै । नववस्त्रपरीधानायै । नवरत्नविभूषणायै । (८२०) नव्यभस्मविदिग्धांग्यै । नवचन्द्रकलाधरायै नमः । (८२२)

प्र। प्रकाररूपायै नमः। प्राणेश्यै। प्राणसंरक्षिण्यै। परायै। प्राणसञ्जीविन्यै । प्राच्यायै । प्राणिप्राणविबोधिन्यै । प्रज्ञायै ।

प्राज्ञायै । प्रभापुष्पायै । प्रतीच्यै । प्रबुधप्रियायै । प्राचीनायै । प्राणिचित्तस्थायै । प्रभायै । प्रज्ञानरूपिण्यै । प्रभातकर्मसन्तुष्टायै । प्राणायामपरायणायै । (८४०) प्रायज्ञायै । प्रणवायै । प्राणायै । प्रवृत्यै । प्रकृत्यै । परायै । प्रबन्धायै । प्रथमायै । प्रज्ञायै । प्रारब्धनाशिन्यै । प्रबोधनिरतायै । प्रेक्ष्यायै । प्रबन्धायै । प्राणसाक्षिण्यै । प्रयागतीर्थनिलयायै । प्रत्यक्षपरमेश्वर्यै । प्रणवाद्यन्तनिलयायै । प्रणवादये । प्रजेश्वर्यै नमः । (८५९)

चो । चोकाररूपायै नमः । (८६०) चोरघ्न्यै । चोरबाधाविनाशिन्यै । चैतन्यचेतनस्थायै । चतुरायै । चमत्कृत्यै । चक्रवर्तिकुलाधारायै । चक्रिण्यै । चक्रधारिण्यै । चित्तगेयायै । चिदानन्दायै। चिद्रूपायै। चिद्विलासिन्यै। चिन्तायै। चित्तप्रशमन्यै । चिन्तितार्थफलप्रदायै । चांपेय्यै । चंपकप्रीतायै । चण्ड्यै । चण्डाट्टहासिन्यै । चण्डेश्वर्यै । (८८०) चण्डमात्रे । चण्डमुण्डविनाशिन्यै । चकोराक्ष्यै । चिरप्रीतायै । चिकुरायै । चिकुरालकायै। चैतन्यरूपिण्यै। चैत्र्यै। चेतनायै। चित्तसाक्षिण्यै। चित्रायै । चित्रविचित्राङ्ग्यै । चित्रगुप्तप्रसादिन्यै । चलनायै । चक्रसंस्थायै । चांपेय्यै । चलचित्रिण्यै । चन्द्रमण्डलमध्यस्थायै । चन्द्रकोटिसुशीतलायै। चन्द्रानुजसमाराध्यायै। (९००) चन्द्रायै। चण्डमहोदर्यै। चर्चितारये। चन्द्रमात्रे। चन्द्रकान्तायै। चलेश्वर्यै। चराचरनिवास्यै। चक्रपाणिसहोदर्यै नमः ॥ (९०८)

द । दकाररूपायै नमः । दत्तश्रियै । दारिद्र्यच्छेदकारिण्यै । दत्तात्रेयस्य वरदायै । दयालवे । दीनवत्सलायै । दक्षाराध्यायै । दक्षकन्यायै । दक्षयज्ञविनाशिन्यै । दक्षायै । दाक्षायण्यै । दीक्षादृष्टायै । (९२०) दक्षवरप्रदायै। दक्षिणायै। दक्षिणाराध्यायै । दक्षिणामूर्तिरूपिण्यै । दयावत्यै । दमस्वान्तायै । दनुजारये ।

दयानिधये। दन्तशोभानिभायै। देव्यै। दमन्यै। दाडिमस्तन्यै। दण्डायै। दमयित्र्यै। दण्डिन्यै। दमनप्रियायै। दण्डकारण्य-निलयायै। दण्डकारिविनाशिन्यै। दंष्ट्राकरालवदनायै। दण्ड-शोभायै। (९४०) दरोदर्यै। दरिद्रारिष्टशमन्यै। दम्यायै। दमनपूजितायै। दानवार्चितपादश्रियै। द्रविणायै। द्राविण्यै। दयायै। दामोदर्यै। दानवारये। दामोदरसहोदर्यै। दात्र्यै। दानप्रियायै। दाम्न्यै। दानश्रियै। द्विजवन्दितायै। दन्तिगायै। दण्डिन्यै। दूर्वायै। दधिदुग्धस्वरूपिण्यै। (९६०) दाडिमीबीज-सन्दोहदन्तपंक्तिविराजितायै। दर्पणायै। दर्पणस्वच्छायै। द्रुममण्डलवासिन्यै। दशावतारजनन्यै। दशदिग्दैवपूजितायै। दमायै। दशदिशायै। दृश्यायै। दशदास्यै। दयानिधये। देशकाल-परिज्ञानायै। देशकालविशोधिन्यै। दशम्यादिकलाराध्यायै। दशग्रीवविरोधिन्यै। दशापराधशमन्यै। दशवृत्तिफलप्रदायै नमः॥ (९७७)

यात्। यात्काररूपिण्यै नमः। याज्ञ्यै। यादव्यै। (९८०) यादवार्चितायै। ययातिपूजनप्रीतायै। याज्ञिक्यै। याजकप्रियायै। यजमानायै। यदुप्रीतायै। यामपूजाफलप्रदायै। यशस्विन्यै। यमाराध्यायै। यमकन्यायै। यतीश्वर्यै। यमादियोगसन्तुष्टायै। योगीन्द्रहृदयायै। यमायै। यमोपाधिविनिर्मुक्तायै। यशस्यविधिसंस्तुतायै। यवीयस्यै। युवप्रीतायै। यात्रानन्दायै। यतीश्वर्यै। (१०००) योगप्रियायै। योगगम्यायै। योगिध्येयायै। यथेच्छगायै। यागप्रियायै। याज्ञसेन्यै। योगरूपायै। यथेष्टदायै नमः॥ (१००८))

# गायत्रीसहस्रनामस्तोत्रम्-२

(अकारादिक्षकारान्तादिनामघटितम्)

नारद उवाच-

भगवन् सर्वधर्मज्ञ सर्वशास्त्रविशारद।

श्रुतिस्मृतिपुराणानां रहस्यं त्वन्मुखाच्छ्रुतम्॥ १॥

सर्वपापहरं देव येन विद्या प्रवर्तते।

केन वा ब्रह्मविज्ञानं किं नु वा मोक्षसाधनम्॥ २॥

ब्राह्मणानां गतिः केन केन वा मृत्युनाशनम्।

ऐहिकामुष्मिकफलं केन वा पद्मलोचन॥ ३॥

नारायण उवाच-

साधु साधु महाप्राज्ञ सम्यक् पृष्टं त्वयाऽनघ॥ ४॥

शृणु वक्ष्यामि यत्नेन गायत्र्यष्टसहस्रकम्।

नाम्नां शुभानां दिव्यानां सर्वपापविनाशनम्॥ ५॥

सृष्ट्यादौ यद्भगवता पूर्वं प्रोक्तं ब्रवीमि ते।

अष्टोत्तरसहस्रस्य ऋषिर्ब्रह्मा प्रकीर्तितः॥ ६॥

छन्दोऽनुष्टुप् तथा देवी गायत्री देवता स्मृता।

हलो बीजानि तस्यैव स्वराः शक्तय ईरिताः॥ ७॥

अंगन्यास-करन्यासावुच्येते मातृकाक्षरैः।

अथ ध्यानं प्रवक्ष्यामि साधकानां हिताय वै॥ ८॥

रक्तश्वेतहिरण्यनीलधवलैर्युक्तां त्रिनेत्रोज्ज्वलां

रक्तां रक्तनवस्रजं मणिगणैर्युक्तां कुमारीमिमाम्।

गायत्रीं कमलासनां करतलव्यानद्धकुण्डाम्बुजां

पद्माक्षीं च वरस्रजं च दधतीं हंसाधिरूढां भजे ॥ ९ ॥

अचिन्त्यलक्षणा ऽव्यक्ताप्यर्धमातृमहेश्वरी ।

अमृतार्णवमध्यस्थाऽप्यजिता चापराजिता ॥ १० ॥

अणिमादिगुणाधाराऽप्यर्कमण्डलसंस्थिता ।

अजराऽजाऽपराऽधर्मा अक्षसूत्रधराऽधरा ॥ ११ ॥

अकारादिक्षकारान्ताऽप्यरिषड्वर्गभेदिनी ।

अंजनाद्रिप्रतीकाशाऽप्यंजनाद्रिनिवासिनी ॥ १२ ॥

अदितिश्चाऽजपा विद्याप्यरविन्दनिभेक्षणा ।

अन्तर्बहिः स्थिताऽविद्याध्वंसिनी चान्तरात्मिका ॥ १३ ॥

अजा चाऽजमुखावासाऽप्यरविन्दनिभानना ।

अर्धमात्राऽर्थदानज्ञाऽप्यरिमण्डलमर्दिनी ॥ १४ ॥

असुरघ्नी ह्यमावास्याऽप्यलक्ष्मीघ्न्यन्त्यजार्चिता ।

आदिलक्ष्मीश्चादिशक्तिराकृतिश्चायतानना ॥ १५ ॥

आदित्यपदवीचाराऽप्यादित्यपरिसेविता ।

(आचार्याऽऽवर्तनाचाराप्यादिमूर्तिनिवासिनी) ॥ १६ ॥

आग्नेयी चामरी चाद्या चाराध्या चासनास्थिता ।

आधारनिलयाऽऽधारा चाकाशान्तर्निवासिनी ॥ १७ ॥

आद्याक्षरसमायुक्ता चान्तराकाशरूपिणी ।

आदित्यमण्डलगता चान्तरध्वान्तनाशिनी ॥ १८ ॥

इन्दिरा चेष्टदा चेष्टा चेन्दीवरनिभेक्षणा ।

इरावती चेन्द्रपदा चेन्द्राणी चेन्दुरूपिणी ॥ १९ ॥

इक्षुकोदण्डसंयुक्ता चेषुसन्धानकारिणी।
इन्द्रनीलसमाकारा चेडापिंगलरूपिणी॥ २० ॥
इन्द्राक्षी चेश्वरी देवी चेहात्रयविवर्जिता।
उमा चोषा ह्युडुनिभा उर्वारुकफलानना॥ २१ ॥
उडुप्रभा चोडुमती ह्युडुपा ह्युडुमध्यगा।
ऊर्ध्वा चाप्यूर्ध्वकेशी चाप्यूर्ध्वाधोगतिभेदिनी॥ २२ ॥
ऊर्ध्वबाहुप्रिया चोर्मिमाला वाग्ग्रन्थदायिनी।
ऋतं च ऋषिर्ऋतुमती ऋषिदेवनमस्कृता॥ २३ ॥
ऋग्वेदा ऋणहर्त्री च ऋषिमण्डलचारिणी।
ऋद्धिदा ऋजुमार्गस्था ऋजुधर्मा ऋतुप्रदा॥ २४ ॥
ऋग्वेदनिलया ऋज्वी लुप्तधर्मप्रवर्तिनी।
लूतारिवरसम्भूता लूतादिविषहारिणी॥ २५ ॥
एकाक्षरा चैकमात्रा चैका चैकैकनिष्ठिता।
ऐन्द्री ह्यैरावतारूढा चैहिकामुष्मिकप्रदा॥ २६ ॥
ओंकारा ह्योषधी चोता चोतप्रोतनिवासिनी।
और्वा ह्यौषधसम्पन्ना औपासनफलप्रदा॥ २७॥
अण्डमध्यस्थिता देवी चाःकारमनुरूपिणी।
कात्यायनी कालरात्रिः कामाक्षी कामसुन्दरी॥ २८ ॥
कमला कामिनी कान्ता कामदा कालकण्ठिनी।
करिकुम्भस्तनभरा करवीरसुवासिनी॥ २९ ॥
कल्याणी कुण्डलवती कुरुक्षेत्रनिवासिनी।
कुरुविन्ददलाकारा कुण्डली कुमुदालया॥ ३० ॥

कालजिह्वा करालास्या कालिका कालरूपिणी ।
कमनीयगुणा कान्तिः कलाधारा कुमुद्वती ।। ३१ ।।
कौशिकी कमलाकारा कामचारप्रभंजिनी ।
कौमारी करुणापांगी ककुबन्ता करिप्रिया ।। ३२ ।।
केसरी केशवनुता कदम्बकुसुमप्रिया ।
कालिन्दा कालिका कांची कलशोद्भवसंस्तुता ।। ३३ ।।
काममाता क्रतुमती कामरूपा कृपावती ।
कुमारी कुण्डनिलया किराती कीरवाहना ।। ३४ ।।
कैकेयी कोकिलालापा केतकीकुसुमप्रिया ।
कमण्डलुधरा काली कर्मनिर्मूलकारिणी ।। ३५ ।।
कलहंसगतिः कक्षा कृतकौतुकमंगला ।
कस्तूरीतिलका कम्रा करीन्द्रगमना कुहूः ।। ३६ ।।
कर्पूरलेपना कृष्णा कपिला कुहराश्रया ।
कूटस्था कुधरा कम्रा कुक्षिस्थाखिलविष्टपा ।। ३७ ।।
खड्गखेटकरा खर्वा खेचरी खगवाहना ।
खट्वांगधारिणी ख्याता खगराजोपरिस्थिता ।। ३८ ।।
खलघ्नी खण्डितजरा खण्डाख्यानप्रदायिनी ।
खण्डेन्दुतिलका गंगा गणेशगुहपूजिता ।। ३९ ।।
गायत्री गोमती गीता गान्धारी गानलोलुपा ।
गौतमी गामिनी गाधा गन्धर्वाप्सरसेविता ।। ४० ।।
गोविन्दचरणाक्रान्ता गुणत्रयविभाजिता ।
गान्धर्व ाह्वरी गोत्रा गिरिशा गहनागमी ।। ४१ ।।

गुहवासा गुणवती गुरुपापप्रणाशिनी।
गुर्वी गुणवती गुह्या गोप्तव्या गुणदायिनी ॥ ४२ ॥
गिरिजा गुह्यमातंगी गरुडध्वजवल्लभा।
गर्वापहारिणी गोदा गोकुलस्था गदाधरा ॥ ४३ ॥
गोकर्णनिलयासक्ता गुह्यमण्डलवर्तिनी।
घर्मदा घनदा घण्टा घोरदानवमर्दिनी ॥ ४४ ॥
घृणिमन्त्रमयी घोषा घनसम्पातदायिनी।
घण्टारवप्रिया घ्राणा घृणिसन्तुष्टिकारिणी ॥ ४५ ॥
घनारिमण्डला घूर्णा घृताची घनवेगिनी।
ज्ञानधातुमयी चर्चा चर्चिता चारुहासिनी ॥ ४६ ॥
चटुला चण्डिका चित्रा चित्रमाल्यविभूषिता।
चतुर्भुजा चारुदन्ता चातुरी चरितप्रदा ॥ ४७ ॥
चूलिका चित्रवस्त्रान्ता चन्द्रमः कर्णकुण्डला।
चन्द्रहासा चारुदात्री चकोरी चन्द्रहासिनी ॥ ४८ ॥
चन्द्रिका चन्द्रधात्री च चौरी चौरा च चण्डिका।
चञ्चद्वाग्वादिनी चन्द्रचूडा चोरविनाशिनी ॥ ४९ ॥
चारुचन्दनलिप्तांगी चंचच्चामरवीजिता।
चारुमध्या चारुगतिश्चन्दिला चन्द्ररूपिणी ॥ ५० ॥
चारुहोमप्रिया चार्वाचरिता चक्रबाहुका।
चन्द्रमण्डलमध्यस्था चन्द्रमण्डलतर्पणा ॥ ५१ ॥
चक्रवाकस्तनी चेष्टा चित्रा चारुविलासिनी।
चित्स्वरूपा चन्द्रवती चन्द्रमाश्चन्दनप्रिया ॥ ५२

चोदयित्री चिरप्रज्ञा चातका चारुहेतुकी।
छत्रयाता छत्रधरा छाया छन्दः परिच्छदा॥ ५३॥
छायादेवी च्छिद्रनखा छन्नेन्द्रियविसर्पिणी।
छन्दोऽनुष्टुप् प्रतिष्ठान्ता छिद्रोपद्रवभेदिनी॥ ५४॥
छदा छत्रेश्वरी छिन्ना छुरिका छेदनप्रिया।
जननी जन्मरहिता जातवेदा जगन्मयी॥ ५५॥
जाह्नवी जटिला जेत्री जरामरणवर्जिता।
जम्बूद्वीपवती ज्वाला जयन्ती जयशालिनी॥ ५६॥
जितेन्द्रिया जितक्रोधा जितामित्रा जगत्प्रिया।
जातरूपमयी जिह्वा जानकी जगती जरा॥ ५७॥
जनित्री जह्नुतनया जगत्त्रयहितैषिणी।
ज्वालामुखी जपवती ज्वलघ्नी जितविष्टपा॥ ५८॥
जिताक्रान्तमयी ज्वाला जाग्रती ज्वरदेवता।
ज्वलन्ती जलदा ज्येष्ठा ज्याघोषास्फोटदिङ्मुखी॥ ५९॥
जम्भिनी जृम्भणा जृम्भा ज्वलन्माणिक्यकुण्डला।
झिंझिका झणनिर्घोषा झंझामारुतवेगिनी॥ ६०॥
झल्लरीवाद्यकुशला ञरूपा ञभुजा स्मृता।
टंकबाणसमायुक्ता टंकिनी टंकभेदिनी॥ ६१॥
टंकीगणकृताघोषा टंकनीयमहोरसा।
टंकारकारिणी देवी टठशब्दनिनादिनी॥ ६२॥
डामरी डाकिनी डिम्भा डुण्डुमारैकनिर्जिता।
डामरीतन्त्रमार्गस्था डमड्डमरुनादिनी॥ ६३॥

डिण्डीरवसहा डिम्भलसत्क्रीडापरायणा।
ढुण्ढिविघ्नेशजननी ढक्काहस्ता ढिलिव्रजा ॥ ६४ ॥
नित्यज्ञाना निरुपमा निर्गुणा नर्मदा नदी।
त्रिगुणा त्रिपदा तन्त्री तुलसी तरुणा तरुः ॥ ६५ ॥
त्रिविक्रमपदाक्रान्ता तुरीयपदगामिनी।
तरुणादित्यसंकाशा तामसी तुहिनातुरा ॥ ६६ ॥
त्रिकालज्ञानसम्पन्ना त्रिवली च त्रिलोचना।
त्रिशक्तिस्त्रिपुरा तुङ्गा तुरङ्गवदना तथा ॥ ६७ ॥
तिमिंगिलगिला तीव्रा त्रिस्रोता तामसादिनी।
तन्त्रमन्त्रविशेषज्ञा तनुमध्या त्रिविष्टपा ॥ ६८ ॥
त्रिसन्ध्या त्रिस्तनी तोषासंस्था तालप्रतापिनी।
ताटङ्किनी तुषाराभा तुहिनाचलवासिनी ॥ ६९ ॥
तन्तुजालसमायुक्ता तारहारावलिप्रिया।
तिलहोमप्रिया तीर्था तमालकुसुमाकृतिः ॥ ७० ॥
तारका त्रियुता तन्वी त्रिशंकुपरिवारिता।
तलोदरी तिलाभूषा ताटंकप्रियवाहिनी ॥ ७१ ॥
त्रिजटा तित्तिरी तृष्णा त्रिविधा तरुणाकृतिः।
तप्तकांचनसंकाशा तप्तकांचनभूषणा ॥ ७२ ॥
त्र्यम्बका च त्रिवर्गा च त्रिकालज्ञानदायिनी।
तर्पणा तृप्तिदा तृप्ता तामसी तुम्बुरुस्तुता ॥ ७३ ॥
तार्क्ष्यस्था त्रिगुणाकारा त्रिभंगीतनुवल्लरिः।
थात्कारी थारवा थान्ता दोहिनी दीनवत्सला ॥ ७४ ॥

दानवान्तकरी दुर्गा दुर्गासुरनिबर्हणी।
देवरीतिर्दिवारात्रिर्द्रौपदी दुन्दुभिस्वना।। ७५ ।।
देवयानी दुरावासा दारिद्र्योद्भेदिनी दिवा।
दामोदरप्रिया दीप्ता दिग्वासा दिग्विमोहिनी।। ७६ ।।
दण्डकारण्यनिलया दण्डिनी देवपूजिता।
देववन्द्या दिविषदा द्वेषिणी दानवाकृतिः ।। ७७ ।।
दीनानाथस्तुता दीक्षा देवतादिस्वरूपिणी।
धात्री धनुर्धरा धेनुर्धारिणी धर्मचारिणी।। ७८ ।।
धुरन्धरा धराधारा धनदा धान्यदोहिनी।
धर्मशीला धनाध्यक्षा धर्मवेदविशारदा।। ७९ ।।
धृतिर्धन्या धृतपदा धर्मराजप्रिया ध्रुवा।
धूमावती धूमकेशी धर्मशास्त्रप्रकाशिनी।। ८० ।।
नन्दा नन्दप्रिया निद्रा नृनुता नन्दनात्मिका।
नर्मदा नलिनी नीला नीलकण्ठसमाश्रया।। ८१ ।।
नारायणप्रिया नित्या निर्मला निर्गुणा निधिः।
निराधारा निरुपमा नित्यशुद्धा निरंजना।। ८२ ।।
नादबिन्दुकलातीता नादबिन्दुकलात्मिका।
नृसिंहिनी नगधरा नृपनागविभूषिता।। ८३ ।।
नरकक्लेशशमनी नारायणपदोद्भवा।
निरवद्या निराकारा नारदप्रियकारिणी।। ८४ ।।
नानाज्योतिः समाख्याता निधिदा निर्मलात्मिका।
नवसूत्रधरा नीतिर्निरुपद्रवकारिणी।। ८५ ।।

नन्दजा नवरत्नाढ्या नैमिषारण्यवासिनी।
नवनीतप्रिया नारी नीलजीमूतनिस्वना॥ ८६॥
निमेषिणी नदीरूपा नीलग्रीवा निशीश्वरी।
नामावलिर्निशुम्भघ्नी नागलोकनिवासिनी॥ ८७॥
नवजाम्बूनदप्रख्या नागलोकाधिदेवता।
नूपुराक्रान्तचरणा नरचित्तप्रमोदिनी॥ ८८॥
निमग्नारक्तनयना निर्घातसमनिस्वना।
नन्दनोद्यानिलया निर्व्यूहोपरिचारिणी॥ ८९॥
पार्वती परमोदारा परब्रह्मात्मिका परा।
पंचकोशविनिर्मुक्ता पंचपातकनाशिनी॥ ९०॥
परचित्तविधानज्ञा पंचिका पंचरूपिणी।
पूर्णिमा परमा प्रीतिः परतेजः प्रकाशिनी॥ ९१॥
पुराणी पौरुषी पुण्या पुण्डरीकनिभेक्षणा।
पातालतलनिर्मग्ना प्रीता प्रीतिविवर्धिनी॥ ९२॥
पावनी पादसहिता पेशला पवनाशिनी।
प्रजापतिः परिश्रान्ता पर्वतस्तनमण्डला॥ ९३॥
पद्मप्रिया पद्मसंस्था पद्माक्षी पद्मसंभवा।
पद्मपत्रा पद्मपदा पद्मिनी प्रियभाषिणी॥ ९४॥
पशुपाशविनिर्मुक्ता पुरन्ध्री पुरवासिनी।
पुष्कला पुरुषा पूर्वा पारिजातसुमप्रिया॥ ९५॥
पतिव्रता पवित्रांगी पुष्पहासपरायणा।
प्रज्ञावतीसुता पौत्री पुत्रपूज्या पयस्विनी॥ ९६॥

पट्टिपाशधरा पक्तिः पितृलोकप्रदायिनी।
पुराणी पुण्यशीला च प्रणतार्तिविनाशिनी ।। ९७।।
प्रद्युम्नजननी पुष्टा पितामहपरिग्रहा।
पुण्डरीकपुरावासा पुण्डरीकसमानना ।। ९८ ।।
पृथुजंघा पृथुभुजा पृथुपादा पृथूदरी।
प्रवालशोभा पिंगाक्षी पीतवासाः प्रचापला ।। ९९ ।।
प्रसवा पुष्टिदा पुण्या प्रतिष्ठा प्रणवागतिः ।
पंचवर्णा पंचवाणी पंचिका पंजरस्थिता ।। १०० ।।
परमाया परज्योतिः परप्रीतिः परागतिः ।
परा काष्ठा परेशानी पावनी पावकद्युतिः ।। १०१ ।।
पुण्यभद्रा परिच्छेद्या पुष्पहासा पृथूदरी।
पीतांगी पीतवसना पीतशय्या पिशाचिनी ।। १०२ ।।
पीतक्रिया पिशाचघ्नी पाटलाक्षी पटुक्रिया।
पंचभक्षप्रियाचारा पूतनाप्राणघातिनी ।। १०३ ।।
पुन्नागवनमध्यस्था पुण्यतीर्थनिषेविता।
पंचांगी च पराशक्तिः परमाह्लादकारिणी ।। १०४ ।।
पुष्पकाण्डस्थिता पूषा पोषिताखिलविष्टपा।
पानप्रिया पंचशिखा पन्नगोपरिशायिनी ।। १०५ ।।
पंचमात्रात्मिका पृथ्वी पथिका पृथुदोहिनी।
पुराणन्यायमीमांसा पाटली पुष्पगन्धिनी ।। १०६ ।।
पुण्यप्रजा पारदात्री परमार्थैकगोचरा।
प्रवालशोभा पूर्णाशा प्रणवा पल्लवोदरी ।। १०७ ।।

फलिनी फलदा फल्गुः फूत्कारी फलकाकृतिः ।
फणीन्द्रभोगशयना फणिमण्डलमण्डिता ॥ १०८ ॥
बालबाला बहुमता बालातपनिभांशुका ।
बलभद्रप्रिया वन्द्या बडवा बुद्धिसंस्तुता ॥ १०९ ॥
बन्दीदेवी बिलवती बडिशघ्नी बलिप्रिया ।
बान्धवी बाधिता बुद्धिर्बन्धूककुसुमप्रिया ॥ ११० ॥
बालभानुप्रभाकारा ब्राह्मी ब्राह्मणदेवता ।
बृहस्पतिस्तुता बृन्दा बृन्दावनविहारिणी ॥ १११ ॥
बालाकिनी बिलाहारा बिलवासा बहूदका ।
बहुनेत्रा बहुपदा बहुकर्णावतंसिका ॥ ११२ ॥
बहुबाहुयुता बीजरूपिणी बहुरूपिणी ।
बिन्दुनादकलातीता बिन्दुनादस्वरूपिणी ॥ ११३ ॥
बद्धगोधांगुलित्राणा बदर्याश्रमवासिनी ।
बृन्दारका बृहत्स्कन्धा बृहती बाणपातिनी ॥ ११४ ॥
बृन्दाध्यक्षा बहुनुता बनिता बहुविक्रमा ।
बद्धपद्मासनासीना बिल्वपत्रतलस्थिता ॥ ११५ ॥
बोधिद्रुमनिजावासा बडिस्था बिन्दुदर्पणा ।
बाला बाणासनवती बडवानलवेगिनी ॥ ११६ ॥
ब्रह्माण्डबहिरन्तःस्था ब्रह्मकंकणसूत्रिणी ।
भवानी भीषणवती भाविनी भयहारिणी ॥ ११७ ॥
भद्रकाली भुजंगाक्षी भारती भारताशया ।
भैरवी भीषणाकारा भूतिदा भूतिमालिनी ॥ ११८ ॥

भामिनी भोगनिरता भद्रदा भूरिविक्रमा।
भूतावासा भृगुलता भार्गवी भूसुरार्चिता ॥ ११९ ॥
भागीरथी भोगवती भवनस्था भिषग्वरा।
भामिनी भोगिनी भाषा भवानी भूरिदक्षिणा ॥ १२० ॥
भर्गात्मिका भीमवती भवबन्धविमोचिनी।
भजनीया भूतधात्रीरंजिता भुवनेश्वरी ॥ १२१ ॥
भुजंगवलया भीमा भेरुण्डा भागधेयिनी।
माता माया मधुमती मधुजिह्वा मधुप्रिया ॥ १२२ ॥
महादेवी महाभागा मालिनी मीनलोचना।
मायातीता मधुमती मधुमांसा मधुद्रवा ॥ १२३ ॥
मानवी मधुसम्भूता मिथिलापुरवासिनी।
मधुकैटभसंहर्त्री मेदिनी मेघमालिनी ॥ १२४ ॥
मन्दोदरी महामाया मैथिली मसृणप्रिया।
महालक्ष्मीर्महाकाली महाकन्या महेश्वरी ॥ १२५ ॥
माहेन्द्री मेरुतनया मन्दारकुसुमार्चिता।
मंजुमंजीरचरणा मोक्षदा मंजुभाषिणी ॥ १२६ ॥
मधुरद्राविणी मुद्रा मलया मलयान्विता।
मेधा मरकतश्यामा मागधी मेनकात्मजा ॥ १२७ ॥
महामारी महावीरा महाश्यामा मनुस्तुता।
मातृका मिहिराभासा मुकुन्दपदविक्रमा ॥ १२८ ॥
मूलाधारस्थिता मुग्धा मणिपूरकवासिनी।
मृगाक्षी महिषारूढा महिषासुरमर्दिनी ॥ १२९ ॥

योगासना योगगम्या योगा यौवनकाश्रया।
यौवनी युद्धमध्यस्था यमुना युगधारिणी ॥ १३० ॥
यक्षिणी योगयुक्ता च यक्षराजप्रसूतिनी।
यात्रा यानविधानज्ञा यदुवंशसमुद्भवा ॥ १३१ ॥
यकारादिहकारान्ता याजुषी यज्ञरूपिणी।
यामिनी योगनिरता यातुधानभयंकरी ॥ १३२ ॥
रुक्मिणी रमणी रामा रेवती रेणुका रतिः।
रौद्री रौद्रप्रियाकारा राममाता रतिप्रिया ॥ १३३ ॥
रोहिणी राज्यदा रेवा रमा राजीवलोचना।
राकेशी रूपसम्पन्ना रत्नसिंहासनस्थिता ॥ १३४ ॥
रक्तमाल्याम्बरधरा रक्तगन्धानुलेपना।
राजहंससमारूढा रम्भा रक्तबलिप्रिया ॥ १३५ ॥
रमणीययुगाधारा राजिताखिलभूतला।
रुरुचर्मपरीधाना रथिनी रत्नमालिका ॥ १३६ ॥
रोगेशी रोगशमनी राविणी रोमहर्षिणी।
रामचन्द्रपदाक्रान्ता रावणच्छेदकारिणी ॥ १३७ ॥
रक्तवस्त्रपरिच्छिन्ना रथस्था रुक्मभूषणा।
लज्जाधिदेवता लोला ललिता लिंगधारिणी ॥ १३८ ॥
लक्ष्मीर्लोला लुप्तविषा लोकिनी लोकविश्रुता।
लज्जा लंबोदरी देवी ललना लोकधारिणी ॥ १३९
वरदा वन्दिता विद्या वैष्णवी विमलाकृतिः।
वाराही विरजा वर्षा वरलक्ष्मीर्विलासिनी ॥ १४० ॥

विनता व्योममध्यस्था वारिजासनसंस्थिता।
वारिणी वेणुसम्भूता वीतिहोत्रा विरूपिणी।। १४१।।
वायुमण्डलमध्यस्था विष्णुरूपा विधिप्रिया।
विष्णुपत्नी विष्णुमती विशालाक्षी वसुन्धरा।। १४२।।
वामदेवप्रिया वेला वज्रिणी वसुदोहिनी।
वेदाक्षरपरीतांगी वाजपेयफलप्रदा।। १४३।।
वासवी वामजननी वैकुण्ठनिलया वरा।
व्यासप्रिया वर्मधरा वाल्मीकिपरिसेविता।। १४४।।
शाकम्भरी शिवा शान्ता शारदा शरणागतिः।
शातोदरी शुभाचारा शुम्भासुरविमर्दिनी।। १४५।।
शोभावती शिवाकारा शङ्करार्धशरीरिणी।
शोणा शुभाशया शुभ्रा शिरःसन्धानकारिणी।। १४६।।
शरावती शरानन्दा शरज्ज्योत्स्ना शुभानना।
शरभा शूलिनी शुद्धा शबरी शुकवाहना।। १४७।।
श्रीमती श्रीधरानन्दा श्रवणानन्ददायिनी।
शर्वाणी शर्वरीवन्द्या षड्भाषा षडृतुप्रिया।। १४८।।
षडाधारस्थिता देवी षण्मुखप्रियकारिणी।
षडंगरूपसुमतिः सुरासुरनमस्कृता।। १४९।।
सरस्वती सदाधारा सर्वमङ्गलकारिणी।
सामगानप्रिया सूक्ष्मा सावित्री सामसंभवा।। १५०।।
सर्वावासा सदानन्दा सुस्तनी सागराम्बरा।
सर्वैश्वर्यप्रिया सिद्धिः साधुबन्धुपराक्रमा।। १५१।।

सप्तर्षिमण्डलगता सोममण्डलवासिनी।
सर्वज्ञा सान्द्रकरुणा समानाधिकवर्जिता॥ १५२॥
सर्वोत्तुंगा संगहीना सद्गुणा सकलेष्टदा।
सरघा सूर्यतनया सुकेशी सोमसंहतिः॥ १५३॥
हिरण्यवर्णा हरिणी ह्रींकारी हंसवाहिनी।
क्षौमवस्त्रपरीतांगी क्षीराब्धितनया क्षमा॥ १५४॥
गायत्री चैव सावित्री पार्वती च सरस्वती।
वेदगर्भा वरारोहा श्रीगायत्री पराम्बिका॥ १५५॥ ओं
इति साहस्रकं नाम्नां गायत्र्याश्चैव नारद।
पुण्यदं सर्वपापघ्नं महासम्पत्तिदायकम्॥ १५६॥
एवं नामानि गायत्र्यास्तोषोत्पत्तिकराणि हि।
अष्टम्यां च विशेषेण पठितव्यं द्विजैः सह॥ १५७॥
जपं कृत्वा होमपूजाध्यानं कृत्वा विशेषतः।
यस्मै कस्मै न दातव्यं गायत्र्यास्तु विशेषतः॥ १५८॥
सुभक्ताय सुशिष्याय वक्तव्यं भूसुराय वै।
भ्रष्टेभ्यः साधकेभ्यश्च बान्धवेभ्यो न दर्शयेत्॥ १५९॥
यद् गृहे लिखितं शास्त्रं भयं तस्य न कस्यचित्।
चंचलापि स्थिरा भूत्वा कमला तत्र तिष्ठति॥ १६०॥
इदं रहस्यं परमं गुह्याद्गुह्यतरं महत्।
पुण्यप्रदं मनुष्याणां दरिद्राणां निधिप्रदम्॥ १६१॥
मोक्षप्रदं मुमुक्षूणां कामिनां सर्वकामदम्।
रोगाद्वै मुच्यते रोगी बद्धो मुच्यते बन्धनात्॥ १६२॥

ब्रह्महत्यासुरापानसुवर्णस्तेयिनो नराः ।
गुरुतल्पगतो वाऽपि पातकान्मुच्यते सकृत् ।। १६३ ।।
असत्प्रतिग्रहाच्चैवाभक्ष्यभक्षाद्विशेषतः ।
पाखण्डानृतमुख्येभ्यः पठनादेव मुच्यते ।। १६४ ।।
इदं रहस्यममलं मयोक्तं पद्मजोद्भव ।
ब्रह्मसायुज्यदं नॄणां सत्यं सत्यं न संशयः ।। १६५ ।।

—देवीभागवततः

* * *

## गायत्रीसहस्रनामावलिः - २

ओं अचिन्त्यलक्षणायै नमः । अव्यक्तायै । अर्धमातृमहेश्वर्यै । अमृतार्णवमध्यस्थायै । अजितायै । अपराजितायै । अणिमादिगुणाधारायै । अर्कमण्डलसंस्थितायै । अजरायै । अजायै । अपरायै । अधर्मायै । अक्षसूत्रधरायै । अधरायै । अकारादिक्षकारान्तायै । अरिषड्वर्गभेदिन्यै । अंजनाद्रिप्रतीकाशायै । अंजनाद्रिनिवासिन्यै । अदित्यै । अजपाविद्यायै नमः ।। २०

ओं अरविन्दनिभेक्षणायै नमः । अन्तर्बहिःस्थितायै । अविद्याध्वंसिन्यै । अन्तरात्मिकायै । अजायै । अजमुखावासायै । अरविन्दनिभाननायै । अर्धमात्रायै । अर्थदानज्ञायै । अरिमण्डलमर्दिन्यै । असुरघ्न्यै । अमावास्यायै । अलक्ष्मीघ्न्यै । अन्त्यजार्चितायै । आदिलक्ष्म्यै । आदिशक्त्यै । आकृत्यै । आयताननायै । आदित्यपदवीचारायै । आदित्यपरिसेवितायै । आचार्यायै । आवर्तनाचारायै । आदिमूर्तिनिवासिन्यै नमः ।। ४०

ओं आग्नेय्यै नमः । आमयै । आद्यायै । आराध्यायै । आसनास्थितायै । आधारनिलयायै । आधारायै । आकाशान्तर्निवासिन्यै । आद्याक्षरसमायुक्तायै । आन्तराकाशरूपिण्यै । आदित्यमण्डलगतायै । आन्तरध्वान्तनाशिन्यै । इन्दिरायै । इष्टदायै । इष्टायै । इन्दीवरनिभेक्षणायै । इरावत्यै । इन्द्रपदायै । इन्द्राण्यै । इन्दुरूपिण्यै नमः ।। ६०

ओं इक्षुकोदण्डसंयुक्तायै । इषुसन्धानकारिण्यै । इन्द्रनीलसमाकारायै । इडापिङ्गलरूपिण्यै । इन्द्राक्ष्यै । ईश्वर्यै देव्यै । ईहात्रयविवर्जितायै । उमायै । उषायै । उडुनिभायै । उर्वारुकफलाननायै । उडुप्रभायै । उडुमत्यै । उडुपायै । उडुमध्यगायै । ऊर्ध्वायै । ऊर्ध्वकेश्यै । ऊर्ध्वाधोगतिभेदिन्यै । ऊर्ध्वबाहुप्रियायै । ऊर्मिमालायै नमः ।। ८०

ओं वाचे नमः । ग्रन्थदायिन्यै । ऋताय । ऋषये । ऋतुमत्यै । ऋषिदेवनमस्कृतायै । ऋग्वेदायै । ऋणहर्त्र्यै । ऋषिमण्डलचारिण्यै । ऋद्धिदायै । ऋजुमार्गस्थायै । ऋजुधर्मायै । ऋतुप्रदायै । ऋग्वेदनिलयायै । ऋज्व्यै । लुप्तधर्मप्रवर्तिन्यै । लूतारिवरसंभूतायै । लूतादिविषहारिण्यै । एकाक्षरायै । एकमात्रायै नमः ।। १००

ओं एकायै नमः । एकैकनिष्ठितायै । ऐन्द्र्यै । ऐरावतारूढायै । ऐहिकामुष्मिकप्रदायै । ओङ्कारायै । ओषध्यै । ओतायै । ओतप्रोतनिवासिन्यै । और्वायै । औषधसंपन्नायै । औपासनफलप्रदायै । अण्डमध्यस्थितायै देव्यै । अःकारमनुरूपिण्यै । कात्यायन्यै । कालरात्र्यै । कामाक्ष्यै । कामसुन्दर्यै । कमलायै । कामिन्यै नमः ।। १२०

ओं कान्तायै नमः । कामदायै । कालकण्ठिन्यै । करिकुंभस्तनभरायै । करवीरसुवासिन्यै । कल्याण्यै । कुण्डलवत्यै । कुरुक्षेत्रनिवासिन्यै । कुरुविन्ददलाकारायै । कुण्डल्यै । कुमुदालयायै । कालजिह्वायै । करालास्यायै । कालिकायै । कालरूपिण्यै । कमनीयगुणायै । कान्त्यै । कलाधारायै । कुमुद्वत्यै । कौशिक्यै नमः ॥ १४०

ओं कमलाकारायै नमः । कामचारप्रभञ्जिन्यै । कौमार्यै । करुणापांग्यै । ककुबन्तायै । करिप्रियायै । केसर्यै । केशवनुतायै । कदंबकुसुमप्रियायै । कालिन्दायै । कालिकायै । काञ्च्यै । कलशोद्भवसंस्तुतायै । काममात्रे । क्रतुमत्यै । कामरूपायै । कृपावत्यै । कुमार्यै । कुण्डनिलयायै । किरात्यै नमः ॥ १६०

ओं कीरवाहनायै नमः । कैकेय्यै । कोकिलालापायै । केतकीकुसुमप्रियायै । कमण्डलुधरायै । काल्यै । कर्मनिर्मूलकारिण्यै । कलहंसगत्यै । कक्षायै । कृतकौतुकमङ्गलायै । कस्तूरीतिलकायै । कम्रायै । करीन्द्रगमनायै । कुह्वै । कर्पूरलेपनायै । कृष्णायै । कपिलायै । कुहराश्रयायै । कूटस्थायै । कुधरायै नमः ॥ १८०

ओं कम्रायै नमः । कुक्षिस्थाखिलविष्टपायै । खड्गखेटकरायै । खर्वायै । खेचर्यै । खगवाहनायै । खट्वाङ्गधारिण्यै । ख्यातायै । खगराजोपरिस्थितायै । खलघ्न्यै । खण्डितजरायै । खण्डाख्यानप्रदायिन्यै । खण्डेन्दुतिलकायै । गंगायै । गणेशगुहपूजितायै । गायत्र्यै । गोमत्यै । गीतायै । गान्धार्यै । गानलोलुपायै नमः ॥ २००

ओं गौतम्यै नमः । गामिन्यै । गाधायै । गन्धर्वाप्सरसेवितायै । गोविन्दचरणाक्रान्तायै । गुणत्रयविभाजितायै । गान्धर्व्यै । गह्वर्यै । गोत्रायै । गिरिशायै । गहनागम्यै । गुहवासायै । गुणवत्यै ।

गुरुपापप्रणाशिन्यै । गुर्व्यै । गुणवत्यै । गुह्यायै । गोप्तव्यायै । गुणदायिन्यै । गिरिजायै नमः ।। २२०

ओं गुह्यमातङ्ग्यै नमः । गरुडध्वजवल्लभायै । गर्वापहारिण्यै । गोदायै । गोकुलस्थायै । गदाधरायै । गोकर्णनिलयासक्तायै । गुह्यमण्डलवर्तिन्यै । घर्मदायै । घनदायै । घण्टायै । घोरदानव-मर्दिन्यै । घृणिमन्त्रमय्यै । घोषायै । घनसंपातदायिन्यै । घण्टारव-प्रियायै । घ्राणायै । घृणिसन्तुष्टिकारिण्यै । घनारिमण्डलायै । घूर्णायै नमः ।। २४०

ओं घृताच्यै नमः । घनवेगिन्यै । ज्ञानधातुमय्यै । चर्चायै । चर्चितायै । चारुहासिन्यै । चटुलायै । चण्डिकायै । चित्रायै । चित्रमाल्यविभूषितायै । चतुर्भुजायै । चारुदन्तायै । चातुर्यै । चरितप्रदायै । चूलिकायै । चित्रवस्त्रान्तायै । चन्द्रमःकर्णकुण्डलायै । चन्द्रहासायै । चारुदात्र्यै । चकोर्यै नमः ।। २६०

ओं चन्द्रहासिन्यै । चन्द्रिकायै । चन्द्रधात्र्यै । चौर्यै । चौरायै । चण्डिकायै । चंचद्वाग्वादिन्यै । चन्द्रचूडायै । चोरविनाशिन्यै । चारुचन्दनलिप्तांग्यै । चञ्चच्चामरवीजितायै । चारुमध्यायै । चारुगत्यै । चन्दिलायै । चन्द्ररूपिण्यै । चारुहोमप्रियायै । चार्वाचरितायै । चक्रबाहुकायै । चन्द्रमण्डलमध्यस्थायै । चन्द्रमण्डलतर्पणायै नमः ।। २८०

ओं चक्रवाकस्तन्यै नमः । चेष्टायै । चित्रायै । चारुविलासिन्यै । चित्स्वरूपायै । चन्द्रवत्यै । चन्द्रमसे । चन्दनप्रियायै । चोदयित्र्यै । चिरप्रज्ञायै । चातकायै । चारुहेतुक्यै । छत्रयातायै । छत्रधरायै । छायायै । छन्दःपरिच्छदायै । छायादेव्यै । छिद्रनखायै । छन्नेन्द्रियविसर्पिण्यै । छन्दसे अनुष्टुभे नमः ।। ३००

ओं प्रतिष्ठान्तायै नमः । छिद्रोपद्रवभेदिन्यै । छदायै । छत्रेश्वर्यै । छिन्नायै । छुरिकायै । छेदनप्रियायै । जनन्यै । जन्मरहितायै । जातवेदसे । जगन्मय्यै । जाह्नव्यै । जटिलायै । जेत्र्यै । जरामरण-वर्जितायै । जंबूद्वीपवत्यै । ज्वालायै । जयन्त्यै । जयशालिन्यै । जितेन्द्रियायै नमः ॥ ३२०

ओं जितक्रोधायै नमः । जितामित्रायै । जगत्प्रियायै । जातरूपमय्यै । जिह्वायै । जानक्यै । जगत्यै । जरायै । जनित्र्यै । जह्नुतनयायै । जगत्त्रयहितैषिण्यै । ज्वालामुख्यै । जपवत्यै । ज्वलद्व्यै । जितविष्टपायै । जिताक्रान्तमय्यै । ज्वालायै । जाग्रत्यै । ज्वरदेवतायै । ज्वलन्त्यै नमः ॥ ३४०

ओं जलदायै नमः । ज्येष्ठायै । ज्याघोषास्फोटदिङ्मुख्यै । जंभिन्यै । जृंभणायै । जृंभायै । ज्वलन्माणिक्यकुण्डलायै । झिंझिकायै । झणनिर्घोषायै । झंझामारुतवेगिन्यै । झल्लरीवाद्य-कुशलायै । ञरूपायै । ञभुजायै । टंकबाणसमायुक्तायै । टंकिन्यै । टंकभेदिन्यै । टङ्कीगणकृताघोषायै । टंकनीयमहोरसायै । टंकारकारिण्यै देव्यै । टठशब्दनिनादिन्यै नमः ॥ ३६०

ओं डामर्यै नमः । डाकिन्यै । डिंभायै । डुण्डुमारैकनिर्जितायै । डामरीतन्त्रमार्गस्थायै । डमड्डमरुनादिन्यै । डिण्डीरवसहायै । डिंभलसत्क्रीडापरायणायै । ढुण्ढिविघ्नेशजनन्यै । ढक्काहस्तायै । ढिलिव्रजायै । नित्यज्ञानायै । निरुपमायै । निर्गुणायै । नर्मदायै । नद्यै । त्रिगुणायै । त्रिपदायै । तन्त्र्यै । तुलस्यै नमः ॥ ३८०

ओं तरुणायै । तरवे । त्रिविक्रमपदाक्रान्तायै । तुरीयपदगामिन्यै । तरुणादित्यसंकाशायै । तामस्यै । तुहिनातुरायै । त्रिकालज्ञानसंपन्नायै । त्रिवल्यै । त्रिलोचनायै । त्रिशक्त्यै ।

त्रिपुरायै । तुंगायै । तुरंगवदनायै । तिमिङ्गिलगिलायै । तीव्रायै । त्रिस्रोतायै । तामसादिन्यै । तन्त्रमन्त्रविशेषज्ञायै । तनुमध्यायै नमः ॥ ४००

ओं त्रिविष्टपायै नमः । त्रिसन्ध्यायै । त्रिस्तन्यै । तोषासंस्थायै । तालप्रतापिन्यै । ताटङ्किन्यै । तुषाराभायै । तुहिनाचलवासिन्यै । तन्तुजालसमायुक्तायै । तारहारावलिप्रियायै । तिलहोमप्रियायै । तीर्थायै । तमालकुसुमाकृत्यै । तारकायै । त्रियुतायै । तन्व्यै । त्रिशङ्कुपरिवारितायै । तलोदर्यै । तिलाभूषायै । ताटंकप्रियवाहिन्यै नमः ॥ ४२०

ओं त्रिजटायै नमः । तित्तिर्यै । तृष्णायै । त्रिविधायै । तरुणाकृत्यै । तप्तकाञ्चनसङ्काशायै । तप्तकाञ्चनभूषणायै । त्र्यंबकायै । त्रिवर्गायै । त्रिकालज्ञानदायिन्यै । तर्पणायै । तृप्तिदायै । तृप्तायै । तामस्यै । तुंबुरुस्तुतायै । तार्क्ष्यस्थायै । त्रिगुणाकारायै । त्रिभङ्गीतनुवल्लर्यै । थात्कार्यै । थारवायै नमः ॥ ४४०

ओं थान्तायै नमः । दोहिन्यै । दीनवत्सलायै । दानवान्तकर्यै । दुर्गायै । दुर्गासुरनिबर्हिण्यै । देवरीत्यै । दिवारात्र्यै । द्रौपद्यै । दुन्दुभिस्वनायै । देवयान्यै । दुरावासायै । दारिद्र्योच्छेदिन्यै । दिवा । दामोदरप्रियायै । दीप्तायै । दिग्वाससे । दिग्विमोहिन्यै । दण्डकारण्यनिलयायै । दण्डिन्यै नमः ॥ ४६०

ओं देववन्द्यायै नमः । दिविषदायै । द्वेषिण्यै । दानवाकृत्यै । दीनानाथस्तुतायै । दीक्षायै । देवतादिस्वरूपिण्यै । धात्र्यै । धनुर्धरायै । धेन्वै । धारिण्यै । धर्मचारिण्यै । धुरंधरायै । धराधारायै । धनदायै । धान्यदोहिन्यै । धर्मशीलायै । धनाध्यक्षायै । धर्मवेदविशारदायै । धृत्यै नमः ॥ ४८०

ओं धन्यायै। धृतपदायै। धर्मराजप्रियायै। ध्रुवायै। धूमावत्यै। धूमकेश्यै। धर्मशास्त्रप्रकाशिन्यै। नन्दायै। नन्दप्रियायै। निद्रायै। नृनुतायै। नन्दनात्मिकायै। नर्मदायै। नलिन्यै। नीलायै। नीलकण्ठसमाश्रयायै। नारायणप्रियायै। नित्यायै। निर्मलायै। निर्गुणायै नमः ॥ ५००

ओं निधये नमः। निराधारायै। निरुपमायै। नित्यशुद्धायै। निरंजनायै। नादबिन्दुकलातीतायै। नादबिन्दुकलात्मिकायै। नृसिंहिन्यै। नगधरायै। नृपनागविभूषितायै। नरकक्लेशशमन्यै। नारायण पदोद्भवायै। निरवद्यायै। निराकारायै। नारदप्रियकारिण्यै। नानाज्योतिस्समाख्यातायै। निधिदायै। निर्मलात्मिकायै। नवसूत्रधरायै। नीत्यै नमः ॥ ५२०

ओं निरुपद्रवकारिण्यै नमः। नन्दजायै। नवरत्नाढ्यायै। नैमिशारण्यवासिन्यै। नवनीतप्रियायै। नार्यै। नीलजीमूत-निस्वनायै। निमेषिण्यै। नदीरूपायै। नीलग्रीवायै। निशीश्वर्यै। नामावल्यै। निशुंभघ्न्यै। नागलोकनिवासिन्यै। नवजांबूनदप्रख्यायै। नागलोकाधिदेवतायै। नूपुराक्रान्तचरणायै। नरचित्तप्रमोदिन्यै। निमग्नारक्तनयनायै। निर्घातसमनिस्वनायै नमः ॥ ५४०

ओं नन्दनोद्याननिलयायै नमः। निर्व्यूहोपरिचारिण्यै। पार्वत्यै। परमोदारायै। परब्रह्मात्मिकायै। परायै। पंचकोशवि-निर्मुक्तायै। पंचपातकनाशिन्यै। परचित्तविधानज्ञायै। पंचिकायै। पंचरूपिण्यै। पूर्णिमायै। परमायै। प्रीत्यै। परतेजःप्रकाशिन्यै। पुराण्यै। पौरुष्यै। पुण्यायै। पुण्डरीकनिभेक्षणायै। पातालतल-निर्मग्नायै नमः ॥ ५६०

ओं प्रीतायै नमः । प्रीतिविवर्धिन्यै । पावन्यै । पादसहितायै । पेशलायै । पवनाशिन्यै । प्रजापतये । परिश्रान्तायै । पर्वतस्तन-मण्डलायै । पद्मप्रियायै । पद्मसंस्थायै । पद्माक्ष्यै । पद्मसंभवायै । पद्मपत्रायै । पद्मपदायै । पद्मिन्यै । प्रियभषिण्यै । पशुपाशवि-निर्मुक्तायै । पुरन्ध्र्यै । पुरवासिन्यै नमः ॥ ५८० ॥

ओं पुष्कलायै नमः । पुरुषायै । पूर्वायै । पारिजातसुमप्रियायै । पतिव्रतायै । पवित्रांग्यै । पुष्पहासपरायणायै । प्रज्ञावतीसुतायै । पौत्र्यै । पुत्रपूज्यायै । पयस्विन्यै । पट्टिपाशधरायै । पंक्त्यै । पितृलोकप्रदायिन्यै । पुराण्यै । पुण्यशीलायै । प्रणतार्तिविनाशिन्यै । प्रद्युम्नजनन्यै । पुष्टायै । पितामहपरिग्रहायै नमः ॥ ६००

ओं पुण्डरीकपुरावासायै नमः । पुण्डरीकसमाननायै । पृथुजंघायै । पृथुभुजायै । पृथुपादायै । पृथूदर्यै । प्रवालशोभायै । पिंगाक्ष्यै । पीतवाससे । प्रचापलायै । प्रसवायै । पुष्टिदायै । पुण्यायै । प्रतिष्ठायै । प्रणवागत्यै । पञ्चवर्णायै । पञ्चवाण्यै । पञ्चिकायै । पंजरस्थितायै । परमायायै नमः ॥ ६२०

ओं परज्योतिषे नमः । परप्रीत्यै । परायै गत्यै । परायै काष्ठायै । परेशान्यै । पावन्यै । पावकद्युत्यै । पुण्यभद्रायै । परिच्छेद्यायै । पुष्पहासायै । पृथूदर्यै । पीताङ्ग्यै । पीतवसनायै । पीतशय्यायै । पिशाचिन्यै । पीतक्रियायै । पिशाचघ्न्यै । पाटलाक्ष्यै । पटुक्रियायै । पंचभक्षप्रियाचारायै नमः ॥ ६४०

ओं पूतनाप्राणघातिन्यै नमः । पुन्नागवनमध्यस्थायै । पुण्यतीर्थ निषेवितायै । पञ्चाङ्ग्यै । परायै शक्त्यै । परमाह्लाद-कारिण्यै । पुष्पकाण्डस्थितायै । पूष्णे । पोषिताखिलविष्टपायै । पानप्रियायै । पञ्चशिखायै । पन्नगोपरिशायिन्यै । पञ्चमात्रात्मि-

कायै । पृथ्व्यै । पथिकायै । पृथुदोहिन्यै । पुराणन्यायमीमांसायै । पाटल्यै । पुष्पगन्धिन्यै । पुण्यप्रजायै नमः ।। ६६०

ओं पारदात्र्यै नमः । परमार्थैकगोचरायै । प्रवालशोभायै । पूर्णाशायै । प्रणवायै । पल्लवोदर्यै । फलिन्यै । फलदायै । फल्गवे । फूत्कार्यै । फलकाकृत्यै । फणीन्द्रभोगशयनायै । फणिमण्डल-मण्डितायै । बालबालायै । बहुमतायै । बालातपनिभांशुकायै । बलभद्रप्रियायै । वन्द्यायै । बडवायै । बुद्धिसंस्तुतायै नमः ।। ६८०

ओं बन्दीदेव्यै नमः । बिलवत्यै । बडिशघ्न्यै । बलिप्रियायै । बान्धव्यै । बाधितायै । बुद्ध्यै । बन्धूककुसुमप्रियायै । बालभानुप्रभाकारायै । ब्राह्मयै । ब्राह्मणदेवतायै । बृहस्पतिस्तुतायै । बृन्दायै । बृन्दावनविहारिण्यै । बालाकिन्यै । बिलाहारायै । बिलवासायै । बहूदकायै । बहुनेत्रायै । बहुपदायै नमः ।। ७००

ओं बहुकर्णावतंसिकायै नमः । बहुबाहुयुतायै । बीजरूपिण्यै । बहुरूपिण्यै । बिन्दुनादकलातीतायै । बिन्दुनाद-स्वरूपिण्यै । बद्धगोधांगुलित्राणायै । बदर्याश्रमवासिन्यै । बृन्दारकायै । बृहत्स्कन्धायै । बृहत्यै । बाणपातिन्यै । बृन्दाध्यक्षायै । बहुनुतायै । बनितायै । बहुविक्रमायै । बद्धपद्मासनासीनायै । बिल्वपत्रतलस्थितायै । बोधिद्रुमनिजावासायै । बडिस्थायै नमः ।। ७२०

ओं बिन्दुदर्पणायै नमः । बालायै । बाणासनवत्यै । बडबानलवेगिन्यै । ब्रह्माण्डबहिरन्तःस्थायै । ब्रह्मकङ्कणसूत्रिण्यै । भवान्यै । भीषणवत्यै । भाविन्यै । भयहारिण्यै । भद्रकाल्यै । भुजंगाक्ष्यै । भारत्यै । भारताशयायै । भैरव्यै । भीषणाकारायै । भूतिदायै । भूतिमालिन्यै । भामिन्यै । भोगनिरतायै नमः ।। ७४०

ओं भद्रदायै नमः । भूरिविक्रमायै । भूतावासायै । भृगुलतायै । भार्गव्यै । भूसुरार्चितायै । भागीरथ्यै । भोगवत्यै । भवनस्थायै । भिषग्वरायै । भामिन्यै । भोगिन्यै । भाषायै । भवान्यै । भूरिदक्षिणायै । भर्गात्मिकायै । भीमवत्यै । भवबन्धविमोचिन्यै । भजनीयायै । भूतधात्रीरंजितायै नमः ।। ७६०

ओं भुवनेश्वर्यै नमः । भुजङ्गवलयायै । भीमायै । भेरुण्डायै । भागधेयिन्यै । मात्रे । मायायै । मधुमत्यै । मधुजिह्वायै । मधुप्रियायै । महादेव्यै । महाभागायै । मालिन्यै । मीनलोचनायै । मायातीतायै । मधुमत्यै । मधुमांसायै । मधुद्रवायै । मानव्यै । मधुसंभूतायै नमः ।। ७८०

ओं मिथिलापुरवासिन्यै नमः । मधुकैटभसंहर्त्र्यै । मेदिन्यै । मेघमालिन्यै । मन्दोदर्यै । महामायायै । मैथिल्यै । मसृणप्रियायै । महालक्ष्म्यै । महाकाल्यै । महाकन्यायै । महेश्वर्यै । माहेन्द्र्यै । मेरुतनयायै । मन्दारकुसुमार्चितायै । मंजुमंजीरचरणायै । मोक्षदायै । मंजुभाषिण्यै । मधुरद्राविण्यै । मुद्रायै नमः ।। ८००

ओं मलयायै नमः । मलयान्वितायै । मेधायै । मरकतश्यामायै । मागध्यै । मेनकात्मजायै । महामार्यै । महावीरायै । महाश्यामायै । मनुस्तुतायै । मातृकायै । मिहिराभासायै । मुकुन्दपदविक्रमायै । मूलाधारस्थितायै । मुग्धायै । मणिपूरकवासिन्यै । मृगाक्ष्यै । महिषारूढायै । महिषासुरमर्दिन्यै । योगासनायै नमः ।। ८२०

ओं योगगम्यायै नमः । योगायै । यौवनकाश्रयायै । यौवन्यै । युद्धमध्यस्थायै । यमुनायै । युगधारिण्यै । यक्षिण्यै । योगयुक्तायै । यक्षराजप्रसूतिन्यै । यात्रायै । यानविधानज्ञायै । यदुवंशसमुद्भवायै ।

यकारादिहकारान्तायै । याजुष्यै । यज्ञरूपिण्यै । यामिन्यै । योगनिरतायै। यातुधानभयङ्कर्यै। रुक्मिण्यै नमः ।। ८४०

ओं रमण्यै नमः । रामायै । रेवत्यै । रेणुकायै । रत्यै । रौद्र्यै । रौद्रप्रियाकारायै । राममात्रे । रतिप्रियायै । रोहिण्यै । राज्यदायै । रेवायै । रमायै । राजीवलोचनायै । राकेश्यै । रूपसंपन्नायै । रत्नसिंहासनस्थितायै। रक्तमाल्यांबरधरायै। रक्तगन्धानुलेपनायै । राजहंससमारूढायै नमः ।। ८६०

ओं रंभायै नमः । रक्तबलिप्रियायै । रमणीययुगाधारायै । राजिताखिलभूतलायै । रुरुचर्मपरीधानायै । रथिन्यै । रत्न-मालिकायै । रोगेश्यै । रोगशमन्यै । राविण्यै । रोमहर्षिण्यै । रामचन्द्रपदाक्रान्तायै। रावणच्छेदकारिण्यै। रक्तवस्त्रपरिच्छिन्नायै । रथस्थायै। रुक्मभूषणायै। लज्जाधिदेवतायै। लोलायै। ललितायै। लिङ्गधारिण्यै नमः ।। ८८०

ओं लक्ष्म्यै नमः । लोलायै । लुप्तविषायै । लोकिन्यै । लोकविश्रुतायै। लज्जायै। लंबोदरीदेव्यै। ललनायै। लोकधारिण्यै। वरदायै। वन्दितायै। विद्यायै। वैष्णव्यै। विमलाकृत्यै। वाराह्यै। विरजायै। वर्षायै। वरलक्ष्म्यै। विलासिन्यै। विनतायै नमः ।। ९००

ओं व्योममध्यस्थायै नमः । वारिजासनसंस्थितायै । वारिण्यै । वेणुसंभूतायै । वीतिहोत्रायै । विरूपिण्यै । वायुमण्डलमध्यस्थायै। विष्णुरूपायै। विधिप्रियायै। विष्णुपत्न्यै। विष्णुमत्यै। विशालाक्ष्यै। वसुन्धरायै। वामदेवप्रियायै। वेलायै। वज्रिण्यै । वसुदोहिन्यै । वेदाक्षरपरीताङ्ग्यै । वाजपेयफलप्रदायै । वासव्यै नमः ।। ९२०

ओं वामजनन्यै नमः । वैकुण्ठनिलयायै । वरायै । व्यासप्रियायै । वर्मधरायै । वाल्मीकिपरिसेवितायै । शाकंभर्यै । शिवायै । शान्तायै । शारदायै । शरणागत्यै । शातोदर्यै । शुभाचारायै । शुंभासुरविमर्दिन्यै । शोभावत्यै । शिवाकारायै । शंकरार्धशरीरिण्यै । शोणायै । शुभाशयायै । शुभ्रायै नमः ।। ९४०

ओं शिरःसन्धानकारिण्यै नमः । शरावत्यै । शरानन्दायै । शरज्ज्योत्स्नायै । शुभाननायै । शरभायै । शूलिन्यै । शुद्धायै । शबर्यै । शुकवाहनायै । श्रीमत्यै । श्रीधरानन्दायै । श्रवणानन्ददायिन्यै । शर्वाण्यै । शर्वरीवन्द्यायै । षड्भाषायै । षड्ऋतुप्रियायै । षडाधार-स्थितायै देव्यै । षण्मुखप्रियकारिण्यै । षडङ्गरूपसुमत्यै नमः ।। ९६०

ओं सुरासुरनमस्कृतायै नमः । सरस्वत्यै । सदाधारायै । सर्वमङ्गलकारिण्यै । सामगानप्रियायै । सूक्ष्मायै । सावित्र्यै । सामसंभवायै । सर्वावासायै । सदानन्दायै । सुस्तन्यै । साग-राम्बरायै । सर्वैश्वर्यप्रियायै । सिद्ध्यै । साधुबन्धुपराक्रमायै । सप्तर्षि-मण्डलगतायै । सोममण्डलवासिन्यै । सर्वज्ञायै । सान्द्रकरुणायै । समानाधिकवर्जितायै नमः ।। ९८०

ओं सर्वोत्तुङ्गायै नमः । सङ्गहीनायै । सद्गुणायै । सकलेष्टदायै । सरघायै । सूर्यतनयायै । सुकेश्यै । सोमसंहत्यै । हिरण्यवर्णायै । हरिण्यै । ह्रींकार्यै । हंसवाहिन्यै । क्षौमवस्त्रपरीताङ्ग्यै । क्षीराब्धितनयायै । क्षमायै । गायत्र्यै । सावित्र्यै । पार्वत्यै । सरस्वत्यै । वेदगर्भायै । वरारोहायै । श्रीगायत्र्यै परांबिकायै नमः ।। १००२

* * *

# श्री गायत्र्यष्टोत्तरशतनामस्तोत्रम्

(वसिष्ठप्रोक्तम्)

श्रीगायत्री जगन्माता परब्रह्मस्वरूपिणी।
परमार्थप्रदा जप्या ब्रह्मतेजोविवर्धिनी ॥ १ ॥
ब्रह्मास्त्ररूपिणी भव्या त्रिकालध्येयरूपिणी।
त्रिमूर्तिरूपा सर्वज्ञा वेदमाता मनोन्मनी ॥ २ ॥
बालिका तरुणी वृद्धा सूर्यमण्डलवासिनी।
मन्देहदानवध्वंसकारिणी सर्वकारणा ॥ ३ ॥
हंसारूढा वृषारूढा गरुडारोहिणी शुभा।
षट्कुक्षिस्त्रिपदा शुद्धा पञ्चशीर्षा त्रिलोचना ॥ ४ ॥
त्रिवेदरूपा त्रिविधा त्रिवर्गफलदायिनी।
दशहस्ता चन्द्रवर्णा विश्वामित्रवरप्रदा ॥ ५ ॥
दशायुधधरा नित्या सन्तुष्टा ब्रह्मपूजिता।
आदिशक्तिर्महाविद्या सुषुम्नाख्या सरस्वती ॥ ६ ॥
चतुर्विंशत्यक्षराढ्या सावित्री सत्यवत्सला।
सन्ध्या रात्रिः प्रभाताख्या सांख्यायनकुलोद्भवा ॥ ७ ॥
सर्वेश्वरी सर्वविद्या सर्वमन्त्रादिरव्यया।
शुद्धवस्त्रा शुद्धविद्या शुक्लमाल्यानुलेपना ॥ ८ ॥
सुरसिन्धुसमा सौम्या ब्रह्मलोकनिवासिनी।
प्रणवप्रतिपाद्यार्था प्रणतोद्धरणक्षमा ॥ ९ ॥
जलांजलिसुसन्तुष्टा जलगर्भा जलप्रिया।
स्वाहा स्वधा सुधा संस्था श्रौषड् वौषड् वषड्क्रिया ॥ १०
सुरभिः षोडशकला मुनिबृन्दनिषेविता।
यज्ञप्रिया यज्ञमूर्तिः स्रुक् स्रुवाज्यस्वरूपिणी ॥ ११ ॥

अक्षमालाधरा चाक्षमालासंस्थाऽक्षराकृतिः ।
मधुच्छन्दऋषिप्रीता स्वच्छन्दा छन्दसां निधिः ।। १२ ।।

अंगुलीपर्वसंस्थाना चतुर्विंशतिमुद्रिका ।
ब्रह्ममूर्ती रुद्रशिखा सहस्रपरमाऽम्बिका ।। १३ ।।

विष्णुहृद्गा चाग्निमुखी शतमध्या दशावरा ।
सहस्रदलपद्मस्था हंसरूपा निरंजना ।। १४ ।।

चराचरस्था चतुरा सूर्यकोटिसमप्रभा ।
पञ्चवर्णमुखी धात्री चन्द्रकोटिशुचिस्मिता ।। १५ ।।

महामाया विचित्राङ्गी मायाबीजनिवासिनी ।
सर्वयन्त्रात्मिका सर्वतन्त्ररूपा जगद्धिता ।। १६ ।।

मर्यादापालिका मान्या महामन्त्रफलप्रदा ।
इत्यष्टोत्तरनामानि गायत्र्याः प्रोक्तवान्मुनिः ।। १७ ।।

एवदष्टोत्तरशतं नित्यं भक्तियुतः शुचिः ।
त्रिसन्ध्यं यः पठेत्सर्वमन्त्रसिद्धिमवाप्नुयात् ।। १८ ।।

* * *

## श्रीगायत्र्यष्टोत्तरशतनामावलिः

ओं श्रीगायत्र्यै नमः । जगन्मात्रे । परब्रह्मस्वरूपिण्यै । परमार्थप्रदायै । जप्यायै । ब्रह्मतेजोविवर्धिन्यै । ब्रह्मास्त्ररूपिण्यै । भव्यायै । त्रिकालध्येयरूपिण्यै । त्रिमूर्तिरूपायै । सर्वज्ञायै । वेदमात्रे । मनोन्मन्यै । बालिकायै । तरुण्यै । वृद्धायै । सूर्यमण्डल-वासिन्यै । मन्देहदानवध्वंसकारिण्यै । सर्वकारणायै । हंसारूढायै नमः ।। २०

ओं वृषारूढायै नमः । गरुडारोहिण्यै । शुभायै । षट्कुक्ष्यै । त्रिपदायै । शुद्धायै । पञ्चशीर्षायै । त्रिलोचनायै । त्रिवेदरूपायै ।

त्रिविधायै । त्रिवर्गफलदायिन्यै । दशहस्तायै । चन्द्रवर्णायै । विश्वामित्रवरप्रदायै । दशायुधधरायै । नित्यायै । सन्तुष्टायै । ब्रह्मपूजितायै। आदिशक्त्यै। महाविद्यायै नमः ।। ४०

ओं सुषुम्नाख्यायै नमः । सरस्वत्यै। चतुर्विंशत्यक्षराढ्यायै। सावित्र्यै । सत्यवत्सलायै । सन्ध्यायै । रात्र्यै । प्रभाताख्यायै । सांख्यायनकुलोद्भवायै । सर्वेश्वर्यै । सर्वविद्यायै । सर्वमन्त्रादये । अव्ययायै । शुद्धवस्त्रायै । शुद्धविद्यायै । शुक्लमाल्यानुलेपनायै । सुरसिन्धुसमायै । सौम्यायै । ब्रह्मलोकनिवासिन्यै । प्रणवप्रतिपाद्यार्थायै नमः ।। ६०

ओं प्रणतोद्धरणक्षमायै नमः । जलाञ्जलिसुसन्तुष्टायै । जलगर्भायै। जलप्रियायै। स्वाहायै। स्वधायै। सुधासंस्थायै। श्रौषड् वौषड् वषट् क्रियायै। सुरभ्यै। षोडशकलायै। मुनिबृन्दनिषेवितायै। यज्ञप्रियायै। यज्ञमूर्त्यै। स्रुक्स्रुवाज्यस्वरूपिण्यै। अक्षमालाधरायै । अक्षमालासंस्थायै । अक्षराकृत्यै । मधुच्छन्दऋषिप्रीतायै । स्वच्छन्दायै । छन्दसांनिधये नमः ।। ८०

ओं अङ्गुलीपर्वसंस्थायै नमः । चतुर्विंशतिमुद्रिकायै । ब्रह्ममूर्त्यै । रुद्रशिखायै। सहस्रपरमायै। अंबिकायै। विष्णुहृद्गायै। अग्निमुख्यै । शतमध्यायै । दशावरायै । सहस्रदलपद्मस्थायै । हंसरूपायै । निरंजनायै । चराचरस्थायै । चतुरायै । सूर्यकोटिसमप्रभायै । पञ्चवर्णमुख्यै । धात्र्यै । चन्द्रकोटिशुचिस्मितायै । महामायायै नमः ।। १००

ओं विचित्राङ्ग्यै नमः । मायाबीजनिवासिन्यै । सर्वयन्त्रात्मिकायै । सर्वतन्त्ररूपायै । जगद्धितायै । मर्यादापलिकायै । मान्यायै । महामन्त्र फलप्रदायै नमः ।। १०८

# देवी(भवानी)सहस्रनामस्तोत्रम्

(भवानीसहस्रनामस्तोत्रमित्यपि प्रथितमिदम्। पाठभेदः कुण्डलितः)

उद्यदादित्यसङ्काशां त्र्यक्षां स्मेरमुखीं भजे।
पाशाङ्कुशाभयवरान् दधतीं जगदम्बिकाम्॥ १

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा पूजिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा॥ २

शंखत्रिशूलशरचापकरां त्रिणेत्रां
तिग्मेतरांशुकलया विलसत्किरीटाम्।
सिंहस्थितामसुरसिद्धनुतां च दुर्गां
दुर्गानिभां दुरितदुः खहरां नमामि॥ ३

अकुलकुलभदन्ती चक्रमध्ये स्फुरन्ती
मधुरमधु पिबन्ती कण्टकान्भक्षयन्ती।
दुरितमपहरन्ती साधकान्पोषयन्ती
जयति जगति देवी सुन्दरी क्रीडयन्ती॥ ४

चतुर्भुजामेकवक्त्रां पूर्णेन्दुवदनप्रभाम्।
खड्गशक्तिधरां देवीं वरदाभयपाणिकाम्॥ ५

प्रेतसंस्थां महारौद्रीं भुजगेनोपवीतिनीम्।
भवानीं कालसंहार बद्धमुद्राविभूषिताम्॥ ६

जगत्स्थितिकरीं ब्रह्मविष्णु रुद्रादिभिः सुरैः।
स्तुतां तां परमेशानीं नौम्यहं विघ्नहारिणीम्॥ ७

ओं नमो भवान्यै।

कैलासशिखरे रम्ये देवदेवं महेश्वरम्।
ध्यानोपरतमासीनं प्रसन्नमुखपङ्कजम्॥ ८

सुरासुरशिरो रत्न रंजितांघ्रियुगं प्रभुम्।
प्रणम्य शिरसा नन्दी बद्धांजलिरभाषत॥ ९

श्रीनन्दिकेश्वर उवाच-

देव देव जगन्नाथ संशयोऽस्ति महान्मम।
रहस्यमेकमिच्छामि प्रष्टुं त्वां भक्तवत्सल॥ १०

देवतायास्त्वया कस्याः स्तोत्रमेतद् दिवानिशम्।
पठ्यते निरतं नाथ त्वत्तः किमपरं महत्॥ ११

इति पृष्टस्तदा देवो नन्दिकेन जगद्गुरुः।
प्रोवाच भगवानेको विकसन्नेत्रपङ्कजः॥ १२

श्री भगवानुवाच-

साधु साधु गणश्रेष्ठ पृष्टवानसि मां च यत्।
स्कन्दस्यापि च यद्गोप्यं रहस्यं कथयामि तत्॥ १३

पुरा कल्पक्षये लोकान् सिसृक्षुर्मूढचेतनः।
गुणत्रयमयी शक्तिः मूलप्रकृतिसंज्ञिता॥ १४

तस्यामहं समुत्पन्नः तत्वैस्तैर्महदादिभिः।
चेतनेति ततः शक्तिर्मां काप्यालिङ्ग्य तस्थुषी॥ १५

हेतुः संकल्पजालस्य मनोऽधिष्ठायिनी शुभा।
इच्छेति परमा शक्तिरुन्मिमील ततः परम्॥ १६

ततो वागिति विख्याता शक्तिः शब्दमयी पुरा।
प्रादुरासीज्जगन्माता वेदमाता सरस्वती॥ १७

ब्राह्मी च वैष्णवी सैन्द्री कौमारी पार्वती शिवा।
सिद्धिदा बुद्धिदा शान्ता सर्वमङ्गलदायिनी ।। १८

तयैतत्सृज्यते विश्वं अनाधारं च धार्यते।
तयैतत्पाल्यते सर्वं तस्यामेव प्रलीयते ।। १९

अर्चिता प्रणता ध्याता सर्वभावविनिश्चितैः।
आराधिता स्तुता सैव सर्वसिद्धिप्रदायिनी ।। २०

तस्या अनुग्रहादेव तामेव स्तुतवानहम्।
सहस्रैर्नामभिर्दिव्यैः त्रैलोक्यप्रणिपूजितैः ।। २१

स्तवेनानेन सन्तुष्टा मामेव प्रविवेश सा।
तदारभ्य मया प्राप्तमैश्वरं पदमुत्तमम् ।। २२

तत्प्रभावान्मया सृष्टं जगदेतच्चराचरम्।
ससुरासुरगन्धर्वयक्षराक्षसमानवम् ।। २३

सपन्नगं सोच्चगं च सशैलवनकाननम्।
सराशिग्रहनक्षत्रं पञ्चभूतगुणान्वितम् ।। २४

नन्दिन् नामसहस्रेण स्तवेनानेन सर्वदा।
स्तुवे परापराशक्तिं ममानुग्रहकारिणीम् ।। २५

इत्युक्त्वोपरतं देवं चराचरगुरुं विभुम्।
प्रणम्य शिरसा नन्दी प्रोवाच परमेश्वरम् ।। २६

श्रीनन्दिकेश्वर उवाच-

भगवन् देवदेवेश लोकनाथ जगत्पते।
भक्तोऽस्मि तव दासोऽस्मि प्रसादः क्रियतां मयि ।। २७

देव्याः स्तवमिमं पुण्यं दुर्लभं यत्सुरैरपि।
श्रोतुमिच्छाम्यहं देव प्रभावमपि चास्य तु।। २८

श्रीभगवानुवाच-

शृणु नन्दिन् महाभाग स्तवराजमिमं शुभम्।
सहस्रैर्नामभिर्दिव्यैः सिद्धिदं सुखमोक्षदम्।। २९

शुचिभिः प्रातरुत्थाय पठितव्यं समाहितैः।
त्रिकालं श्रद्धया युक्तैर्नातः परतरः स्तवः।। ३०

अस्य श्रीभवानीनामसहस्रस्तवराजस्य, श्रीभगवान् महादेव ऋषिः। अनुष्टुप् छन्दः। आद्या शक्तिः। श्रीभगवती भवानी देवता। ह्रीं बीजं, श्रीं शक्तिः, क्लीं कीलकं, श्रीभगवतीभवानीप्रीत्यर्थे नामपारायणे विनियोगः।

ओं एकवीरायै नमः अंगुष्ठाभ्यां नमः। ओं महामायायै नमः तर्जनीभ्यां नमः। ओं पार्वत्यै नमः मध्यमाभ्यां नमः। ओं गिरिशप्रियायै नमः अनामिकाभ्यां नमः। ओं गौर्यै नमः। कनिष्ठिकाभ्यां नमः। ओं करालिन्यै नमः करतल करपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः, भूर्भुवस्सुवरों इति दिग्बन्धः। ध्यानं-

अर्धेन्दुमौलिममलाममराभिवन्द्यां
अंभोजपाशसृणिरक्तकपालहस्ताम्।
रक्ताङ्ग रागवसनाभरणां त्रिणेत्रां
ध्यायेत्(वन्दे) शिवस्य वनितां मदविह्वलाङ्गीम्।।

बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम्।
पाशाङ्कुशशरं चापं धारयन्तीं शिवां भजे।।

ओं महविद्या जगन्माता महालक्ष्मीः शिवप्रिया।
विष्णुमाया शुभा शान्तिः (न्ता) सिद्धा सिद्धसरस्वती ।। १

क्षमा कान्तिः प्रभा ज्योत्स्ना पार्वती सर्वमङ्गला।
हिंगुला चण्डिका दान्ता पद्मा लक्ष्मीर्हरिप्रिया ।। २

त्रिपुरानन्दिनी नन्दा सुनन्दा सुरवन्दिता।
यज्ञविद्या महामाया वेदमाता सुधा धृतिः ।। ३

प्रीतिः प्रिया प्रसिद्धा च मृडानी विन्ध्यवासिनी।
सिद्धविद्या महाशक्तिः पृथ्वी नारदसेविता ।। ४

पुरुहूतप्रिया कान्तिः कामिनी पद्मलोचना।
प्रह्लादिनी महामाता दुर्गा दुर्गार्तिनाशिनी ।। ५

ज्वालामुखी सुगोत्री च ज्योतिः कुमुदवासिनी।
दुर्गमा दुर्लभा विद्या स्वर्गतिः पुरवासिनी ।। ६

अपर्णा शांबरी माया मदिरा मृदुहासिनी।
(कुलवागीश्वरी नित्या नित्यक्लिन्ना कृशोदरी।
कामेश्वरी च नीला च भेरुण्डा वह्निवासिनी ।।

लंबोदरी महाकाली विद्या विद्येश्वरी तथा।
नरेश्वरी च सत्या च सर्वसौभाग्यवर्धिनी ।।

संकर्षिणी नारसिंही वैष्णवी च महोदरी।
कात्यायनी च चंपा च सर्वसंपत्तिकारिणी ।।)
नारायणी महानिद्रा योगनिद्रा प्रभावती ।। ७

प्रज्ञाऽपरि(पार)मिता प्राज्ञा तारा मधुमती मधुः।
क्षीरार्णवसुता बाला(हारा) बा(का)लिका सिंहगामिनी ।। ८

ओंकारा च सुधाकारा चेतना कोपना क्षि(कृ)तिः।
अर्धबिन्दुधरा धीरा विश्वमाता कलावती॥ ९

पद्मावती सुवस्त्रा च प्रवृद्धा च सरस्वती।
जिनमाता जितेन्द्रा च शारदा हंसवाहना॥ १०

कुण्डासना जगद्धात्री बुद्धमाता जनेश्वरी।
राज्यलक्ष्मीर्वषट्कारा सुधाकारा सुधात्मिका॥ ११

राजनीतिस्त्रयी वार्ता दण्डनीतिः क्रियावृतिः (वती)।
सद्भूतिस्तारिणी श्रद्धा सद्गतिः सत्परायणा॥ १२

सिन्धुर्मन्दाकिनी गङ्गा यमुना च सरस्वती।
गोदावरी विपाशा च कावेरी च शतह्रदा॥ १३

सरयूश्चन्द्र भागा च कौशिकी गण्डकी शिवा(शुचि):।
नर्मदा वेदिका कर्मनाशा चर्मण्वती तथा॥ १४

वेत्रवती वितस्ता च वरदा वरवाहना।
सती पतिव्रता साध्वी सुचक्षुः कुण्डवासिनी॥ १५

एकचक्षुः सहस्राक्षी सुश्रोणी भगमालिनी।
सेनाश्रेणिः पताका च सव्यूहा युद्धकांक्षिणी॥ १६

पताकिनी दया रंभा विपञ्ची पञ्चमप्रिया।
परा परकला कान्ता त्रिशक्तिर्मोक्षदायिनी॥ १७

ऐन्द्री माहेश्वरी ब्राह्मी कौमारी कमलासना।
इच्छा भगवती धेनुः कामधेनुः कृपावती॥ १८

वज्रायुधा वज्रहस्ता चण्डी चण्डपराक्रमा।
गौरी सुवर्णवर्णा च स्थितिसंहारकारिणी॥ १९

एकाऽनेका महेज्या च शतबाहुर्महाभुजा।
भुजंगभूषणा भूषा षट्चक्र क्रमवासिनी ॥ २०

षट्चक्रभेदिनी श्यामा कायस्था कायवर्जिता।
सुस्मिता सुमुखी क्षामा मूलप्रकृतिरीश्वरी ॥ २१

अजा च बहुवर्णा च पुरुषार्थप्रवर्तिनी।
रक्ता नीला सिता श्यामा कृष्णा पीता च कर्बुरा ॥ २२

क्षुधा तृष्णा जरा वृद्धा तरुणी करुणालया।
कला काष्ठा मुहूर्ता च निमेषा कालरूपिणी ॥ २३

सुवर्णा(र्ण)रस(श)ना नासा चक्षुःस्पर्शवती रसा।
गन्धप्रिया सुगन्धा च सुस्पर्शा च मनोगतिः ॥ २४

मृगनाभिर्मृगाक्षी च कर्पूरामोदधारिणी।
पद्मयोनिः सुकेशी च सुलिङ्गा भगरूपिणी ॥ २५

योनिमुद्रा महामुद्रा खेचरी स्वर्गगामिनी।
मधुश्रीर्माधवीवल्ली मधुमत्ता मदोद्धता ॥ २६

मातङ्गी शुकहस्ता च पुष्पबाणेक्षुचापिनी।
रक्तांबरधरा चैव रक्तपुष्पावतंसिनी ॥ २७

शुभ्रांबरा धराऽधारा महाश्वेता वसुप्रिया।
सुवेणी पद्महस्ता च मुक्ताहारविभूषणा ॥ २८

कर्पूरामोदिनिःश्वासा पद्मिनी पद्ममन्दिरा।
खड्गिनी चक्रहस्ता च भुसुण्डीपरिघायुधा ॥ २९

चापिनी पाशहस्ता च त्रिशूलवरधारिणी।
सुबाणा शक्तिहस्ता च मयूरवरवाहना ॥ ३०

वरायुधधरा धीरा वीरपानमदोत्कटा।
वसुधा वसुधारा च जया शाकंभरी शिवा ॥ ३१

विजया च जयन्ती च सुस्तनी शत्रुनाशिनी।
कुमारी च सुपर्णा च कामाक्षी कामवन्दिता ॥ ३२

जालन्धरधराऽनन्ता कामरूपनिवासिनी।
अन्तर्वत्नी देवशक्तिर्वरदा वरधारिणी ॥ ३३

शीतला च सुशीला च बालग्रहविनाशिनी।
कामबीजवती सत्या सत्यधर्मपरायणा ॥ ३४

स्थूलमार्गस्थिता सूक्ष्मा सूक्ष्मबुद्धिः प्रबोधिनी।
षट्कोणा च त्रिकोणा च त्र्यक्षा त्रिपुरसुन्दरी ॥ ३५

वृषप्रिया वृषारूढा महिषासुरघातिनी।
शंभुदर्पहरा दृप्ता दीप्तपावकसन्निभा ॥ ३६

कपालभूषणा काली कपालवरधारिणी।
कपालकुण्डला दीर्घा शिवदूती घनस्वना ॥ ३७

सिद्धिदा बुद्धिदा नित्या सत्यमार्गप्रबोधिनी।
मूलाधारा निराकारा वह्निकुण्डकृताश्रया ॥ ३८

वायुकुण्डासना(सुखा)सीना निराधारा निराश्रया।
कंबुग्रीवा वसुमती छत्रच्छायाकृतालया ॥ ३९

कुण्डली च जगद्गर्भा भुजंगाकारशायिनी।
प्रोल्लसत्सप्तपद्मा च नाभिनालमृणालिनी ॥ ४०

वल्लीतन्तुसमुत्थाना षड्रसास्वादलोलुपा।
श्वासोच्छ्वासगतिर्जिह्वाग्राहिणी वनसंश्रया ॥ ४१

तपस्विनी तपः सिद्धा तापसी च तपः प्रिया।
तपोनिष्ठा तपोयुक्ता तपसः सिद्धिदायिनी ।। ४२

सप्तधातुमयी मूर्तिः सप्तधात्वन्तराश्रया।
देहपुष्टिर्मनस्तुष्टी रक्तपुष्टिर्बलोद्धता ।। ४३

औषधिर्वैद्यमाता च द्रव्यशक्तिः प्रभाविनी।
वैद्यविद्या चिकित्सा च सुपथ्या रोगनाशिनी ।। ४४

मृगया मृगमांसादा मृगत्वङ् मृगलोचना।
वागुरा बन्धरूपा च वधरूपा वधोद्यता ।। ४५

बन्ध्या वन्दिस्तुता कारागारबन्धविमोचिती।
शृंखला कलहा विद्या दृढबन्धविमोक्षिणी ।। ४६

अम्बिकाऽम्बालिका चाम्बा स्वस्था साधुजनार्चिता।
कौलिकी कुलविद्या च सुकुला कुलपूजिता ।। ४७

कालचक्रभ्रमा भ्रान्ता विभ्रमा भ्रमनाशिनी।
वात्याली मेघमाला च सुवृष्टिः सस्यवर्धिनी ।। ४८

अकारा च तथेकारोकारा चैकाररूपिणी।
ह्रींकारबीजरूपा च क्लींकारांबररूपिणी ।। ४९

सर्वाक्षरमयी शक्तिरक्षरार्णवमालिनी।
सिन्दूरारुणवर्णा च सिन्दूरतिलकप्रिया ।। ५०

वश्या च वश्यबीजा च लोकवश्यविभाविनी।
नृपवश्या नृपैः सेव्या नृपवश्यकरी प्रिया ।। ५१

महिषी नृपमान्या च नृपाज्ञा नृपनन्दिनी।
नृपधर्ममयी धन्या धनधान्यविवर्धिनी ।। ५२

चातुर्वर्ण्यमयी नीतिः चतुर्वर्णप्रपूजिता।
सर्वधर्ममयी शक्तिः चतुराश्रमवासिनी ।। ५३

ब्राह्मणी क्षत्रिया वैश्या शूद्रा ह्यवरवर्णजा।
वेदमार्गरता यज्ञा वेदविश्वविभाविनी ।। ५४

अस्त्रशस्त्रमयी विद्या वरशस्त्रास्त्रधारिणी।
सुमेधा सत्यमेधा च भद्रकाल्यपराजिता ।। ५५

गायत्री सत्कृतिः सन्ध्या सावित्री त्रिपदाश्रया।
त्रिसन्ध्या त्रिपदा धात्री सुस्वरा सामगायिनी ।। ५६

पाञ्चाली कालिका बाला बालक्रीडा सनातनी।
गर्भाधारा धरा शून्या गर्भाशयनिवासिनी ।। ५७

सुरारिघातिनी कृत्या पूतना च तिलोत्तमा।
लज्जा रसवती नन्दा भवानी पापनाशिनी ।। ५८

पट्टांबरधरा गीता सुगीतिर्ज्ञानगोचरा।
सप्तस्वरमयी तन्त्री षड्जमध्यमधैवता ।। ५९

मूर्च्छनाग्रामसंस्थाना सुस्थाना स्थानवासिनी।
शत्रुमार्गा महादेवी वैष्णवी कुलपुत्रिका ।। ६०

अट्टाट्टहासिनी प्रेता प्रेतासननिवासिनी।
गीतनृत्यप्रिया कामा तुष्टिदा पुष्टिदा क्षमा ।। ६१

निष्ठा सत्यप्रिया प्रज्ञा लोकेशा च तिलोत्तमा।
सविषा ज्वालिनी ज्वाला विषमोहार्तिनाशिनी ।। ६२

विषा च नागदमनी कुरुकल्पा(कुल्या)ऽमृतोद्भवा।
भूतभीतिहरा रक्षा भूतावेशनिवासिनी ।। ६३

रक्षोघ्नी राक्षसी रात्रिर्दीर्घनिद्रा दिवागतिः ।
चन्द्रिका चन्द्रकान्तिश्च सूर्यकान्तिर्निशाचरी ।। ६४

डाकिनी शाकिनी शिक्षा हाकिनी चक्रवर्तिनी ।
शिवा शिवप्रिया स्वाङ्गा सकला वनदेवता ।। ६५

गुरुरूपधरा गुर्वी मृत्युमारी विशारदा ।
महामारी विनिद्रा च तन्द्रा मृत्युविनाशिनी ।। ६६

चन्द्रमण्डलसङ्काशा चन्द्रमण्डलवर्तिनी ।
अणिमादिगुणोपेता सुस्पृहा कामरूपिणी ।। ६७

अष्टसिद्धिप्रदा प्रौढा दुष्टदानवघातिनी ।
अनादिनिधना पुष्टिः चतुर्बाहुश्चतुर्मुखी ।। ६८

चतुःसमुद्रवसना चतुर्वर्गफलप्रदा ।
काशपुष्पप्रतीकाशा शरत्कुमुदलोचना ।। ६९

भूतभव्यभविष्येशी शैलजा शैलवासिनी ।
वाममार्गरता वामा शिववामाङ्गवासिनी ।। ७०

वामाचारप्रिया तुष्टिः लोपामुद्रा प्रबोधिनी ।
भूतात्मा परमात्मा च भूतभावविभाविनी ।। ७१

मङ्गला च सुशीला च परमार्गप्रबोधिनी ।
दक्षा च दक्षिणामूर्तिः सुदक्षा च हरिप्रिया ।। ७२

योगिनी योगनिद्रा च योगाङ्गध्यानशालिनी ।
योगपट्टधरा मुक्ता मुक्तानां परमा गतिः ।। ७३

नारसिंही सु(नृ)जन्मा च त्रिवर्गफलदायिनी ।
धर्मदा धनदा चैव कामदा मोक्षदा द्युतिः ।। ७४

साक्षिणी क्षणदाऽऽकांक्षा दक्षजा कोटिरूपिणी।
क्रतुः कात्यायनी स्वस्था स्वच्छन्दा च कविप्रिया ।। ७५

सत्यागमा बहिःस्था च काव्यशक्तिः कवित्वदा।
मेनापुत्री सती साध्वी मैनाकभगिनी तडित् ।। ७६

सौदामिनी सुधामा च सुधाम्नी धामशालिनी।
सौभाग्यदायिनी देवी सुभगा द्युतिवर्धिनी ।। ७७

श्रीर्ह्रीश्च कृत्तिवसना कृत्तिका कालनाशिनी।
रक्तबीजवधोद्युक्ता सुतन्तुर्बीजसन्ततिः ।। ७८

जगज्जीवा जगद्बीजा जगत्त्रयहितैषिणी।
चामीकरा च चन्द्रा च साक्षात्षोडशिका कला ।। ७९

यत्तत्पदानुबन्धा च यक्षिणी धनदार्चिता।
चित्रिणी चित्रमाया च विचित्रा भुवनेश्वरी ।। ८०

चामुण्डा मुण्डहस्ता च चण्डमुण्डवधोद्यता।
अष्टम्येकादशी पूर्णा नवमी च चतुर्दशी ।। ८१

उमा कलशहस्ता च पूर्णकुंभधरा धरा।
अभीरुर्भैरवी भीरुर्भीमा त्रिपुरभैरवी ।। ८२

महाचण्डा च रौद्रा च महाभैरवपूजिता।
निर्मुण्डा हस्तिनी चण्डा करालदशनानना ।। ८३

कराला विकराला च घोरघर्घरनादिनी।
रक्तदन्तोर्ध्वकेशी च बन्धूककुसुमारुणा ।। ८४

कादंबरी पलाशा च काश्मीरकुंकुमप्रिया।
क्षान्तिर्बहु सुवर्णा च रतिर्बहु सुवर्णदा ।। ८५

मातङ्गिनी वरारोहा मत्तमातङ्ग गामिनी।
हंसा हंसगतिर्हंसी हंसोज्ज्वलशिरोरुहा ।। ८६

पूर्णचन्द्रप्रतीकाशा स्मिताशा च सुकुण्डला।
मषी च लेखनी लेखा सुलेखा लेखकप्रिया ।। ८७

शंखिनी शंखहस्ता च जलस्था जलदेवता।
कुरुक्षेत्रावनी काशी मधुरा काञ्च्यवन्तिका ।। ८८

अयोध्या द्वारिका माया तीर्था तीर्थकरी प्रिया।
त्रिपुरा चाप्रमेया च कोशस्था कोशवासिनी ।। ८९

कौशिकी च कुशावर्ता कौशांबा कोशवर्धिनी।
कोशदा पद्मकोशाक्षी कुसुंभकुसुमप्रिया ।। ९०

तोतुला वर्तुला कोटी कोटस्था कोटराश्रया।
स्वयंभूश्च स्वरूपा च सुरूपा रूपवर्धिनी ।। ९१

तेजस्विनी सुदीक्षा च बलदा बलदायिनी।
महाकोशा महागर्ता बुद्धिः सदसदात्मिका ।। ९२

महाग्रहहरा सौम्या विशोका शोकनाशिनी।
सात्विका सत्वसंस्था च राजसी च रजोवृता ।। ९३

तामसी च तमोयुक्ता गुणत्रयविभाविनी।
अव्यक्ता व्यक्तरूपा च वेदविद्या च शांभवी ।। ९४

कल्याणी शांकरी कल्पा मनःसंकल्पसन्ततिः।
सर्वलोकमयी शक्तिः सर्वश्रवणगोचरा ।। ९५

सर्वज्ञानवती वाञ्छा सर्वतत्वप्रबोधिनी।
जाग्रती च सुषुप्तिश्च स्वप्नावस्था तुरीयका ।। ९६

त्वरा मन्दगतिर्मन्दा मदिरामोदमोदिनी।
पानभूमिः पानपात्रा पानदानकरोद्यता॥ ९७

आघूर्णारुणनेत्रा च किञ्चिदव्यक्तभाषिणी।
आशापूरा च दीक्षा च दीक्षा दीक्षितपूजिता॥ ९८

नागवल्ली नागकन्या भोगिनी भोगवल्लभा।
सर्वशास्त्रमयी चैव(विद्या) सुस्मृतिर्धर्मवादिनी॥ ९९

श्रुतिस्मृतिधरा ज्येष्ठा श्रेष्ठा पातालवासिनी।
मीमांसा तर्कविद्या च सुभक्तिर्भक्तवत्सला॥ १००

सुनाभिर्यातना याती गंभीराऽभाववर्जिता।
नागपाशधरा मूर्तिः अगाधा नागकुण्डला॥ १०१

सुचक्रा चक्रमध्यस्था चक्रकोणनिवासिनी।
सर्वमन्त्रमयी विद्या सर्वमन्त्राक्षरा तथा॥ १०२

मधुस्रवा स्रवन्ती च भ्रामरी भ्रमरालया।
मातृमण्डलमध्यस्था मातृमण्डलवासिनी॥ १०३

कुमारजननी क्रूरा सुमुखी ज्वरनाशिनी।
अतीता विद्यमाना च भाविनी प्रीतिमंजरी॥ १०४

सर्वसौख्यवती शक्तिः आहारपरिणामिनी।
पञ्चभूतनिदाना च भवसागरतारिणी॥ १०५

अक्रूरा च ग्रहवती विग्रहा ग्रहवर्जिता।
रोहिणी भूमिगर्भा च कालभूः कालवर्तिनी॥ १०६

कलंकरहिता नारी चतुः षष्ट्यभिधायिनी।
जीर्णा च जीर्णवस्त्रा च नूतना नववल्लभा॥ १०७

अजरा च रतिप्रीतिः अतिरागविवर्धिनी।
पञ्चवातगतिर्भिन्ना पञ्चश्लेष्माशयाधरा।। १०८

पञ्चपित्तवती शक्तिः पञ्चस्थानविभाविनी।
उदक्या च वृषस्यन्ती त्र्यह प्रस्रविणी तथा।। १०९

रजःशुक्रधरा शक्तिर्जरायुर्गर्भधारिणी।
त्रिकालज्ञा त्रिलिङ्गा च त्रिमूर्तिपुरवासिनी।। ११०

अरागा शिवतत्त्वा च कामतत्वा च रागिणी।
प्राच्यवाची प्रतीची च दिगुदीची विदिग्दिशा।। १११

अहंकृतिरहंकारा बालमाया बलिप्रिया।
स्रुक्स्रुवा सामिधेनी च सुश्रद्धा श्राद्धदेवता।। ११२

माता मातामही तृप्तिः पितुर्माता पितामही।
स्नुषा दौहित्रिणी पुत्री पौत्री नप्त्री स्वसा प्रिया।। ११३

स्तनदा स्तनधारा च विश्वयोनिः स्तनन्धया।
शिशूत्सङ्गधरा डोला डोलाक्रीडाभिनन्दिनी।। ११४

उर्वशी कदली केका विशिखा शिखिवर्तिनी।
खट्वाङ्गधारिणी खड्गबाणपुंखानुवर्तिनी।। ११५

लक्ष्यप्राप्तिकरा लक्ष्या सुलक्षा शुभलक्षणा।
वर्तिनी सुपथाचारा परिखा च स्वनिर्वृतिः।। ११६

प्राकारवलया वेला मर्यादा च महोदधिः।
पोषणी शोषणी शक्तिर्दीर्घकेशी सुलोमशा।। ११७

ललिता मांसला तन्वी वेदवेदाङ्गधारिणी।
नरासृक्पानमत्ता च नरमुण्डास्थिभूषणा।। ११८

अक्षक्रीडारतिः सारी शारिका शुकभाषिणी।
शाबरी गारुडी विद्या वारुणी वरुणार्च्चिता।। ११९

वाराही तुण्डहस्ता च दंष्ट्रोद्धृतवसुन्धरा।
मीनमूर्तिर्धरामूर्तिर्वदान्या प्रतिमाश्रया।। १२०

अमूर्तिर्निधिरूपा च सालग्रामशिला शुचिः।
स्मृतिसंस्काररूपा च सुसंस्कारा च संसृ(स्कृ)तिः।। १२१

प्राकृता वेदभाषा च गाथा गीतिः प्रहेलिका।
इडा च पिङ्गला पिङ्गा सुषुम्ना सूर्यवाहिनी।। १२२

शुचिश्रवा च तालुस्था काकिनी मृतजीवनी।
अणुरूपा बृहद्रूपा च लघुरूपा गुरुस्थिरा।। १२३

स्थावरी जंगमा देवी कृतकर्मफलप्रदा।
विषयाक्रान्तदेहा च निर्विषा च जितेन्द्रिया।। १२४

चित्स्वरूपा चिदानन्दा परब्रह्मावबोधिनी।
निर्विकारा च निर्वैरा रतिः सत्याऽधिवर्तिनी।। १२५

पुरुषाऽज्ञानभिन्ना च क्षान्तिः कैवल्यदायिनी।
विविक्तसेविनी प्राज्ञा जनिता च बहुश्रुता।। १२६

निराहारा (रीहा च) समस्तैका सर्वलोकैकसेविका।
सेवा सेवाप्रिया सेव्या सेवाफलविवर्धिनी।। १२७

कलौ कल्किप्रिया शीला दुष्टम्लेच्छविनाशिनी।
प्रत्यश्वा(क्षा)च धनुर्यष्टिः खड्गधारी धरारथा।। १२८

अश्वप्लुता च (तिश्व) वल्गा च सृणिर्मत्ता च वारुणी।
वीरसूर्वेदमाता च वीरश्रीर्वीरनन्दिनी।। १२९

जयश्रीर्जयदीक्षा च जयदा जयवर्धिनी ।
क्षेमंकरी सिद्धिरूपा सत्कीर्तिः पथिदेवता ।। १३०

सौभाग्या च शुभा(ग्यसुभगा)कारा सर्वसौभाग्यदायिनी ।
सर्वतीर्थमयी मूर्तिः सर्वदेवमयी प्रभा ।।
सर्वसिद्धिप्रदा शक्तिः सर्वमङ्गलसंज्ञिता ।। १३१

फल श्रुतिः

पुण्यं सहस्रनामेदं शिवायाः शिवभाषितम् ।
यः पठेत्प्रातरुत्थाय शुचिर्भूत्वा समाहितः ।। १

यश्चापि शृणुयान्नित्यं नरो निश्चलमानसः ।
एककालं द्विकालं वा त्रिकालं श्रद्धयाऽन्वितः ।। २

सर्व दुःखविनिर्मुक्तो धनधान्यसमन्वितः ।
तेजस्वी बलवान् शूरः शोकरोगविवर्जितः ।। ३

यशस्वी कीर्तिमान्धन्यः सुभगो लोकपूजितः ।
रूपवान्गुणसंपन्नः प्रभावीर्यसमन्वितः ।। ४

श्रेयांसि लभते नित्यं निश्चलां च शुभां श्रियम् ।
सर्वपापविनिर्मुक्तो लोभक्रोधविवर्जितः ।। ५

नित्यं बन्धुसुतैर्दारैः पुत्रपौत्रैर्महोत्सवैः ।
नन्दितः सेवितो भृत्यैर्बहुभिः शुचिमानसैः ।। ६

विद्यानां पारगो विप्रः क्षत्रियो विजयी रणे ।
वैश्यस्तु धनलाभाढ्यः शूद्रः सुखमवाप्नुयात् ।। ७

पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ।
नाशुभं नापदस्तस्य न भयं नृपशत्रुतः ।। ८

जायते नाशुभा बुद्धिर्लभते कुलधुर्यताम्।
न बाधन्ते ग्रहास्तस्य न रक्षांसि न पन्नगाः ॥ ९

लोहपाशैर्दृढैर्बद्धो मुच्यते नात्र संशयः।
न दाराणां न पुत्राणां न बन्धूनां न मित्रजम्॥ १०

पश्यन्ति ते न शोकं हि वियोगं चिरजीविनः।
अष्टम्यां वा चतुर्दश्यां नवम्यां चैकचेतसः॥ ११

ये पठन्ति सदा मर्त्या न ते वै दुःखभाजनाः।
नवरात्रं जिताहारो दृढभक्तिर्जितेन्द्रियः॥ १२

चण्डिकायतने विद्वान् शुचिष्मान्मूर्तिसन्निधौ।
एकाकी तु शतावृत्त्या पठन्धीरश्च निर्भयः॥ १३

साक्षाद्भगवती तस्मै प्रयच्छेदीप्सितं फलम्।
सिद्धिपीठे गिरौ रम्ये सिद्धक्षेत्रे सुरालये॥ १४

पठनात्साधकस्याशु सिद्धिर्भवति वाञ्छिता।
एकवारं मुदा नित्यं येऽर्चयन्ति महेश्वरीम्॥ १५

देवतानां देवता या ब्रह्माद्यैर्या च पूजिता।
भूयात्सा वरदा लोके साधूनां विश्वमङ्गला॥ १६

—रुद्रयामलतः

## देवी (भवानी) सहस्रनामावलिः

ओं श्रीं ह्रीं क्लीं। महाविद्यायै नमः। जगन्मात्रे। महालक्ष्म्यै। शिवप्रियायै। विष्णुमायायै। शुभायै। शान्त्यै (शान्तायै)। सिद्धायै। सिद्धसरस्वत्यै। क्षमायै। कान्त्यै। प्रभायै। ज्योत्स्नायै। पार्वत्यै। सर्वमङ्गलायै। हिंगुलायै। चण्डिकायै। दान्तायै। पद्मायै। लक्ष्म्यै नमः॥ २०

ओं हरिप्रियायै नमः । त्रिपुरानन्दिन्यै । नन्दायै । सुनन्दायै । सुरवन्दितायै । यज्ञविद्यायै । महामायायै । वेदमात्रे । सुधायै । धृत्यै । प्रीत्यै । प्रियायै । प्रसिद्धायै । मृडान्यै । विन्ध्यवासिन्यै । सिद्धविद्यायै । महाशक्त्यै । पृथ्व्यै । नारदसेवितायै । पुरुहूतप्रियायै नमः ।। ४०

ओं कान्त्यै नमः । कामिन्यै । पद्मलोचनायै । प्रह्लादिन्यै । महामात्रे । दुर्गमायै । दुर्गार्तिनाशिन्यै । ज्वालामुख्यै । सुगोत्र्यै । ज्योतिषे । कुमुदवासिन्यै । दुर्गमायै । दुर्लभायै । विद्यायै । स्वर्गतये । पुरवासिन्यै । अपर्णायै । शांबर्यै । मायायै । मदिरायै नमः ।। ६०

ओं मृदुहासिन्यै नमः (कुलवागीश्वर्यै । नित्यायै । नित्यक्लिन्नायै । कृशोदर्यै । कामेश्वर्यै । नीलायै । भेरुण्डायै । वह्निवासिन्यै । लंबोदर्यै । महाकाल्यै । विद्यायै । विद्येश्वर्यै । नरेश्वर्यै । सत्यायै । सर्वसौभाग्यवर्धिन्यै । संकर्षिण्यै । नारसिंह्यै । वैष्णव्यै । महोदर्यै । कात्यायन्यै । चंपायै । सर्वसंपत्तिकारिण्यै ।) नारायण्यै । महानिद्रायै । योगनिद्रायै । प्रभावत्यै । प्रज्ञायै । अपरि(पार)मितायै । प्राज्ञायै । तारायै । मधुमत्यै । मधवे । क्षीरार्णवसुतायै । बालायै (हारायै) । बालिकायै (कालिकायै) । सिंहगामिन्यै । ओंकारायै । सुधाकारायै । चेतनायै । कोपनायै । क्षित्यै (कृत्यै) नमः । ८०

ओं अर्धबिन्दुधरायै नमः । धीरायै । विश्वमात्रे । कलावत्यै । पद्मावत्यै । सुवस्त्रायै । प्रवृद्धायै । सरस्वत्यै । जिनमात्रे । जितेन्द्रायै । शारदायै । हंसवाहनायै । कुण्डासनायै । जगद्धात्र्यै । बुद्धमात्रे । जनेश्वर्यै । राज्यलक्ष्म्यै । वषट्कारायै । सुधाकारायै । सुधात्मिकायै नमः । १००

ओं राजनीत्यै नमः । त्रयीवार्तायै । दण्डनीत्यै । क्रियावृत्यै (क्रियावत्यै) । सद्भूत्यै । तारिण्यै । श्रद्धायै । सद्गत्यै । सत्परायणायै । सिन्धवे । मन्दाकिन्यै । गङ्गायै । यमुनायै । सरस्वत्यै । गोदावर्यै । विपाशायै । कावेर्यै । शतह्रदायै । सरय्वै । चन्द्रभागायै नमः । १२०

ओं कौशिक्यै नमः । गण्डक्यै । शिवायै (शुच्यै) । नर्मदायै । वेदिकायै । कर्मनाशायै । चर्मण्वत्यै । वेत्रवत्यै । वितस्तायै । वरदायै । वरवाहनायै । सत्यै । पतिव्रतायै । साध्व्यै । सुचक्षुषे । कुण्डवासिन्यै । एकचक्षुषे । सहस्राक्ष्यै । सुश्रोण्यै । भगमालिन्यै नमः ।। १४०

ओं सेनाश्रेण्यै नमः । पताकायै । सव्यूहायै । युद्धकांक्षिण्यै । पताकिन्यै । दयायै । रंभायै । विपञ्च्यै । पञ्चमप्रियायै । परायै । परकलायै । कान्तायै । त्रिशक्त्यै । मोक्षदायिन्यै । ऐन्द्र्यै । माहेश्वर्यै । ब्राह्म्यै । कौमार्यै । कमलासनायै । इच्छायै नमः ।। १६०

ओं भगवत्यै नमः । धेन्वै । कामधेन्वै । कृपावत्यै । वज्रायुधायै । वज्रहस्तायै । चण्ड्यै । चण्डपराक्रमायै । गौर्यै । सुवर्णवर्णायै । स्थितिसंहारकारिण्यै । एकायै । अनेकायै । महेज्यायै । शतबाहवे । महाभुजायै । भुजङ्गभूषणायै । भूषायै । षट्चक्रक्रमवासिन्यै । षट्चक्रभेदिन्यै नमः । १८०

ओं श्यामायै नमः । कायस्थायै । कायवर्जितायै । सुस्मितायै । सुमुख्यै । क्षामायै । मूलप्रकृत्यै । ईश्वर्यै । अजायै । बहुवर्णायै । पुरुषार्थप्रवर्तिन्यै । रक्तायै । नीलायै । सितायै । श्यामायै । कृष्णायै । पीतायै । कर्बुरायै । क्षुधायै । तृष्णायै नमः ।। २००

ओं जरायै नमः । वृद्धायै । तरुण्यै । करुणालयायै । कलायै । काष्ठायै । मुहूर्तायै । निमेषायै । कालरूपिण्यै । सुवर्णायै । रसनायै (सुवर्णरशनायै) । नासायै । चक्षुषे । स्पर्शवत्यै । रसायै । गन्धप्रियायै । सुगन्धायै । सुस्पर्शायै । मनोगत्यै । मृगनाभ्यै नमः ।। २२०

ओं मृगाक्ष्यै नमः । कर्पूरामोदधारिण्यै । पद्मयोन्यै । सुकेश्यै । सुलिङ्गायै । भगरूपिण्यै । योनिमुद्रायै । महामुद्रायै । खेचर्यै । स्वर्गगामिन्यै । मधुश्रियै । माधवीवल्लच्यै । मधुमत्तायै । मदोद्धतायै । मातङ्गच्यै । शुकहस्तायै । पुष्पबाणायै । इक्षुचापिन्यै । रक्तांबरधरायै । रक्तपुष्पावतंसिन्यै नमः ।। २४०

ओं शुभ्रांबरायै नमः । धरायै । अधारायै । महाश्वेतायै । वसुप्रियायै । सुवेण्यै । पद्महस्तायै । मुक्ताहारविभूषणायै । कर्पूरामोदिनिःश्वासायै । पद्मिन्यै । पद्ममन्दिरायै । खड्गिन्यै । चक्रहस्तायै । भुसुण्डीपरिघायुधायै । चापिन्यै । पाशहस्तायै । त्रिशूलवरधारिण्यै । सुबाणायै । शक्तिहस्तायै । मयूरवरवाहनायै नमः ।। २६०

ओं वरायुधधरायै नमः । धीरायै । वीरपानमदोत्कटायै । वसुधायै । वसुधारायै । जयायै । शाकंभर्यै । शिवायै । विजयायै । जयन्त्यै । सुस्तन्यै । शत्रुनाशिन्यै । कुमार्यै । सुपर्वायै । कामाक्ष्यै । कामवन्दितायै । जालन्धरधरायै । अनन्तायै । कामरूपनिवासिन्यै । अन्तर्वल्न्यै नमः ।। २८०

ओं देवशक्त्यै नमः । वरदायै । वरधारिण्यै । शीतलायै । सुशीलायै । बालग्रहविनाशिन्यै । कामबीजवत्यै । सत्यायै । सत्यधर्मपरायणायै । स्थूलमार्गस्थितायै । सूक्ष्मायै । सूक्ष्मबुद्ध्यै ।

प्रबोधिन्यै । षट्कोणायै । त्रिकोणायै । त्र्यक्षायै । त्रिपुरसुन्दर्यै । वृषप्रियायै । वृषारूढायै । महिषासुरघातिन्यै नमः ।। ३००

ओं शंभुदर्पहरायै नमः । दृप्तायै । दीप्तपावकसंनिभायै । कपालभूषणायै । काल्यै । कपालवरधारिण्यै । कपालकुण्डलायै । दीर्घायै । शिवदूत्यै । घनस्वनायै । सिद्धिदायै । बुद्धिदायै । नित्यायै । सत्यमार्गप्रबोधिन्यै । मूलाधारायै । निराकारायै । बह्निकुण्डकृताश्रयायै । वायुकुण्डा(सुखा)सनासीनायै । निराधारायै । निराश्रयायै नमः ।। ३२०

ओं कंबुग्रीवायै नमः । वसुमत्यै । छत्रच्छायाकृतालयायै । कुण्डल्यै । जगद्गर्भायै । भुजङ्गाकारशायिन्यै । प्रोल्लसत्सप्तपद्मायै । नाभिनालमृणालिन्यै । वल्लीतन्तुसमुत्थानायै । षड्रसास्वादलोलुपायै । श्वासोच्छ्वासगतये । जिह्वाग्राहिण्यै । वनसंश्रयायै । तपस्विन्यै । तपस्सिद्धायै । तापस्यै । तपःप्रियायै । तपो निष्ठायै । तपोयुक्तायै । तपसः सिद्धिदायिन्यै नमः ।। ३४०

ओं सप्तधातुमय्यै मूर्त्यै नमः । सप्तधात्वन्तराश्रयायै । देहपुष्ट्यै । मनस्तुष्ट्यै । रक्तपुष्ट्यै । बलोद्धतायै । औषध्यै । वैद्यमात्रे । द्रव्यशक्त्यै । प्रभाविन्यै । वैद्यविद्यायै । चिकित्सायै । सुपथ्यायै । रोगनाशिन्यै । मृगयायै । मृगमांसादायै । मृगत्वचे । मृगलोचनायै । वागुरायै । बन्धरूपायै नमः ।। ३६०

ओं वधरूपायै नमः । वधोद्यतायै । बन्ध्यायै । बन्दिस्तुतायै । कारागारबन्धविमोचिन्यै । शृंखलायै । कलहायै । विद्यायै । दृढबन्धविमोक्षिण्यै । अंबिकायै । अंबालिकायै । अंबायै । स्वस्थायै । साधुजनार्चितायै । कौलिक्यै । कुलविद्यायै । सुकुलायै । कुलपूजितायै । कालचक्रभ्रमायै । भ्रान्तायै नमः ।। ३८०

ओं विभ्रमायै नमः । भ्रमनाशिन्यै । वात्याल्यै । मेघमालायै । सुवृष्टयै । सस्यवर्धिन्यै । अकारायै । इकारायै । उकारायै । मकारायै । ऐंकाररूपिण्यै । ह्रींकारबीजरूपायै । क्लींकारांबररूपिण्यै । सर्वाक्षरमयीशक्त्यै । अक्षरार्णवमालिन्यै । सिन्दूरारुणवर्णायै । सिन्दूरतिलकप्रियायै । वश्यायै । वश्यबीजायै । लोकवश्यवि-भाविन्यै नमः ।। ४००

ओं नृपवश्यायै नमः । नृपैः सेव्यायै । नृपवश्यकर्यै । प्रियायै । महिष्यै । नृपमान्यायै । नृपाज्ञायै । नृपनन्दिन्यै । नृपधर्ममय्यै । धन्यायै । धनधान्यवर्धिन्यै । चातुर्वर्ण्यमय्यै । नीत्यै । चतुर्वर्णप्रपूजितायै । सर्वधर्ममय्यै शक्त्यै । चतुराश्रवासिन्यै । ब्राह्मण्यै । क्षत्रियायै । वैश्यायै । शूद्रायै नमः ।। ४२०

ओं अवरवर्णजायै नमः । वेदमार्गरतायै । यज्ञायै । वेदविश्वविभाविन्यै । अस्त्रशस्त्रमय्यै विद्यायै । वरशस्त्रास्त्रधारिण्यै । सुमेधायै । सत्यमेधायै । भद्रकाल्यै । अपराजितायै । गायत्र्यै । सत्कृत्यै । सन्ध्यायै । सावित्र्यै । त्रिपदाश्रयायै । त्रिसन्ध्यायै । त्रिपदायै । धात्र्यै । सुस्वरायै । सामगायिन्यै नमः ।। ४४०

ओं पाञ्चाल्यै नमः । कालिकायै । बालायै । बालक्रीडायै । सनातन्यै । गर्भाधारायै । धरायै । शून्यायै । गर्भाशयनिवासिन्यै । सुरारिघातिन्यै । कृत्यायै । पूतनायै । तिलोत्तमायै । लज्जायै । रसवत्यै । नन्दायै । भवान्यै । पापनाशिन्यै । पट्टांबरधरायै । गीतायै नमः ।। ४६०

ओं सुगीत्यै नमः । गानगोचरायै । सप्तस्वरमय्यै तन्त्र्यै । षड्जमध्यमधैवतायै । मूर्च्छनाग्रामसंस्थानायै । सुस्थानायै । स्थानवासिन्यै । शत्रुमार्गायै । महादेव्यै । वैष्णव्यै । कुलपुत्रिकायै ।

अट्टाट्टहासिन्यै । प्रेतायै । प्रेतासननिवासिन्यै । गीतनृत्यप्रियायै । कामायै । तुष्टिदायै । पुष्टिदायै । क्षमायै । निष्ठायै नमः ।। ४८०

ओं सत्यप्रियायै नमः । प्रज्ञायै । लोकेशायै । तिलोत्तमायै । सविषायै । ज्वालिन्यै । ज्वालायै । विषमोहार्तिनाशिन्यै । विषायै । नागदमन्यै । कुरुकल्पायै(कुल्यायै) । अमृतोद्भवायै । भूतभीति-हरायै । रक्षायै । भूतावेशनिवासिन्यै । रक्षोघ्न्यै । राक्षस्यै । रात्र्यै । दीर्घनिद्रायै । दिवागत्यै नमः ।। ५००

ओं चन्द्रिकायै नमः । चन्द्रकान्त्यै । सूर्यकान्त्यै । निशाचर्यै । डाकिन्यै । शाकिन्यै । शिक्षायै । हाकिन्यै । चक्रवर्तिन्यै । शिवायै । शिवप्रियायै । स्वाङ्गायै । सकलायै । वनदेवतायै । गुरुरूपधरायै । गुर्व्यै । मृत्युमार्यै । विशारदायै । महामार्यै । विनिद्रायै नमः ।। ५२०

ओं तन्द्रायै नमः । मृत्यविनाशिन्यै । चन्द्रमण्डलसंकाशायै । चन्द्रमण्डलवर्तिन्यै । अणिमादिगुणोपेतायै । सुस्पृहायै । कामरूपिण्यै । अष्टसिद्धिप्रदायै । प्रौढायै । दुष्टदानवघातिन्यै । अनादिनिधनायै । पुष्ट्यै । चतुर्बाहवे । चतुर्मुख्यै । चतुःसमुद्रवसनायै । चतुर्वर्गफलप्रदायै । काशपुष्पप्रतीकाशायै । शरत्कुमुदलोचनायै । भूतभव्यभविष्येभ्यै । शैलजायै नमः ।। ५४०

ओं शैलवासिन्यै नमः । वाममार्गरतायै । वामायै । शिववामाङ्गवासिन्यै । वामाचारप्रियायै । तुष्ट्यै । लोपामुद्रायै । प्रबोधिन्यै । भूतात्मने । परमात्मने । भूतभावविभाविन्यै । मङ्गलायै । सुशीलायै । परमार्गप्रबोधिन्यै । दक्षायै । दक्षिणामूर्त्यै । सुदक्षायै । हरिप्रियायै । योगिन्यै । योगनिद्रायै नमः ।। ५६०

ओं योगाङ्गध्यानशालिन्यै नमः । योगपट्टधरायै । मुक्तायै । मुक्तानां परमायै गत्यै । नारसिंह्यै । सु(नृ)जन्मने । त्रिवर्गफल-

दायिन्यै । धर्मदायै । धनदायै । कामदायै । मोक्षदायै । द्युत्यै । साक्षिण्यै । क्षणदायै । आकांक्षायै । दक्षजायै । कोटिरूपिण्यै । क्रतवे । कात्यायन्यै । स्वस्थायै नमः ॥ ५८०

ओं स्वच्छन्दायै नमः । कविप्रियायै । सत्यागमायै । बहिःस्थायै । काव्यशक्त्यै । कवित्वदायै । मेनापुत्र्यै । सत्यै । साध्व्यै । मैनाकभगिन्यै । तडिते । सौदामिन्यै । सुधामायै । सुधाङ्ग्यै । धामशालिन्यै । सौभाग्यदायिन्यै । देव्यै । सुभगायै । द्युतिवर्धिन्यै । श्रियै नमः ॥ ६००

ओं ह्रियै नमः । कृत्तिवसनायै । कृत्तिकायै । कालनाशिन्यै । रक्तबीजवधोद्युक्तायै । सुतन्तवे । बीजसन्तत्यै । जगज्जीवायै । जगद्बीजायै । जगत्त्रयहितैषिण्यै । चामीकरायै । चन्द्रायै । साक्षात्षोडशिकाकलायै । यत्तत्पदानुबन्धायै । यक्षिण्यै । धनदार्चितायै । चित्रिण्यै । चित्रमायायै । विचित्रायै । भुवनेश्वर्यै नमः ॥ ६२०

ओं चामुण्डायै नमः । मुण्डहस्तायै । चण्डमुण्डवधोद्यतायै । अष्टम्यै । एकादश्यै । पूर्णायै । नवम्यै । चतुर्दश्यै । उमायै । कलशहस्तायै । पूर्णकुंभधरायै । धरायै । अभीरवे । भैरव्यै । भीरवे । भीमायै । त्रिपुरभैरव्यै । महाचण्डायै । रौद्रायै । महाभैरवपूजितायै नमः ॥ ६४०

ओं निर्मुण्डायै नमः । हस्तिन्यै । चण्डायै । करालदशनाननायै । करालायै । विकरालायै । घोरघर्घरनादिन्यै । रक्तदन्तायै । ऊर्ध्वकेश्यै । बन्धूककुसुमारुणायै । कादंबर्यै । पलाशायै । काश्मीरकुंकुमप्रियायै । क्षान्त्यै । बहुसुवर्णायै । रत्यै । बहुसुवर्णदायै । मातंगिन्यै । वरारोहायै । मत्तमातंगगामिन्यै नमः ॥ ६६०

ओं हंसायै नमः । हंसगत्यै । हंस्यै । हंसोज्ज्वलशिरोरुहायै । पूर्णचन्द्रप्रतीकाशायै । स्मिताशायै । सुकुण्डलायै । मष्यै । लेखन्यै । लेखायै । सुलेखायै । लेखकप्रियायै । शंखिन्यै । शंखहस्तायै । जलस्थायै । जलदेवतायै । कुरुक्षेत्रायै । वन्यै (कुरुक्षेत्रावन्यै) । काश्यै । मधुरायै नमः ।। ६८०

ओं काञ्च्यै नमः । अवन्तिकायै । अयोध्यायै । द्वारिकायै । मायायै । तीर्थायै । तीर्थकर्यै । प्रियायै । त्रिपुरायै । अप्रमेयायै । कोशस्थायै । कोशवासिन्यै । कौशिक्यै । कुशावर्तायै । कौशांबायै । कोशवर्धिन्यै । कोशदायै । पद्मकोशाक्ष्यै । कुसुंभकुसुमप्रियायै । तोतुलायै नमः ।। ७००

ओं वर्तुलायै नमः । कोट्यै । कोटस्थायै । कोटराश्रयायै । स्वयंभुवे । स्वरूपायै । सुरूपायै । रूपवर्धिन्यै । तेजस्विन्यै । सुदीक्षायै । बलदायै । बलदायिन्यै । महाकोशायै । महागर्तायै । बुद्ध्यै । सदसदात्मिकायै । महाग्रहहरायै । सौम्यायै । विशोकायै । शोकनाशिन्यै नमः ।। ७२०

ओं सात्त्विकायै नमः । सत्त्वसंस्थायै । राजस्यै । रजोवृतायै । तामस्यै । तमोयुक्तायै । गुणत्रयविभाविन्यै । अव्यक्तायै । व्यक्तरूपायै । वेदविद्यायै । शांभव्यै । कल्याण्यै । शांकर्यै । कल्पायै । मनःसंकल्पसन्तत्यै । सर्वलोकमय्यै शक्त्यै । सर्वश्रवणगोचरायै । सर्वज्ञानवत्यै । वाञ्छायै । सर्वतत्त्वप्रबोधिन्यै नमः ।। ७४०

ओं जाग्रत्यै नमः । सुषुप्त्यै । स्वप्नावस्थायै । तुरीयकायै । त्वरायै । मन्दगत्यै । मन्दायै । मदिरामोदमोदिन्यै । पानभूम्यै । पानपात्रायै । पानदानकरोद्यतायै । आघूर्णायै । अरुणनेत्रायै । किञ्चिदव्यक्तभाषिण्यै । आशापूरायै । दीक्षायै । दीक्षादीक्षित-पूजितायै । नागवल्ल्यै । नागकन्यायै । भोगिन्यै नमः ।। ७६०

ओं भोगवल्लभायै नमः । सर्वशास्त्रमय्यै (विद्यायै) । सुस्मृत्यै । धर्मवादिन्यै । श्रुतिस्मृतिधरायै । ज्योष्ठायै । श्रेष्ठायै । पातालवासिन्यै । मीमांसायै । तर्कविद्यायै । सुभक्त्यै । भक्त-वत्सलायै । सुनाभ्यै । यातनायै । यात्यै । गंभीरायै । अभाव-वर्जितायै । नागपाशधरायै मूर्त्यै । अगाधायै । नागकुण्डलायै नमः ।। ७८०

ओं सुचक्रायै नमः । चक्रमध्यस्थायै । चक्रकोणनिवासिन्यै । सर्वमन्त्रमय्यै विद्यायै । सर्वमन्त्राक्षरायै । मधुस्रवायै । स्रवन्त्यै । भ्रामर्यै । भ्रमरालयायै । मातृमण्डलमध्यस्थायै । मातृमण्डल-वासिन्यै । कुमारजनन्यै । क्रूरायै । सुमुख्यै । ज्वरनाशिन्यै । अतीतायै । विद्यमानायै । भाविन्यै । प्रीतिमंजर्यै । सर्वसौख्यवत्यै शक्त्यै नमः ।। ८००

ओं आहारपरिणामिन्यै नमः । पञ्चभूतनिदानायै । भवसागरतारिण्यै । अक्रूरायै । ग्रहवत्यै । विग्रहायै । ग्रहवर्जितायै । रोहिण्यै । भूमिगर्भायै । कालभुवे । कालवर्तिन्यै । कलंकरहितायै नार्यै । चतुःषष्ट्यभिधायिन्यै । जीर्णायै । जीर्णवस्त्रायै । नूतनायै । नववल्लभायै । अजरायै । रतिप्रीत्यै । अतिरागविवर्धिन्यै नमः ।। ८२०

ओं पञ्चवातगत्यै भिन्नायै नमः । पञ्चश्लेष्माशयाधरायै । पञ्चपित्तवत्यै शक्त्यै । पञ्चस्थानविभाविन्यै । उदक्यायै । वृषस्यन्त्यै । त्र्यहप्रस्रविण्यै । रजःशुक्रधरायै शक्त्यै । जरायवे गर्भधारिण्यै । त्रिकालज्ञायै । त्रिलिङ्गायै । त्रिमूर्तिपुरवासिन्यै । अरागायै । शिवतत्त्वायै । कामतत्त्वायै । रागिण्यै । प्राच्यै । अवाच्यै । प्रतीच्यै । उदीच्यै नमः ।। ८४०

ओं विदिशे नमः । दिशायै । अहंकृत्यै । अहंकारायै । बालमायायै । बलिप्रियायै । स्रुचे । स्रुवायै । सामिधेन्यै । सुश्रद्धायै । श्राद्धदेवतायै । मात्रे । मातामह्यै । तृप्त्यै । पितुर्मात्रे । पितामह्यै । स्नुषायै । दौहित्रिण्यै । पुत्र्यै । पौत्र्यै नमः ।। ८६०

ओं नप्त्र्यै नमः । स्वस्रे । प्रियायै । स्तनदायै । स्तनधारायै । विश्वयोन्यै । स्तनन्धयायै । शिशूत्सङ्गधरायै । डोलायै । डोलाक्रीडायै । आभिनन्दिन्यै (डोलाक्रीडाभिनन्दिन्यै) । उर्वश्यै । कदल्यै । केकायै । विशिखायै । शिखिवर्तिन्यै । खट्वाङ्गधारिण्यै । खड्गबाणपुंखानुवर्तिन्यै । लक्ष्य(क्ष)प्राप्तिकरायै । लक्ष्यायै नमः ।। ८८०

ओं सुलक्षायै नमः । शुभलक्षणायै । वर्तिन्यै । सुपथाचारायै । परिखायै । स्वनिर्वृत्यै । प्राकारवलयायै । वेलायै । मर्यादायै । महोदध्यै । पोषण्यै । शोषणीशक्त्यै । दीर्घकेश्यै । सुलोमशायै । ललितायै । मांसलायै । तन्व्यै । वेदवेदाङ्गधारिण्यै । नरासृक्पानमत्तायै । नरमुण्डास्थिभूषणायै नमः ।। ९००

ओं अक्षक्रीडारत्यै नमः । सार्यै । शारिकाशुकभाषिण्यै । शाबर्यै । गारुडीविद्यायै । वारुण्यै । वरुणार्चितायै । वाराह्यै । तुण्डहस्तायै । दंष्ट्रोद्धृतवसुन्धरायै । मीनमूर्त्यै । धरामूर्त्यै । वदान्यायै । प्रतिमाश्रयायै । अमूर्त्यै । निधिरूपायै । सालग्रामशिलायै । शुचये । स्मृतिसंस्काररूपायै । सुसंस्कारायै नमः ।। ९२०

ओं संसृत्यै (संस्कृत्यै) नमः । प्राकृतायै । वेदभाषायै । गाथायै । गीत्यै । प्रहेलिकायै । इडायै । पिङ्गलायै । पिङ्गायै । सुषुम्नायै । सूर्यवाहिन्यै । शुचिश्रवायै । तालुस्थायै । काकिन्यै ।

मृतजीवन्यै । अणुरूपायै । बृहद्रूपायै । लघुरूपायै । गुरुस्थिरायै । स्थावर्यै नमः ।। ९४०

ओं जंगमायै देव्यै नमः । कृतकर्मफलप्रदायै । विषायाक्रान्तदेहायै । निर्विषायै । जितेन्द्रियायै । चित्स्वरूपायै । चिदानन्दायै । परब्रह्मावबोधिन्यै । निर्विकारायै । निर्वैरायै । रत्यै । सत्यायै । अधिवर्तिन्यै । पुरुषायै । अज्ञानभिन्नायै । क्षान्त्यै । कैवल्यदायिन्यै । विविक्तसेविन्यै । प्राज्ञायै । जनितायै नमः ।। ९६०

ओं बहुश्रुतायै नमः । निराहारायै (निरीहायै) । समस्तायै । एकायै । सर्वलोकैकसेवितायै । सेवायै । सेवाप्रियायै । सेव्यायै । सेवाफलविवर्धिन्यै । कलौ कल्किप्रियायै । शीलायै । दुष्टम्लेच्छ-विनाशिन्यै । प्रत्यश्वायै (प्रत्यक्षायै) । धनुषे । यष्टयै । खड्गधार्यै । धरारथायै । अश्वप्लुतायै (अश्वप्लुत्यै) । वल्गायै । सृण्यै नमः ।। ९८०

ओं मत्तायै वारुण्यै नमः । वीरसुवे । वेदमात्रे । वीरश्रियै । वीरनन्दिन्यै । जयश्रियै । जयदीक्षायै । जयदायै । जयवर्धिन्यै । क्षेमंकर्यै । सिद्धिरूपायै । सत्कीर्त्यै । पथिदेवतायै । सौभाग्यायै । शुभाकारायै । सर्वसौभाग्यदायिन्यै । सर्वतीर्थमय्यै मूर्त्यै । सर्वदेवमय्यै प्रभायै । सर्वसिद्धिप्रदायै शक्त्यै । सर्वमङ्गलसंज्ञितायै नमः ।। १०००

# देव्यष्टोत्तरशतनामस्तोत्रम् - १

आदिशक्तिर्महादेवी शांभवी परमेश्वरी ।
ईश्वर्यनीश्वरी शान्तिर्जयन्ती विजया जया ।। १

अंबिका योगिनी सर्वभूतेशी लोकरक्षिणी ।
माहेश्वरी महामाया महारूपा मनोन्मनी ।। २

महाकाली मन्त्रमूर्तिर्ब्राह्मी ब्रह्माण्डधारिणी ।
सर्वसिद्धिप्रदा सिद्धिः सर्वमन्त्रस्वरूपिणी ।। ३

दुर्गपारा गतिर्दुर्गा भक्तचिन्तामणिर्मतिः ।
वेदमूर्तिर्वेदभूतिर्वेदज्ञा व्यवहारिणी ।। ४

भयहन्त्री भगवती रौद्रा रुद्रस्वरूपिणी ।
नारायणी नारसिंही नागयज्ञोपवीतिनी ।। ५

शंखचक्रगदाहस्ता जटामकुटशोभिनी ।
अप्रमाणा प्रमाणज्ञा पुण्या पुण्योपचारिणी ।। ६

आदिमध्यान्तरहिता दुष्टदानवनाशिनी ।
मातंगिनी मनः सिद्धा महिषासुरनाशिनी ।। ७

चन्द्रमण्डलमध्यस्था चण्डमुण्डनिषूदिनी ।
कालरूपा कान्तमूर्तिः कमला कमलालया ।। ८

महाशैलसुता मान्या मन्मथान्तकवल्लभा ।
सहस्रमूर्तिः शर्वाणी सूर्यमण्डलमध्यगा ।। ९

विचक्षणा क्षयोन्मुक्ता क्षीरार्णवनिवासिनी ।
परा परमकल्याणी भवानी परमेश्वरी ।। १०

वाणी वरप्रदा वन्धा वाराही वाक्प्रदायिनी।
कौमारी करुणामूर्तिः काली कामान्तकप्रिया ॥ ११

वाञ्छितार्थप्रदा वन्द्या वैष्णवी विन्ध्यवासिनी।
माता महोन्नता माया मन्दराचलवासिनी ॥ १२

चामुण्डा चन्द्रवदना चण्डिका चारुरूपिणी।
शर्वाणी शंभुमहिषी शिवदूती शिवप्रदा ॥ १३

दयानिधिर्दिव्यरूपा देवी दारिद्र्यनाशिनी।
विधिरूपा विश्वकर्त्री पालिनी विष्णु रूपिणी।
रुद्रस्वरूपा संहर्त्री त्रिगुणा परमेश्वरी ॥ १४

* * *

## देव्यष्टोत्तरशतनामावलिः - १

ओं आदिशक्त्यै नमः। महादेव्यै। शांभव्यै। परमेश्वर्यै। ईश्वर्यै। अनीश्वर्यै। शान्त्यै। जयन्त्यै। विजयायै। जयायै। अंबिकायै। योगिन्यै। सर्वभूतेश्यै। लोकरक्षिण्यै। माहेश्वर्यै। महामायायै। महारूपायै। मनोन्मन्यै। महाकाल्यै। मन्त्रमूर्त्यै नमः ॥ २०

ओं ब्राह्मयै नमः। ब्रह्माण्डधारिण्यै। सर्वसिद्धिप्रदायै। सिद्ध्यै। सर्वमन्त्रस्वरूपिण्यै। दुर्गपारायै। गत्यै। दुर्गायै। भक्तचिन्तामण्यै। मत्यै। वेदमूर्त्यै। वेदभूत्यै। वेदज्ञायै। व्यवहारिण्यै। भयहन्त्र्यै। भगवत्यै। रौद्रायै। रुद्रस्वरूपिण्यै। नारायण्यै। नारसिंह्यै नमः ॥ ४०

ओं नागयज्ञोपवीतिन्यै नमः । शंखचक्रगदाहस्तायै । जटामकुटशोभिन्यै । अप्रमाणायै । प्रमाणज्ञायै । पुण्यायै । पुण्योपचारिण्यै । आदिमध्यान्तरहितायै । दुष्टदानवनाशिन्यै । मातङ्गिन्यै । मनःसिद्धायै । महिषासुरनाशिन्यै । चन्द्रमण्डलमध्यस्थायै । चण्डमुण्डनिषूदिन्यै । कालरूपायै । कान्तमूर्त्यै । कमलायै । कमलालयायै । महाशैलसुतायै । मान्यायै नमः ।। ६०

ओं मन्मथान्तकवल्लभायै नमः । सहस्रमूर्त्यै । शर्वाण्यै । सूर्यमण्डलमध्यगायै । विचक्षणायै । क्षयोन्मुक्तायै । क्षीरार्णवनिवासिन्यै । परायै । परमकल्याण्यै । भवान्यै । परमेश्वर्यै । वाण्यै । वरप्रदायै । वन्द्यायै । वाराह्यै । वाक्प्रदायिन्यै । कौमार्यै । करुणामूर्त्यै । काल्यै । कामान्तकप्रियायै नमः ।। ८०

ओं वाञ्छितार्थप्रदायै नमः । वन्द्यायै । वैष्णव्यै । विन्ध्यवासिन्यै । मात्रे । महोन्नतायै । मायायै । मन्दराचलवासिन्यै । चामुण्डायै । चन्द्रवदनायै । चण्डिकायै । चारुरूपिण्यै । शर्वाण्यै । शंभुमहिष्यै । शिवदूत्यै । शिवप्रदायै । दयानिधये । दिव्यरूपायै । देव्यै । दारिद्र्यनाशिन्यै नमः ।। १००

ओं विधिरूपायै नमः । विश्वकर्त्र्यै । पालिन्यै । विष्णुरूपिण्यै । रुद्रस्वरूपायै । संहर्त्र्यै । त्रिगुणायै । परमेश्वर्यै नमः ।। १०८

* * *

# देव्यष्टोत्तरशतनामस्तोत्रम् - २

नीलरत्ननिभां पद्मजपाक्षवरदाभयान्।
दधतीं चन्द्रमकुटां वन्दे देवीं मनोन्मनीम्॥ १

ओं। गौरी गणेशजननी गिरिराजतनूद्भवा।
गुहांबिका जगन्माता गंगाधरकुटुंबिनी॥ २

वीरभद्रप्रसूर्विश्वव्यापिनी विश्वरूपिणी।
अष्टमूर्त्यात्मिका चाष्टदारिद्र्यशमनी शिवा॥ ३

शांभवी शंकरी बाला भवानी भद्रदायिनी।
मांगल्यदायिनी सर्वमङ्गला मंजुभाषिणी॥ ४

महेश्वरी महामाया मन्त्राराध्या महाबला।
हिमाद्रिजा हैमवती पार्वती पापनाशिनी॥ ५

नारायणांशजा नित्या निरीशा निर्मलाऽम्बिका।
मृडानी मुनिसंसेव्या मानिनी मेनकात्मजा॥ ६

कुमारी कन्यका दुर्गा कलिदोषनिषूदिनी।
कात्यायनी कृपापूर्णा कल्याणी कमलार्चिता॥ ७

सती सत्वमयी सत्या सौभाग्यांबा सरस्वती।
कमलाऽमरसंसेव्या चान्नपूर्णाऽमृतेश्वरी॥ ८

अखिलागमसंस्तुत्या सुखसच्चित्सुधारसा।
बाल्याराधितभूतेशा भानुकोटिसमद्युतिः॥ ९

हिरण्मयी परा सूक्ष्मा शीतांशुकृतशेखरा।
हरिद्राकुंकुमाराध्या सर्वकालसुमंगली॥ १०

सर्वभोगप्रदा सामशिखा वेदान्तलक्षणा।
कर्मब्रह्ममयी कामकलना कांक्षितार्थदा ।। ११

चन्द्रार्कायिततार्टंका चिदंबरशरीरिणी।
श्रीचक्रवासिनी देवी कामेश्वरसती कला ।। १२

माराराति प्रियार्धाङ्गी मार्कण्डेयवरप्रदा।
पुत्रपौत्रप्रदा पुण्या पुरुषार्थप्रदायिनी ।। १३

सत्यधर्मरता सर्वसाक्षिणी शान्तिरूपिणी।
श्यामला बगला चण्डी मातृका भगमालिनी ।। १४

शूलिनी विरजा स्वाहा स्वधा प्रत्यंगिरांबिका।
आर्या दाक्षायणी दीक्षा सर्ववस्तूत्तमोत्तमा ।। १५

शिवाभिधाना श्रीविद्या प्रणवार्थस्वरूपिणी।
ह्रींकारी नादरूपा च त्रिपुरा त्रिगुणांबिका ।। १६

सुन्दरी स्वर्णगौरी च षोडशाक्षरदेवता।
इति देव्याः शतं नाम्नां साष्टकं पापनाशनम्।
मेधां प्रज्ञां श्रीसमृद्धिं ददाति पठनाद्यशः ।। १७

* * *

## देव्यष्टोत्तरशतनामावलिः - २

ओं गौर्यै नमः । गणेशजनन्यै । गिरिराजतनूद्भवायै । गुहांबिकायै । जगन्मात्रे । गंगाधरकुटुंबिन्यै । वीरभद्रप्रसुवे । विश्वव्यापिन्यै । विश्वरूपिण्यै । अष्टमूर्त्यात्मिकायै । अष्टदारिद्र्यशमन्यै । शिवायै । शांभव्यै । शंकर्यै । बालायै । भवान्यै । भद्रदायिन्यै । माङ्गल्यदायिन्यै । सर्वमङ्गलायै । मंजुभाषिण्यै नमः ।। २०

ओं महेश्वर्यै नमः । महामायायै । मन्त्राराध्यायै । महाबलायै । हिमाद्रिजायै । हैमवत्यै । पार्वत्यै । पापनाशिन्यै । नारायणांशजायै । नित्यायै । निरीशायै । निर्मलायै । अंबिकायै । मृडान्यै । मुनिसंसेव्यायै । मानिन्यै । मेनकात्मजायै । कुमार्यै । कन्यकायै । दुर्गायै नमः ।। ४०

ओं कलिदोषनिषूदिन्यै नमः । कात्यायन्यै । कृपापूर्णायै । कल्याण्यै । कमलार्चितायै । सत्यै । सत्वमय्यै । सत्यायै । सौभाग्यांबायै । सरस्वत्यै । कमलायै । अमरसंसेव्यायै । अन्नपूर्णायै । अमृतेश्वर्यै । अखिलागमसंस्तुत्यायै । सुखसच्चित्सुधारसायै । बाल्याराधितभूतेशायै । भानुकोटिसमद्युत्यै । हिरण्मय्यै । परायै नमः ।। ६०

ओं सूक्ष्मायै नमः । शीतांशुकृतशेखरायै । हरिद्राकुंकुमाराध्यायै । सर्वकालसुमङ्गल्यै । सर्वभोगप्रदायै । सामशिखायै । वेदान्तलक्षणायै । कर्मब्रह्ममय्यै । कामकलनायै । कांक्षितार्थदायै । चन्द्रार्कायितताटङ्कायै । चिदंबरशरीरिण्यै । श्रीचक्रवासिन्यै । देव्यै । कामेश्वरसत्यै । कलायै । मारारातिप्रियार्धाङ्ग्यै । मार्कण्डेयवरप्रदायै । पुत्रपौत्रप्रदायै । पुण्यायै नमः ।। ८०

ओं पुरुषार्थप्रदायिन्यै नमः । सत्यधर्मरतायै । सर्वसाक्षिण्यै । शान्तिरूपिण्यै । श्यामलायै । बगलायै । चण्ड्यै । मातृकायै । भगमालिन्यै । शूलिन्यै । विरजायै । स्वाहायै । स्वधायै । प्रत्यंगिरांबिकायै । आर्यायै । दाक्षायण्यै । दीक्षायै । सर्ववस्तूत्तमोत्तमायै । शिवाभिधानायै । श्रीविद्यायै नमः ।। १००

ओं प्रणवार्थस्वरूपिण्यै नमः । ह्रींकार्यै । नादरूपायै । त्रिपुरायै । त्रिगुणांबिकायै । सुन्दर्यै । स्वर्णगौर्यै । षोडशाक्षरदेवतायै नमः ।। १०८

# देवसेनासहस्रनामस्तोत्रम्

(दकारादिथकारान्तवर्णादिमनामानि)

ब्रह्मोवाच-

या हि प्रकृतिषष्ठांशा मम मानसपुत्रिका।
आयुःप्रदा च जगतां सुब्रह्मण्यप्रिया सती॥ १

देवसेनाम्बिका तस्या नामसहस्रमुत्तमम्।
वदामि नारदमुने पठनात्सर्वसिद्धिदम्॥ २

अहमेव मुनिस्तस्य छन्दोऽनुष्टुबुदाहृतः।
देवता देवसेनांबा सुब्रह्मण्यप्रिया परा॥ ३

बीजन्यासादिकं सर्वं मायावर्णैः समाचरेत्।
ततो ध्यायेद्देवसेनां गांगेयस्य प्रियां शुभाम्॥ ४

ध्यानम्-

रक्ताभां रक्तवस्त्रां मणिमयखचितानेकभूषाभिरामां
देवीं माहेन्द्रमान्यां मधुरिपुनयनादुद्भवां देवसेनाम्।
कल्हारं दक्षहस्ते तदितरकरवरं लंबितं सन्दधानां
संस्थां स्कन्दस्य वामे समुदमपि गुहं लोकयन्तीं भजेऽहम्॥

एवं ध्यात्मा समभ्यर्च्य मनसा सादरं नरः।
पठेन्नामसहस्रं तत्स्तवराजमनुत्तमम्।
ओं। देवसेना देवराजतनया देववन्दिता
देवी देवेश्वरी देववनिता देवतार्चिता॥ १

देवरा देवराराध्या देवमानसहंसिका।
देवदारुवनान्तःस्था देवता देवमोहिनी॥ २

देवारिविमुखा देवमुनीड्या देवदेशिका।
दैत्यारितनया दैत्यकण्टकी दैत्यमर्दिनी ॥ ३

दैव्या दैन्यपराधीना दैवज्ञा दैव्यभक्षिणी।
दोर्द्वया दोषहीनाङ्गी दोषाभा दोर्धृतांबुजा ॥ ४

दोषाकरसमानास्या दोषाकरसमर्च्चिता।
दोषघ्नी दोर्लता दोलच्चेला दोलाविहारिणी ॥ ५

दण्डिनी दण्डनीतिस्था दण्डायुधपतिव्रता।
दण्डकारण्यनिलया दण्डितासुरविक्रमा ॥ ६

दक्षा दाक्षायणीप्रता दक्षिणा दक्षिणाश्रिता।
दक्षज्ञा दक्षिणावर्तकंबुकण्ठी दयानिधिः ॥ ७

दयामूर्तिर्दरीदृश्या दारिद्र्यभयनाशिनी।
दशास्यन्दनसंपूज्या दशनाजितचन्द्रिका ॥ ८

दंभा दंभविहीनेड्या दन्तिवक्त्रानुजप्रिया।
दात्री दानवदर्पघ्नी दामोदरमनोहरा ॥ ९

दिव्या दिविषदीशाना दिविषत्पतिपूजिता।
दिव्यौघमण्डला दिव्यमालिनी दिव्यविग्रहा ॥ १०

दिव्यांबरधरा दीनरक्षिका दीनकृन्नुता।
दीक्षिता दीक्षिताराध्या दीप्ता दीप्तविभूषणा ॥ ११

दुष्टदूरा दुराराध्या दुःखघ्नी दुरितान्तकी।
दूती दूतकुलाभीष्टा दूर्वासस्तुतवैभवा ॥ १२

दूरदूरा दूरगन्त्री दूर्वादलसमप्रभा।
दृश्या दृग्जलसंभूता दृक्प्रदा दृक्तमोपहा ॥ १३

द्राविणी द्राविडाधीशा द्रोणपूज्या द्रुमाश्रिता।
धनदा धर्मिणी धर्मविनुता धर्मवर्धिनी ॥ १४

धात्री धात्रीफलप्रीता धिषणाधिपपूजिता।
धिषणेशी धीरनुला धीरवादविलासिनी ॥ १५

धूम्रकेशी धूपमोदा धूर्तघ्नी धृतिमत्प्रिया।
ध्येया ध्येयातिगा धौम्यवसना धौम्यपूजिता ॥ १६

नम्या नगोद्भवासूनुप्रिया नारायणात्मजा।
नारायणाक्षिजलजा नारायणगुरुर्नता ॥ १७

नटी नटेश्वरानन्दा नन्दिनी नन्दगोपमुत्।
नित्या नित्याश्रिता नित्यपतिर्नित्यपतिव्रता ॥ १८

निरंजना निराकारा निर्विकारा निरर्गला।
नीहाराद्रिकृतावासा नीहाराद्रिसुतास्नुषा ॥ १९

नीप्या नीपसुमप्रिता नूपुरारावकोमला।
नूत्ना नूतनभूषाढ्या न्यूनहीना नरेडिता ॥ २०

नौकारूढा नवरसा नववादित्रमेदुरा।
नववीरसमाराध्या नवनागवरेश्वरी ॥ २१

नवग्रहवरा नव्या नव्यांभोजधरा निशा।
पद्माक्षी पद्मसङ्काशा पद्मजा पद्मभासुरा ॥ २२

पराचलकृतोद्वाहा पराचलविहारिणी।
पद्मनाभसुता पद्मा पद्मिनी पद्ममालिनी ॥ २३

पारिजातसुमप्रीता पाशघ्नी पापनाशिनी।
पाठीनवाहसंपूज्या पार्वतीसुतकामिनी ॥ २४

पीनस्तनी पीनपृष्ठा पुण्यदा पुष्पकोमला।
पुष्करा पुष्कराराध्या पुष्करक्षेत्रदेवता ।। २५

पुलिन्दिनीसपत्नी च पुरुहूतात्मसंभवा।
पूज्या पूता पूतनारिविनुता पूर्वगामिनी ।। २६

पुष्टेन्दुनयना पूर्णा पेशला पेशलासना।
फणाधरमणिप्रख्या फणिराजसुपूजिता ।। २७

फुल्लपद्मधरा फुल्लदृष्टिः फलनगाश्रिता।
फालनेत्रसुतानन्दा फालनेत्रप्रियंकरी ।। २८

बला बलारिजा बाला बालारिष्टविनाशिनी।
बालखिल्यनुता बाणहस्ता बाणासुरान्तकी ।। २९

बिंबाधरा बिन्दुमध्यस्थिता बुधवरार्चिता।
बोधायनमुनिप्रीता बोधदा बोधरूपिणी ।। ३०

बन्धूककुसुमप्रीता बन्धूकसुमसन्निभा।
भामिनी भारती भामा भास्करेन्दुसुपूजिता ।। ३१

भीमा भीमेश्वरी भूमा भूतिदा भूपतिप्रिया।
भुवनेशी भोगवती भोगदा भोगवर्धिनी ।। ३२

भोगिराजनुता भोग्या भीमसेनसमर्चिता।
भैमी भेतालनटनरसिका भीष्मसेविता ।। ३३

मन्त्रिणी मन्त्रसारज्ञा मन्त्रवर्णाकृतिर्मतिः।
मनुचक्रधरा मान्या मणिमालाविभूषिता ।। ३४

मानिनी माधवसुता मधुप्रीता मनस्विनी।
मधुरालापमुदितगिरिजातनुजा मही ।। ३५

मातृकावर्णसंक्लृप्ततनुर्मान्धातृपूजिता।
महादेवस्नुषा मीनलोचना मुक्तिदायिनी ।। ३६

मंजुकेशी मंजुहासा मयूरवरवाहना।
मारारातिस्नुषा मारसुखदा मणिमण्डना ।। ३७

मेषवाहा मेघवाहतनुजा मोहितप्रिया।
मरुत्सप्तकसंसेव्या मैनाकनिलयाश्रिता ।। ३८

यक्षिणी यज्ञसंभूता यामिनी यमलोद्भवा।
यन्त्रेश्वरी यमाराध्या यायजूकसमर्चिता ।। ३९

यानारूढा यज्ञशीला युवतिर्यौवनार्चिता।
योगिनी योगदा योग्या योगीन्द्रकुलवन्दिता ।। ४०

रक्षोहन्त्री रणत्पादनूपुरा राघवार्चिता।
रेणुका रणसन्नाहा रणत्किंकिणिमेखला ।। ४१

रावणान्तकरी राज्ञी राजराजसमर्चिता।
रींबीजा रूपिणी रूप्या रमणी रमणोत्सुका ।। ४२

रसायनकरी राधा राधेयी रथसंस्थिता।
रोहिणीशमुखा रोगहीना रोगविनाशिनी ।। ४३

रोचनातिलका रौद्री रौद्रमन्त्रविशारदा।
लक्ष्मीपतिसुता लक्ष्मीर्लंबवामकरांबुजा ।। ४४

लंपटा लकुली लीला लोकालोकविहारिणी।
लोकेश्वरी लोकपूज्या लताकारा ललत्कचा ।। ४५

लोलंबचेला लोलाक्षी लघिमा लिकुचप्रिया।
लोभहीना लब्धकामा लतानिलयसंस्थिता ।। ४६

वनिता वनिताराध्या वन्द्या वन्दारुवत्सला।
वामा वामस्थिता वाणी वाक्प्रदा वारिजप्रिया।। ४७

वारिजासनसन्दृष्टमन्त्रा वाञ्छासुरद्रुमा।
विष्णुपत्नी विषहरा वीणालापविनोदिनी।। ४८

वेणीबन्धा वेणुलोला वेणुगोपालसुन्दरी।
वाञ्छाकल्पलता विश्ववन्दिता विश्वतोमुखी।। ४९

विघ्नेशदेवरा वीशा वीशवाहा विरोचिनी।
वैरोचननुता वैरिहीना वीरेन्द्रवन्दिता।। ५०

विमाना विमनोदूरा विमानस्था विराट् प्रिया।
वज्रिणी वज्रितनया वज्रभूषा विधीडिता।। ५१

विशालाक्षी वीतशोका वनस्था वनदेवता।
वारुणी वनजारूढा वामा वामाङ्गसुन्दरी।। ५२

वल्लीसपत्नी वामोरुर्वसिष्ठादिमपूजिता।
शक्तिः शचीसुता शक्तिधरा शाक्तेयकामिनी।। ५३

श्यामा शाकरगा श्रीजा तथा श्रीः शिवमानसा।
शिवस्नुषा शुभाकारा शुद्धा शैलविहारिणी।। ५४

शैलेन्द्रजाजानिजेष्टप्रदा शैलादिसन्नुता।
शांभवी शङ्करानन्दा शङ्करी शशिशेखरा।। ५५

शारदा शारदाराध्या शरजन्मसती शिवा।
षष्ठी षष्ठीश्वरी षष्ठिदेवी षष्ठ्यधिदेवता।। ५६

षडाननप्रीतिकर्त्री षड्गुणा षण्मुखप्रिया।
षडाधारैकनिलया षोढान्यासमयाकृतिः।। ५७

षड्विधैक्यानुसन्धानप्रीता षड्रसमिश्रिता।
साम्राज्ञी सकला साध्वी समनीस्थानगा सती ॥ ५८

संगीतरसिका सारा सर्वाकारा सनातना।
सनातनप्रिया सत्या सत्यधर्मा सरस्वती ॥ ५९

सहस्रनामसंपूज्या सहस्रांशुसमप्रभा।
स्कन्दोत्साहकरी स्कन्दवामोत्सङ्गनिवासिनी ॥ ६०

सिंहवक्त्रान्तककरी सिंहारूढा स्मितानना।
स्वर्गस्था सुरसंपूज्या सुन्दरी सुदती सुरा ॥ ६१

सुरेश्वरी सुराचार्यपूजिता सुकृतीडिता।
सुरद्रुनिलया सौरमण्डलस्था सुखप्रदा ॥ ६२

सौदामिनीनिभा सुभ्रूः सौन्दर्यजितहृत्प्रिया।
सुरद्रुहासुहृत्सोमयाजिपूज्या सुमार्चिता ॥ ६३

सुमेषुवरदा सौम्या स्कन्दान्तःपुरवासिनी।
स्कन्दकोष्ठगता स्कन्दवामभागस्थिता समा ॥ ६४

स्कन्दाश्लिष्टा स्कन्दहृष्टिः स्कन्दायत्तमनस्विनी।
सनकादिहिता साङ्गा सायुधा सुरवंशजा ॥ ६५

सुरवल्ली सुरलता सुरलोकनिवासिनी।
सुब्रह्मण्यसखी सेना सोमवंश्यनृपेडिता ॥ ६६

सुतप्रदा सूतवायुः सुरसैन्यसुरक्षिका।
सर्वाधारा सर्वभूषा सर्वेशी सर्वपूजिता ॥ ६७

सरसा सादरा सामा स्वामिनी स्वामिमोहिनी।
स्वाम्यद्रिनिलया स्वच्छा स्वतन्त्रा स्वस्तिदा स्वधा ॥ ६८

स्वाहाकृतिः स्वादुशीला स्वरप्रस्तारवित्तमा।
हरस्नुषा हरानन्दा हरिनेत्रसमुद्भवा॥ ६९

हरिणाक्षी हरिप्रेमा हरिदश्वविवर्धिता।
हरसूनुप्रिया हारभासुरा हीरभूषणा॥ ७०

हेमांबुजधरा हेमकाञ्ची हेमाब्जसंस्थिता।
हेमाद्रिनिलया हेलामुदितास्वप्नकामिनी॥ ७१

हेरंबदेवरा होमप्रिया होत्री हिरण्यदा।
हिरण्यगर्भोपज्ञातमन्त्रा हानिविवर्जिता॥ ७२

हिमाचलस्थिता हन्त्री हर्यक्षासनसंस्थिता।
हंसवाहा हंसगतिर्हंसी हंसमनुप्रिया॥ ७३

हस्तपद्मा हस्तयुगा हसिता हसितानना।
हृद्या हृन्मोहसंहर्त्री हृदयस्था हतासुरा॥ ७४

हाकिनी हाकिनीपूज्या हिता हितकरी हरा।
हरिद्रामुदिता हर्म्यसंस्था हलधरेडिता॥ ७५

हालाहलप्रशमनी हलाकृष्टजगत्त्रया।
हल्लीसमुदिता हेयवर्जिता हरकोमला॥ ७६

क्षमा क्षमाकरी क्षाममध्या क्षामविनाशिनी।
क्षामादिविनुता क्षिप्रा क्षणिकाचलसंस्थिता॥ ७७

क्षपेशतुल्यवदना क्षपाचरविनाशिनी।
क्षिप्रसिद्धिप्रदा क्षेमकारिणी क्षेत्ररूपिणी॥ ७८

क्षेत्रेश्वरी क्षेत्रपालपूजिता क्षुद्रनाशिनी।
क्षुद्रग्रहार्तिशमनी क्षौद्रा क्षौद्रांबरावृता॥ ७९

क्षीरान्नरसिका क्षीरा क्षुद्रघण्टा क्षितीश्वरी।
क्षितीशविनुता क्षत्रा क्षत्रमण्डलवन्दिता ।। ८०

क्षयहीना क्षयव्याधिनाशिनी क्षमणापहा।
क्षराक्षरा क्षतारातिमण्डला क्षिप्रगामिनी ।। ८१

क्षणदा क्षणदाराध्या क्षणदाकुटिलालका।
क्षीणदोषा क्षितिरुहा क्षितितत्त्वा क्षमामयी ।। ८२

अमरा चामराधीशतनया चापराजिता।
अपारकरुणाऽद्वैता अन्नदाऽन्नेश्वरी अजा ।। ८३

अजारूढा अजाराध्या अर्जुनाराधिताऽजरा।
अरिष्टशमनी चाच्छा अद्भुता अमृतेश्वरी ।। ८४

अमृताब्धिकृतावासा अमृतासारशीतला।
अमृतानन्दिताऽनादिरमृता अमृतोद्भवा ।। ८५

अनादिमध्या अवधिः अनौपम्यगुणाश्रिता।
आधारहीना चाधारा आधाराधेयवर्जिता ।। ८६

आदित्यमण्डलान्तस्था आश्रिताखिलसिद्धिदा।
आशुमोहितषड्वक्त्रा आशापालसुपूजिता ।। ८७

आरग्वधप्रियाऽऽरार्तिमुदिताऽऽचारशालिनी।
आयुःप्रदाऽऽरोग्यकर्त्री आराध्याऽऽहारभक्षिणी ।। ८८

इन्द्रसेना इन्द्रनुता इन्द्रावरजसंभवा।
इन्दिरारमणप्रीता इन्द्राणीकृतलालना ।। ८९

इन्दीवराक्षी इन्द्राक्षी इरंमदसमप्रभा।
इतिहासश्रुतकथा इष्टा चेष्टार्थदायिनी ।। ९०

इक्ष्वाकुवंश्यसंपूज्या इज्याशीलवरप्रदा।
ईश्वरी चेशतनयगृहिणी चेश्वरप्रिया॥ ९१

ईतिबाधाहरा चेड्या ईषणारहिताश्रिता।
उमासुतप्रिया चोद्यद्रवितुल्या उमाप्रिया॥ ९२

उदारा चोद्यमा चोद्यत्किरणा उरुविक्रमा।
उरुप्रभावा चोर्वीभृन्निलया चोडुगणाश्रिता॥ ९३

ऊरुन्यस्तकरा चोर्ध्वलोकस्था ऊर्ध्वगामिनी।
ऋद्धिदा ऋद्धविनुता ऋणहन्त्री ऋजुप्रिया॥ ९४

एणाङ्कशेखरसुतगाढाश्लिष्टवपुर्धरा।
एणाक्षी चैणमुदिता ऐरंमदसमाम्बरा॥ ९५

ओषधिप्रस्थनिलया ओषधीशानसेविता।
ओमीश्वरी औपलांबा औत्सुक्यवरदायिनी॥ ९६

औदार्यशीला चांबोक्तिमुदिताऽऽपन्निवारिणी।
कंजाक्षी कंजविनुता कंबुकण्ठी कविप्रिया॥ ९७

कमला कमलाराध्या कनत्कनकविग्रहा।
कामिनी कामविनुता कामारातिसुतप्रिया॥ ९८

कामाङ्गनेडिता काम्या कामलोला कलावती।
कांक्षाहीना कामकला किंशुकाभरदच्छदा॥ ९९

कला कुवलयानन्दा कुरुविन्दमणिप्रभा।
कुक्कुटध्वानमुदिता कुक्कुटध्वजकोमला॥ १००

कूर्मासनगता कूर्मपृष्ठाभप्रपदान्विता।
कृत्तिकातनयप्रीता कृत्तिकामण्डलावृता॥ १०१

कृत्तिकाभप्रिया कृत्तिधरा केदारवासिनी।
केवला केवलानन्दा केकिमोदा करद्वया ।। १०२

केकिवाहा केशवेष्टा कैलासाचलवासिनी।
कैवल्यदात्री कैवल्या कोमला कोमलाकृतिः ।। १०३

कोणस्था कोपविमुखा कौण्डिन्यमुनिपूजिता।
कृपापूर्णा कृपालोका कृपाचार्यसमर्चिता ।। १०४

कृतान्ताभयदा कृष्णनुता कृष्णाजिनासना।
कलिहन्त्री कलीशानी कलिकल्मषनाशिनी ।। १०५

कवेरतनयातीरवासिनी कमलासना।
खड्गहस्ता खाद्यलोला खण्डितारातिमण्डला ।। १०६

गण्या गणप्रिया गद्यपद्या गणनवर्जिता।
गणेशावरजप्रेमा गणिकामण्डलोत्सुका ।। १०७

गणेशाराधनोद्युक्ता गायत्री गानलोलुपा।
गाथानेका गालवार्च्या गांगेयसुमनोहरा ।। १०८

गांगेयालिङ्गित तनुः गांगेयपरमोत्सुका।
गिरिगम्या गिरिनुता गिरीशा गिरिशस्नुषा ।। १०९

गिरिजाजानिजजया गिरिसौधा गिरिस्थिता।
गीर्वाणविनुता गीता गीतगन्धर्वमण्डला ।। ११०

गीर्वाणेशतपोलब्धा गीर्वाणी गीष्पतीडिता।
गुह्या गुह्यतमा गुण्या गुह्यकादिसमर्चिता ।। १११

गुरुप्रिया गूढगतिर्गुहानन्दा गुहप्रिया।
गुहेष्टा गुहसंमोहा गुहानन्या गुहोत्सुका ।। ११२

गुहश्रीर्गुहसारज्ञा गुहाश्लिष्टकलेवरा।
गूढा गूढतमा गूढविद्या गोविन्दसंभवा ॥ ११३

गोविन्दसहजासूनुकलत्रं गोपिकानुता।
गोपालसुन्दरी गोपनुता गोकुलनायिका ॥ ११४

गोत्रभित्तनया गोत्रा गोत्रज्ञा गोपतिस्थिता।
गौरवी गौरवर्णाङ्गी गौरी गौर्यर्चनप्रिया ॥ ११५

गण्डकीतीरगा गण्डभेरुण्डा गण्डभैरवी।
गण्डमाला गण्डभूषा गण्डमांगल्यभूषणा ॥ ११६

घटार्गला घटरवा घटतुल्यस्तनद्वया।
घटनारहिता घण्टामणिर्घण्टारवप्रिया ॥ ११७

घटिका घटिकाशून्या घृणापूर्णा घृणिप्रिया।
घटोद्भवमुनिस्तुत्या घुटिकासिद्धिदायिनी ॥ ११८

घूर्णाक्षी घृतकाठिन्या घृतसूक्तानुवादिता।
घृताहुतिप्रिया घृष्टिर्घृष्टकर्त्री घृणानिधिः ॥ ११९

घोरकृत्या घोरकृत्यविमुखा घनमूर्धजा।
चञ्चला चपला चण्डा चटुला चटुलेक्षणा ॥ १२०

चण्डप्रचण्डा चण्डीशा चराचरविनोदिनी।
चतुरा चतुरश्राङ्कचक्रा चक्रधरात्मजा ॥ १२१

चक्रिणी चक्र कबरी चक्रवर्तिसमर्चिता।
चन्द्रकाशा चन्द्रमुखी चन्द्रहासा चमत्कृता ॥ १२२

चन्द्रहासधरा चक्रवाकस्तनभुजान्तरा।
चक्रवालस्थिता चक्रगतिश्चन्दनचर्चिता ॥ १२३

चारुभूषा चारुमुखी चारुकान्तिश्चरुप्रिया।
चार्वाकदूरगा चापधरा चांपेयगन्धिनी ।। १२४

चित्रा चित्ररथा चिन्त्या चित्रसेना चिरन्तना।
चीनाम्बरा चीनदेश्या चिदंबरविहारिणी ।। १२५

चिकुरा चिकुराबद्धा चिरंजीवित्वदायिनी।
चिन्तितार्थप्रदा चिन्तनीया चिन्तामणीश्वरी ।। १२६

चिन्तामणिमयाकल्पा चिन्मयी चिन्तिता चितिः।
च्युतिहीना चूतकुञ्जा चोरघ्नी चोरनाशिनी ।। १२७

चतुराननसंपूज्या चामरग्राहिणीवृता।
चक्षुष्मती चक्षूरोग हारिणी चणकप्रिया ।। १२८

चण्डीसूनुमनःप्रीतिकारिणी चूर्णकुन्तला।
चूर्णप्रिया चलच्चेला चारुकणितकंकणा ।। १२९

चामीकरप्रभा चामीकरभैरवमोहिनी।
चामीकराद्रिनिलया चातुर्योक्तिजितप्रिया ।। १३०

चत्वरा चत्वरगतिश्चतुर्विधपुमर्थदा।
छत्रिणी छत्रवीरेन्द्रा छविदीप्तदिगन्तरा ।। १३१

छायाहीना छविच्छ(च्छि)न्ना छविकर्त्री छवीश्वरी।
छादितारातिनिवहा छायापतिमुखार्चिता ।। १३२

छेत्री छेदितदिङ्नागा छेदहीनपदस्थिता।
जया जयकरी जन्या जनिहीना जनार्चिता ।। १३३

जयन्तसहजा जंभभेदिगोत्रसमुद्भवा।
जह्नुकन्यासुतप्रेमा जह्नुजातीरवासिनी ।। १३४

जटाधरसुतानन्दा जटाहीना जटात्रया ।
जरामरणनिर्मुक्ता जगदानन्ददायिनी ।। १३५

जनार्दनसुता जन्यहीना जलधरासना ।
जलाधारा जपपरा जपापुष्पसमाकृतिः ।। १३६

जाह्नवीपुलिनोत्साहा जाह्नवीतोयमोदिनी ।
जानकीरमणप्रीता जातकर्मविशारदा ।। १३७

जातकाभीष्टदा जातिहीना जात्यन्धमोचिनी ।
जिताखिलेन्द्रियग्रामा जितारिर्जितकामिनी ।। १३८

जितामित्रा जितजगत् जिनदूरा जिनार्चिता ।
जीर्णा जीरकनासाग्रा जीवना जीवनप्रदा ।। १३९

जीवलोकेष्टवरदा जीवा जीवा(व)रसप्रिया ।
जुष्टा जुष्टप्रिया जुष्टहृदया ज्वरनाशिनी ।। १४०

ज्वलत्प्रभावती ज्योत्स्ना ज्योत्स्नामण्डलमध्यगा ।
जयदा जनजाड्यापहारिणी जन्तुतापहा ।। १४१

जगद्धिता जगत्पूज्या जगज्जीवा जनाश्रिता ।
जलजस्था जलोत्पन्ना जलजाभविलोचना ।। १४२

जपाधरा जयानन्दा जंभभिद्वनितानुता ।
झल्लरीवाद्य सुप्रीता झंझावातादिभीतिहा ।। १४३

झर्झरीकृतदैत्यौघा झारिताशेषपातका ।
ज्ञानेश्वरी ज्ञानदात्री ज्ञातलोकान्तरस्थितिः ।। १४४

ज्ञानगम्या ज्ञाततत्वा ज्ञानज्ञेयादिशून्यगा ।
ज्ञेया ज्ञातिविनिर्मुक्ता ज्ञातकान्तान्तराशया ।। १४५

टंकायुधधरा टंकदंभोलिहतदानवा।
टंकिताखिलपापौघा टीकाकर्त्री ठमात्मिका॥ १४६

ठमण्डला ठक्कुराच्या ठक्कुरोपाधिनाशिनी।
डंभहीना डामरीड्या डिंभदा डमरुप्रिया॥ १४७

डाकिनी डाकिनीसेव्या डित्थेशी डिण्डिमप्रिया।
डिण्डिमारावमुदिता डबित्थमृगवाहना॥ १४८

डङ्कारी डुण्डुमारावा डल्लकी डोरसूत्रभृत्।
ढक्कावाद्यधरा ढक्कारावनिष्ठ्यूतदिक्तटा॥ १४९

ढुंढिराजानुजप्रीता ढुण्ढिविघ्नेशदेवरा।
डोलाकेलिकरा डोलाविहारोत्सृष्टकन्दुका॥ १५०

णकारबिन्दुवामस्था णकारज्ञाननिर्णया।
णकारजलजोद्भूता णकारस्वरवादिनी॥ १५१

तन्वी तनुलताभोगा तनुश्यामा तमालभा।
तरुणी तरुणादित्यवर्णा तत्त्वातिशायिनी॥ १५२

तपोलभ्या तपोलोकपूज्या तन्त्रीविदूषिणी।
तात्पर्यावधिका तारा तारकान्तककामिनी॥ १५३

तारेशी तारिणी तिर्यक्सूत्रिणी त्रिदशाधिपा।
त्रिदशाधिपसंपूज्या त्रिनेत्रा त्रिविधा त्रयी॥ १५४

तिल्वाटवीगता तुल्यहीना तुंबुरुवन्दिता।
तुराषाट्संभवा तुर्या तुषाराचलवासिनी॥ १५५

तुष्टा तुष्टिप्रदा तूर्णा तूर्णध्वस्ताखिलामया।
त्रेता त्रेताग्निमध्यस्था त्रय्यन्तोद्गीतवैभवा॥ १५६

तोत्रभृद्वीरसंसेव्या स्थितिः स(तिस)र्गादिकारिणी।
सर्वार्थदात्री प्रकृतिषष्ठांशा परमेश्वरी ।। १५७

वस्वादिगणसंपूज्या ब्रह्ममानसपुत्रिका।
सरिरान्तर्भ्राजमाना स्वर्णरंभग्रहार्चिता ।। १५८

ब्रह्मज्योति र्ब्रह्मपत्नी विद्या श्रीः परदेवता। ओं।
एवं नामसहस्रं ते देवसेनाप्रियङ्करम् ।। १५९

पुत्रप्रदमपुत्राणां आयुरारोग्यवर्धनम्।
बालारिष्टप्रशमनं सर्वसौख्यप्रदायकम् ।। १६०

शुक्रवारे भौमवारे षष्ठ्यां वा कृत्तिकास्वपि।
आवर्तयेद्विशेषेण सर्वान्कामानवाप्नुयात् ।। १६१

यो हि नित्यं पठेद्धीमान् सर्वाः सिद्ध्यन्ति सिद्धयः।
अनेनाभ्यर्चयेद्देवीं बिल्वैर्वा कुंकुमादिभिः।
सर्वान्कामानवाप्यान्ते स्कन्दसायुज्यमाप्नुयात् ।। १६२

(स्कान्दे शंकरसंहितातः)

* * *

## श्रीदेवसेनासहस्रनामावलिः

ओं ह्रीं। देवसेनायै नमः। देवराजतनयायै। देववन्दितायै। देव्यै। देवेश्वर्यै। देववनितायै। देवतार्चितायै। देवरायै। देवराराध्यायै। देवमानसहंसिकायै। देवदारुवनान्तःस्थायै। देवतायै। देवमोहिन्यै। देवारिविमुखायै। देवमुनीड्यायै। देवदेशिकायै। दैत्यारितनयायै। दैत्यकण्टक्यै। दैत्यमर्दिन्यै। दैव्यायै नमः ।। २०

ओं दैन्यपराधीनायै नमः । दैवज्ञायै । दैव्यभक्षिण्यै । दोर्द्वयायै । दोषहीनाङ्ग्यै । दोषाभायै । दोर्धृताम्बुजायै । दोषाकरसमानास्यायै । दोषाकरसमर्चितायै । दोषघ्न्यै । दोर्लतायै । दोलचेलायै (दोर्लतादोलचेलायै) । दोलाविहारिण्यै । दण्डिन्यै । दण्डनीतिस्थायै । दण्डायुधपतिव्रतायै । दण्डकारण्यनिलयायै । दण्डितासुरविक्रमायै । दक्षायै । दाक्षायणीप्रीतायै नमः ।। ४०

ओं दक्षिणायै नमः । दक्षिणाश्रितायै । दक्षज्ञायै । दक्षिणावर्तकंबुकण्ठ्यै । दयनिधये । दयामूर्त्यै । दरीहृयायै । दारिद्र्यभयनाशिन्यै । दशास्यन्दनसंपूज्यायै । दशनाजित-चन्द्रिकायै । दंभायै । दंभविहीनेड्यायै । दन्तिवक्त्रानुजप्रियायै । दात्र्यै । दानवदर्पघ्न्यै । दामोदरमनोहरायै । दिव्यायै । दिविषदी-शानायै । दिविषत्पतिपूजितायै । दिव्यौघमण्डलायै नमः ।। ६०

ओं दिव्यमालिन्यै नमः । दिव्यविग्रहायै । दिव्यांबरधरायै । दीनरक्षिकायै । दीनकृन्नुतायै । दीक्षितायै । दीक्षिताराध्यायै । दीप्तायै । दीप्तविभूषणायै । दुष्टदूरायै । दुराराध्यायै । दुःस्वघ्न्यै । दुरितान्तक्यै । दूत्यै । दूतकुलाभीष्टायै । दूर्वासस्तुतवैभवायै । दूरदूरायै । दूरगन्त्र्यै । दूर्वादलसमप्रभायै । दृश्यायै नमः ।। ८०

ओं दृग्जलसंभूतायै नमः । दृक्प्रदायै । दृक्तमोपहायै । द्राविण्यै । द्राविडाधीशायै । द्रोणपूज्यायै । द्रुमाश्रितायै । धनदायै । धर्मिण्यै । धर्मविनुतायै । धर्मवर्धिन्यै । धात्र्यै । धात्रीफलप्रीतायै । धिषणाधिपपूजितायै । धिषणेश्यै । धीरनुतायै । धीरवाद-विलासिन्यै । धूम्रकेश्यै । धूपमोदायै । धूर्तघ्न्यै नमः ।। १००

ओं धृतिमत्प्रियायै नमः । ध्येयायै । ध्येयातिगायै । धौम्यवसनायै । धौम्यपूजितायै । नम्यायै । नगोद्भवासूनुप्रियायै । नारायणात्मजायै । नारायणाक्षिजलजायै । नारायणगुरवे । नतायै ।

नट्यै । नटेश्वरानन्दायै । नन्दिन्यै । नन्दगोपमुदे । नित्यायै । नित्याश्रितायै । नित्यपत्न्यै । नित्यपतिव्रतायै । निरंजनायै नमः ।। १२०

ओं निराकारायै नमः । निर्विकारायै । निरर्गलायै । नीहाराद्रिकृतावासायै । नीहाराद्रिसुतास्नुषायै । नीप्यायै । नीपसुमप्रीतायै । नूपुरारावकोमलायै । नूत्नायै । नूतनभूषढ्यायै । न्यूनहीनायै । नरेडितायै । नौकारूढायै । नवरसायै । नववादित्र-मेदुरायै । नववीरसमाराध्यायै । नवनागवरेश्वर्यै । नवग्रहवरायै । नव्यायै । नव्यांभोजधरायै नमः ।। १४०

ओं निशायै नमः । पद्माक्ष्यै । पद्मसंकाशायै । पद्मजायै । पद्मभासुरायै । पराजलकृतोद्धाहायै । पराचलविहारिण्यै । पद्मनाभसुतायै । पद्मायै । पद्मिन्यै । पद्ममालिन्यै । पारिजात-सुमप्रीतायै । पाशढ्यै । पापनाशिन्यै । पाठीनवाह संपूज्यायै । पार्वतीसुतकामिन्यै । पीनस्तन्यै । पीनपृष्ठायै । पुण्यदायै । पुष्पकोमलायै नमः ।। १६०

ओं पुष्करायै नमः । पुष्कराराध्यायै । पुष्करक्षेत्रदेवतायै । पुलिन्दिनीसपत्न्यै । पुरुहूतात्मसंभवायै । पूज्यायै । पूतायै । पूतनारिविनुतायै । पूर्वगामिन्यै । पुष्टेन्दुनयनायै । पूर्णायै । पेशलायै । पेशलासनायै । फणाधरमणिप्रख्यायै । फणिराजसुपूजितायै । फुल्लपद्मधरायै । फुल्लदृष्ट्यै । फलनगाश्रितायै । फालनेत्रसुतानन्दायै । फालनेत्रप्रियंकर्यै नमः ।। १८०

ओं बलायै नमः । बलारिजायै । बालायै । बालारिष्ट-विनाशिन्यै । बालखिल्यनुतायै । बाणहस्तायै । बाणासुरान्तक्यै । बिंबाधरायै । बिन्दुमध्यस्थितायै । बुधवरार्चितायै । बोधायमुनि-प्रीतायै । बोधदायै । बोधरूपिण्यै । बन्धूककुसुमप्रीतायै । बन्धूक-

सुमसन्निभायै । भामिन्यै । भारत्यै । भामायै । भास्करेन्दुसु-पूजितायै । भीमायै नमः ॥ २००

ओं भीमेश्वर्यै नमः । भूम्ने । भूतिदायै । भूपतिप्रियायै । भुवनेश्यै । भोगवत्यै । भोगदायै । भोगवर्धिन्यै । भोगिराजनुतायै । भोग्यायै । भीमसेनसमर्चितायै । भैम्यै । भेतालनटनरसिकायै । भीष्मसेवितायै । मन्त्रिण्यै । मन्त्रसारज्ञायै । मन्त्रवर्णाकृत्यै । मत्यै । मनुचक्रधरायै । मान्यायै नमः ॥ २२०

ओं मणिमालाविभूषितायै नमः । मानिन्यै । माधवसुतायै । मधुप्रीतायै । मनस्विन्यै । मधुरालापमुदितगिरिजातनुजायै । मह्यै । मातृकावर्णसंक्लृप्ततनवे । मान्धातृपूजितायै । महादेवस्नुषायै । मीनलोचनायै । मुक्तिदायिन्यै । मंजुकेश्यै । मंजुहासायै । मयूरवरवाहनायै । माराराातिस्नुषायै । मारसुखदायै । मणिमण्ड-नायै । मेषवाहायै । मेघवाहतनुजायै नमः ॥ २४०

ओं मोहितप्रियायै नमः । मरुत्सप्तकसंसेव्यायै । मैनाकनिलयाश्रितायै । यक्षिण्यै । यज्ञसंभूतायै । यामिन्यै । यमलोद्भवायै । यन्त्रेश्वर्यै । यमाराध्यायै । यायजूकसमर्चितायै । यानारूढायै । यज्ञशीलायै । युवत्यै । यौवनार्चितायै । योगिन्यै । योगदायै । योग्यायै । योगीन्द्रकुलवन्दितायै । रक्षोहन्त्र्यै । रणत्पादनूपुरायै नमः ॥ २६०

ओं राघवार्चितायै नमः । रेणुकायै । रणसन्नाहायै । रणत्किंकिणिमेखलायै । रावणान्तकर्यै । राज्ञ्यै । राजराज-समर्चितायै । रींबीजायै । रूपिण्यै । रूप्यायै । रमण्यै । रमणोत्सुकायै । रसायनकर्यै । राधायै । राधेय्यै । रथसंस्थितायै । रोहिणीशमुखायै । रोगहीनायै । रोगविनाशिन्यै । रोचनातिलकायै नमः ॥ २८०

ओं रौद्र्यै नमः । रौद्रमन्त्रविशारदायै । लक्ष्मीपतिसुतायै । लक्ष्म्यै । लंबवामकरांबुजायै । लंपटायै । लकुल्यै । लीलायै । लोकालोकविहारिण्यै । लोकेश्वर्यै । लोकपूज्यायै । लताकारायै । ललत्कचायै । लोलंबचेलायै । लोलाक्ष्यै । लघिम्ने । लिकुचप्रियायै । लोभहीनायै । लब्धकामायै । लतानिलयसंस्थितायै नमः ।। ३००

ओं वनितायै नमः । वनिताराध्यायै । वन्द्यायै । वन्दारु-वत्सलायै । वामायै । वामस्थितायै । वाण्यै । वाक्प्रदायै । वारिजप्रियायै । वारिजासनसन्दृष्टमन्त्रायै । वाञ्छासुरद्रुमायै । विष्णुपत्न्यै । विषहरायै । वीणालापविनोदिन्यै । वेणीबन्धायै । वेणुलोलायै । वेणुगोपालसुन्दर्यै । वाञ्छाकल्पलतायै । विश्व-वन्दितायै । विश्वतोमुख्यै नमः ।। ३२०

ओं विघ्नेशदेवरायै नमः । वीशायै । वीशवाहायै । विरोचिन्यै । वैरोचननुतायै । वैरिहीनायै । वीरेन्द्रवन्दितायै । विमानायै । विमनोदूरायै । विमानस्थायै । विराट्प्रियायै । वज्रिण्यै । वज्रितनयायै । वज्रभूषायै । विधीडितायै । विशालाक्ष्यै । वीतशोकायै । वनस्थायै । वनदेवतायै । वारुण्यै नमः ।। ३४०

ओं वनजारूढायै नमः । वामायै । वामाङ्गसुन्दर्यै । वल्लीसपत्न्यै । वामोरवे । वसिष्ठादिमपूजितायै । शक्त्यै । शचीसुतायै । शक्तिधरायै । शाक्तेयकामिन्यै । श्यामायै । शाकरगायै । श्रीजायै । श्रियै । शिवमानसायै । शिवस्नुषायै । शुभाकारायै । शुद्धायै । शैलविहारिण्यै । शैलेन्द्रजाजानिजेष्टप्रदायै नमः ।। ३६०

ओं शैलादिसन्नुतायै नमः । शांभव्यै । शङ्करानन्दायै । शङ्कर्यै । शशिशेखरायै । शारदायै । शारदाराध्यायै । शरजन्मसत्यै । शिवायै । षष्ठ्यै । षष्ठीश्वर्यै । षष्ठिदेव्यै । षष्ठ्यधिदेवतायै । षडाननप्रीतिकर्त्र्यै ।

षड्गुणायै । षण्मुखप्रियायै । षडाधारैकनिलयायै । षोढान्यासमयाकृत्यै । षड्विधैक्यानुसन्धान प्रीतायै । षड्रसमिश्रितायै नमः ।। ३८०

ओं साम्राज्यै नमः । सकलायै । साध्व्यै । समनीस्थानगायै । सत्यै । संगीतरसिकायै । सारायै । सर्वाकारायै । सनातनायै । सनातनप्रियायै । सत्यायै । सत्यधर्मायै । सरस्वत्यै । सहस्रनामसंपूज्यायै । सहस्रांशुसमप्रभायै । स्कन्दोत्साहकर्यै । स्कन्दवामोत्सङ्गनिवासिन्यै । सिंहवक्त्रान्तककर्यै । सिंहारूढायै । स्मिताननायै नमः ।। ४००

ओं स्वर्गस्थायै नमः । सुरसंपूज्यायै । सुन्दर्यै । सुदत्यै । सुरायै । सुरेश्वर्यै । सुराचार्यपूजितायै । सुकृतीडितायै । सुरद्रुनिलयायै । सौरमण्डलस्थायै । सुखप्रदायै । सौदामिनीनिभायै । सुभ्रुवे । सौन्दर्यजितहृत्प्रियायै । सुरद्रुहासुहृदे । सोमयाजिपूज्यायै । सुमार्चितायै । सुमेषुवरदायै । सौम्यायै । स्कन्दान्तःपुर वासिन्यै नमः ।। ४२०

ओं स्कन्दकोष्ठगतायै नमः । स्कन्दवामभागस्थितायै । समायै । स्कन्दाश्लिष्टायै । स्कन्ददृष्टचै । स्कन्दायत्तमनस्विन्यै । सनकादिहितायै । साङ्गायै । सायुधायै । सुरवंशजायै । सुरवल्लचै । सुरलतायै । सुरलोकनिवासिन्यै । सुब्रह्मण्यसख्यै । सेनायै । सोमवंभ्यनृपेडितायै । सुतप्रदायै । सूतवायवे । सुरसैन्य सुरक्षिकायै । सर्वाधारायै नमः ।। ४४०

ओं सर्वभूषायै नमः । सर्वेभ्यै । सर्वपूजितायै । सरसायै । सादरायै । सामायै । स्वामिन्यै । स्वामिमोहिन्यै । स्वाम्यद्रिनिलयायै । स्वच्छायै । स्वतन्त्रायै । स्वस्तिदायै । स्वधायै ।

स्वाहाकृत्यै । स्वादुशीलायै । स्वरप्रस्तारवित्तमायै । हरस्नुषायै । हरानन्दायै । हरिनेत्रसमुद्भवायै । हरिणाक्ष्यै नमः ।। ४६०

ओं हरिप्रेमायै नमः । हरिदश्वविवर्धितायै । हरसूनुप्रियायै । हारभासुरायै । हीरभूषणायै । हेमांबुजधरायै । हेमकाञ्च्यै । हेमाब्जसंस्थितायै । हेमाद्रिनिलयायै । हेलामुदितास्वप्नकामिन्यै । हेरंबदेवरायै । होमप्रियायै । होत्र्यै । हिरण्यदायै । हिरण्यगर्भोपज्ञातमन्त्रायै । हानिविवर्जितायै । हिमाचलस्थितायै । हन्त्र्यै । हर्यक्षासनसंस्थितायै । हंसवाहायै नमः ।। ४८०

ओं हंसगत्यै नमः । हंस्यै । हंसमनुप्रियायै । हस्तपद्मायै । हस्तयुगायै । हसितायै । हसिताननायै । हृद्यायै । हृन्मोहसंहर्त्र्यै । हृदयस्थायै । हतासुरायै । हाकिन्यै । हाकिनीपूज्यायै । हितायै । हितकर्यै । हरायै । हरिद्रामुदितायै । हर्म्यसंस्थायै । हलधरेडितायै । हालाहलप्रशमन्यै नमः ।। ५००

ओं हलाकृष्टजगत्त्रयायै नमः । हल्लीसमुदितायै । हेय-वर्जितायै । हरकोमलायै । क्षमायै । क्षमाकर्यै । क्षाममध्यायै । क्षाम-विनाशिन्यै । क्षामादिविनुतायै । क्षिप्रायै । क्षणिकाचलसंस्थितायै । क्षपेशतुल्यवदनायै । क्षपाचरविनाशिन्यै । क्षिप्रसिद्धिप्रदायै । क्षेम-कारिण्यै । क्षेत्ररूपिण्यै । क्षेत्रेश्वर्यै । क्षेत्रपालपूजितायै । क्षुद्रनाशिन्यै । क्षुद्रग्रहार्तिशमन्यै नमः ।। ५२०

ओं क्षौद्रायै नमः । क्षौद्रांबरावृतायै । क्षीरान्नरसिकायै । क्षीरायै । क्षुद्रघण्टायै । क्षितीश्वर्यै । क्षितीशविनुतायै । क्षत्रायै । क्षत्रमण्डलवन्दितायै । क्षयहीनायै । क्षयव्याधिनाशिन्यै । क्षमणापहायै । क्षराक्षरायै । क्षतारातिमण्डलायै । क्षिप्रगामिन्यै । क्षणदायै । क्षणदाराध्यायै । क्षणदाकुटिलालकायै । क्षीणदोषायै । क्षितिरुहायै नमः । ५४०

ओं क्षितितत्त्वायै नमः । क्षमामय्यै । अमरायै । अमराधीशतनयायै । अपराजितायै । अपारकरुणायै । अद्वैतायै । अन्नदायै । अन्नेश्वर्यै । अजायै । अजारूढायै । अजाराध्यायै । अर्जुनाराधितायै । अजरायै । अरिष्टशमन्यै । अच्छायै । अद्भुतायै । अमृतेश्वर्यै । अमृताब्धिकृतावासायै । अमृतासारशीतलायै नमः ।। ५६०

ओं अमृतानन्दितायै नमः । अनाद्यै । अमृतायै । अमृतोद्भवायै । अनादिमध्यायै । अवध्यै । अनौपम्यगुणाश्रितायै । आधारहीनायै । आधारायै । आधाराधेयवर्जितायै । आदित्यमण्डलान्तःस्थायै । आश्रिताखिलसिद्धिदायै । आशुमोहितषड्वक्त्रायै । आशापालसुपूजितायै । आरग्वधप्रियायै । आरार्तिमुदितायै । आचारशालिन्यै । आयुःप्रदायै । आरोग्यकर्त्र्यै । आराध्यायै नमः ।। ५८०

ओं आहारभक्षिण्यै नमः । इन्द्रसेनायै । इन्द्रनुतायै । इन्द्रावरजसंभवायै । इन्दिरारमणप्रीतायै । इन्द्राणीकृतलालनायै । इन्दीवराक्ष्यै । इन्द्राक्ष्यै । इरंमदसमप्रभायै । इतिहासश्रुतकथायै । इष्टायै । इष्टार्थदायिन्यै । इक्ष्वाकुवंश्यसंपूज्यायै । इज्याशीलवरप्रदायै । ईश्वर्यै । ईशतनयगृहिण्यै । ईश्वरप्रियायै । ईतिबाधाहरायै । ईड्यायै । ईषणारहिताश्रितायै नमः ।। ६००

ओं उमासुतप्रियायै । उद्यद्रवितुल्यायै । उमाप्रियायै । उदारायै । उद्यमायै । उद्यत्किरणायै । उरुविक्रमायै । उरुप्रभावायै । उर्वीभृन्निलयायै । उडुगणाश्रितायै । ऊरुन्यस्तकरायै । ऊर्ध्वलोकस्थायै । ऊर्ध्वगामिन्यै । ऋद्धिदायै । ऋद्धविनुतायै । ऋणहन्त्र्यै । ऋजुप्रियायै । एणाङ्कशेखरसुत गाढाश्लिष्टवपुर्धरायै । एणाक्ष्यै । एणमुदितायै नमः ।। ६२०

ओं ऐरंमदसमांबरायै नमः । ओषधिप्रस्थनिलयायै । ओषधीशानसेवितायै । ओमीश्वर्यै । औपलांबायै । औत्सुक्य-वरदायिन्यै । औदार्यशीलायै । अंबोक्तिमुदितायै । आपन्निवारिण्यै । कञ्जाक्ष्यै । कंजविनुतायै । कंबुकण्ठ्यै । कविप्रियायै । कमलायै । कमलाराध्यायै । कनत्कनकविग्रहायै । कामिन्यै । कामविनुतायै । कामारातिसुतप्रियायै । कामाङ्गनेडितायै नमः ।। ६४०

ओं काम्यायै नमः । कामलोलायै । कलावत्यै । कांक्षाहीनायै । कामकलायै । किंशुकाभ रदच्छदायै । कलायै । कुवलयानन्दायै । कुरुविन्दमणिप्रभायै । कुक्कुटध्वानमुदितायै । कुक्टध्वजकोमलायै । कूर्मासनगतायै । कूर्मपृष्ठाभप्रपदान्वितायै । कृत्तिकातनयप्रीतायै । कृत्तिकामण्डलावृतायै । कृत्तिकाभप्रियायै । कृत्तिधरायै । केदारवासिन्यै । केवलायै । केवलानन्दायै नमः ।। ६६०

ओं केकिमोदायै नमः । करद्वयायै । केकिवाहायै । केशवेष्टायै । कैलासाचलवासिन्यै । कैवल्यदात्र्यै । कैवल्यायै । कोमलायै । कोमलाकृत्यै । कोणस्थायै । कोपविमुखायै । कौण्डिन्यमुनि-पूजितायै । कृपापूर्णायै । कृपालोकायै । कृपाचार्यसमर्चितायै । कृतान्ताभयदायै । कृष्णनुतायै । कृष्णाजिनासनायै । कलिहन्त्र्यै । कलीशान्यै नमः ।। ६८०

ओं कलिकल्मषनाशिन्यै नमः । कवेरतनयातीरवासिन्यै । कमलासनायै । खड्गहस्तायै । खाद्यलोलायै । खण्डितााराति-मण्डलायै । गण्यायै । गणप्रियायै । गद्यपद्यायै । गणनवर्जितायै । गणेशावरजप्रेमायै । गणिकामण्डलोत्सुकायै । गणेशाराध-नोद्युक्तायै । गायत्र्यै । गानलोलुपायै । गाथानेकायै । गालवार्च्यायै । गांगेयसुमनोहरायै । गांगेयालिङ्गिततनवे । गांगेयपरमोत्सुकायै नमः ।। ७००

ओं गिरिगम्यायै नमः । गिरिनुतायै । गिरीशायै । गिरिश-स्नुषायै । गिरिजाजानिजजयायै । गिरिसौधायै । गिरिस्थितायै । गीर्वाणविनुतायै । गीतायै । गीतगन्धर्वमण्डलायै । गीर्वाणेशत-पोलब्धायै । गीर्वाण्यै । गीष्पतीडितायै । गुह्यायै । गुह्यतमायै । गुण्यायै । गुह्यकादिसमर्चितायै । गुरुप्रियायै । गूढगत्यै । गुहानन्दायै नमः ।। ७२०

ओं गुहप्रियायै नमः । गुहेष्टायै । गुहसंमोहायै । गुहानन्यायै । गुहोत्सुकायै । गुहश्रियै । गुहसारज्ञायै । गुहाश्लिष्टकलेवरायै । गूढायै । गूढतमायै । गूढविद्यायै । गोविन्दसंभवायै । गोविन्दसहजा-सूनुकलत्राय । गोपिकानुतायै । गोपालसुन्दर्यै । गोपनुतायै । गोकुलनायिकायै । गोत्रभित्तनयायै । गोत्रायै । गोत्रज्ञायै नमः ।। ७४०

ओं गोपतिस्थितायै नमः । गौरव्यै । गौरवर्णाङ्ग्यै । गौर्यै । गौर्यर्चेनप्रियायै । गण्डकीतीरगायै । गण्डभेरुण्डायै । गण्डभैरव्यै । गण्डमालायै । गण्डभूषायै । गण्डमांगल्यभूषणायै । घटार्गलायै । घटरवायै । घटतुल्यस्तनद्वयायै । घटनारहितायै । घण्टामणये । घण्टारवप्रियायै । घटिकायै । घटिकाशून्यायै । घृणापूर्णायै नमः ।। ७६०

ओं घृणिप्रियायै नमः । घटोद्भवमुनिस्तुत्यायै । घुटिकासिद्धि-दायिन्यै । घूर्णाक्ष्यै । घृतकाठिन्यायै । घृतसूक्तानुवासितायै । घृताहुतिप्रियायै । घृष्टयै । घृष्टकर्त्र्यै । घृणानिधये । घोरकृत्यायै । घोरकृत्यविमुखायै । घनमूर्धजायै । चञ्चलायै । चपलायै । चण्डायै । चटुलायै । चटुलेक्षणायै । चण्डप्रचण्डायै । चण्डीशायै नमः ।। ७८०

ओं चराचरविनोदिन्यै नमः । चतुरायै । चतुरश्राङ्कचक्रायै । चक्रधरात्मजायै । चक्रिण्यै । चक्रकबर्यै । चक्रवर्ति समर्चितायै ।

चन्द्रकाशायै । चन्द्रमुख्यै । चन्द्रहासायै । चमत्कृतायै । चन्द्रहासधरायै । चक्रवाकस्तनभुजान्तरायै । चक्रवालस्थितायै । चक्रगत्यै । चन्दनचर्चितायै । चारुभूषायै । चारुमुख्यै । चारुकान्त्यै । चरुप्रियायै नमः ।। ८००

ओं चार्वाकदूरगायै नमः । चापधरायै । चांपेयगन्धिन्यै । चित्रायै । चित्ररथायै । चिन्त्यायै । चित्रसेनायै । चिरन्तनायै । चीनांबरायै । चीनदेश्यायै । चिदंबरविहारिण्यै । चिकुरायै । चिकुराबद्धायै । चिरंजीवित्वदायिन्यै । चिन्तितार्थप्रदायै । चिन्तनीयायै । चिन्तामणीश्वर्यै । चिन्तामणिमयाकल्पायै । चिन्मय्यै । चिन्तितायै नमः ।। ८२०

ओं चित्यै नमः । च्युतिहीनायै । चूतकुंजायै । चोरघ्न्यै । चोरनाशिन्यै । चतुराननसंपूज्यायै । चामरग्राहिणीवृतायै । चक्षुष्मत्यै । चक्षूरोगहारिण्यै । चणकप्रियायै । चण्डीसूनुमनः-प्रीतिकारिण्यै । चूर्णकुन्तलायै । चूर्णप्रियायै । चलच्चेलायै । चारुक्वणितकङ्कणायै । चामीकरप्रभायै । चामीकरभैरवमोहिन्यै । चामीकराद्रिनिलयायै । चातुर्योक्तिजितप्रियायै । चत्वरायै नमः ।। ८४०

ओं चत्वरगत्यै नमः । चतुर्विधपुमर्थदायै । छत्रिण्यै । छत्रवीरेन्द्रायै । छविदीप्तदिगन्तरायै । छायाहीनायै । छविच्छ(च्छि)-न्नायै । छविकर्त्र्यै । छवीश्वर्यै । छादितारातिनिवहायै । छायापति-मुखार्चितायै । छेत्र्यै । छेदितदिङ्नागायै । छेदहीनपदस्थितायै । जयायै । जयकर्यै । जन्यायै । जनिहीनायै । जनार्चितायै । जयन्तसहजायै नमः ।। ८६०

ओं जंभभेदिगोत्र समुद्भवायै नमः । जह्नुकन्यासुतप्रेमायै । जह्नुजातीरवासिन्यै । जटाधरसुतानन्दायै । जटाहीनायै । जटात्रयायै ।

जरामरणनिर्मुक्तायै । जगदानन्ददायिन्यै । जनार्दनसुतायै । जन्यहीनायै । जलधरासनायै । जलाधारायै । जपपरायै । जपापुष्पसमाकृत्यै । जाह्नवीपुलिनोत्साहायै । जाह्नवीतोयमोदिन्यै । जानकीरमणप्रीतायै । जातकर्मविशारदायै । जातकाभीष्टदायै । जातिहीनायै नमः ।। ८८०

ओं जात्यन्धमोचिन्यै नमः । जिताखिलेन्द्रियग्रामायै । जितारये । जितकामिन्यै । जितामित्रायै । जितजगते । जिनदूरायै । जिनार्चितायै । जीर्णायै । जीरकनासाग्रायै । जीवनायै । जीवनप्रदायै । जीवलोकेष्टवरदायै । जीवायै । जीवा(व)रसप्रियायै । जुष्टायै । जुष्टप्रियायै । जुष्टहृदयायै । ज्वरनाशिन्यै । ज्वलत्प्रभावत्यै नमः ।। ९००

ओं ज्योत्स्नायै नमः । ज्योत्स्नामण्डलमध्यगायै । जयदायै । जनजाड्यापहारिण्यै । जन्तुतापहायै । जगद्धितायै । जगत्पूज्यायै । जगज्जीवायै । जनाश्रितायै । जलजस्थायै । जलोत्पन्नायै । जलजाभविलोचनायै । जपाधरायै । जपानन्दायै । जंभभिद्व-नितानुतायै । झल्लरीवाद्यसुप्रीतायै । झंझावातादिभीतिहायै । झर्झरीकृतदैत्यौघायै । झारिताशेषपातकायै । ज्ञानेश्वर्यै नमः ।। ९२०

ओं ज्ञानदात्र्यै नमः । ज्ञातलोकान्तरस्थित्यै । ज्ञानगम्यायै । ज्ञाततत्वायै । ज्ञानज्ञेयादिशून्यगायै । ज्ञेयायै । ज्ञातिविनिर्मुक्तायै । ज्ञातकान्तान्तराशयायै । टंकायुधधरायै । टंकदंभोलिहतदानवायै । टंकिताखिलपापौघायै । टीकाकर्त्र्यै । ठमात्मिकायै । ठमण्डलायै । ठक्कुराच्यायै । ठक्कुरोपाधिनाशिन्यै । डंभहीनायै । डामरीड्यायै । डिंभदायै । डमरुप्रियायै नमः ।। ९४०

ओं डाकिन्यै नमः । डाकिनीसेव्यायै । डित्थेश्यै । डिण्डिमप्रियायै । डिण्डिमारावमुदितायै । डबित्थमृगवाहनायै ।

डङ्कार्यै । डुण्डुमारावायै । डल्लक्यै । डोरसूत्रभृते । ढक्कावाद्यधरायै । ढक्कारावनिष्ठचूतदिक्तटायै । ढुण्ढिराजानुजप्रीतायै । ढुण्ढिविघ्नेश- देवरायै । डोलाकेलिकरायै । डोलाविहारोत्सृष्टकन्दुकायै । णकारबिन्दुवामस्थायै । णकारज्ञाननिर्णमायै । णकारजल- जोद्भूतायै । णकारस्वरवादिन्यै नमः ।। ९६०

ओं तन्व्यै नमः । तनुलताभोगायै । तनुश्यामायै । तमालभायै । तरुण्यै । तरुणादित्यवर्णायै । तत्वातिशायिन्यै । तपोलभ्यायै । तपोलोकपूज्यायै । तन्त्रीविदूषिण्यै । तात्पर्यावधिकायै । तारायै । तारकान्तककामिन्यै । तारेश्यै । तारिण्यै । तिर्यक्सूत्रिण्यै । त्रिदशाधिपायै । त्रिदशाधिपसंपूज्यायै । त्रिनेत्रायै । त्रिविधायै नमः ।। ९८०

ओं त्रय्यै नमः । तिल्वाटवीगतायै । तुल्यहीनायै । तुंबुरुवन्दितायै । तुराषाट्संभवायै । तुर्यायै । तुषाराचलवासिन्यै । तुष्टायै । तुष्टिप्रदायै । तूर्णायै । तूर्णध्वस्ताखिलामयायै । त्रेतायै । त्रेताग्निमध्यस्थायै । त्रय्यन्तोद्गीतवैभवायै । तोत्रभृद्वीरसंसेव्यायै । स्थित्यै । सर्गादिकारिण्यै । सर्वार्थदात्र्यै । प्रकृतिषष्ठांशायै । परमेश्वर्यै नमः ।। १०००

ओं वस्वादिगणसंपूज्यायै नमः । ब्रह्ममानसपुत्रिकायै । सरिरान्तर्भ्राजमानायै । स्वर्णरंभग्रहार्चितायै । ब्रह्मज्योतिषे । ब्रह्मपत्न्यै । विद्यायै । श्रीपरदेवतायै नमः ।। १००८

* * *

## श्रीवल्लीसहस्रनामस्तोत्रम्

ब्रह्मोवाच-

शृणु नारद मद्वत्स वल्लीनाम्नां सहस्रकम्।
स्कन्दक्रीडाविनोदादिबोधकं परमाद्भुतम्॥ १

मुनिरस्म्यहमेवास्य छन्दोऽनुष्टुप् प्रकीर्तितम्।
वल्लीदेवी देवता स्यात् व्रां व्रीं व्रूं बीजशक्त्यपि॥ २

कीलकं च तथा न्यस्य व्रां इत्याद्यैः षडंगकम्।
ततः संचिन्तयेद्देवीं वल्लीं स्कन्दपतिव्रताम्॥ ३

श्यामां श्यामालकान्तां द्रुतकनकमणि प्रस्फुरद्दिव्यभूषां
गुञ्जामालाभिरामां शिवमुनितनयां काननेन्द्राभिमान्याम्।
वामे हस्ते च पद्मं तदितरकरवरं लंबितं सन्दधानां
संस्थां सेनानिदक्षे समुदमपि महावल्लिदेवीं भजेऽहम्॥ ४

इत्येवं चिन्तयित्वाऽम्बां मनसाऽभ्यर्च्य सादरम्।
पठेन्नामसहस्रं तत् श्रूयतां स्तोत्रमुत्तमम्॥ ५

ओं वल्ली वल्लीश्वरी वल्लीभवा वल्लीनिभाकृतिः।
वैकुण्ठाक्षिसमुद्भूता विष्णुसंवर्धिता वरा॥ ६

वारिजाक्षा वारिजास्या वामा वामेतराश्रिता।
वन्या वनभवा वन्द्या वनजा वनजासना॥ ७

वनवासप्रिया वादविमुखा वीरवन्दिता।
वामाङ्गा वामनयना वलयादिविभूषणा॥ ८

वनराजसुता वीरा वीणावादविदूषिणी।
वीणाधरा वैणिकर्षिश्रुतस्कन्दकथा वधूः॥ ९

शिवंकरी शिवमुनितनया हरिणोद्भवा ।
हरीन्द्रविनुता हानिहीना हरिणलोचना ।। १०

हरिणाङ्कमुखी हारधरा हरजकामिनी ।
हरस्नुषा हराधिक्यवादिनी हानिवर्जिता ।। ११

इष्टदा चेभसंभीता चेभवक्त्रान्तकप्रिया ।
इन्द्रेश्वरी चेन्द्रनुता चेन्दिरातनयार्चिता ।। १२

इन्द्रादिमोहिनी चेष्टा चेभेन्द्रमुखदेवरा ।
सर्वार्थदात्री सर्वेशी सर्वलोकाभिवन्दिता ।। १३

सद्गुणा सकला साध्वी स्वाधीनपतिरव्यया ।
स्वयंवृतपतिः स्वस्था सुखदा सुखदायिनी ।। १४

सुब्रह्मण्यसखी सुभ्रूः सुब्रह्मण्यमनस्विनी ।
सुब्रह्मण्यांकनिलया सुब्रह्मण्यविहारिणी ।। १५

सुरोद्गीता सुरानन्दा सुधासारा सुधाप्रिया ।
सौधस्था सौम्यवदना स्वामिनी स्वामिकामिनी ।। १६

स्वाम्यद्रिनिलया स्वाम्यहीना सामपरायणा ।
सामवेदप्रिया सारा सारस्था सारवादिनी ।। १७

सरला संघविमुखा संगीतालापनोत्सुका ।
साररूपा सती सौम्या सोमजा सुमनोहरा ।। १८

सुष्ठुप्रयुक्ता सुष्ठूक्तिः सुष्ठुवेषा सुरारिहा ।
सौदामिनीनिभा सौरपुरन्ध्र्युद्गीतवैभवा ।। १९

संपत्करी सदातुष्टा साधुकृत्या सनातना ।
प्रियंगुपालिनी प्रीता प्रियङ्गु मुदितान्तरा ।। २०

प्रियंगुदीपसंप्रीता प्रियङ्गुकलिकाधरा।
प्रियंगुवनमध्यस्था प्रियङ्गुगुडभक्षिणी ।। २१

प्रियंगुवनसन्दृष्टगुहा प्रच्छन्नगामिनी।
प्रेयसी प्रेय आश्लिष्टा प्रेयसीज्ञातसत्कृतिः ।। २२

प्रेयस्युक्तगुहोदन्ता प्रेयस्या वनगामिनी।
प्रेयोविमोहिनी प्रेयः कृतपुष्पेषुविग्रहा ।। २३

पीतांबरप्रियसुता पीतांबरधरा प्रिया।
पुष्पिणी पुष्पसु षमा पुष्पिता पुष्पगन्धिनी ।। २४

पुलिन्दिनी पुलिन्देष्टा पुलिन्दाधिपवर्धिता।
पुलिन्दविद्याकुशला पुलिन्दजनसंवृता ।। २५

पुलिन्दजाता वनिता पुलिन्दकुलदेवता।
पुरुहूतनुता पुण्या पुण्यलभ्याऽपुरातना ।। २६

पूज्या पूर्णकलाऽपूर्वा पौर्णमीयजनप्रिया।
बाला बाललता बाहुयुगला बाहुपङ्कजा ।। २७

बला बलवती बिल्वप्रिया बिल्वदलार्चिता।
बाहुलेयप्रिया बिम्ब फलोष्ठा बिरुदोन्नता ।। २८

बिलोत्तारित वीरेन्द्रा बलाढ्या बालदोषहा।
लवलीकुञ्जसंभूता लवलीगिरिसंस्थिता ।। २९

लावण्यविग्रहा लीला सुन्दरी ललिता लता।
लतोद्भवा लतानन्दा लताकारा लतातनुः ।। ३०

लताक्रीडा लतोत्साहा लताडोलाविहारिणी।
लालिता लालितगुहा ललना ललनाप्रिया ।। ३१

लुब्धपुत्री लुब्धवंश्या लुब्धवेषा लतानिभा।
लाकिनी लोकसंपूज्या लोकत्रयविनोदिनी ॥ ३२

लोभहीना लाभकर्त्री लाक्षारक्तपदांबुजा।
लंबवामेतरकरा लब्धांभोजकरेतरा ॥ ३३

मृगी मृगसुता मृग्या मृगयासक्तमानसा।
मृगाक्षी मार्गितगुहा मार्गक्रीडितवल्लभा ॥ ३४

सरलद्रुकृतावासा सरलायितषण्मुखा।
सरोविहाररसिका सरस्तीरेभभीभरा ॥ ३५

सरसीरुहसंकाशा समाना समनागता।
शबरी शबराराध्या शबरेन्द्रविवर्धिता ॥ ३६

शंबराराातिसहजा शांबरी शांबरीमया।
शक्तिः शक्तिकरी शक्तितनयेष्टा शरासना ॥ ३७

शरोद्भवप्रिया शिञ्जन्मणिभूषा शिवस्नुषा।
सनिर्बन्धसखीपृष्टरहःकेलिनतानना ॥ ३८

दन्तक्षतोहितस्कन्दलीला चैव स्मरानुजा।
स्मराराध्या स्मरारातिस्नुषा स्मरसतीडिता ॥ ३९

सुदती सुमतिः स्वर्णा स्वर्णाभा स्वर्णदीप्रिया।
विनायकानुजसखी चानायकपितामहा ॥ ४०

प्रियमातामहाद्रीशा पितृस्वस्रेयकामिनी।
प्रियमातुलमैनाका सपत्नीजननीधरा ॥ ४१

सपत्नीन्द्रसुता देवराजसोदरसंभवा।
विवधानेकभृद्भक्त संघसंस्तुतवैभवा ॥ ४२

विश्वेश्वरी विश्ववन्द्या विरिञ्चिमुखसन्नुता।
वातप्रमीभवा वायुविनुता वायुसारथिः ॥ ४३

वाजिवाहा वज्रभूषा वज्राद्यायुधमण्डिता।
विनता विनतापूज्या विनतानन्दनेडिता ॥ ४४

वीरासनगता वीतिहोत्राभा वीरसेविता।
विशेषशोभा वैश्येष्टा वैवस्वतभयंकरी ॥ ४५

कामेशी कामिनी काम्या कमला कमलाप्रिया।
कमलाक्षाक्षिसंभूता कुमुदा कुमुदोद्भवा ॥ ४६

कुरंगनेत्रा कुमुदवल्ली कुंकुमशोभिता।
गुञ्जाहारधरा गुञ्जामणिभूषा कुमारगा ॥ ४७

कुमारपत्नी कौमारीरूपिणी कुक्कुटध्वजा।
कुक्कुटारावमुदिता कुक्कुटध्वजमेदुरा ॥ ४८

कुक्कुटाजिप्रिया केलिकरा कैलासवासिनी।
कैलासवासितनयकलत्रं केशवात्मजा ॥ ४९

किराततनया कीर्तिदायिनी कीरवादिनी।
किरातकी किरातेड्या किराताधिपवन्दिता ॥ ५०

कीलकीलितभक्तेड्या कलिहीना कलीश्वरी।
कार्तस्वरसमच्छाया कार्तवीर्यसुपूजिता ॥ ५१

काकपक्षधरा केकिवाहा केकिविहारिणी।
कृकवाकुपताकाढ्या कृकवाकुधरा कृशा ॥ ५२

कृशाङ्गी कृष्णसहजपूजिता कृष्ण वन्दिता।
कल्याणाद्रिकृतावासा कल्याणायातषण्मुखा ॥ ५३

कल्याणी कन्यका कन्या कमनीया कलावती।
कारुण्यविग्रहा कान्ता कान्तक्रीडारतोत्सवा ॥ ५४

कावेरीतीरगा कार्तस्वराभा कामितार्थदा।
विवधासहमानास्या विवधोत्साहितानना ॥ ५५

वीरावेशकरी वीर्या वीर्यदा वीर्यवर्धिनी।
वीरभद्रा वीरनवशतसाहस्रसेविता ॥ ५६

विशाखकामिनी विद्याधरा विद्याधरार्चिता।
शूर्पकारातिसहजा शूर्पकर्णानुजाङ्गना ॥ ५७

शूर्पहोत्री शूर्पणखासहोदरकुलान्तका।
शुण्डालभीता शुण्डालमस्तकाभस्तनद्वया ॥ ५८

शुण्डासमोरुयुगला शुद्धा शुभ्रा शुचिस्मिता।
श्रुता श्रुतप्रियालापा श्रुतिगीता शिखिप्रिया ॥ ५९

शिखिध्वजा शिखिगता शिखिनृत्तप्रिया शिवा।
शिवलिङ्गार्चनपरा शिवलास्येक्षणोत्सुका ॥ ६०

शिवाकारान्तरा शिष्टा शिवा(व)देशानुचारिणी।
शिवस्थानगता शिष्यशिवकामा शिवाढ्या ॥ ६१

शिवतापससंभूता शिवतत्त्वावबोधिका।
शृङ्गाररससर्वस्वा शृङ्गाररसवारिधिः ॥ ६२

शृङ्गारयोनिसहजा शृंगबेरपुराश्रिता।
श्रिताभीष्टप्रदा श्रीड्या श्रीजा श्रीमन्त्रवादिनी ॥ ६३

श्रीविद्या श्रीपरा श्रीशा श्रीमयी श्रीगिरिस्थिता।
शोणाधरा शोभनाङ्गी शोभना शोभनप्रदा ॥ ६४

शेषहीना शेषपूज्या शेषतल्पसमुद्भवा।
शूरसेना शूरपद्मकुलधूमपताकिका॥ ६५

शून्यापाया शून्यकटिः शून्यसिंहासनस्थिता।
शून्यलिङ्गा शून्य शून्या शौरिजा शौर्यवर्धिनी॥ ६६

शरानेकस्यूतकायभक्तसंघाश्रितालया।
शश्वद्वैवधिकस्तुत्या शरण्या शरणप्रदा॥ ६७

अरिगण्डादिभयकृद्यन्त्रोद्वाहिजनार्चिता।
कालकण्ठस्नुषा कालकेशा कालभयङ्करी॥ ६८

अजावाहा चाजामित्रा चाजासुरहरा ह्यजा।
अजामुखीसुताराातिपूजिता चाजराऽमरा॥ ६९

आजानपावनाऽद्वैता आसमुद्रक्षितीश्वरी।
आसेतुहिमशैलार्च्या आकुञ्चित शिरोरुहा॥ ७०

आहाररसिका चाद्या आश्चर्यनिलया तथा।
आधारा च तथाऽऽधेया तथाचाधेयवर्जिता॥ ७१

आनुपूर्व्याक्षरस्था चाशापालसुपूजिता।
उमास्नुषा उमासूनुप्रिया चोत्सवमोदिता॥ ७२

ऊर्ध्वगा ऋद्धिदा ऋद्धा औषधीशातिशायिनी।
औपम्यहीना चौत्सुक्यकरी चौदार्यशालिनी॥ ७३

श्रीचक्रवालातपत्रा श्रीवत्साङ्कितभूषणा।
श्रीकान्तभागिनेयेष्टा श्रीमुखाब्दाधिदेवता॥ ७४

इयं नारी वरनुता पीनोन्नतकुचद्वया।
श्यामा यौवनमध्यस्था का जाता सा गृहाद्दता॥ ७५

एषा संमोहिनी देवी प्रियलक्ष्या वराश्रिता।
कामाऽनुभुक्ता मृगयासक्ताऽऽवेद्या गुहाश्रिता ॥ ७६

पुलिन्दवनितानीता रहः कान्तानुसारिणी।
निशा चाक्रीडिताऽऽबोध्या निर्निद्रा पुरुषायिता ॥ ७७

स्वयंवृता सुदृक् सूक्ष्मा सुब्रह्मण्यमनोहरा।
परिपूर्णाचलारूढा शबरानुमताऽनघा ॥ ७८

चन्द्रकान्ता चन्द्रमुखी चन्दनागरुचर्चिता।
चाटुप्रियोक्तिमुदिता श्रेयोदात्री विचिन्तिता ॥ ७९

मूर्धास्फाटिपुराधीशा मूर्धारूढपदांबुजा।
मुक्तिदा मुदिता मुग्धा मुहुर्ध्येया मनोन्मनी ॥ ८०

चित्रितात्मप्रियाकारा चिदंबरविहारिणी।
चतुर्वेदस्वरारावा चिन्तनीया चिरन्तनी ॥ ८१

कार्तिकेयप्रिया कामसहजा कामिनीवृता।
काञ्चनाद्रिस्थिता कान्तिमती साधुविचिन्तिता ॥ ८२

नारायणसमुद्भूता नागरत्नविभूषणा।
नारदोक्तप्रियोदन्ता नम्या कल्याणदायिनी ॥ ८३

नारदाभीष्टजननी नाकलोकनिवासिनी।
नित्यानन्दा निरतिशया नामसाहस्रपूजिता ॥ ८४

पितामहेष्टदा पीता पीतांबरसमुद्भवा।
पीतांबरोज्ज्वला पीननितंबा प्रार्थिता परा ॥ ८५

गण्या गणेश्वरी गम्या गहनस्था गजप्रिया।
गजारूढा गजगतिः गजाननविनोदिनी ॥ ८६

अगजाननपद्मार्का गजाननसुधाकरा।
गन्धर्ववन्द्या गन्धर्वतन्त्रा गन्धविनोदिनी ॥ ८७

गान्धर्वोद्वाहिता गीता गायत्री गानतत्परा।
गतिर्गहनसंभूता गाढाश्लिष्टशिवात्मजा ॥ ८८

गूढा गूढचरा गुह्या गुह्यकेष्टा गुहाश्रिता।
गुरुप्रिया गुरुस्तुत्या गुण्या गुणिगणाश्रिता ॥ ८९

गुणगण्या गूढरतिः गीर्गीर्विनुतवैभवा।
गीर्वाणी गीतमहिमा गीर्वाणेश्वरसन्नुता ॥ ९०

गीर्वाणाद्रिकृतावासा गजवल्ली गजाश्रिता।
गांगेयवनिता गंगासूनुकान्ता गिरीश्वरी ॥ ९१

देवसेनासपत्नी या देवेन्द्रानुजसंभवा।
देवरेभभयाविष्टा सरस्तीरलुठद्गतिः ॥ ९२

वृद्धवेषगुहाश्लिष्टा भीता सर्वाङ्गसुन्दरी।
निशासमानकबरी निशाकरसमानना ॥ ९३

निर्निद्रिताक्षिकमला निष्ठ्यूतारुणभाधरा।
शिवाचार्यसती शीला शीतला शीतलेक्षणा ॥ ९४

किमेतदिति साशंकभटा धम्मिल्लमार्गिता।
धम्मिल्लसुन्दरी धर्त्री धात्री धातृविमोचिनी ॥ ९५

धनदा धनदप्रीता धनेशी धनदेश्वरी।
धन्या ध्यानपरा धारा धराधारा धराधरा ॥ ९६

धरा धराधरोद्भूता धीरा धीरसमर्चिता।
किं करोषीति संपृष्टगुहा साकूतभाषिणी ॥ ९७

रहो भवतु तद्ब्रूयात् शमित्युक्तप्रिया स्मिता।
कुमारज्ञात काठिन्यकुचाऽधोरुलसत्कटी॥ ९८

कञ्चुकी कञ्चुकाच्छन्ना काञ्चीपट्टपरिष्कृता।
व्यत्यस्तकच्छा विन्यस्तदक्षिणांसांशुकाऽतुला॥ ९९

बन्धोत्सुकितकान्तान्ता पुरुषायितकौतुका।
पूता पूतवती पृष्टा पूतनारिसमर्च्चिता॥ १००

कण्टकोपानहोन्मृत्यद्भक्ता दण्डाट्टहासिनी।
आकाशनिलया चाकाशा आकाशायितमध्यमा॥ १०१

आलोललोलाऽऽलोला चालोलोत्सारिताण्डजा।
रंभोरुयुगला रंभापूजिता रतिरञ्जनी॥ १०२

आरंभवादविमुखा चेलाक्षेपप्रियासहा।
अन्यासंगप्रियोद्विग्ना अभिरामा ह्यनुत्तमा॥ १०३

सत्वरा त्वरिता तुर्या तारिणी तुरगासना।
हंसारूढा व्याघ्रगता सिंहारूढाऽऽरुणाधरा॥ १०४

कृत्तिकाव्रतसंप्रीता कार्तिकेय विमोहिनी।
करण्डमकुटा कामदोग्ध्री कल्पद्रुसंस्थिता॥ १०५

वार्ताव्यङ्ग्यविनोदेष्टा वञ्चिता वञ्चनप्रिया।
स्वाभादीसगुहा स्वाभाबिंबितेष्टा स्वयंग्रहा॥ १०६

मूर्धाभिषिक्तवनिता मरालगतिरीश्वरी।
मानिनी मानिता मानहीना मातामहेडिता॥ १०७

मिताक्षरी मिताहारा मितवादाऽमितप्रभा।
मीनाक्षी मुग्धहसना मुग्धा मूर्तिमती मतिः॥ १०८

माता मातृसखानन्दा मारविद्याऽमृताक्षरा।
अपञ्चीकृतभूतेशी पञ्चीकृतवसुन्धरा ।। १०९

विफलीकृतकल्पद्रुरफलीकृतदानवा ।
अनादिषट्कविपुला चादिषट्काङ्गमालिनी ।। ११०

नवकक्ष्यायितभटा नववीरसमर्चिता ।
रासक्रीडाप्रिया राधाविनुता राधेयवन्दिता ।। १११

राजच्चक्रधरा राज्ञी राजीवाक्षसुता रमा ।
रामा रामादृता रम्या रामानन्दा मनोरमा ।। ११२

रहस्यज्ञा रहोध्येया रंगस्था रेणुकाप्रिया ।
रैणुकेयनुता रेवाविहारा रोगनाशिनी ।। ११३

विटङ्का विगताटंका विटपायितषण्मुखा ।
वीटीप्रिया वीरुड्ध्वजा वीरुट्प्रीतमृगावृता ।। ११४

वीशारूढा वीशरत्नप्रभाऽविदितवैभवा ।
चित्रा चित्ररथा चित्रसेना चित्रितविग्रहा ।। ११५

चित्रसेननुता चित्रवसना चित्रिता चितिः ।
चित्रगुप्तार्चिता चाटुवचना चारुभूषणा ।। ११६

चमत्कृतिश्चमत्कारभ्रमितेष्टा चलत्कचा ।
छायापतङ्गबिंबास्या छविनिर्जितभास्करा ।। ११७

छत्रध्वजादिबिरुदा छात्रहीना छवीश्वरी ।
जननी जनकानन्दा जाह्नवीतनयप्रिया ।। ११८

जाह्नवीतीरगा जानपदस्थाऽजनिमारणा ।
जंभभेदिसुतानन्दा जंभारिविनुता जया ।। ११९

जयावहा जयकरी जयशीला जयप्रदा।
जिनहन्त्री जैनहन्त्री जैमिनीयप्रकीर्तिता॥ १२०

ज्वरघ्नी ज्वलिता ज्वालामाला जाज्वल्यभूषणा।
ज्वालामुखी ज्वलत्केशा ज्वलद्वल्लीसमुद्भवा॥ १२१

ज्वलत्कुण्डान्तावतरद्भक्ता ज्वलनभाजना।
ज्वलनोद्धूपितामोदा ज्वलद्दीसधरावृता॥ १२२

जाज्वल्यमाना जयिनी जितामित्रा जितप्रिया।
चिन्तामणीश्वरी छिन्नमस्ता छेदितदानवा॥ १२३

खड्गधारोन्नटह्रासा खड्गरावणपूजिता।
खड्गसिद्धिप्रदा खेटहस्ता खेटविहारिणी॥ १२४

खट्वाङ्गधरजप्रीता खादिरासन संस्थिता।
खादिनी खादितारातिः खनीशी खनिदायिनी॥ १२५

अंकोलितान्तरगुहा अंकुरद्दन्तपंक्तिका।
न्यङ्कूदरसमुद्भूताऽभङ्गुरापाङ्गवीक्षणा॥ १२६

पितृस्वामिसखी पतिवरारूढा पतिव्रता।
प्रकाशिता पराद्रिस्था जयन्तीपुरपालिनी॥ १२७

फलाद्रिस्था फलप्रीता पाण्ड्यभूपालवन्दिता।
अफला सफला फालदृक्कुमारतपःफला॥ १२८

कुमारकोष्ठगा कुन्तशक्तिचिह्नधरावृता।
स्मरबाणायितालोका स्मरविद्योहिताकृतिः॥ १२९

कालमेघायितकचा कामसौभाग्यवारिधिः।
कान्तालकान्ता कामेड्या करकोन्नर्तन प्रिया॥ १३०

पौनःपुन्यप्रियालाया पंपावाद्यप्रियाधिका।
रमणीया स्मरणीया भजनीया परात्परा॥ १३१

नीलवाजिगता नीलखड्गा नीलांशुकाऽनिला।
रात्रिर्निद्रा भगवती निद्राकर्त्री विभावरी॥ १३२

शुकायमानकायोक्तिः किंशुकाभाधरांबरा।
शुकमानितचिद्रूपा अंशुकान्तप्रसाधिनी॥ १३३

गूढोक्ता गूढगदिता गुहसंकेतिताऽगगा।
धैर्या धैर्यवती धात्रीप्रेषिताऽवाप्तकामना॥ १३४

सन्दष्टा कुक्कुटारावध्वस्तधम्मिल्लजीविनी।
भद्रा भद्रप्रदा भक्तवत्सला भद्रदायिनी॥ १३५

भानुकोटिप्रतीकाशा चन्द्रकोटिसुशीतला।
ज्वलनान्तःस्थिता भक्तविनुता भास्करेडिता॥ १३६

अभंगुरा भारहीना भारती भारतीडिता।
भरतेड्या भारतेशी भुवनेशी भयापहा॥ १३७

भैरवी भैरवीसेव्या भोक्त्री भोगीन्द्रसेविता।
भोगेडिता भोगकरी भेरुण्डा भगमालिनी॥ १३८

भगाराध्या भागवतप्रगीताऽभेदवादिनी।
अन्याऽनन्या निजानन्या स्वानन्याऽनन्यकामिनी॥ १३९

यज्ञेश्वरी यागशीला यज्ञोद्गीतगुहानुगा।
सुब्रह्मण्यगानरता सुब्रह्मण्य सुखास्पदा॥ १४०

कुंभजेड्या कुतुकिता कौसुंभांबरमण्डिता।
संस्कृता संस्कृतारावा सर्वावयवसुन्दरी॥ १४१

भूतेशी भूतिदा भूतिः भूतावेशनिवारिणी।
भूषणायितभूताण्डा भूचक्रा भूधराश्रिता॥ १४२

भूलोकदेवता भूमा भूमिदा भूमिकन्यका।
भूसुरेड्या भूसुरारिविमुखा भानुबिंबगा॥ १४३

पुरातनाऽभूतपूर्वाऽविजातीयाऽधुनातना।
अपरा स्वगताभेदा सजातीयविभेदिनी॥ १४४

अनन्तराऽरविन्दाभा हृद्या हृदयसंस्थिता।
ह्रीमती हृदयासक्ता हृष्टा हृन्मोहभास्करा॥ १४५

हारिणी हरिणी हारा हारायितविलासिनी।
हराराव‌प्रमुदिता हीरदा हीरभूषणा॥ १४६

हीरभृद्विनुता हेमा हेमाचलनिवासिनी।
होमप्रिया हौत्रपरा हुंकारा हुंफडुज्ज्वला॥ १४७

हुताशनेडिता हेलामुदिता हेमभूषणा।
ज्ञानेश्वरी ज्ञाततत्त्वा ज्ञेया ज्ञेयविवर्जिता॥ १४८

ज्ञानं ज्ञानाकृतिर्ज्ञानिविनुता ज्ञातिवर्जिता।
ज्ञाताखिला ज्ञानदात्री ज्ञाताज्ञातविवर्जिता॥ १४९

ज्ञेयानन्या ज्ञेयगुहा विज्ञेयाऽज्ञेयवर्जिता।
आज्ञाकरी पराज्ञाता प्राज्ञा प्रज्ञावशेषिता॥ १५०

स्वाज्ञाधीनामराऽनु ज्ञाकांक्षोन्नृत्यत्सुराङ्गना।
सगजा अगजानन्दा सगुहा अगुहान्तरा॥ १५१

साधारा च निराधारा भूधरस्थाऽतिभूधरा।
सगुणा चागुणाकारा निर्गुणा च गुणाधिका॥ १५२

अशेषा चाविशेषेड्या शुभदा चाशुभापहा।
अतर्क्या व्याकृता न्यायकोविदा तत्वबोधिनी ।। १५३

सांख्योक्ता कपिलानन्दा वैशेषिकविनिश्चिता।
पुराणप्रथिताऽपारकरुणा वाक्प्रदायिनी ।। १५४

संख्याविहीनाऽसंख्येया सुस्मृता विस्मृतापहा।
वीरबाहुनुता वीरकेसरीडितवैभवा ।। १५५

वीरमाहेन्द्रविनुता वीरमाहेश्वरार्चिता।
वीरराक्षससंपूज्या वीरमार्ताण्डवन्दिता ।। १५६

वीरान्तकस्तुता वीरपुरन्दरसमर्चिता।
वीरधीरार्चितपदा नववीरसमाश्रिता ।। १५७

भैरवाष्टकसंसेव्या ब्रह्माद्यष्टकसेविता।
इन्द्राद्यष्टकसंपूज्या वज्राद्यायुधशोभिता ।। १५८

अङ्गावरणसंयुक्ता चानङ्गामृतवर्षिणी।
तमोहन्त्री तपोलभ्या तमालरुचिराऽबला ।। १५९

सानन्दा सहजानन्दा गुहानन्दविवर्धिनी।
परानन्दा शिवानन्दा सच्चिदानन्दरूपिणी ।। १६०

पुत्रदा वसुदा सौख्यदात्री सर्वार्थदायिनी।
योगारूढा योगिवन्द्या योगदा गुहयोगिनी ।। १६१

प्रमदा प्रमदाकारा प्रमादात्री प्रमामयी।
भ्रमापहा भ्रामयित्री प्रधाना प्रबला प्रमा ।। १६२

प्रशान्ता प्रमितानन्दा परमानन्दनिर्भरा।
पारावारा परोत्कर्षा पार्वतीतनयप्रिया ।। १६३

प्रसाधिता प्रसन्नास्या प्राणायामपरार्चिता।
पूजिता साधुविनुता सुरसास्वादिता सुधा।। १६४

स्वामिनी स्वामिवनिता समनीस्था समानिता।
सर्वसंमोहिनी विश्वजननी शक्तिरूपिणी।। १६५

कुमारदक्षिणोत्संगवासिनी भोगमोक्षदा।। ओं।
एवं नामसहस्रं ते प्रोक्तं नारद शोभनम्।। १६६

सुब्रह्मण्यस्य कान्ताया वल्लीदेव्याः प्रियङ्करम्।
नित्यं संकीर्तयेदेतत्सर्वान्कामानवाप्नुयात्।। १६७

शुक्रवारे भौमवारे षष्ठ्यां वा कृत्तिकास्वपि।
संक्रमादिषु कालेषु ग्रहणे चन्द्रसूर्ययोः।। १६८

पठेदिदं विशेषेण सर्वसिद्धिमवाप्नुयात्।
एभिर्नामभिरंबां यः कुङ्कुमादिभिरर्चयेत्।। १६९

यद्यद्वांछति तत्सर्वं अचिराज्जायते ध्रुवम्।
सुब्रह्मण्योऽपि सततं प्रीतः सर्वार्थदो भवेत्।। १७०

पुत्रपौत्रादिदं सर्वसंपत्प्रद मघापहम्।
विद्याप्रदं विशेषेण सर्वरोगनिवर्तकम्।। १७१

दुष्टारिष्टप्रशमनं ग्रहशान्तिकरं वरम्।
जपादस्य प्रभावेण सर्वाः सिद्ध्यन्ति सिद्धयः।
गोपनीयं पठ त्वं च सर्वमाप्नुहि नारद।। १७२

-स्कान्दे शंकरसंहितातः।

# श्रीवल्लीसहस्रनामावलिः

ओं वल्ल्यै नमः । वल्लीश्वर्यै । वल्लीभवायै । वल्लीनिभाकृत्यै । वैकुण्ठाक्षिसमुद्भूतायै । विष्णुसंवर्धितायै । वरायै । वारिजाक्षायै । वारिजास्यायै । वामायै । वामेतराश्रितायै । वन्यायै । वनभवायै । वन्द्यायै । वनजायै । वनजासनायै । वनवासप्रियायै । वादविमुखायै । वीरवन्दितायै । वामाङ्गायै नमः ।। २०

ओं वामनयनायै नमः । वलयादिविभूषणायै । वनराजसुतायै । वीरायै । वीणावादविदूषिण्यै । वीणाधरायै । वैणिकर्षिश्रुतस्कन्द-कथायै । वध्वै । शिवंकर्यै । शिवमुनितनयायै । हरिणोद्भवायै । हरीन्द्रविनुतायै । हानिहीनायै । हरिणलोचनायै । हरिणाङ्कमुख्यै । हारधरायै । हरजकामिन्यै । हरस्नुषायै । हराधिक्यवादिन्यै । हानिवर्जितायै नमः ।। ४०

ओं इष्टदायै नमः । इभसंभीतायै । इभवक्त्रान्तकप्रियायै । इन्द्रेश्वर्यै । इन्द्रनुतायै । इन्दिरातनयार्चितायै । इन्द्रादिमोहिन्यै । इष्टायै । इभेन्द्रमुखदेवरायै । सर्वार्थदात्र्यै । सर्वेश्यै । सर्वलोकाभिवन्दितायै । सद्गुणायै । सकलायै । साध्व्यै । स्वाधीनपत्यै । अव्ययायै । स्वयंवृतपत्यै । स्वस्थायै । सुखदायै नमः ।। ६०

ओं सुखदायिन्यै नमः । सुब्रह्मण्यसख्यै । सुभ्रुवे । सुब्रह्मण्यमनस्विन्यै । सुब्रह्मण्यां कनिलयायै । सुब्रह्मण्यविहारिण्यै । सुरोद्गीतायै । सुरानन्दायै । सुधासारायै । सुधाप्रियायै । सौधस्थायै । सौम्यवदनायै । स्वामिन्यै । स्वामिकामिन्यै । स्वाम्यद्रिनिलयायै । स्वाम्यहीनायै । सामपरायणायै । सामवेदप्रियायै । सारायै । सारस्थायै नमः ।। ८०

ओं सारवादिन्यै नमः । सरलायै । संघनिमुखायै । संगीतालापनोत्सुकायै । साररूपायै । सत्यै । सौम्यायै । सोमजायै । सुमनोहरायै । सुष्ठुप्रयुक्तायै । सुष्ठूक्त्यै । सुष्ठुवेषायै । सुरारिहायै । सौदामिनीनिभायै । सौरपुरन्ध्र्युद्गीतवैभवायै । संपत्कर्यै । सदातुष्टायै । साधुकृत्यायै । सनातनायै । प्रियंगुपालिन्यै नमः ॥ १००

ओं प्रीतायै नमः । प्रियंगुमुदितान्तरायै । प्रियंगुदीपसंप्रीतायै । प्रियंगुकलिकाधरायै । प्रियंगुवनमध्यस्थायै । प्रियंगुगुडभक्षिण्यै । प्रियंगुवनसन्दृष्टगुहायै । प्रच्छन्नगामिन्यै । प्रेयस्यै । प्रेयआश्लिष्टायै । प्रेयसीज्ञातसत्कृतये । प्रेयस्युक्तगृहोदन्तायै । प्रेयस्या वनगामिन्यै । प्रेयोविमोहिन्यै । प्रेयःकृतपुष्पेषुविग्रहायै । पीतांबरप्रियसुतायै । पीतांबरधरायै । प्रियायै । पुष्पिण्यै । पुष्पसुषमायै नमः ॥ १२०

ओं पुष्पितायै नमः । पुष्पगन्धिन्यै । पुलिन्दिन्यै । पुलिन्देष्टायै । पुलिन्दाधिपवर्धितायै । पुलिन्दविद्याकुशलायै । पुलिन्दजनसंवृतायै । पुलिन्दजातायै । वनितायै । पुलिन्दकुल-देवतायै । पुरुहूतनुतायै । पुण्यायै । पुण्यलभ्यायै । अपुरातनायै । पूज्यायै । पूर्णकलायै । अपूर्वायै । पौर्णमीयजनप्रियायै । बालायै । बाललतायै नमः ॥ १४०

ओं बाहुयुगलायै नमः । बाहुपंकजायै । बलायै । बलवत्यै । बिल्वप्रियायै । बिल्वदलार्चितायै । बाहुलेयप्रियायै । बिंबफलोष्ठायै । बिरुदोन्नतायै । बिलोत्तारितवीरेन्द्रायै । बलाढ्यायै । बालदोषहायै । लवलीकुञ्जसंभूतायै । लवलीगिरिसंस्थितायै । लावण्यविग्रहायै । लीलायै । सुन्दर्यै । ललितायै । लतायै । लतोद्भवायै नमः ॥ १६०

ओं लतानन्दायै नमः । लताकारायै । लतातनवे । लताक्रीडायै । लतोत्साहायै । लताडोलाविहारिण्यै । लालितायै । लालितगुहायै । ललनायै । ललनाप्रियायै । लुब्धपुत्र्यै । लुब्धवंश्यायै । लुब्धवेषायै । लतानिभायै । लाकिन्यै । लोकसंपूज्यायै । लोकत्रयविनोदिन्यै । लोभहीनायै । लाभकर्त्र्यै । लाक्षारक्तपदांबुजायै नमः ॥ १८०

ओं लंबवामेतरकरायै नमः । लब्धांभोजकरेतरायै । मृग्यै । मृगसुतायै । मृग्यायै । मृगयासक्तमानसायै । मृगाक्ष्यै । मार्गितगुहायै । मार्गक्रीडितवल्लभायै । सरलद्रुकृतावासायै । सरलायितषण्मुखायै । सरोविहाररसिकायै । सरस्तीरेभभीभरायै । सरसीरुहसंकाशायै । समानायै । समनागतायै । शबर्यै । शबराराध्यायै । शबरेन्द्रविवर्धितायै । शंबरारातिसहजायै नमः ॥ २००

ओं शांबर्यै नमः । शांबरीमयायै । शक्त्यै । शक्तिकर्यै । शक्तितनयेष्टायै । शरासनायै । शरोद्भवप्रियायै । शिञ्जन्मणिभूषायै । शिवस्नुषायै । सनिर्बन्धसखीपृष्टरहःकेलिनताननायै । दन्तक्षतोहितस्कन्दलीलायै । स्मरानुजायै । स्मराराध्यायै । स्मरारातिस्नुषायै । स्मरसतीडितायै । सुदत्यै । सुमत्यै । स्वर्णायै । स्वर्णाभायै । स्वर्णदीप्रियायै नमः ॥ २२०

ओं विनायकानुजसख्यै नमः । अनायकपितामहायै । प्रियमातामहाद्रीशायै । पितृस्वस्रेयकामिन्यै । प्रियमातुलमैनाकायै । सपत्नीजननीधरायै । सपत्नीन्द्रसुतायै । देवराजसोदरसंभवायै । विबधानेकभृद्भक्त संघसंस्तुतवैभवायै । विश्वेश्वर्यै । विश्ववन्द्यायै । विरिञ्चिमुखसन्नुतायै । वातप्रमीभवायै । वायुविनुतायै । वायु-

सारथ्यै । वाजिवाहायै । वज्रभूषायै । वज्राद्यायुधमण्डितायै । विनतायै । विनतापूज्यायै नमः ।। २४०

ओं विनतानन्दनेडितायै । वीरासनगतायै । वीतिहोत्राभायै । वीरसेवितायै । विशेषशोभायै । वैश्येष्टायै । वैवस्वतभयंकर्यै । कामेश्यै । कामिन्यै । काम्यायै । कमलायै । कमलाप्रियायै । कमलाक्षाक्षिसंभूतायै । कुमुदायै । कुमुदोद्भवायै । कुरङ्गनेत्रायै । कुमुदवल्ल्यै । कुंकुमशोभितायै । गुञ्जाहारधरायै । गुञ्जामणिभूषायै नमः ।। २६०

ओं कुमारगायै नमः । कुमारपत्न्यै । कौमारीरूपिण्यै । कुक्कुटध्वजायै । कुक्कुटारावमुदितायै । कुक्कुटध्वजमेदुरायै । कुक्कुटाजिप्रियायै । केलिकरायै । कैलासवासिन्यै । कैलासवासितनयकलत्राय । केशवात्मजायै । किराततनयायै । कीर्तिदायिन्यै । कीरवादिन्यै । किरातक्यै । किरातेड्यायै । किराताधिपवन्दितायै । कीलकीलितभक्तेड्यायै । कलिहीनायै । कलीश्वर्यै नमः ।। २८०

ओं कार्तस्वरसमच्छायायै नमः । कार्तवीर्यसुपूजितायै । काकपक्षधरायै । केकिवाहायै । केकिविहारिण्यै । कृकवाकुपताकाढ्यायै । कृकवाकुधरायै । कृशायै । कृशाङ्ग्यै । कृष्णसहजपूजितायै । कृष्णवन्दितायै । कल्याणाद्रिकृतावासायै । कल्याणायातषण्मुखायै । कल्याण्यै । कन्यकायै । कन्यायै । कमनीयायै । कलावत्यै । कारुण्यविग्रहायै । कान्तायै नमः ।। ३००

ओं कान्तक्रीडारतोत्सवायै नमः । कावेरीतीरगायै । कार्तस्वराभायै । कामितार्थदायै । विवधासहमानास्यायै । विवधोत्साहितानननायै । वीरावेशकर्यै । वीर्यायै । वीर्यदायै । वीर्यवर्धिन्यै । वीरभद्रायै । वीरनवशतसाहस्रसेवितायै । विशाखकामिन्यै ।

विद्याधरायै। विद्याधरार्चितायै। शूर्पकारातिसहजायै। शूर्पकर्णा-नुजाङ्गनायै । शूर्पहोत्र्यै । शूर्पणखासहोदरकुलान्तकायै । शुण्डालभीतायै नमः ।। ३२०

ओं शुण्डालमस्तकाभस्तनद्वयायै नमः । शुण्डासमोरु-युगलायै । शुद्धायै। शुभ्रायै। शुचिस्मितायै। श्रुतायै। श्रुतप्रिया-लापायै । श्रुतिगीतायै । शिखिप्रियायै । शिखिध्वजायै । शिखिगतायै । शिखिनृत्तप्रियायै। शिवायै। शिवलिङ्गार्चनपरायै। शिवलास्येक्षणोत्सुकायै । शिवाकारान्तरायै । शिष्टायै । शिव(वा)देशानुचारिण्यै। शिवस्थानगतायै। शिष्यशिवकामायै नमः ।। ३४०

ओं शिवाढ्यायै नमः। शिवतापससंभूतायै। शिवतत्त्वाव-बोधिकायै। शृङ्गाररससर्वस्वायै। शृङ्गाररसवारिधये। शृङ्गारयो-निसहजायै। शृङ्गबेरपुराश्रितायै। श्रिताभीष्टप्रदायै। श्रीड्यायै। श्रीजायै। श्रीमन्त्रवादिन्यै। श्रीविद्यायै। श्रीपरायै। श्रीशायै। श्रीमय्यै । श्रीगिरिस्थितायै । शोणाधरायै । शोभनाङ्ग्यै । शोभनायै । शोभनप्रदायै नमः ।। ३६०

ओं शेषहीनायै नमः । शेषपूज्यायै । शेषतल्पसमुद्भवायै । शूरसेनायै। शूरपद्मकुलधूमपताकिकायै। शून्यापायायै। शून्यकट्यै । शून्यसिंहासनस्थितायै। शून्यलिङ्गायै। शून्यशून्यायै। शौरिजायै। शौर्यवर्धिन्यै। शरानेकस्यूतकायभक्तसंघाश्रितालयायै। शश्वद्वैवधि-कस्तुत्यायै। शरण्यायै। शरणप्रदायै। अरिगण्डादिभयकृद्यन्त्रो-द्धाहिजनार्चितायै। कालकण्ठस्नुषायै। कालकेशायै। कालभयंकर्यै नमः ।। ३८०

ओं अजावाहायै नमः । अजामित्रायै । अजासुरहरायै । अजायै । अजामुखीसुताराातिपूजितायै । अजरायै । अमरायै । आजानपावनायै । अद्वैतायै । आसमुद्रक्षितीश्वर्यै । आसेतुहिमशैलाच्चर्यायै । आकुञ्चितशिरोरुहायै । आहाररसिकायै । आद्यायै । आश्चर्यनिलयायै । आधारायै । आधेयायै । आधेयवर्जितायै । आनुपूर्व्यक्लृप्तरथायै । आशापालसुपूजितायै नमः ॥ ४००

ओं उमास्नुषायै नमः । उमासूनुप्रियायै । उत्सवमोदितायै । ऊर्ध्वगायै । ऋद्धिदायै । ऋद्धायै । ओषधीशातिशायिन्यै । औपम्यहीनायै । औत्सुक्यकर्यै । औदार्यशालिन्यै । श्रीचक्रवालातपत्रायै । श्रीवत्सांकितभूषणायै । श्रीकान्तभागिनेयेष्टायै । श्रीमुखाब्दाधिदेवतायै । अस्यै । नार्यै । वरनुतायै । पीनोन्नतकुचद्वयायै । श्यामायै । यौवनमध्यस्थायै नमः ॥ ४२०

ओं कस्यै नमः । जातायै । तस्यै । गृहाद्दतायै । एतस्यै । संमोहिन्यै । देव्यै । प्रियलक्ष्यायै । वराश्रितायै । कामायै । अनुभुक्तायै । मृगयासक्तायै । आवेद्यायै । गुहाश्रितायै । पुलिन्दवनितानीतायै । रहःकान्तानुसारिण्यै । निशायै । आक्रीडितायै । आबोध्यायै । निर्निद्रायै नमः ॥ ४४०

ओं पुरुषायितायै नमः । स्वयंवृतायै । सुदृशे । सूक्ष्मायै । सुब्रह्मण्यमनोहरायै । परिपूर्णाचलारूढायै । शबरानुमतायै । अनघायै । चन्द्रकान्तायै । चन्द्रमुख्यै । चन्दनागरुचर्चितायै । चाटुप्रियोक्तिमुदितायै । श्रेयोदात्र्यै । विचिन्तितायै । मूर्धास्फाटिपुराधीशायै । मूर्धारूढपदांबुजायै । मुक्तिदायै । मुदितायै । मुग्धायै । मुहुर्ध्येयायै नमः ॥ ४६०

ओं मनोन्मन्यै नमः । चित्रितात्मप्रियाकारायै । चिदम्बर-विहारिण्यै । चतुर्वेदस्वरारावायै । चिन्तनीयायै । चिरन्तन्यै । कार्तिकेयप्रियायै । कामसहजायै । कामिनीवृतायै । कांचनाद्रि-स्थितायै । कान्तिमत्यै। साधुविच्चिन्तितायै। नारायणसमुद्भूतायै । नागरत्नविभूषणायै। नारदोक्तप्रियोदन्तायै। नम्यायै। कल्याण-दायिन्यै। नारदाभीष्टजनन्यै। नाकलोकनिवासिन्यै। नित्यानन्दायै नमः ।। ४८०

ओं निरतिशयायै नमः । नामसाहस्रपूजितायै । पितामहे-ष्टदायै । पीतायै। पीतांबरसमुद्भवायै। पीतांबरोज्ज्वलायै। पीननि-तंबायै। प्रार्थितायै। परायै। गण्यायै। गणेश्वर्यै। गम्यायै। गहन-स्थायै । गजप्रियायै। गजारूढायै। गजगत्यै। गजाननविनोदिन्यै । अगजाननपद्मार्कायै । गजाननसुधाकरायै । गन्धर्ववंद्यायै नमः ।। ५००

ओं गन्धर्वतन्त्रायै नमः । गन्धविनोदिन्यै । गान्धर्वोद्वा-हितायै । गीतायै। गायत्र्यै। गानतत्परायै। गत्यै। गहनसंभूतायै। गाढाश्लिष्टशिवात्मजायै। गूढायै। गूढचरायै। गुह्यायै। गुह्यकेष्टायै। गुहाश्रितायै । गुरुप्रियायै । गुरुस्तुत्यायै । गुण्यायै । गुणिगणा-श्रितायै । गुणगण्यायै। गूढरत्यै नमः ।। ५२०

ओं गिरे नमः । गीर्नुतवैभवायै। गीर्वाण्यै। गीतमहिमायै। गीर्वाणेश्वरसन्नुतायै । गीर्वाणाद्रिकृतावासायै । गजवल्ल्यै । गजाश्रितायै । गांगेयवनितायै । गंगासूनुकान्तायै । गिरीश्वर्यै । दैवसेनासपत्न्यै। यस्यै। देवेन्द्रानुजसंभवायै। देवरेभभयाविष्टायै। सरस्तीरलुठद्भत्यै। वृद्धवेषगुहाश्लिष्टायै। भीतायै। सर्वाङ्गसुन्दर्यै। निशासमानकबर्यै नमः ।। ५४०

ओं निशाकरसमाननायै नमः । निर्निद्रिताक्षिकमलायै । निष्ठ्यूतारुणभाधरायै । शिवाचार्यसत्यै । शीतायै । शीतलायै । शीतलेक्षणायै । किमेतदिति साशंकभटायै । धम्मिल्लमार्गितायै । धम्मिल्लसुन्दर्यै । धत्र्यै । धात्र्यै । धातृविमोचिन्यै । धनदायै । धनदप्रीतायै । धनेश्यै । धनदेश्वर्यै । धन्यायै । ध्यानपरायै । धारायै नमः ॥ ५६०

ओं धराधारायै नमः । धराधरायै । धरायै । धराधरोद्भूतायै । धीरायै । धीरसमर्चितायै । किंकरोषीतिसंपृष्टगुहायै । साकूत-भाषिण्यै । रहो भवतु तद्ब्रूयात् शमित्युक्तप्रियायै । स्मितायै (अस्मितायै) । कुमारज्ञातकाठिन्यकुचायै । अर्धोरुलसत्कट्यै । कञ्चुक्यै । कञ्चुकाच्छन्नायै । काञ्चीपट्टपरिष्कृतायै । व्यत्यस्तकच्छायै । विन्यस्तदक्षिणांसांशुकायै । अतुलायै । बन्धोत्सुकितकान्तान्तायै । पुरुषायितकौतुकायै नमः ॥ ५८०

ओं पूतायै नमः । पूतवत्यै । पृष्टायै । पूतनारिसमर्चितायै । कण्टकोपानहोभृत्यद्धत्तायै । दण्डाट्टहासिन्यै । आकाशनिलयायै । आकाशायै । आकाशायितमध्यमायै । आलोललोलायै । आलोलायै । आलोलोत्सारिताण्डजायै । रंभोरुयुगलायै । रंभापूजितायै । रतिरञ्जन्यै । आरंभवादविमुखायै । चेलाक्षेपप्रियासहायै । अन्यासङ्गप्रियोद्विग्नायै । अभिरामायै । अनुत्तमायै नमः ॥ ६००

ओं सत्वरायै नमः । त्वरितायै । तुर्यायै । तारिण्यै । तुरगासनायै । हंसारूढायै । व्याघ्रगतायै । सिंहारूढायै । अरुणाधरायै । कृत्तिकाव्रतसंप्रीतायै । कार्तिकेयविमोहिन्यै । करण्डमकुटायै । कामदोग्ध्र्यै । कल्पद्रुसंस्थितायै । वार्ताव्यङ्गविनो-

देष्टायै । वञ्चितायै । वञ्चनप्रियायै । स्वाभादीसगुहायै । स्वाभाबिंबितेष्टायै । स्वयंगृहायै नमः ।। ६२०

ओं मूर्धाभिषिक्तवनितायै नमः । मरालगत्यै । ईश्वर्यै । मानिन्यै । मानितायै । मानहीनायै । मातामहेडितायै । मिताक्षर्यै । मिताहारायै । मितवादायै । अमितप्रभायै । मीनाक्ष्यै । मुग्धहसनायै । मुग्धायै । मूर्तिमत्यै । मत्यै । मात्रे । मातृसखानन्दायै । मारविद्यायै । अमृताक्षरायै नमः ।। ६४०

ओं अपञ्चीकृतभूतेश्यै नमः । पञ्चीकृतवसुन्धरायै । विफलीकृतकल्पद्रुवे । अफलीकृतदानवायै । अनादिषट्कविपुलायै । आदिषट्काङ्गमालिन्यै । नवकक्ष्यायितभटायै । नववीरसमर्चितायै । रासक्रीडाप्रियायै । राधाविनुतायै । राधेयवन्दितायै । राजचक्रधरायै । राज्यै । राजीवाक्षसुतायै । रमायै । रामायै । रामादृतायै । रम्यायै । रामानन्दायै । मनोरमायै नमः ।। ६६०

ओं रहस्यज्ञायै नमः । रहोध्येयायै । रङ्गस्थायै । रेणुकाप्रियायै । रैणुकेयनुतायै । रेवाविहारायै । रोगनाशिन्यै । विटङ्कायै । विगताटंकायै । विटपायितषण्मुखायै । वीटीप्रियायै । वीरुड्-ध्वजायै । वीरुट्प्रीतमृगावृतायै । वीशारूढायै । वीशरत्नप्रभायै । अविदितवैभवायै । चित्रायै । चित्ररथायै । चित्रसेनायै । चित्रितविग्रहायै नमः ।। ६८०

ओं चित्रसेननुतायै नमः । चित्रवसनायै । चित्रितायै । चित्यै । चित्रगुप्तार्चितायै । चाटुवसनायै । चारुभूषणायै । चमत्कृत्यै । चमत्कारभ्रमितेष्टायै । चलत्कचायै । छायापतङ्गबिम्बास्यायै । छविनिर्जितभास्करायै । छत्रध्वजादिबिरुदायै । छात्रहीनायै ।

छवीश्वर्यै । जनन्यै । जनकानन्दायै । जाह्नवीतनयप्रियायै । जाह्नवीतीरगायै । जानपदस्थायै नमः ।। ७००

ओं अजनिमारणायै नमः । जंभभेदिसुतानन्दायै । जंभारिविनुतायै । जयायै । जयावहायै । जयकर्यै । जयशीलायै । जयप्रदायै । जिनहन्त्र्यै । जैनहन्त्र्यै । जैमिनीयप्रकीर्तितायै । ज्वरघ्न्यै । ज्वलितायै । ज्वालामालायै । जाज्वल्यभूषणायै । ज्वालामुख्यै । ज्वलत्केशायै । ज्वलद्वल्लीसमुद्भवायै । ज्वलत्कुण्डान्तावतरद्भक्तायै । ज्वलनभाजनायै नमः ।। ७२०

ओं ज्वलनोद्धूपितामोदायै । ज्वलद्दीपधरावृतायै । जाज्वल्यमानायै । जयिन्यै । जितामित्रायै । जितप्रियायै । चिन्तामणीश्वर्यै । छिन्नमस्तायै । छेदितदानवायै । खड्गधारोन्नटद्दासायै । खड्गरावणपूजितायै । खड्गसिद्धिप्रदायै । खेटहस्तायै । खेटविहारिण्यै । खट्वाङ्गधरजप्रीतायै । खादिरासनसंस्थितायै । खादिन्यै । खादितारात्यै । खनीश्यै । खनिदायिन्यै नमः ।। ७४०

ओं अङ्कोलितान्तरगुहायै नमः । अङ्कुरद्दन्तपंक्तिकायै । न्यङ्कूदरसमुद्भूतायै । अभङ्गुरापाङ्गवीक्षणायै । पितृस्वामिसख्यै । पतिवरारूढायै । पतिव्रतायै । प्रकाशितायै । पराद्रिस्थायै । जयन्तीपुरपालिन्यै । फलाद्रिस्थायै । फलप्रीतायै । पाण्ड्यभूपालवन्दितायै । अफलायै । सफलायै । फालदृक्कुमारतपःफलायै । कुमारकोष्ठगायै । कुन्तशक्ति चिह्नधरावृतायै । स्मरबाणायितालोकायै । स्मरविद्योहिताकृतये नमः ।। ७६०

ओं कालमेघायितकचायै नमः । कामसौभाग्यवारिधये । कान्तालकान्तायै । कामेड्यायै । करकोन्नर्तनप्रियायै । पौनःपुन्यप्रियालापायै । पंपावाद्यप्रियाधिकायै । रमणीयायै । स्मरणीयायै ।

भजनीयायै । परात्परायै । नीलवाजिगतायै । नीलखड्गायै । नीलांशुकायै । अनिलायै । रात्र्यै । निद्रायै । भगवत्यै । निद्राकर्त्र्यै । विभावर्यै नमः ।। ७८०

ओं शुकायमानकायोक्त्यै नमः । किंशुकाभाधरांबरायै । शुकमानितचिद्रूपायै । अंशुकान्तप्रसाधिन्यै । गूढोक्तायै । गूढगदितायै । गुहसंकेतितायै । अगगायै । धैर्यायै । धैर्यवत्यै । धात्रीप्रेषितायै । अवाप्तकामनायै । सन्दष्टायै । कुक्कुटारावध्वस्त-धम्मिल्लजीविन्यै । भद्रायै । भद्रप्रदायै । भक्तवत्सलायै । भद्रदायिन्यै । भानुकोटिप्रतीकाशायै । चन्द्रकोटिसुशीतलायै नमः ।। ८००

ओं ज्वलनान्तःस्थितायै नमः । भक्तविनुतायै । भास्करेडितायै । अभंगुरायै । भारहीनायै । भारत्यै । भारतीडितायै । भरतेड्यायै । भारतेश्यै । भुवनेश्यै । भयापहायै । भैरव्यै । भैरवीसेव्यायै । भोक्त्र्यै । भोगीन्द्रसेवितायै । भोगेडितायै । भोगकर्त्र्यै । भेरुण्डायै । भगमालिन्यै । भगाराध्यायै नमः ।। ८२०

ओं भागवतप्रगीतायै नमः । अभेदवादिन्यै । अन्यायै । अनन्यायै । निजानन्यायै । स्वानन्यायै । अनन्यकामिन्यै । यज्ञेश्वर्यै । यागशीलायै । यज्ञोद्गीतगुहानुगायै । सुब्रह्मण्यगानरतायै । सुब्रह्मण्य-सुखास्पदायै । कुंभजेड्यायै । कुतुकितायै । कौसुंभांबरमण्डितायै । संस्कृतायै । संस्कृतारावायै । सर्वावयवसुन्दर्यै । भूतेश्यै । भूतिदायै नमः ।। ८४०

ओं भूत्यै नमः । भूतावेशनिवारिण्यै । भूषणायित-भूताण्डायै । भूचक्रायै । भूधराश्रितायै । भूलोकदेवतायै । भूम्ने । भूमिदायै । भूमिकन्यकायै । भूसुरेड्यायै । भूसुरारिविमुखायै ।

भानुबिम्बगायै । पुरातनायै । अभूतपूर्वायै । अविजातीयायै । अधुनातनायै । अपरायै । स्वगताभेदायै । सजातीयविभेदिन्यै । अनन्तरायै नमः ।। ८६०

ओं अरविन्दाभायै नमः । हृद्यायै । हृदयसंस्थितायै । ह्रीमत्यै । हृदयासक्तायै । हृष्टायै । हृन्मोहभास्करायै । हारिण्यै । हरिण्यै । हारायै । हारायितविलासिन्यै । हरारावप्रमुदितायै । हीरदायै । हीरभूषणायै । हीरभृद्विनुतायै । हेमायै । हेमाचलनिवासिन्यै । होमप्रियायै । हौत्रपरायै । हुंकारायै नमः ।। ८८०

ओं हुंफडुज्ज्वलायै नमः । हुताशनेडितायै । हेलामुदितायै । हेमभूषणायै । ज्ञानेश्वर्यै । ज्ञाततत्त्वायै । ज्ञेयायै । ज्ञेयविवर्जितायै । ज्ञानाय । ज्ञानाकृत्यै । ज्ञानिविनुतायै । ज्ञातिवर्जितायै । ज्ञाताखिलायै । ज्ञानदात्र्यै । ज्ञाताज्ञातविवर्जितायै । ज्ञेयानन्यायै । ज्ञेयगुहायै । विज्ञेयायै । अज्ञेयवर्जितायै । आज्ञाकर्यै नमः ।। ९००

ओं पराज्ञातायै नमः । प्राज्ञायै । प्रज्ञावशोषितायै । स्वाज्ञाधीनामरायै । अनुज्ञाकांक्षोन्मृत्यत्सुराङ्गनायै । सगजायै । अगजानन्दायै । सगुहायै । अगुहान्तरायै । साधारायै । निराधारायै । भूधरस्थायै । अतिभूधरायै । सगुणायै । अगुणाकारायै । निर्गुणायै । गुणाधिकायै । अशेषायै । अविशेषेड्यायै । शुभदायै नमः ।। ९२०

ओं अशुभापहायै नमः । अतर्क्यायै । व्या(अव्या)कृतायै । न्यायकोविदायै । तत्वबोधिन्यै । सांख्योक्तायै । कपिलानन्दायै । वैशेषिकविनिश्चितायै । पुराणप्रथितायै । अपारकरुणायै । वाक्प्रदायिन्यै । संख्याविहीनायै । असंख्येयायै । सुस्मृतायै । विस्मृतापहायै । वीरबाहुनुतायै । वीरकेसरीडितवैभवायै ।

वीरमाहेन्द्रविनुतायै। वीरमाहेश्वरार्चितायै। वीरराक्षससंपूज्यायै नमः ।। ९४०

ओं वीरमार्ताण्डवन्दितायै नमः । वीरान्तकस्तुतायै । वीरपुरन्दरसमर्चितायै। वीरधीरार्चितपदायै। नववीरसमाश्रितायै । भैरवाष्टकसंसेव्यायै। ब्रह्माद्यष्टकसेवितायै। इन्द्राद्यष्टकसंपूज्यायै। वज्राद्यायुधशोभितायै। अङ्गावरणसंयुक्तायै। अनङ्गामृतवर्षिण्यै। तमोहन्त्र्यै। तपोलभ्यायै। तमालरुचिरायै। अबलायै। सानन्दायै। सहजानन्दायै। गुहानन्दविवर्धिन्यै। परानन्दायै। शिवानन्दायै नमः ।। ९६०

ओं सच्चिदानन्दरूपिण्यै नमः । पुत्रदायै । वसुदायै । सौख्यदात्र्यै । सर्वार्थदायिन्यै । योगारूढायै । योगिवन्द्यायै । योगदायै । गुह्ययोगिन्यै । प्रमदायै । प्रमदाकारायै । प्रमादात्र्यै । प्रमामय्यै। भ्रमापाहायै। भ्रामयित्र्यै। प्रधानायै। प्रबलायै। प्रमायै। प्रशान्तायै। प्रमितानन्दायै नमः ।। ९८०

ओं परमानन्दनिर्भरायै नमः । पारावारायै । परोत्कर्षायै । पार्वतीतनयप्रियायै । प्रसाधितायै । प्रसन्नास्यायै । प्राणायाम-परार्चितायै । पूजितायै । साधुविनुतायै । सुरसास्वादितायै । सुधायै । स्वामिन्यै। स्वामिवनितायै। समनीस्थायै। समानितायै । सर्वसंमोहिन्यै। विश्वजनन्यै। शक्तिरूपिण्यै। कुमारदक्षिणोत्संग-वासिन्यै। भोगमोक्षदायै नमः ।। १०००

# श्रीप्रत्यङ्गिरासहस्रनामस्तोत्रम्

ईश्वर उवाच-

शृणु देवि प्रवक्ष्यामि सांप्रतं त्वत्पुरःसरम्।
सहस्रनाम परमं प्रत्यंगिरायाः सिद्धये।। १

सहस्रनामपाठे यः सर्वत्र विजयी भवेत्।
पराभवो न चास्यास्ति सभायां वासने रणे।। २

तथा तुष्टा भवेद्देवी प्रत्यंगिराऽस्य पाठतः।
यथा भवति देवेशि साधकः शिव एव हि।। ३

अश्वमेधसहस्राणि वाजपेयस्य कोटयः।
सकृत्पाठेन जायंते प्रसन्ना यत्परा भवेत्।। ४

भैरवोऽस्य ऋषिश्छंदोऽनुष्टुप् देवी समीरिता।
प्रत्यंगिरा विनियोगः स्यात्सर्वसंपत्तिहेतवे।। ५

सर्वकार्येषु संसिद्धिः सर्वसंपत्तिदा भवेत्।
एवं ध्यात्वा पठेद्देवीं यदीच्छेदात्मनो हितम्।। ६

अथ ध्यानम्।

आशांबरा मुक्तकचा घनच्छविर्ध्येया सचर्मासिकरा विभूषणा।
दंष्ट्रोग्रवक्त्रा ग्रसिताहिता त्वया प्रत्यंगिरा शंकरतेजसेरिता।। ७

अस्य श्रीप्रत्यंगिरसहस्रनामस्तोत्रमहामंत्रस्य भैरव ऋषिः, अनुष्टुप् छंदः। श्रीप्रत्यंगिरा देवता। ह्रीं बीजं, श्रीं शक्तिः, स्वाहा कीलकं, विद्यासिद्ध्यर्थे नामपारायणे विनियोगः।।

ओं देवी प्रत्यंगिरा सेव्या शिरसा शशिशेखरा।
समाऽसमा धर्मिणी च समस्तसुरशेमुषी।। ८

सर्वसंपत्तिजननी समदा सिंधुसेविनी।
शंभुसीमंतिनी सोमाराध्या च वसुधारसा॥ ९

रसा रसवती वेला वन्या च वनमालिनी।
वनजाक्षी वनचरी वनी वनविनोदिनी॥ १०

वेगिनी वेगदा वेगबला स्थानबलाधिका।
कला कलाप्रिया कौली कोमला कालकामिनी॥ ११

कमला कमलास्या च कमलस्था कलावती।
कुलीना कुटिला कांता कोकिला कलभाषिणी॥ १२

कीरकेलिः कला काली कपालिन्यपि कालिका।
केशिनी च कुशावर्त्ता कौशांबी केशवप्रिया॥ १३

काशी काशापहा कांशी संकाशा केशदायिनी।
कुंडली कुंडलीस्था च कुंडलांगदमंडिता॥ १४

कुशापाशी कुमुदिनी कुमुदप्रीतिवर्धिनी।
कुंदप्रिया कुंदरुचिः कुरंगमदमोदिनी॥ १५

कुरंगनयना कुंदा कुरुवृंदाभिनंदिनी।
कुसुंभकुसुमा किंचित्कणत्किंकिणिका कटुः॥ १६

कठोरा करणा कंठा कौमुदी कंबुकण्ठिनी।
कपर्दिनी कपटिनी कठिनी कालकंठिका॥ १७

किब्रुहस्ता कुमारी च कुरुंदा कुसुमप्रिया।
कुंजरस्था कुंजरता कुंभिकुंभस्तनद्वया॥ १८

कुंभिगा करभोरुश्च कदलीदलशालिनी।
कुपिता कोटरस्था च कंकाली कंदशेखरा॥ १९

एकांतवासिनी किंचित्कंपमानशिरोरुहा।
कादंबरी कदंबस्था कुंकुमी प्रेमधारिणी ।। २०

कुटुंबिनी प्रियायुक्ता क्रतुः क्रतुकरी क्रिया।
कात्यायनी कृत्तिका च कार्तिकेयप्रवर्त्तिनी ।। २१

कामपत्नी कामधात्री कामेशी कामवंदिता।
कामरूपा कामगतिः कामाक्षी काममोहिता ।। २२

खड्गिनी खेचरी खंजा खंजरीटेक्षणा खला।
खरगा खरनासा च खरास्या खेलनप्रिया ।। २३

खरांशुः खेटिनी खट्वा खरखट्वांगधारिणी।
खलखंडिनिविख्यातिः खंडिता खंडवी स्थिरा ।। २४

खंडप्रिया खंडखाद्या सेंदुखंडा च खंजनी।
गंगा गोदावरी गौरी गोमत्यपि च गौतमी ।। २५

गया गौर्गजी गगना गारुडी गरुडध्वजा।
गीता गीतप्रिया गोत्रा गोत्रक्षयकरी गदा ।। २६

गिरिभूपालदुहिता गोगा गोकुलवर्धिनी।
घनस्तनी घनरुचिर्घनोरुर्घननिःस्वना ।। २७

घूत्कारिणी घूतकरी घुघूकपरिवारिता।
घंटानादप्रिया घंटा घना घोटप्रवाहिनी ।। २८

घोररूपा च घोरा च घूनीप्रीतिर्घनांजनी।
घृताची घनमुष्टिश्च घटा घंटा घटामृता ।। २९

घटास्या घटनादा च घातपातनिवारिणी।
चंचरीका चकोरी च चामुंडा चीरधारिणी ।। ३०

चातुरी चपला चारुश्चला चेला चलाचला।
चतुश्चिरंतना चाका चिया चामीकरच्छविः ॥ ३१

चापिनी चपला चंपूश्चितिः चिंतामणिश्रिता।
चातुर्वर्ण्यमयी चंचच्चौरा चापचमत्कृतिः ॥ ३२

चक्रवर्तिवधूश्चक्रा चक्रांगा चक्रमोदिनी।
चेतश्चरी चित्तवृत्तिश्चेता चेतनाप्रदा ॥ ३३

चप्रिया चंपकप्रीतिश्चंडी चंडालवासिनी।
चिरंजीवितदा चित्ता तरुमूलनिवासिनी ॥ ३४

छुरिका छत्रमध्यस्था छिद्रा छेदकरी छिदा।
छुच्छुंदरीपलप्रीतिः छुन्दरीभनिभस्वना ॥ ३५

छलिनी छलवच्छिन्ना छिटिका छेककृत्तथा।
छद्मिनी छांदसी छाया छायाकृच्छादिरित्यपि ॥ ३६

जया च जयदा जातिर्जृंभिनी जामलायुता।
जपापुष्पप्रिया जाया जाप्या जाप्यजगज्जनिः ॥ ३७

जंबूप्रिया जयस्था च जंगमा जंगमप्रिया।
जंतुर्जंतुप्रधाना च जरत्कर्णा जरद्भवा ॥ ३८

जातीप्रिया जीवनस्था जीमूतसदृशच्छविः।
जन्या जनहिता जाया जंभजंभिलशालिनी ॥ ३९

जवदा जववद्वाहा जमानी ज्वरहा ज्वरी।
झंझा नीलमयी झंझाझणत्कारकराचला ॥ ४०

झिंटीशा झस्यकृत् झंपा यमत्रासनिवारिणी।
टंकारस्था टंकधरा टंकाराकारणा टसी ॥ ४१

ठकुरा ठील्कृतिश्चैव ठिंठीरवसनावृता।
ठंठानीलमयी ठंठा ठणत्कारकरा ठसा ।। ४२

डाकिनी डामरा चैव डिंडिमध्वनिनादिनी।
ढक्काप्रियस्वना ढक्का तपिनी तापिनी तथा ।। ४३

तरुणी तुंदिला तुंदा तामसी च तपःप्रिया।
ताम्रा ताम्रांबरा ताली तालीदलविभूषणा ।। ४४

तुरंगा त्वरिता तोता तोतला तादिनी तुला।
तापत्रयहरा तारा तालकेशी तमालिनी ।। ४५

तमालदलवच्छाया तालस्वनवती तमी।
तामसी च तमिस्रा च तीव्रा तीव्रपराक्रमा ।। ४६

तटस्था तिलतैलाक्ता तारिणी तपनद्युतिः।
तिलोत्तमा तिलककृत्तारकाधीशशेखरा ।। ४७

तिलपुष्पप्रिया तारा तारकेशकुटुंबिनी।
स्थाणुपत्नी स्थितिकरी स्थलस्था स्थलवर्द्धिनी ।। ४८

स्थितिः स्थैर्या स्थविष्ठा च स्थावतिः स्थूलविग्रहा।
दंतिनी दंडिनी दीना दरिद्रा दीनवत्सला ।। ४९

देवी देववधूर्दैत्यदमिनी दंतभूषणा।
दयावती दमवती दमदा दाडिमस्तनी ।। ५०

दंदशूकनिभा दैत्यदारिणी देवतानना।
दोलाक्रीडा दयालुश्च दंपती देवतामयी ।। ५१

दशा दीपस्थिता दोषा दोषहा दोषकारिणी।
दुर्गा दुर्गार्त्तिशमनी दुर्गमा दुर्गवासिनी ।। ५२

दुर्गंधनाशिनी दुःस्था दुःस्वप्नशमकारिणी।
दुर्वारा दुंदुभिध्वाना दूरगा दूरवासिनी ।। ५३

दरदा दरहा दात्री दयादा दुहिता दशा।
धुरंधरा धुरीणा च धौरेयी धनदायिनी ।। ५४

धीराऽधीरा धरित्री च धर्मदा धीरमानसा।
धनुर्धरा च धमिनी धूर्ता धूर्तापरिग्रहा ।। ५५

धूमवर्णा धूमपाना धूमला धूममोदिनी।
नलिनी नंदिनी नन्दा नंदिनी नंदबालिका ।। ५६

नवीना नर्मदा नर्मी नेमिर्नियमनिश्चया।
निर्मला निगमाचारा निम्नगा नग्निका निमिः ।। ५७

नाला निरंतरा निघ्नी निर्लेपा निर्गुणा नतिः।
नीलग्रीवा निरीहा च निरंजनजनी नवी ।। ५८

नवनीतप्रिया नारी नरकार्णवतारिणी।
नारायणी निराकारा निपुणा निपुणप्रिया ।। ५९

निशा निद्रा नरेंद्रस्था नमिताऽनमितापि च।
निर्गुंडिका च निर्गुंडा निर्मांसा नासिकाभिधा ।। ६०

पताकिनी पताका च पलप्रीतिर्यशस्विनी।
पीना पीनस्तना पत्नी पवनाशनशायिनी ।। ६१

परा परा कला पाका पाककृत्यरतिः प्रिया।
पवनस्था सुपवना तापसी प्रीतिवर्द्धिनी ।। ६२

पशुवृद्धिकरी पुष्टिः पोषणी पुष्पवर्धिनी।
पुष्पिणी पुस्तककरा पुन्नागतलवासिनी ।। ६३

पुरंदरप्रिया प्रीतिः पुरमार्गनिवासिनी।
पेशा पाशकरा पाशबंधहा पांशुला पशुः ॥ ६४

पटा पटाशा परशुधारिणी पाशिनी तथा।
पापघ्नी पतिपत्नी च पतिताऽपतितापि च ॥ ६५

पिशाची च पिशाचघ्नी पिशिताशनतोषिता।
पानदा पानपात्रा च पानदानकरोद्यता ॥ ६६

पेषा प्रसिद्धिः पीयूषा पूर्णा पूर्णमनोरथा।
पतद्गर्भा पतद्गात्रा पौनःपुन्यपि वा पुरा ॥ ६७

पंकिला पंकमग्ना च पामी पापंजरस्थिता।
पंचमा पंचयामा च पंचता पंचमप्रिया ॥ ६८

पंचमुद्रा पुंडरीका पिंगला पिंगलोचना।
प्रियंगुमंजरी पिंडी पंडिता पांडुरप्रभा ॥ ६९

प्रेतासना प्रियालुस्था पांडुघ्नी पीतसापहा।
फलिनी फलदात्री च फलश्रीः फणिभूषणा ॥ ७०

फूत्कारकारिणी स्फारा फुल्ला फुल्लांबुजासना।
फिरंगहा स्फीतमतिः स्फीतिः स्फीतिकरी तथा ॥ ७१

वनमाया बलारातिर्बलिनी बलवर्धिनी।
वेणुवाद्या वनचरी वीरा बीजमयी अपि ॥ ७२

विद्या विद्याप्रदा विद्याबोधिनी वेददायिनी।
बुधमाता च बुद्धा च वनमालावती वरा ॥ ७३

वरदा वारुणी वीणा वीणावादनतत्परा।
विनोदिनी विनोदस्था वैष्णवी विष्णुवल्लभा ॥ ७४

विद्या वैद्यचिकित्सा च विवशा विश्वविश्रुता।
वितंद्रा विह्वला वेला विरावा विरतिर्वरा ।। ७५

विविधार्ककरा वीरा बिंबोष्ठी बिंबवत्सला।
विन्ध्यस्था वीरवन्द्या च वरी यानपरा च वित् ।। ७६

वेदांतवेद्या वैद्या च वेदस्य विजयप्रदा।
विरोधवर्धिनी वन्ध्या वन्ध्याबन्धनिवारिणी ।। ७७

भगिनी भगमाला च भवानी भयभाविनी।
भीमा भीमानना भैमी भंगुरा भीमदर्शना ।। ७८

भिल्ली भल्लधरा भीरुर्भेरुंडी भीर्भयापहा।
भगसर्पिण्यपि भगा भगरूपा भगालया ।। ७९

भगासना भगामोदा भेरीभंकाररंजिनी।
भीषणा भीषणारावा भगवत्यपि भूषणा ।। ८०

भारद्वाजी भोगदात्री भवघ्नी भूतिभूषणा।
भूतिदा भूमिदात्री च भूपतित्वप्रदायिनी ।। ८१

भ्रमरी भ्रामरी नीला भूपालमुकुटस्थिता।
मत्ता मनोहरमना मानिनी मोहिनी मही ।। ८२

महालक्ष्मीर्मदक्षीबा मदीया मदिरालया।
मदोद्धता मतंगस्था माधवी मधुमन्थिनी ।। ८३

मेधा मेधाकरी मेध्या मध्या मध्यवयःस्थिता।
मद्यपा मांसला मत्स्यमोदिनी मैथुनोद्धता ।। ८४

मुद्रा मुद्रावती माता माया महिममन्दिरा।
महामाया महाविद्या महामारी महेश्वरी ।। ८५

महादेववधूर्मान्या मधुरा वीरमण्डला।
मेदस्विनी मीलदश्रीर्महिषासुरमर्दिनी ।। ८६

मंडपस्था मठस्था च मदिरागमगर्विता।
मोक्षदा मुंडमाला च माला मालाविलासिनी ।। ८७

मातंगिनी च मातंगी मतंगतनयाऽपि च।
मधुस्रवा मधुरसा मधूककुसुमप्रिया ।। ८८

यामिनी यामिनीनाथभूषा यावकरंजिता।
यवांकुरप्रिया माया यवनी यवनाधिपा ।। ८९

यमघ्नी यमकन्या च यजमानस्वरूपिणी।
यज्ञा यज्वा यजुर्यज्व यशोनिकरकारिणी ।। ९०

यज्ञसूत्रप्रदा ज्येष्ठा यज्ञकर्मकरी तथा।
यशस्विनी यकारस्था यूपस्तंभनिवासिनी ।। ९१

रंजिता राजपत्नी च रमा रेखा रवेरणी।
रजोवती रजश्चित्रा रजनी रजनीपतिः ।। ९२

रागिनी राज्यनी राज्या राज्यदा राज्यवर्धिनी।
राजन्वती राजनीतिस्तथा रजतवासिनी ।। ९३

रमणी रमणीया च रामा रामावती रतिः।
रेतोवती रतोत्साहा रोगहृद्रोगकारिणी ।। ९४

रंगा रंगवती रागा रागज्ञा रागकृद्रणा।
रंजिकाऽरंजिका रंजा रंजिनी रक्तलोचना ।। ९५

रक्तचर्मधरा रंजा रक्तस्था रक्तवादिनी।
रंभा रंभाफलप्रीती रंभोरू राघवप्रिया ।। ९६

रंगभृद्रंगमधुरा रोदसी रोदसीग्रहा।
रोधकृद्रोधहंत्री च रोगभृद्रोगशायिनी ।। ९७

वंदी वदिस्तुता बंधा बंधूककुसुमाधरा।
वंदीत्रा वंदिता माता विदुरा वैन्दवी विधा ।। ९८

विंकी विंकपला विंका विंकस्था विंकवत्सला।
वदिर्विलग्ना विप्रा च विधिर्विधिकरी विधा ।। ९९

शंखिनी शंखवलया शंखमालावती शमी।
शंखपात्राशनी शंखाऽशंखा शंखगला शशी ।। १००

शंबी शरावती श्यामा श्यामांगी श्यामलोचना।
श्मशानस्था श्मशाना च श्मशानस्थलभूषणा ।। १०१

शमदा शमहंत्री च शाकिनी शंकुशेखरा।
शांतिःशांतिप्रदा शेषा शेषस्था शेषदायिनी ।। १०२

शेमुषी शोषिणी शीरी शौरिः शौर्या शरा शिरिः।
शापहा शापहानीशा शंपा शपथदायिनी ।। १०३

शृंगिणी शृंगपलभुक् शंकरीशंकरी च या।
शंका शंकापहा संस्था शाश्वती शीतला शिवा ।। १०४

शिवस्था शवभुक्ता वा शववर्णा शिवोदरी।
शायिनी शावशयना शिंशपा शिशुपालिनी ।। १०५

शवकुंडलिनी शैवा शंकरा शिशिरा शिरा।
शवकांची शवश्रीका शवमाला शवाकृतिः ।। १०६

शयनी शंकुवा शक्तिः शंतनुः शीलदायिनी।
सिंधुः सरस्वती सिंधुः सुंदरी सुंदरानना ।। १०७

साधुः सिद्धिः सिद्धिदात्री सिद्धा सिद्धसरस्वती ।
संततिःसंपदा संपत्संवित्सरतिदायिनी ।। १०८

सपत्नी सरसा सारा सरस्वतिकरी स्वधा ।
सरःसमा समाना च समाराध्या समस्तदा ।। १०९

समिद्धा समदा संमा संमोहा समदर्शना ।
समितिः समिधा सीमा सवित्री सविधा सती ।। ११०

सवता सवनादारा सावना समरा समी ।
सिमिरा सतता साध्वी सध्रीची च सहायिनी ।। १११

हंसी हंसगतिर्हंसा हंसोज्ज्वलनिचोलयुक् ।
हलिनी हलदा हाला हरश्रीर्हरवल्लभा ।। ११२

हेला हेलावती हेषा ह्वेषस्था ह्वेषवर्धिनी ।
हंता हन्तिर्हता हत्या हाहंततापहारिणी ।। ११३

हंकारी हंतकृद्धंका हीहा हाता हताहता ।
हेमप्रदा हंसवती हारी हातरिसंमता ।। ११४

होरी होत्री होलिका च होमा होमो हविर्हरिः ।
हारिणी हरिणी नेत्रा हिमाचलनिवासिनी ।। ११५

लंबोदरी लंबकर्णा लंबिका लंबविग्रहा ।
लीला लीलावती लोला ललनी लालिता लता ।। ११६

ललामलोचना लोच्या लोलाक्षी लक्षणा लला ।
लंपती लुंपती लंपा लोपामुद्रा ललंतिनी ।। ११७

लंतिका लंबिका लंबा लघिमा लघुमध्यमा ।
लघीयसी लघुदयी लूता लूतानिवारिणी ।। ११८

लोमभृल्लोम लोसा च लुलुती लुलुसंयती ।
लुलायस्था च लहरी लंकापुरपुरंदरी ॥ ११९

लक्ष्मीर्लक्ष्मीप्रदा लक्ष्या लक्षा बलमतिप्रदा ।
क्षुण्णा क्षुपा क्षणा क्षीणा क्षमा क्षांतिः क्षणावती ॥ १२०

क्षामा क्षामोदरी क्षीमा क्षौमभृत्क्षत्रियांगना ।
क्षया क्षयकरी क्षीरा क्षीरदा क्षीरसागरा ॥ १२१

क्षेमंकरी क्षयकरी क्षयदा क्षणदा क्षतिः ।
क्षुरंती क्षुद्रिका क्षुद्रा क्षुत्क्षामा क्षरपातका ॥ १२२

मातुः सहस्रनामेदं प्रत्यंगिर्याः वरप्रदम् ।
यः पठेत्प्रयतो नित्यं दरिद्रो धनदो भवेत् ॥ १२३

मूकः स्याद्वाक्पतिर्देवि रोगी नीरोगतां व्रजेत् ।
अपुत्रः पुत्रमाप्नोति त्रिषु लोकेषु विश्रुतम् ॥ १२४

वंध्यापि सूते तनयान् गावश्च बहुदुग्धदाः ।
राजानः पादनम्राः स्युस्तस्य दासा इह स्फुटाः ॥ १२५

अरयः संक्षयं यांति मनसा संस्मृता अपि ।
यं यं कामयते कामं तं तं प्राप्नोति निश्चितम् ॥ १२६

—रुद्रयामलतः

# प्रत्यङ्गिरासहस्रनामावलिः

ओं देव्यै नमः । प्रत्यंगिरायै । शिरसासेव्यायै । शशिशेखरायै । समायै । असमायै । धर्मिण्यै । समस्तसुरशेमुष्यै । सर्वसंपत्तिजनन्यै । समदायै । सिन्धुसेविन्यै । शंभुसीमन्तिन्यै । सोमाराध्यायै । वसुधारसायै । रसायै । रसवत्यै । वेलायै । वन्यायै । वनमालिन्यै । वनजाक्ष्यै नमः ।। २०

ओं वनचर्यै नमः । वन्यै । वनविनोदिन्यै । वेगिन्यै । वेगदायै । वेगबलायै । स्थानबलाधिकायै । कलायै । कलाप्रियायै । कौल्यै । कोमलायै । कालकामिन्यै । कमलायै । कमलास्यायै । कमलस्थायै । कलावत्यै । कुलीनायै । कुटिलायै । कान्तायै । कोकिलायै नमः ।। ४०

ओं कुलभाषिण्यै नमः । कीरकेल्यै । कलायै । काल्यै । कपालिन्यै । कालिकायै । केशिन्यै । कुशावर्तायै । कौशांब्यै । केशवप्रियायै । काश्यै । काशापहायै । कांशीसंकाशायै । केशदायिन्यै । कुण्डल्यै । कुण्डलीस्थायै । कुण्डलाङ्गदमण्डितायै । कुशापाश्यै । कुमुदिन्यै । कुमुदप्रीतिवर्धिन्यै नमः ।। ६०

ओं कुन्दप्रियायै नमः । कुन्दरुच्यै । कुरंगमदमोदिन्यै । कुरंगनयनायै । कुन्दायै । कुरुवृन्दाभिनन्दिन्यै । कुसुंभकुसुमायै । किञ्चित्कणत्किंकिणिकायै । कट्वै । कठोरायै । करणायै । कण्ठायै । कौमुद्यै । कंबुकण्ठिन्यै । कपर्दिन्यै । कपटिन्यै । कठिन्यै । कालकण्ठिकायै । किब्रुहस्तायै । कुमार्यै नमः ।। ८०

ओं कुरुन्दायै नमः । कुसुमप्रियायै । कुञ्जरस्थायै । कुञ्जरतायै । कुंभिकुंभस्तनद्वयायै । कुंभिगायै । करभोरवे ।

कदलीदलशालिन्यै । कुपितायै । कोटरस्थायै । कंकाल्यै । कन्दशेखरायै । एकान्तवासिन्यै । किञ्चित्कंपमानशिरोरुहायै । कादम्बर्यै । कदम्बस्थायै । कुंकुम्यै । प्रेमधारिण्यै । कुटुंबिन्यै । प्रियायुक्तायै नमः ।। १००

ओं क्रतवे नमः । क्रतुकर्यै । क्रियायै । कात्यायन्यै । कृत्तिकायै । कार्तिकेयप्रवर्तिन्यै । कामपत्न्यै । कामधात्र्यै । कामेश्यै । कामवन्दितायै । कामरूपायै । कामगत्यै । कामाक्ष्यै । काममोहितायै । खड्गिन्यै । खेचर्यै । खञ्जायै । खंजरीटेक्षणायै । खलायै । खरगायै नमः ।। १२०

ओं खरनासायै नमः । खरास्यायै । खेलनप्रियायै । खरांशवे । खेटिन्यै । खड्वायै । खरखड्वांगधारिण्यै । खलखण्डिनिविख्यात्यै । खण्डितायै । खण्डव्यै । स्थिरायै । खण्डप्रियायै । खण्डखाद्यायै । सेन्दुखण्डायै । खञ्जन्यै । गंगायै । गोदावर्यै । गौर्यै । गोमत्यै । गौतम्यै नमः ।। १४०

ओं गयायै नमः । गवे । गज्यै । गगनायै । गारुड्यै । गरुडध्वजायै । गीतायै । गीतप्रियायै । गोत्रायै । गोत्रक्षयकर्यै । गदायै । गिरिभूपालदुहित्रे । गोगायै । गोकुलवर्धिन्यै । घनस्तन्यै । घनरुचये । घनोरवे । घननिःस्वनायै । घूत्कारिण्यै । घूतकर्यै नमः ।। १६०

ओं घुघूकपरिवरितायै नमः । घण्टानादप्रियायै । घण्टायै । घनायै । घोटप्रवाहिन्यै । घोररूपायै । घोरायै । घूनीप्रीत्यै । घनाञ्जन्यै । घृताच्यै । घनमुष्ट्यै । घटायै । घण्टायै । घटामृतायै । घटास्यायै । घटनादायै । घातपातनिवारिण्यै । चञ्चरीकायै । चकोर्यै । चामुण्डायै नमः ।। १८०

ओं चीरधारिण्यै नमः । चातुर्यै । चपलायै । चारवे । चलच्चेलायै । चलाचलायै । चतुषे । चिरन्तनायै । चाकायै । चियायै । चामीकरच्छवये । चापिन्यै । चपलायै । चंप्वे । चित्यै । चिन्तामण्यै । चितायै । चातुर्वर्ण्यमय्यै । चञ्चच्चौरायै । चापचमत्कृत्यै नमः ॥ २००

ओं चक्रवर्तिवध्वै नमः । चक्रायै । चक्राङ्गायै । चक्रमोदिन्यै । चेतश्चर्यै । चित्तवृत्त्यै । अचेतसे । चेतनाप्रदायै । चप्रियायै । चंपकप्रीत्यै । चण्ड्यै । चण्डालवासिन्यै । चिरञ्जीवितदायै । चित्तायै । तरुमूलनिवासिन्यै । छुरिकायै । छत्रमध्यस्थायै । छिद्रायै । छेदकर्यै । छिदायै नमः ॥ २२०

ओं छुच्छुन्दरीपलप्रीत्यै नमः । छुन्दरीभनिभस्वनायै । छलिन्यै । छलवच्छिन्नायै । छिटिकायै । छेककृते । छद्मिन्यै । छान्दस्यै । छायायै । छायाकृते । छादये । जयायै । जयदायै । जात्यै । जृंभिन्यै । जामलायुतायै । जपापुष्पप्रियायै । जायायै । जाप्यायै । जाप्यजगज्जनये नमः ॥ २४०

ओं जंबूप्रियायै नमः । जयस्थायै । जंगमायै । जंगमप्रियायै । जन्तवे । जन्तुप्रधानायै । जरत्कर्णायै । जरद्गवायै । जातीप्रियायै । जीवनस्थायै । जीमूतसदृशच्छवये । जन्यायै । जनहितायै । जायायै । जंभजंभिलशालिन्यै । जवदायै । जववद्वाहायै । जमान्यै । ज्वरहायै । ज्वर्यै नमः ॥ २६०

ओं झञ्झानीलमय्यै नमः । झंझाझणत्कारकराचलायै । झिण्टीशायै । झस्यकृते । झंपायै । यमत्रासनिवारिण्यै । टंकारस्थायै । टंकधरायै । टंकारकारणायै । टस्यै । ठकुरायै । ठीत्कृत्यै । ठिंठीरवसनावृतायै । ठंठानीलमय्यै । ठंठायै । ठणत्कारकरायै । ठसायै । डाकिन्यै । डामरायै । डिण्डिमध्वनिनादिन्यै नमः ॥ २८०

ओं ढक्काप्रियस्वनायै नमः । ढक्कायै । तपिन्यै । तापिन्यै । तरुण्यै । तुन्दिलायै । तुन्दायै । तामस्यै । तपःप्रियायै । ताम्रायै । ताम्रांबरायै । ताल्यै । तालीदलविभूषणायै । तुरंगायै । त्वरितायै । तोतायै । तोतलायै । तादिन्यै । तुलायै । तापत्रयहरायै नमः ।। ३००

ओं तारायै नमः । तालकेश्यै । तमालिन्यै । तमालदलवच्छायायै । तालस्वनवत्यै । तम्यै । तामस्यै । तमिस्रायै । तीव्रायै । तीव्रपराक्रमायै । तटस्थायै । तिलतैलाक्तायै । तारिण्यै । तपनद्युत्यै । तिलोत्तमायै । तिलककृते । तारकाधीशशेखरायै । तिलपुष्पप्रियायै । तारायै । तारकेशकुटुंबिन्यै नमः ।। ३२०

ओं स्थाणुपत्न्यै नमः । स्थितिकर्यै । स्थलस्थायै । स्थलवर्धिन्यै । स्थित्यै । स्थैर्यायै । स्थविष्ठायै । स्थावत्यै । स्थूलविग्रहायै । दन्तिन्यै । दण्डिन्यै । दीनायै । दरिद्रायै । दीनवत्सलायै । देव्यै । देववध्वै । दैत्यदमिन्यै । दन्तभूषणायै । दयावत्यै । दमवत्यै नमः ।। ३४०

ओं दमदायै नमः । दाडिमस्तन्यै । दन्दशूकनिभायै । दैत्यदारिण्यै । देवताननायै । दोलाक्रीडायै । दयालवे । दंपत्यै । देवतामय्यै । दशायै । दीपस्थितायै । दोषायै । दोषहायै । दोषकारिण्यै । दुर्गायै । दुर्गार्तिशमन्यै । दुर्गमायै । दुर्गवासिन्यै । दुर्गन्धिनाशिन्यै । दुःस्थायै नमः ।। ३६०

ओं दुःस्वप्नशमकारिण्यै नमः । दुर्वारायै । दुन्दुभिध्वानायै । दूरगायै । दूरवासिन्यै । दरदायै । दरहायै । दात्र्यै । दयादायै । दुहित्रे । दशायै । धुरन्धरायै । धुरीणायै । धौरेय्यै । धनदायिन्यै । धीरायै । अधीरायै । धरित्र्यै । धर्मदायै । धीरमानसायै नमः ।। ३८०

ओं धनुर्धरायै नमः । धमिन्यै । धूर्तायै । धूर्तपरिग्रहायै । धूमवर्णायै । धूमपानायै । धूमलायै । धूममोदिन्यै । नलिन्यै । नन्दिन्यै । नन्दानन्दिन्यै । नन्दबालिकायै । नवीनायै । नर्मदायै । नर्म्यै । नेम्यै । नियमनिश्चयायै । निर्मलायै । निगमाचारायै । निम्नगायै नमः ।। ४००

ओं नग्निकायै नमः । निम्यै । नालायै । निरन्तरायै । निघ्न्यै । निर्लेपायै । निर्गुणायै । नत्यै । नीलग्रीवायै । निरीहायै । निरञ्जनजन्यै । नव्यै । नवनीतप्रियायै । नार्यै । नरकार्णवतारिण्यै । नारायण्यै । निराकारायै । निपुणायै । निपुणप्रियायै । निशायै नमः ।। ४२०

ओं निद्रायै नमः । नरेन्द्रस्थायै । नमितायै । अनमितायै । निर्गुण्डिकायै । निर्गुण्डायै । निर्मांसायै । नासिकाभिधायै । पताकिन्यै । पताकायै । पलप्रीत्यै । यशस्विन्यै । पीनायै । पीनस्तनायै । पत्न्यै । पवनाशनशायिन्यै । परायै । परायैकलायै । पाकायै । पाककृत्यरत्यै नमः ।। ४४०

ओं प्रियायै नमः । पवनस्थायै । सुपवनायै । तापस्यै । प्रीतिवर्धन्यै । पशुवृद्धिकर्यै । पुष्ट्यै । पोषण्यै । पुष्पवर्धिन्यै । पुष्पिण्यै । पुस्तककरायै । पुन्नागतलवासिन्यै । पुरन्दरप्रियायै । प्रीत्यै । पुरमार्गनिवासिन्यै । पेशायै । पाशकरायै । पाशबन्धहायै । पांशुलायै । पशवे नमः ।। ४६०

ओं पटायै नमः । पटाशायै । परशुधारिण्यै । पाशिन्यै । पापघ्न्यै । पतिपत्न्यै । पतितायै । अपतितायै । पिशाच्यै । पिशाचघ्न्यै । पिशिताशनतोषितायै । पानदायै । पानपात्रायै । पानदान-करोद्यतायै । पेषायै । प्रसिद्ध्यै । पीयूषायै । पूर्णायै । पूर्णमनोरथायै । पतद्गर्भायै नमः ।। ४८०

ओं पतद्गात्रायै नमः । पौनःपुन्यै । पुरायै । पंकिलायै । पंकमग्नायै । पाम्यै । पापञ्जरस्थितायै । पञ्चमायै । पञ्चयामायै । पञ्चतायै । पंचमप्रियायै । पञ्चमुद्रायै । पुण्डरीकायै । पिङ्गलायै । पिङ्गलोचनायै । प्रियङ्गुमञ्जर्यै । पिण्ड्यै । पण्डितायै । पाण्डुरप्रभायै । प्रेतासनायै नमः ।। ५०० 

ओं प्रियालुस्थायै नमः । पाण्डुघ्न्यै । पीतसापहायै । फलिन्यै । फलदात्र्यै । फलश्रियै । फणिभूषणायै । फूत्कारकारिण्यै । स्फारायै । फुल्लायै । फल्लांबुजासनायै । फिरंगहायै । स्फीतमत्यै । स्फीत्यै । स्फीतिकर्यै । वनमायायै । बलारात्यै । बलिन्यै । बलवर्धिन्यै । वेणुवाद्यायै नमः ।। ५२० 

ओं वनचर्यै नमः । वीरायै । बीजमय्यै । विद्यायै । विद्याप्रदायै । विद्याबोधिन्यै । वेददायिन्यै । बुधमात्रे । बुद्धायै । वनमालावत्यै । वरायै । वरदायै । वारुण्यै । वीणायै । वीणावादनतत्परायै । विनोदिन्यै । विनोदस्थायै । वैष्णव्यै । विष्णुवल्लभायै । विद्यायै नमः ।। ५४० 

ओं वैद्यचिकित्सायै नमः । विवशायै । विश्वविश्रुतायै । वितन्द्रायै । विह्वलायै । वेलायै । विरावायै । विरत्यै । वरायै । विविधार्ककरायै । वीरायै । बिम्बोष्ठ्यै । बिम्बवत्सलायै । विन्ध्यस्थायै । वीरवन्द्यायै । वर्यै । यानपरायै । विदे । वेदान्तवेद्यायै । वैद्यायै नमः ।। ५६० 

ओं वेदस्य विजयप्रदायै नमः । विरोधवर्धिन्यै । वन्ध्यायै । वन्ध्याबन्धनिवारिण्यै । भगिन्यै । भगमालायै । भवान्यै । भयभाविन्यै । भीमायै । भीमाननायै । भैम्यै । भंगुरायै । भीमदर्शनायै । भिल्ल्यै । भल्लधरायै । भीरवे । भेरुण्ड्यै । भियै । भयापहायै । भगसर्पिण्यै नमः ।। ५८० 

ओं भगायै नमः । भगरूपायै । भगालयायै । भगासनायै । भगामोदायै । भेरीभंकाररञ्जिन्यै । भीषणायै । भीषणारावायै । भगवत्यै । भूषणायै । भारद्वाज्यै । भोगदात्र्यै । भवघ्न्यै । भूतिभूषणायै । भूतिदायै । भूमिदात्र्यै । भूपतित्वप्रदायिन्यै । भ्रमर्यै । भ्रामर्यै । नीलायै नमः ॥ ६००

ओं भूपालमुकुटस्थितायै नमः । मत्तायै । मनोहरमनसे । मानिन्यै । मोहिन्यै । मह्यै । महालक्ष्म्यै । मदक्षीबायै । मदीयायै । मदिरालयायै । मदोद्धतायै । मतङ्गस्थायै । माधव्यै । मधुमन्थिन्यै । मेधायै । मेधाकर्यै । मेध्यायै । मध्यायै । मध्यवयःस्थितायै । मद्यपायै नमः ॥ ६२०

ओं मांसलायै नमः । मत्स्यमोदिन्यै । मैथुनोद्धतायै । मुद्रायै । मुद्रावत्यै । मात्रे । मायायै । महिममन्दिरायै । महामायायै । महाविद्यायै । महामार्यै । महेश्वर्यै । महादेववध्वै । मान्यायै । मधुरायै । वीरमण्डलायै । मेदस्विन्यै । मीलदश्रियै । महिषासुरमर्दिन्यै । मण्डपस्थायै नमः ॥ ६४०

ओं मठस्थायै नमः । मदिरागमगर्वितायै । मोक्षदायै । मुण्डमालायै । मालायै । मालाविलासिन्यै । मातङ्गिन्यै । मातङ्ग्यै । मतङ्गतनयायै । मधुस्रवायै । मधुरसायै । मधूककुसुमप्रियायै । यामिन्यै । यामिनीनाथभूषायै । यावकरञ्जितायै । यवांकुरप्रियायै । मायायै । यवन्यै । यवनाधिपायै । यमघ्न्यै नमः ॥ ६६०

ओं यमकन्यायै नमः । यजमानस्वरूपिण्यै । यज्ञायै । यज्वने । यजुषे । यज्वयशोनिकरकारिण्यै । यज्ञसूत्रप्रदायै । ज्येष्ठायै । यज्ञकर्मकर्यै । यशस्विन्यै । यकारस्थायै । यूपस्तंभनिवासिन्यै । रञ्जितायै । राजपत्न्यै । रमायै । रेखायै । रवेरण्यै । रजोवत्यै । रजश्चित्रायै । रजन्यै नमः ॥ ६८०

ओं रजनीपत्यै नमः । रागिन्यै । राज्यन्यै । राज्यायै । राज्यदायै । राज्यवर्धिन्यै । राजन्वत्यै । राजनीत्यै । रजतवासिन्यै । रमण्यै । रमणीयायै । रामायै । रामावत्यै । रत्यै । रेतोवत्यै । रतोत्साहायै । रोगहृते । रोगकारिण्यै । रंगायै । रंगवत्यै नमः ॥ ७००

ओं रागायै नमः । रागज्ञायै । रागकृते । रणायै । रञ्जिकायै । अरञ्जिकायै । रञ्जायै । रञ्जिन्यै । रक्तलोचनायै । रक्तचर्मधरायै । रञ्जायै । रक्तस्थायै । रक्तवादिन्यै । रंभायै । रंभाफलप्रीत्यै । रंभोरवे । राघवप्रियायै । रंगभृते । रंगमधुरायै । रोदस्यै नमः ॥ ७२०

ओं रोदसीग्रहायै नमः । रोधकृते । रोधहन्त्र्यै । रोगभृते । रोगशायिन्यै । वन्द्यै । वन्दिस्तुतायै । बन्धायै । बन्धूककुसुमाधरायै । वन्दीत्रायै । वन्दितायै । मात्रे । विदुरायै । बैन्दव्यै । विधायै । विंक्यै । विंकपलायै । विंकायै । विंकस्थायै । विंकवत्सलायै नमः ॥ ७४०

ओं वद्यै नमः । विलग्नायै । विप्रायै । विध्यै । विधिकर्यै । विधायै । शंखिन्यै । शंखवलयायै । शंखमालावत्यै । शम्यै । शंखपात्राशन्यै । शंखायै । अशंखायै । शंखगलायै । शश्यै । शंव्यै । शरावत्यै । श्यामायै । श्यामांग्यै । श्यामलोचनायै नमः ॥ ७६०

ओं श्मशानस्थायै नमः । श्मशानायै । श्मशानस्थलभूषणायै । शमदायै । शमहन्त्र्यै । शाकिन्यै । शंकुशेखरायै । शान्त्यै । शान्तिप्रदायै । शेषायै । शेषस्थायै । शेषदायिन्यै । शेमुष्यै । शोषिण्यै । शीर्यै । शौर्यै । शौर्यायै । शरायै । शिर्यै । शापहायै नमः ॥ ७८०

ओं शापहानीशायै नमः । शंपायै । शपथदायिन्यै । शृंगिण्यै । शृङ्गपलभुजे । शंकर्यै । ईशंकर्यै । शंकायै । शंकापहायै । संस्थायै ।

शाश्वत्यै । शीतलायै । शिवायै । शिवस्थायै । शवभुक्तायै । शववर्णायै । शिवोदर्यै । शायिन्यै । शावशयनायै । शिंशपायै नमः ।। ८००

ओं शिशुपालिन्यै नमः । शवकुण्डलिन्यै । शैवायै । शंकरायै । शिशिरायै । शिरायै । शवकाञ्च्यै । शवश्रीकायै । शवमालायै । शवाकृत्यै । शयन्यै । शंकुवायै । शक्त्यै । शन्तन्वै । शीलदायिन्यै । सिन्धवे । सरस्वतीसिन्धवे । सुन्दर्यै । सुन्दराननायै । साध्वै नमः ।। ८२०

ओं सिद्ध्यै नमः । सिद्धिदात्र्यै । सिद्धायै । सिद्धसरस्वत्यै । सन्तत्यै । संपदायै । संपदे । संविदे । सरतिदायिन्यै । सपत्न्यै । सरसायै । सारायै । सरस्वतिकर्यै । स्वधायै । सरःसमायै । समानायै । समाराध्यायै । समस्तदायै । समिद्धायै । समदायै नमः ।। ८४०

ओं संमायै नमः । संमोहायै । समदर्शनायै । समित्यै । समिधायै । सीमायै । सवित्र्यै । सविधायै । सत्यै । सवतायै । सवनादारायै । सावनायै । समरायै । सम्यै । सिमिरायै । सततायै । साध्व्यै । सध्रीच्यै । सहायिन्यै । हंस्यै नमः ।। ८६०

ओं हंसगत्यै नमः । हंसायै । हंसोज्ज्वलनिचोलयुजे । हलिन्यै । हलदायै । हालायै । हरश्रियै । हरवल्लभायै । हेलायै । हेलावत्यै । ह्वेषायै । ह्वेषस्थायै । ह्वेषवर्धिन्यै । हंतायै । हन्त्यै । हतायै । हत्यायै । हाहन्ततापहारिण्यै । हंकार्यै । हन्तकृते नमः ।। ८८०

ओं हंकायै नमः । हीहायै । हातायै । हताहतायै । हेमप्रदायै । हंसवत्यै । हार्यै । हातरिसंमतायै । होर्यै । होत्र्यै । होलिकायै । होमायै । होमाय । हविषे । हरये । हारिण्यै । हरिणीनेत्रायै । हिमाचल-निवासिन्यै । लंबोदर्यै । लंबकर्णायै नमः ।। ९००

ओं लंबिकायै नमः । लंबविग्रहायै । लीलायै । लीलावत्यै । लोलायै । ललन्यै । लालितायै । लतायै । ललामलोचनायै । लोच्यायै । लोलाक्ष्यै । लक्षणायै । ललायै । लंपत्यै । लुंपत्यै । लंपायै । लोपामुद्रायै । ललन्तिन्यै । लन्तिकायै । लंबिकायै नमः ।। ९२०

ओं लम्बायै नमः । लघिमायै । लघुमध्यमायै । लघीयस्यै । लघुदर्य्यै । लूतायै । लूतानिवारिण्यै । लोमभृते । लोम्ने । लोप्तायै । लुलुत्यै । लुलुसंयत्यै । लुलायस्थायै । लहर्यै । लंकापुरपुरन्दर्यै । लक्ष्म्यै । लक्ष्मीप्रदायै । लक्ष्यायै । लक्षायै । बलमतिप्रदायै नमः ।। ९४०

ओं क्षुण्णायै नमः । क्षुपायै । क्षणायै । क्षीणायै । क्षमायै । क्षान्त्यै । क्षणावत्यै । क्षामायै । क्षामोदर्यै । क्षीमायै । क्षौमभृते । क्षत्रियांगनायै । क्षयायै । क्षयकर्यै । क्षीरायै । क्षीरदायै । क्षीरसागरायै । क्षेमंकर्यै । क्षयकर्यै । क्षयदायै नमः ।। ९६०

ओं क्षणदायै नमः । क्षत्यै । क्षुरन्त्यै । क्षुद्रिकायै । क्षुद्रायै । क्षुत्क्षामायै । क्षरपातकायै नमः ।। ९६८

(अपूर्ण सहस्रनामावलिः)

# श्रीभुवनेश्वरीसहस्रनामस्तोत्रम्

(अपूर्णसहस्रनामकमिदम्। सहस्रशब्दो बह्वर्थकोऽपि। यावल्लब्धं तस्य पठनेनापि पूर्णं फलमिति वृद्धाः।)

श्रीदेव्युवाच-

देव देव महादेव सर्वशास्त्रविशारद!
कपालखट्वाङ्गधर! चिताभस्मानुलेपन॥ १

आद्या या प्रकृतिर्नित्या सर्वशास्त्रेषु गोपिता।
तस्याः श्रीभुवनेश्वर्या नाम्नां पुण्यं सहस्रकम्॥ २

कथयस्व महादेव! यथा देवी प्रसीदति।
ईश्वर उवाच-
साधु पृष्टं महादेवि! साधकानां हिताय वै॥ ३

या नित्या प्रकृतिराद्या सर्वशास्त्रेषु गोपिता।
यस्याः स्मरणमात्रेण सर्वपापैः प्रमुच्यते॥ ४

आराधनाद्भवेद्यस्या जीवन्मुक्तो न संशयः।
तस्य नामसहस्रं वै कथयामि समासतः॥ ५

अस्य श्रीभुवनेश्वर्याः सहस्रनामस्तोत्रस्य, दक्षिणामूर्तिर्ऋषिः पंक्तिश्छन्दः, आद्या श्रीभुवनेश्वरी देवता, ह्रीं बीजं, श्रीं शक्तिः, क्लीं कीलकं, मम धर्मार्थकाममोक्षार्थे जपे विनियोगः।

ओं आद्या कमला वाणी माया श्रीभुवनेश्वरी।
भुवना भावना भव्या भवानी भवभावि(मोच)नी॥ ६

रुद्राणी रुद्रभक्ता च तथा रुद्रप्रिया सती।
उमा कात्यायनी (कामेश्वरी) दुर्गा मङ्गला (शर्वाणी) सर्वमङ्गला ॥ ७

त्रिपुरा परमेशानी त्रिपुरा सुन्दरी प्रिया।
रमणा रमणी रामा रा(का)मकार्यकरी शुभा ॥ ८

ब्राह्मी नारायणी चण्डी चामुण्डा मु(च)ण्डनायिका।
माहेश्वरी च कौमारी च वाराही चापराजिता ॥ ९

महामाया मुक्तकेशी महात्रिपुरसुन्दरी।
सुन्दरी शोभना रक्ता रक्तवस्त्रापिधायिनी ॥ १०

रक्ताक्षी(भा) रक्तवस्त्रा(र्णा) च रक्तबीजनिषूदनी।
रक्तचन्दनसिक्ताङ्गी रक्तपुष्प प्रिया सदा ॥ ११

कमला कामिनी कान्ता कामदेवप्रिया सदा।
लक्ष्मीर्लोला चञ्चलाक्षी चञ्चला चपला प्रिया ॥ १२

भैरवी भयहर्त्री च महाभयविनाशिनी।
भयङ्करी महाभीमा भयहा भयनाशिनी ॥ १३

श्मशाने प्रान्तरे दुर्गे संस्मृता भयनाशिनी।
जया च विजया चैव जयपूर्णा जयप्रदा ॥ १४

यमुना यामुना याम्या यामुनजा (यमश्रेष्ठा) यमप्रिया।
सर्वेशी जनिका जन्या जनहा जनवर्धिनी ॥ १५

काली कपालिनी कुल्ला(ल्या) कालिका कालरात्रिका।
महाकालहृदिस्था च कालभैरवरूपिणी ॥ १६

कपालखट्वाङ्गधरा पाशाङ्कुशविधारिणी।
अभया च भया चैव तथा च भयनाशिनी ॥ १७

महाभयप्रदात्री च तथा च वरहस्तिनी।
महामाया भीमवेगा महावेगा महास्तनी ॥ १८

गौरी गौराङ्गिनी गौरा गौरवर्णा जयप्रदा।
उग्रा उग्रप्रभा शान्तिः (न्ता) शान्तिदाऽशान्तिनाशिनी ॥ १९

उग्रतारा तथा चोग्रा नीला चैकजटा तथा।
हंसरूपा तथा तारा तथा च सिद्धिकालिका ॥ २०

तारा नीला च वागीशी तथा नीलसरस्वती।
गङ्गा काशी सती सत्या सर्वतीर्थमयी तथा ॥ २१

तीर्थरूपा तीर्थपुण्या तीर्थदा तीर्थसेविका।
पुण्यदा पुण्यरूपा च पुण्यकीर्तिः प्रकाशिनी ॥ २२

पुण्यकाला पुण्यसंस्था तथा पुण्यजनप्रिया।
तुलसी तोतुला स्तोत्रा राधिका राधनप्रिया ॥ २३

तुलसी तुलना तुल्या बालिका वेधसः प्रिया।
सत्यासत्या सत्यभामा रुक्मिणी कृष्णवल्लभा ॥ २४

देवकी कृष्णमाता च सुभद्रा भद्ररूपिणी।
मनोहरा तथा सौम्या श्यामाङ्गी स(सो)मदर्शना ॥ २५

घोररूपा घोरतेजा घोरवत्प्रियदर्शना।
कुमारी बालिका क्षुद्रा कुमारीरूपधारिणी ॥ २६

युवती युवतीरूपा युवतीरसरञ्जका।
पीनस्तनी क्षुद्र(क्षीण)मध्या प्रौढा मध्या जरातुरा ॥ २७

अतिवृद्धा स्थाणुरूपा चलाङ्गी चञ्चला चला(नना)।
देवमाता देवरूपा देवकार्यकरी शुभा ॥ २८

देवमाता दितिर्दक्षा सर्वमाता सनातनी।
पानप्रिया पायनी च पालना पालनप्रिया॥ २९

मत्स्याशी मांसभक्ष्या च सुधाशी जनवल्लभा।
तपस्विनी तपी तप्या तपःसिद्धिप्रदायिनी॥ ३०

हविष्या च हविर्भोक्त्री हव्यकव्यनिवासिनी।
यजुर्वेदा वश्यकरी यज्ञाङ्गी यज्ञवल्लभा॥ ३१

स्वधा स्वाहा स्वधाधारा यज्ञाङ्गी यज्ञभुक्सदा।
दक्षा दाक्षायणी दुर्गा दक्षयज्ञविनाशिनी॥ ३२

पार्वती पर्वतप्रीता तथा पर्वतवासिनी।
हैमी हर्म्या हेमरूपा मेना मान्या मनोरमा॥ ३३

कैलासवासिनी मुक्ता (शुक्ला) शर्वक्रीडाविलासिनी।
चार्वङ्गी चारुरूपा च सुवक्त्रा च शुभानना॥ ३४

चलत्कुण्डलगण्डश्रीर्लसत्कुण्डलधारिणी।
महा(हेम)सिंहासनस्था च हेमभूषणभूषिता॥ ३५

हेमाङ्गदा हेमभूषा सूर्यकोटिसमप्रभा।
बालादित्यसमकान्तिः सिन्दूरार्चितविग्रहा॥ ३६

यवा यावकरूपा च रक्तचन्दनरूपधृक्।
कोटरी कोटराक्षी च निर्लज्जा च दिगम्बरा॥ ३७

पूतना बालमाता च शून्यालयनि(सूर्यमण्डल)वासिनी।
श्मशानवासिनी शून्या हृद्या चत्वरवासिनी॥ ३८

मधुकैटभहन्त्री च महिषासुरघातिनी।
निशुम्भशुम्भमथनी चण्डमुण्डविनाशिनी॥ ३९

शिवाख्या शिवरूपा च शिवदूती शिवप्रिया।
शिवदा शिववक्षःस्था शर्वाणी(शिवेष्टा) शिवकारिणी॥ ४०

इन्द्राणी चेन्द्रकन्या च राजकन्या सुरप्रिया।
लज्जाशीला (जिता) साधुशीला कुलस्त्री कुलभूषिका॥ ४१

महाकुलीना निष्कामा निर्लज्जा कुलभूषणा।
कुलीना कुलकन्या च तथा च कुलभूषिता॥ ४२

अनन्तानन्तरूपा च अनन्तासुरनाशिनी।
हसन्ती शिवसङ्गेन वाञ्छितानन्ददायिनी॥ ४३

नागाङ्गी नागभूषा च नागहारविधारिणी।
धरिणी धारिणी धन्या (माया) महासिद्धिप्रदायिनी॥ ४४

डाकिनी शाकिनी चैव राकिनी हाकिनी तथा।
भूता प्रेता पिशाची च यक्षिणी धनदार्चिता॥ ४५

धृतिः कीर्तिः स्मृतिर्मेधा तुष्टिःपुष्टिरुमा रु(उ)षा।
शाङ्करी शाम्भवी मी(मे)ना रतिः प्रीतिः स्मरातुरा॥ ४६

अनङ्गमदना देवी अनङ्गमदनातुरा।
भुवनेशी महामाया तथा भुवनपालिनी॥ ४७

ईश्वरी चेश्वरी(र)प्रीता चन्द्रशेखरभूषणा।
चित्तानन्दकरी देवी चित्तसंस्था जनस्य च॥ ४८

अरूपा बहुरूपा च सर्वरूपा चिदात्मिका।
अनन्त(आनन्द)रूपिणी नित्या तथानन्त(न्द)प्रदायिनी॥ ४९

नन्दा चानन्दरूपा च तथाऽनन्दप्रकाशिनी।
सदानन्दा सदानित्या साधकानन्ददायिनी॥ ५०

वनि(त्वरि)ता तरुणी भव्या भविका च विभाविनी।
चन्द्रसूर्यसमा दीप्ता सूर्यवत्परिपालिनी ॥ ५१

नारसिंही हयग्रीवा हिरण्याक्षविनाशिनी।
वैष्णवी विष्णुभक्ता च शालग्रामनिवासिनी ॥ ५२

चतुर्भुजा चाष्टभुजा सहस्रभुजसंज्ञिता।
आद्या कात्यायनी नित्या सर्वाद्या सर्वदायिनी ॥ ५३

सर्वचन्द्र(मन्त्र)मयी देवी सर्ववेदमयी शुभा।
सर्वदेवमयी देवी सर्वलोकमयी पुरा ॥ ५४

सर्वसम्मोहिनी देवी सर्वलोकवशङ्करी।
राजिनी रञ्जिनी रागा देहलावण्यरञ्जिता ॥ ५५

नटी नटप्रिया धूर्ता तथा धूर्तजनार्दिनी।
महामाया महामोहा महासत्वविमोहिता ॥ ५६

बलिप्रिया मांसरुचिर्मधुमांसप्रिया सदा।
मधुमत्ता माधविका मधुमाधवरूपिका ॥ ५७

दिवामयी रात्रिमयी संध्या संधिस्वरूपिणी।
काल(म)रूपा सूक्ष्मरूपा सूक्ष्मिणी चातिसूक्ष्मिणी ॥ ५८

तिथिरूपा वाररूपा तथा नक्षत्ररूपिणी।
सर्वभूतमयी देवी पञ्चभूतनिवासिनी ॥ ५९

शून्याकारा शून्यरूपा शून्यसंस्था च स्तम्भिनी।
आकाशगामिनी देवी ज्योतिश्चक्रनिवासिनी ॥ ६०

ग्रहाणां स्थितिरूपा च रुद्राणी चक्रसम्भवा।
ऋषीणां ब्रह्मपुत्राणां तपः सिद्धिप्रदायिनी ॥ ६१

अरुन्धती च गायत्री सावित्री सत्वरूपिणी।
चितासंस्था चितारूपा चित्तसिद्धिप्रदायिनी॥ ६२

शवस्था शवरूपा च शवशत्रुनिवासिनी (सङ्गकुतूहला)।
योगिनी योगरूपा च योगिनां स्वान्तहारिणी॥ ६३

सुप्रसन्ना महादेवी यामुनी मुक्तिदायिनी।
निर्मला विमला शुद्धा शुद्धसत्वा जयप्रदा॥ ६४

महाविद्या महामाया मोहिनी विश्वमोहिनी।
कार्यसिद्धिकरी देवी सर्वकार्यनिवासिनी॥ ६५

कार्याकार्यकरी रौद्री महाप्रलयकारिणी।
स्त्रीपुंभेदा ह्यभेद्या च भेदिनी भेद(भय)नाशिनी॥ ६६

सर्वरूपा सर्वमयी अद्वैतानन्दरूपिणी।
प्रचण्डा चण्डिका चण्डा चण्डासुरविनाशिनी॥ ६७

सुमस्ता बहुमस्ता च छिन्नमस्ताऽसुनाशिनी।
अरूपा च विरूपा च चित्र(त्त)रूपा चिदात्मिका॥ ६८

अशास्त्रा बहुशास्त्रा च सर्वशास्त्रप्रहारिणी।
शास्त्रार्था शास्त्रवादा च नानाशास्त्रार्थवादिनी॥ ६९

काव्यशास्त्रप्रमोदा च काव्यालङ्कारवासिनी।
रसज्ञा रसना जिह्वा रसामोदा रसप्रिया॥ ७०

नानाकौतुकसंयुक्ता नानारसविलासिनी।
अरूपा च स्वरूपा च विरूपा च सुरूपिणी॥ ७१

रूपवश्या रूप जीवा वेश्याद्या वेशधारिणी।
नानावेशधरा देवी नानावेशेषु संस्थिता॥ ७२

कुरूपा कुटिला कृष्णा कृष्णरूपा च कालिका ।
लक्ष्मीप्रदा महालक्ष्मीः सर्वलक्षणसंयुता ।। ७३

कुबेरगृहसंस्था च धनरूपा धनप्रदा ।
नानारत्नप्रदा देवी रत्नखण्डेषु संस्थिता ।। ७४

वर्णसंस्था वर्णरूपा सर्ववर्णमयी सदा ।
ओङ्काररूपिणी वाच्या आदित्यज्योतीरूपिणी ।। ७५

संसारमोचिनी देवी संग्रामे जयदायिनी ।
जयरूपा जयाख्या च जयिनी जयदायिनी ।। ७६

मानिनी मानरूपा च मानभङ्गप्रणाशिनी ।
मान्या मानप्रिया मेधा मानिनी मानदायिनी ।। ७७

साधका साधना साध्या साधिका साधनप्रिया ।
स्थावरा जङ्गमा प्रोक्ता चपला चपलप्रिया ।। ७८

ऋद्धिदा ऋद्धिरूपा च सिद्धिदा सिद्धिदायिनी ।
क्षेमङ्करी शङ्करी च सर्वसंम्मोहकारिणी ।। ७९

रञ्जिता (वाञ्छिता) रञ्जनीया (वाञ्छनीया) च सर्ववाञ्छाप्रदायिनी ।
भगलिङ्गप्रमोदा च भगलिङ्गनिवासिनी ।। ८०

भगरूपा भगाभोग्या लिङ्गरूपा च लिङ्गिनी ।
भगगीतिर्महाप्रीतिर्लिङ्गगीतिर्महासुखा ।। ८१

स्वयंभूकुसुमाराध्या स्वयंभूकुसुमाकुला ।
स्वयंभूपुष्परूपा च स्वयंभूकुसुमप्रिया ।। ८२

शुक्रकू(रू)पा महाकूपा (शुक्रा) शुक्रासवनिवासिनी ।
शुक्रस्था शुक्रिणी शुक्रा शुक्रपूजकपूजिता ।। ८३

कामाक्षा कामरूपा च योगिनीपीठवासिनी।
सर्वपीठमयी देवी पीठपूजानिवासिनी ॥ ८४

अक्षमालाधरा देवी पानपात्रविधारिणी।
शूलिनी शूलहस्ता च पाशिनी पाशरूपिणी ॥ ८५

खड्गिनी गदिनी चैव तथा सर्वास्त्रधारिणी।
भाव्या भव्या भवानी सा भवमुक्तिप्रदायिनी ॥ ८६

चतुरा चतुरप्रीता चतुराननपूजिता।
देवस्तव्या देवपूज्या सर्वपूज्या सुरेश्वरी ॥ ८७

जननी जनरूपा च जनानां चित्तहारिणी।
जटिला (नी) केशबद्धा च सुकेशी केशबद्धि(वासि)का ॥ ८८

अहिंसा द्वेषिका द्वेष्या सर्वद्वेषविनाशिनी।
उच्चाटिनी द्वेषिणी च मोहिनी मधुराक्षरा(रेक्षणा) ॥ ८९

क्रीडा क्रीडावती लेखा करुणा करुणाकरी।
सर्वज्ञा सर्वकार्या(गम्या) च सर्वभक्षा सुरारिहा ॥ ९०

सर्वरूपा सर्वशान्ता सर्वेषां प्राणरूपिणी।
सृष्टिस्थितिकरी देवी तथा प्रलयकारिणी ॥ ९१

मुग्धा साध्वी तथा रौद्री नानामूर्तिविधारिणी।
उक्तानि यानि देवेशि अनुक्तानि महेश्वरि ॥ ९२

यत् किञ्चिद् दृश्यते देवि तत् सर्वं भुवनेश्वरी।
इति श्रीभुवनेश्वर्या नामानि कथितानि ते ॥ ९३

सहस्राणि महादेवि फलं तेषां निगद्यते।
यः पठेत् प्रातरुत्थाय चार्द्धरात्रे तथा प्रिये ॥ ९४

प्रातःकाले तथा मध्ये सायाह्ने हरवल्लभे।
यत्र तत्र पठित्वा च भक्त्या सिद्धिर्न संशयः ॥ ९५

पठेद् वा पाठयेद् वापि शृणुयाच्छ्रावयेत्तथा।
तस्य सर्वं भवेत् सत्यं मनसा यच्च वाञ्छितम् ॥ ९६

अष्टम्यां च चतुर्दश्यां नवम्यां वा विशेषतः।
सर्वमङ्गलसंयुक्ते संक्रान्तौ शनिभौमयोः ॥ ९७

यः पठेत् परया भक्त्या देव्या नामसहस्रकम्।
तस्य देहे च संस्थानं कुरुते भुवनेश्वरी ॥ ९८

तस्य कार्यं भवेद् देवि अन्यथा न कथञ्चन।
श्मशाने प्रान्तरे वापि शून्यागारे चतुष्पथे ॥ ९९

चतुष्पथे चैकलिङ्गे मेरुदेशे तथैव च।
जलमध्ये वह्निमध्ये संग्रामे ग्रामशान्तये ॥ १००

जप्त्वा मन्त्रसहस्रं तु पठेन्नामसहस्रकम्।
धूपदीपादिभिश्चैव बलिदानादिकैस्तथा ॥ १०१

नानाविधैस्तथा देवि नैवेद्यैर्भुवनेश्वरीम्।
सम्पूज्य विधिवज्जप्त्वा स्तुत्वा नामसहस्रकैः ॥ १०२

अचिरात् सिद्धिमाप्नोति साधको नात्र संशयः।
तस्य तुष्टा भवेद् देवी सर्वदा भुवनेश्वरी ॥ १०३

भूर्जपत्रे समालिख्य कुङ्कुमाद् रक्तचन्दनैः।
तथा गोरोचनाद्यैश्च विलिख्य साधकोत्तमः ॥ १०४

सुतिथौ शुभनक्षत्रे लिखित्वा दक्षिणे भुजे।
धारयेत् परया भक्त्या देवीरूपेण पार्वति! ॥ १०५

तस्य सिद्धिर्महेशानि अचिराञ्च भविष्यति ।
रणे राजकुले वाऽपि सर्वत्र विजयी भवेत् ।। १०६

देवता वशमायाति किं पुनर्मानवादयः ।
विद्यास्तम्भं जलस्तम्भं करोत्येव न संशयः ।। १०७

पठेद् वा पाठयेद् वाऽपि देवीभक्त्या च पार्वति ।
इह भुक्त्वा वरान् भोगान् कृत्वा काव्यार्थविस्तरान् ।। १०८

अन्ते देव्या गणत्वं च साधको मुक्तिमाप्नुयात् ।
प्राप्नोति देवदेवेशि सर्वार्थान्नात्र संशयः ।। १०९

हीनाङ्गे चातिरिक्ताङ्गे शठाय परशिष्यके ।
न दातव्यं महेशानि प्राणान्तेऽपि कदाचन ।। ११०

लिखित्वा धारयेद् देहे दुःखं तस्य न जायते ।
य इदं भुवनेश्वर्याः स्तवराजं महेश्वरि ।। १११

इति ते कथितं देवि भुवनेश्याः सहस्रकम् ।
यस्मै कस्मै न दातव्यं विना शिष्याय पार्वति ।। ११२

सुरतरुवरकान्तं सिद्धिसाध्यैकसेव्यं
यदि पठति मनुष्यो नान्यचेताः सदैव ।
इह हि सकलभोगान् प्राप्य चान्ते शिवाय
व्रजति परसमीपं सर्वदा मुक्तिमन्ते ।। ११३

—श्रीरुद्रयामलतन्त्रे

# श्रीभुवनेश्वरीसहस्रनामावलिः

ओं ह्रीं ओं नमः । आद्यायै । कमलायै । वाण्यै । मायायै । श्रीभुवनेश्वर्यै । भुवनायै । भव्यायै । भवान्यै । भवभाविन्यै (मोचन्यै) । रुद्राण्यै । रुद्रभक्तायै । रुद्रप्रियायै । सत्यै । उमायै । कात्यायन्यै (कामेश्वर्यै) । दुर्गायै । मङ्गलायै (शर्वाण्यै) । सर्वमङ्गलायै । त्रिपुरायै नमः ।। २०

ओं परमेशान्यै नमः । त्रिपुरायै । सुन्दर्यै । प्रियायै । रमणायै । रमण्यै । रामायै । रा(का)मकार्यकर्यै । शुभायै । ब्राह्म्यै । नारायण्यै । चण्ड्यै । चामुण्डायै । मु(च)ण्डनायिकायै । माहेश्वर्यै । कौमार्यै । वाराह्यै । अपराजितायै । महामायायै । मुक्तकेश्यै नमः ।। ४०

ओं महात्रिपुरसुन्दर्यै नमः । सुन्दर्यै । शोभनायै । रक्तायै । रक्तवस्त्रापिधायिन्यै । रक्ताक्ष्यै (रक्ताभायै) । रक्तवस्त्रा(र्णा)यै । रक्तबीजनिषूदन्यै । रक्तचन्दनसिक्ताङ्ग्यै । सदा रक्तपुष्पप्रियायै । कमलायै । कामिन्यै । कान्तायै । सदा कामदेवप्रियायै । लक्ष्म्यै । लोलायै । चञ्चलाक्ष्यै । चञ्चलायै । चपलायै । प्रियायै नमः ।। ६०

ओं भैरव्यै नमः । भयहर्न्यै । महाभयविनाशिन्यै । भयङ्कर्यै । महाभीमायै । भयहायै । भयनाशिन्यै । श्मशाने प्रान्तरे दुर्गे संस्मृतायै भयनाशिन्यै । जयायै । विजयायै । जयपूर्णायै । जयप्रदायै । यमुनायै । यामुनायै । याम्यायै । यामुनजायै (यमश्रेष्ठायै) । यमप्रियायै । सर्वेश्यै । जनिकायै । जन्यायै नमः ।। ८०

ओं जनहायै नमः । जनवर्धिन्यै । काल्यै । कपालिन्यै । कुल्लायै (कुल्यायै) । कालिकायै । कालरात्रिकायै । महाकालहृदिस्थायै । कालभैरवरूपिण्यै । कपालखट्वाङ्गधरायै । पाशाङ्कुशविधारिण्यै ।

अभयायै । भयायै । भयनाशिन्यै । महाभयप्रदात्र्यै । वरहस्तिन्यै । महामायायै । भीमवेगायै । महावेगायै । महास्तन्यै नमः ।। १००

ओं गौर्यै नमः । गौरांगिन्यै । गौरायै । गौरवर्णायै । जयप्रदायै । उग्रायै । उग्रप्रभायै । शान्त्यै(न्तायै) । शान्तिदायै । अशान्तिनाशिन्यै । उग्रतारायै । उग्रायै । नीलायै । एकजटायै । हंसरूपायै । तारायै । सिद्धिकालिकायै । तारायै । नीलायै । वागीश्यै नमः ।। १२०

ओं नीलसरस्वत्यै नमः । गंगायै । काश्यै । सत्यै । सत्यायै । सर्वतीर्थमय्यै । तीर्थरूपायै । तीर्थपुण्यायै । तीर्थदायै । तीर्थसेविकायै । पुण्यदायै । पुण्यरूपायै । पुण्यकीर्त्यै । प्रकाशिन्यै । पुण्यकालायै । पुण्यसंस्थायै । पुण्यजनप्रियायै । तुलस्यै । तोतुलायै । स्तोत्रायै नमः ।। १४०

ओं राधिकायै नमः । राधनप्रियायै । तुलसीतुलनायै । तुल्यायै । बालिकायै । वेधसःप्रियायै । सत्यायै । सत्यायै । सत्यभामायै । रुक्मिण्यै । कृष्णवल्लभायै । देवक्यै । कृष्णमात्रे । सुभद्रायै । भद्ररूपिण्यै । मनोहरायै । सौम्यायै । श्यामाङ्ग्यै । सम(सोम)-दर्शनायै । घोररूपायै नमः ।। १६०

ओं घोरतेजसे नमः । घोरवत्प्रियदर्शनायै । कुमार्यै । बालिकायै । क्षुद्रायै । कुमार्यै । रूपधारिण्यै । युवत्यै । युवतीरूपायै । युवतीरसरञ्जकायै । पीनस्तन्यै । क्षुद्र(क्षीण)-मध्यायै । प्रौढायै । मध्यायै । जरातुरायै । अतिवृद्धायै । स्थाणु-रूपायै । चलाङ्ग्यै । चञ्चलायै । चलायै (चञ्चलाननायै) नमः ।। १८०

ओं देवमात्रे नमः । देवरूपायै । देवकार्यकर्यै । शुभायै । देवमात्रे । दित्यै । दक्षायै । सर्वमात्रे । सनातन्यै । पानप्रियायै ।

पायन्यै । पालनायै । पालनप्रियायै । मत्स्याभ्यै । मांसभक्ष्यायै । सुधाभ्यै । जनवल्लभायै । तपस्विन्यै । तप्यै । तप्यायै नमः ।। २००

ओं तपःसिद्धिप्रसादिन्यै नमः । हविष्यायै । हविर्भोक्त्र्यै । हव्यकव्यनिवासिन्यै । यजुर्वेदायै । वश्यकर्यै । यज्ञाङ्ग्यै । यज्ञवल्लभायै । स्वधायै । स्वाहायै । स्वधाधारायै । यज्ञाङ्ग्यै । सदा यज्ञभुजे । दक्षायै । दाक्षायण्यै । दुर्गायै । दक्षयज्ञविनाशिन्यै । पार्वत्यै । पर्वतप्रीतायै । पर्वतवासिन्यै नमः ।। २२०

ओं हैम्यै नमः । हर्म्यायै । हेमरूपायै । मेनायै । मान्यायै । मनोरमायै । कैलासवासिन्यै । मुक्तायै(शुक्लायै) । शर्वक्रीडा-विलासिन्यै । चार्वङ्ग्यै । चारुरूपायै । सुवक्त्रायै । शुभाननायै । चलत्कुण्डलगण्डश्रियै । लसत्कुण्डलधारिण्यै । महा(हेम)सिंहा-सनस्थायै । हेमभूषणभूषितायै । हेमांगदायै । हेमभूषायै । सूर्यकोटिसमप्रभायै नमः ।। २४०

ओं बालादित्यसमकान्त्यै नमः । सिन्दूरार्चितविग्रहायै । यवायै । यावकरूपायै । रक्तचन्दनरूपधृषे । कोटर्यै । कोटराक्ष्यै । निर्लज्जायै । दिगंबरायै । पूतनायै । बालमात्रे । शून्यालयनि-(सूर्यमण्डल)वासिन्यै । श्मशानवासिन्यै । शून्यायै । हृद्यायै । चत्वरवासिन्यै । मधुकैटभहन्त्र्यै । महिषासुरघातिन्यै । निशुंभशुंभ-मथन्यै । चण्डमुण्डविनाशिन्यै नमः ।। २६०

ओं शिवाख्यायै नमः । शिवरूपायै । शिवदूत्यै । शिवप्रियायै । शिवदायै । शिववक्षःस्थायै । शर्वाण्यै(शिवेष्टायै) । शिवकारिण्यै । इन्द्राण्यै । इन्द्रकन्यायै । राजकन्यायै । सुरप्रियायै । लज्जाशीलायै । साधुशीलायै । कुलस्त्रियै । कुलभूषि(जितायै)कायै । महाकुलीनायै । निष्कामायै । निर्लज्जायै । कुलभूषणायै नमः ।। २८०

ओं कुलीनायै नमः । कुलकन्यायै । कुलभूषितायै । अनन्तायै । अनन्तरूपायै । अनन्तासुरनाशिन्यै । शिवसंगेन हसन्त्यै । वाञ्छितानन्ददायिन्यै । नागाङ्ग्यै । नागभूषायै । नागहार-विधारिण्यै । धरिण्यै । धारिण्यै । धन्यायै (मायायै) । महासिद्धि-प्रदायिन्यै । डाकिन्यै । शाकिन्यै । राकिन्यै । हाकिन्यै । भूतायै नमः ॥ ३००

ओं प्रेतायै नमः । पिशाच्यै । यक्षिण्यै । धनदार्चितायै । धृत्यै । कीर्त्यै । स्मृत्यै । मेधायै । तुष्ट्यै । पुष्ट्यै । उमायै । रुषायै (उषायै) । शांकर्यै । शांभव्यै । मीनायै (मेनायै) । रत्यै । प्रीत्यै । स्मरातुरायै । अनंगमदनायै । देव्यै नमः ॥ ३२०

ओं अनङ्गमदनातुरायै नमः । भुवनेश्यै । महामायायै । भुवनपालिन्यै । ईश्वर्यै । ईश्वरी(र)प्रीतायै । चन्द्रशेखरभूषणायै । चित्तानन्दकरीदेव्यै । जनस्य चित्तसंस्थायै । अरूपायै । बहुरूपायै । सर्वरूपायै । चिदात्मिकायै । अनन्त(आनन्द)रूपिण्यै । नित्यायै । आनन्द(अनन्त)प्रदायिन्यै । नन्दायै । आनन्दरूपायै । आनन्द-प्रकाशिन्यै । सदानन्दायै नमः ॥ ३४०

ओं सदानित्यायै नमः । साधकानन्ददायिन्यै । वनितायै (त्वरितायै) । तरुण्यै । भव्यायै । भविकायै । विभाविन्यै । चन्द्रसूर्यसमायै । दीप्तायै । सूर्यवत्परिपालिन्यै । नारसिंह्यै । हयग्रीवायै । हिरण्याक्षविनाशिन्यै । वैष्णव्यै । विष्णुभक्तायै । शालग्रामनिवासिन्यै । चतुर्भुजायै । अष्टभुजायै । सहस्रभुज-संज्ञितायै । आद्यायै नमः ॥ ३६०

ओं कात्यायन्यै नमः । नित्यायै । सर्वाद्यायै । सर्वदायिन्यै । सर्वचन्द्र(मन्त्र)मय्यै देव्यै । सर्ववेदमय्यै । शुभायै । सर्वदेवमय्यै

देव्यै । पुरासर्वलोकमय्यै । सर्वसंमोहिन्यै देव्यै । सर्वलोकवशंकर्यै । राजिन्यै । रञ्जिन्यै । रागायै । देहलावण्यरञ्जितायै । नट्यै । नटप्रियायै । धूर्तायै । धूर्तजनार्दिन्यै । महामायायै नमः ।। ३८०

ओं महामोहायै नमः । महासत्वविमोहितायै । बलिप्रियायै । मांसरुच्यै । सदा मधुमांसप्रियायै । मधुमत्तायै । माधविकायै । मधुमाधवरूपिकायै । दिवामय्यै । रात्रिमय्यै । सन्ध्यायै । सन्धिस्वरूपिण्यै । काल(म)रूपायै । सूक्ष्मरूपायै । सूक्ष्मिण्यै । अतिसूक्ष्मिण्यै । तिथिरूपायै । वाररूपायै । नक्षत्ररूपिण्यै । सर्वभूतमय्यै देव्यै नमः ।। ४००

ओं पञ्चभूतनिवासिन्यै नमः । शून्याकारायै । शून्यरूपायै । शून्यसंस्थायै । स्तंभिन्यै । आकाशगामिन्यै देव्यै । ज्योतिश्चक्रनिवासिन्यै । ग्रहाणां स्थितिरूपायै । रुद्राण्यै । चक्रसंभवायै । ब्रह्मपुत्राणामृषीणां तपःसिद्धिप्रदायिन्यै । अरुन्धत्यै । गायत्र्यै । सावित्र्यै । सत्वरूपिण्यै । चितासंस्थायै । चितारूपायै । चित्तसिद्धिप्रदायिन्यै । शवस्थायै । शवरूपायै नमः ।। ४२०

ओं शवशत्रुनिवासिन्यै (शवसंगकुतूहलायै) नमः । योगिन्यै । योगरूपायै । योगिनां स्वान्तहारिण्यै । सुप्रसन्नायै । महादेव्यै । यामुन्यै । मुक्तिदायिन्यै । निर्मलायै । विमलायै । शुद्धायै । शुद्धसत्वायै । जयप्रदायै । महाविद्यायै । महामायायै । मोहिन्यै । विश्वमोहिन्यै । कार्यसिद्धिकर्यै देव्यै । सर्वकार्यनिवासिन्यै । कार्याकार्यकर्यै नमः ।। ४४०

ओं रौद्र्यै नमः । महाप्रलयकारिण्यै । स्त्रीपुंभेदायै । अभेद्यायै । भेदिन्यै । भेद(भय)नाशिन्यै । सर्वरूपायै । सर्वमय्यै । अद्वैतानन्दरूपिण्यै । प्रचण्डायै । चण्डिकायै । चण्डायै । चण्डासुरविनाशिन्यै ।

सुमस्तायै। बहुमस्तायै। छिन्नमस्तायै। असुनाशिन्यै। अरूपायै। विरूपायै। चित्र(त्त)रूपायै नमः ।। ४६०

ओं चिदात्मिकायै नमः । अशास्त्रायै । बहुशास्त्रायै । सर्वशस्त्रप्रहारिण्यै । शास्त्रार्थायै । शास्त्रवादायै । नानाशास्त्रार्थ-वादिन्यै । काव्यशास्त्रप्रमोदायै। काव्यालंकारवासिन्यै। रसज्ञायै। रसनायै। जिह्वायै। रसामोदायै। रसप्रियायै। नानाकौतुकसंयुक्तायै । नानारसविलासिन्यै। अरूपायै। स्वरूपायै। विरूपायै। सुरूपिण्यै नमः ।। ४८०

ओं रूपवश्यायै नमः । रूपजीवायै । वेश्याद्यायै । वेशधारिण्यै । नानावेशधरायै देव्यै । नानावेशेषुसंस्थितायै । कुरूपायै । कुटिलायै । कृष्णायै । कृष्णरूपायै । कालिकायै । लक्ष्मीप्रदायै। महालक्ष्म्यै। सर्वलक्षणसंयुतायै। कुबेरगृहसंस्थायै। धनरूपायै । धनप्रदायै । नानारत्नप्रदायै देव्यै । रत्नखण्डेषु संस्थितायै । वर्णसंस्थायै नमः ।। ५००

ओं वर्णरूपायै नमः। सदा सर्ववर्णमय्यै। ओंकाररूपिण्यै। वाच्यायै। आदित्यज्योतीरूपिण्यै। संसारमोचिन्यै दिव्यै। संग्रामे जयदायिन्यै। जयरूपायै। जयाख्यायै। जयिन्यै। जयदायिन्यै। मानिन्यै । मानरूपायै । मानभंगप्रणाशिन्यै । मान्यायै । मानप्रियायै । मेधायै। मानिन्यै। मानदायिन्यै। साधकायै नमः ।। ५२०

ओं साधनायै नमः। साध्यायै। साधिकायै। साधनप्रियायै। स्थावरायै । जंगमायै । चपलायै । चपलप्रियायै । ऋद्धिदायै । ऋद्धिरूपायै । सिद्धिदायै । सिद्धिदायिन्यै । क्षेमङ्कर्यै । शङ्कर्यै । सर्वसंमोहकारिण्यै । रञ्जितायै (वाञ्छितायै) । रञ्जनीयायै (वाञ्छनीयायै) । सर्ववाञ्छाप्रदायिन्यै । भगलिङ्गप्रमोदायै । भगलिङ्गनिवासिन्यै नमः ।। ५४०

ओं भगरूपायै नमः । भगाभोग्यायै । लिङ्गरूपायै । लिङ्गिन्यै । भगगीत्यै । महाप्रीत्यै । लिङ्गगीत्यै । महासुखायै । स्वयंभूकुसुमाराध्यायै । स्वयंभूकुसुमाकुलायै । स्वयंभूपुष्परूपायै । स्वयंभूकुसुमप्रियायै । शुक्रकू(रू)पायै । महाकूपा(शुक्रा)यै । शुक्रासवनिवासिन्यै । शुक्रस्थायै । शुक्रिण्यै । शुक्रायै । शुक्रपूजकपूजितायै । कामाक्षायै नमः ।। ५६०

ओं कामरूपायै नमः । योगिनीपीठवासिन्यै । सर्वपीठमय्यै देव्यै । पीठपूजानिवासिन्यै । अक्षमालाधरायै देव्यै । पानपात्रविधारिण्यै । शूलिन्यै । शूलहस्तायै । पाशिन्यै । पाशरूपिण्यै । खड्गिन्यै । गदिन्यै । सर्वास्त्रधारिण्यै । भाव्यायै । भव्यायै । भवान्यै । भवमुक्तिप्रदायिन्यै । चतुरायै । चतुरप्रीतायै । चतुराननपूजितायै नमः ।। ५८०

ओं देवस्तव्यायै नमः । देवपूज्यायै । सर्वपूज्यायै । सुरेश्वर्यै । जनन्यै । जनरूपायै । जनानां चित्तहारिण्यै । जटिलायै (जटिन्यै) । केशबद्धायै । सुकेश्यै । केशबद्धिका(वासिका)यै । अहिंसायै । द्वेषिकायै । द्वेष्यायै । सर्वद्वेषविनाशिन्यै । उच्चाटिन्यै । द्वेषिण्यै । मोहिन्यै । मधुराक्षरायै (रेक्षणायै) । क्रीडायै नमः ।। ६००

ओं व्रीडावत्यै नमः । लेखायै । करुणायै । करुणाकर्यै । सर्वज्ञायै । सर्वकार्यायै (गम्यायै) । सर्वभक्षायै । सुरारिहायै । सर्वरूपायै । सर्वशान्तायै । सर्वेषां प्राणरूपिण्यै । सृष्टिस्थितिकर्यै देव्यै । प्रलयकारिण्यै । मुग्धायै । साध्व्यै । रौद्र्यै । नानामूर्तिविधारिण्यै नमः ।। ६१७

(अपूर्णमिदम्)

# राधासहस्रनामस्तोत्रम्

श्रीशिव उवाच–

अथातः संप्रवक्ष्यामि राधानामसहस्रकम्।
शृणु नारद भद्रं ते गोपनीयं प्रयत्नतः ॥ १

प्रातः सायं निशीथे वा पठितव्यं मुमुक्षुभिः।
त्रिराचम्य शुचिर्भूत्वा यो जपेत्सुसमाहितः ॥ २

स वैष्णवो विशुद्धात्मा जायते नात्र संशयः।
बहु किं पठनादस्य भवेद्विष्णुसमः पुमान्॥ ३

मासैकपठनादस्य भवेत्सर्वार्थसिद्धिदः।
मासद्वयेन देवर्षे भवेद्वै वैष्णवोत्तमः ॥ ४

सोऽम्बरीषः स प्रह्लाद उद्धवः स युधिष्ठिरः।
स भीष्म अर्जुनश्चैव स्तवराजं पठेत्तु यः ॥ ५

अथ किं बहुनोक्तेन वर्णनेन पुनः पुनः।
यद्यदिष्टतमं लोके तत्तदाप्नोति साधकः ॥ ६

रहस्यं कथयाम्यद्य यद्वै नामसहस्रकम्।
इदमेव पुरा पृष्टः कृष्ण उद्धवमूचिवान्॥ ७

श्रीराधा राधिकाऽऽराध्या राधाकृष्णशिवादिभिः।
गोपिका गोपराज्ञी च गोपानन्दविधायिनी ॥ ८

गोपपूज्या गोपहृष्टा गोपगोपीभिरावृता।
गोपाह्लादकरी गोपी गोपा गोपशिवङ्करी ॥ ९

सुन्दरी सुन्दराकारा सुन्दरोत्तमवन्दिता।
सुन्दरानन्दसंहृष्टा सुन्दरी बहुभाविनी ॥ १०

सौन्दर्यनिलया रामाभिरामा बहुमानिता।
श्यामा श्यामप्रियाऽश्यामा श्यामाभिवन्दिता नवा॥ ११

ललिता ललिताचारा ललिताचारशालिनी।
कृष्णा कृष्णकृपाकर्त्री कृष्णानन्दपरायणा॥ १२

कृष्णप्रिया कृष्णपूज्या कृष्णाकर्षणकारिणी।
कृष्णाराध्या कृष्णवंद्या कृत्स्नवर्त्मनि बुद्धिदा॥ १३

कृष्णपूजनसर्वस्वा कृष्णदर्शनतत्परा।
श्रीकृष्णपदसर्वस्वा कृष्णकृष्णेतिवादिनी॥ १४

श्रीकृष्णैकान्तसक्ता च कृष्णप्रेमविवर्द्धिनी॥ १५

विशेषा च विशेषज्ञा बल्लवी बल्लभार्चिता।
बल्लवीनां च हार्दज्ञा बल्लवीनां सुखावहा॥ १६

रासमण्डलमध्यस्था रासकेलिकलोत्सुका।
श्रीकृष्णालिङ्गितभुजा रासक्रीडाभिनन्दिनी॥ १७

वृषभानुसुता राधा वृषभानुसुखप्रदा।
वृषभानुसुता देवी कीर्त्यानन्दप्रदायिनी॥ १८

वृषभानुसुता तन्वी वृषभानोः कुलध्वजा।
सर्वागमप्रिया सर्वाचारतत्परमानसा॥ १९

प्रजासञ्जीवनी जीवनौषधी परमामृता।
प्रजासेव्या प्रजावन्द्या व्रजमानुषमुक्तिदा॥ २०

सौदामिनी दामप्रिया तपोयुक्ता तपोनिधिः।
तापसीगीतगुणका तापसानां गतिप्रिया॥ २१

तपःकर्त्री तपोयुक्ता तपोमूर्तिस्तपोमयी।
तपसां सिद्धिदा सिद्धा सिद्धाचारविचारिणी॥ २२

सिद्धागमा च सिद्धाख्या सिद्धिदात्री सुखावहा।
सुखदा सुखसंहृष्टा सुखाकारा सुखालया॥ २३

सखिभिः सेविता सेव्या सेवकानां शिवङ्करी।
सेविकासेवितपदा सेवकार्पितमानसा॥ २४

मनोवेगा मनोरूपा मनोगतिविडम्बिनी।
मनसःप्रेरिका माया मायामयविनाशिनी॥ २५

मोक्षदा मोक्षमार्गज्ञा मोक्षमार्गप्रकाशिनी।
मोक्षरूपा मोक्षगृहा कर्त्री मोक्षस्य जाह्नवी॥ २६

जह्नुकन्या जलावासा जलाधीशा जलप्रिया।
समुद्रगा विहङ्गा च गङ्गा शिवशिरःस्थिता॥ २७

शिवरूपा शिवकरी शिवहृद्या शिवंवदा।
शिवप्रिया शिवगतिः शिवमार्गरतिप्रदा॥ २८

शिवाचारप्रिया गुर्वी गुप्तिर्गुप्तगतिर्नृणाम्।
गुप्ता गुप्ततरा गोप्या गोप्यविद्भिः समर्चिता॥ २९

गुप्तालया गुप्तरूपा गुप्तमार्गप्रवर्तिका।
लक्ष्मीह्रीश्रीदयामूर्तिस्तुष्टिः पुष्टिः स्तुतिः प्रभा॥ ३०

क्षमा मेधा सुधा विद्या शुद्धिर्बुद्धिर्धृतिर्गतिः।
प्रचण्डचण्डमुण्डघ्नी रक्तबीजविनाशिनी॥ ३१

मथुरा द्वारका काञ्ची माहिष्मत्यथ कौशिकी।
अयोध्या कर्णिका काशीवासिनी कर्मवर्द्धिनी॥ ३२

शान्ता शान्तिकरी पुष्टा शान्तविज्ञानदायिका।
शान्तिरूपा सदा साङ्गा साङ्गोपाङ्गगतिप्रिया।। ३३

मनोहरा मनोज्ञा च मनोवृत्तिप्रकाशिनी।
मनःकान्तिभ्रमकरी भ्रामरी भ्रमकारिका।। ३४

जगद्भ्रमणधारा च जगतो भुक्तिकारिणी।
जगन्माता जगद्धात्री जगज्जीवनजीविका।। ३५

जगन्मूर्तिर्जगद्देहा जगतां जीवनौषधी।
जगतां बुद्धिसन्दात्री जगतां बुद्धिहारिणी।। ३६

माया मुद्रा महाविद्या महायोगीश्वरी मही।
योगयुक्ता योगविद्या योगाङ्गा योगवल्लभा।। ३७

योगविद्येश्वरी योग्या युक्ताहारा सुखान्विता।
योगैकसाध्या योगाद्या योगक्षेमप्रवाहिका।। ३८

बृन्दावनप्रिया बृन्दा बृन्दावनविहारिणी।
बृन्दावनकृतालास्या बृन्दावनवरार्चिता।। ३९

बृन्दावनस्थजंतूनां सर्वतोभद्रकारिणी।
बृन्दावनरसोत्कण्ठा बृन्दावनकृतालया।। ४०

बृन्दावनप्रभावज्ञा बृन्दावनसुपूजिता।
वेणुवादरता वेणुनादिनी कलभाषिणी।। ४१

वैष्णवी विष्णुनिरता विष्णुमाया वसुन्धरा।
वसुदा वसुकृद्धामा विष्णुवामाङ्गवासिनी।। ४२

विष्णुभक्तैः सदा सेव्या विष्णुभक्तहितैषिणी।
विष्णुविद्या विष्णुरूपा विश्वज्ञा च विवेकिनी।। ४३

विवेकदायिका साध्वी सम्यक्साधुजनार्चिता ।
सम्यग्ज्ञानपरा सम्यक् सम्यग्विद्याविशारदा ।। ४४

सारदा शारदा साध्या शरत्पूर्णनिभानना ।
शराह्वया सदाह्लादकारिणी जयदा मता ।। ४५

माता मातामही मन्त्रा मूर्तिर्वन्द्या पितामही ।
अर्थैश्वर्यकरी प्रज्ञा ब्राह्मी नारायणी दया ।। ४६

पुण्यापुण्यविधानज्ञा पुण्यदेवद्विजार्चिता ।
पुण्यमूर्तिः पुण्यदेहा पुण्यग्रामनिवासिनी ।। ४७

गोकुलस्य प्रिया देवी गोकुले सर्वनर्मदा ।
गोकुलाचारसर्वज्ञा गोकुलस्य सुखार्थिनी ।। ४८

गोकुलीयैः सदा ध्येया गोकुलाय गतिप्रदा ।
गोकुलाचारविदुषी गोकुलाचारवर्णिनी ।। ४९

सुरारिदमनी दिव्या सुरवृन्दविनाशिनी ।
दुष्टदानवसंहर्त्री कंसचाणूरमर्दिनी ।। ५०

कुमारी कुलजा कुन्ती कुलस्त्री कुलपालिका ।
पाञ्चाली द्रौपदी सीता तारा शैब्याऽथ रुक्मिणी ।। ५१

सत्यभामा तथा सत्या सत्यधर्मपरायणा ।
बृहती च तथा स्थूला सूक्ष्मा ह्रस्वा च दीर्घिका ।। ५२

यशोदा देवकी चित्तिरन्तःसंलग्नमानसा ।
रोहिणी कुब्जिका गुर्वी किशोरी षोडशाब्दिका ।। ५३

चित्रिणी चित्रभावज्ञा चित्रकर्मकरी सदा ।
विचित्राभरणा नन्दव्रजसौभाग्यवर्द्धिनी ।। ५४

नन्दस्तुता नन्दप्रिया नन्दानन्दकरी मही।
नन्दादिगोपैः प्रणता नन्दस्मरप्रभावती ।। ५५

यमुनाकृतसंक्रीडा यमुनारूपधारिणी।
यमुनायां सदास्नाता यमुनारामकारिणी ।। ५६

गुणाढ्या गुणदा गुण्या त्रिगुणा गुणनिर्वृता।
गुणान्विता गुणमयी गुणग्रामनिवासिनी ।। ५७

गोपस्त्रीभिः परिवृता गोपकन्याविनोदिनी।
गोपस्त्रीणां पराशक्तिः परमामृतवर्षिणी ।। ५८

परमानन्दसन्तुष्टा ब्रह्मानन्दमयीश्वरी।
ब्रह्मानन्दप्रिया ब्रह्मवादिनी ब्राह्मणप्रिया ।। ५९

सरस्वती त्रिवेणी च पुष्करा पुष्करालया।
त्रयीमयी स्मृतिमयी वेदमार्गविभूषणा ।। ६०

वेदमार्गरता वेदवेद्या विद्वत्सुपूजिता।
पुराणगीतगुणिका पुराणव्रतशोभना ।। ६१

पुराणातिपुराणाम्बा पुराणपरमार्थदा।
भूता भूतप्रिया भूतग्रामपालनमानसा ।। ६२

भूतवर्गधरा भूतपोषणव्रतपालिका।
भूतानन्दकरी भूतमाता धात्री धृतिः क्रिया ।। ६३

भूतप्राणप्रिया भूतरक्षिका भूतदर्पहा।
शर्वाणी सर्वदा सार्वी सर्वमोहविधायिनी ।। ६४

सर्वसङ्कटसंहर्त्री सर्वसिद्धिसमन्विता।
सर्वाधारा सर्वमयी सर्वरूपा सदानवा ।। ६५

सर्वशक्तिः परं ज्योतिः सर्वशत्रुप्रणाशिका
रागिणी रागजननी रागभूमिर्दृढव्रता ।। ६६

रागवश्या वीतरागा सर्वरागानुरागिणी ।
धर्मदा धर्मधारा च धनदा धान्यदा शुचिः ।। ६७

भोगमुक्तिव्रताधारा भोगमुक्तिस्वरूपिणी ।
पावनी पावनगुणा पामराणां च पावनी ।। ६८

पावनश्राविणी शश्वत्पावनश्रवणात्मिका ।
पार्वती पर्वतसुता पर्वतेषु विहारिणी ।। ६९

श्रीकृष्णान्वेषणपरा कृष्णदर्शनलालसा ।
तत्त्वात्मिका तत्त्वभावा तत्त्वानां तत्त्ववर्द्धिनी ।। ७०

तत्त्वानुरागिणी बाला तत्त्वाकर्षणकारिणी ।
तत्त्वोत्पत्तिविधानज्ञा तत्त्वानां नाशकारिणी ।। ७१

तत्त्वविद्भिः सदा ध्याता तत्त्वविन्मोक्षदायिका ।
तत्त्वविद्विघ्नशमनी तत्त्वविद्याधिकारिका ।। ७२

तत्त्ववित्प्रदसर्वस्वा तत्त्ववित्प्राणरक्षिका ।
शङ्खिनी शङ्खहस्ता च शङ्खनादकरी प्रिया ।। ७३

चक्रिणी चक्रवृत्तिज्ञा दुष्टचक्रक्षयङ्करी ।
शूलिनी शूलहस्ता च भक्ताशूलकरी सदा ।। ७४

गदनिगदसंहर्त्री अगदंकारजीविनी ।
सदाचाररता साध्वी सदाचारप्रकाशिनी ।। ७५

सदाचाराऽसदाचारदूरकर्त्री सदार्तिहा ।
सदाचारविशेषा च सदाचारप्रमाणिका ।। ७६

सङ्केतनिरता लोला सङ्केतसुसमाहिता।
सङ्केतस्वामिनी श्यामा सङ्केतप्रीतिदा शुभा ।। ७७

सुसङ्केतकृतक्रीडा सङ्केतकृतनिश्चया।
रामा रामागता रामप्रिया दुःखादिभञ्जिका ।। ७८

पद्मा पद्ममुखी पद्मवासिनी पद्मभूषणा।
पद्मालया पद्महस्ता पद्माक्षी पद्मिनी पुरी ।। ७९

पद्मवर्णा पद्मगर्भा पद्मानाम्नी महानिधिः ।
रुक्माङ्गपा रुक्मपर्णा रुक्मदात्री च निर्भया ।। ८०

रुक्माधारा रुक्मरुक्मा रुक्मिणी रुक्मप्रीतिदा।
कामिनी कामभूः काम्या कमनीया कुटुम्बिनी ।। ८१

कमनीयस्वभावाढ्या करुणाकारिणी कुरुः ।
कामरूपा काम्यमाना कामदेवकृपाधरा ।। ८२

कालकर्त्री कला कल्या कलिनी कुलभामिनी ।
तुलसी च तुला तन्द्रा तोतला तारका ध्वनिः ।। ८३

तनुका तालवद्दीर्घा तारिणी तामसी नवा।
रम्भा तिलोत्तमा रम्या रमणीया वसुन्धरा ।। ८४

कोकिला कलनिर्ह्लादा कलकण्ठी कलासुधा।
सुधापानमहानन्दा शुद्धाचारपरायणा ।। ८५

सुधासमुद्रलहरी सुधासिन्धुनिवासिनी।
सुधामयी सुधामूर्त्तिः सुधाकान्तिः सुधाह्वया ।। ८६

सुधीभिर्वन्दिता शुद्धा शुद्धाङ्गी शुद्धकर्मदा।
शुद्धमार्गरता शुद्धकारिका भक्तवत्सला ।। ८७

भक्तागमनसाकाङ्क्षी भक्तकीर्तिविधायिनी ।
सुषुम्ना च सुषामा च सुषमा परमा मता ॥ ८८

इडा चेड्या महद्धिः सा सूर्यवाहा सुशर्मदा ।
चन्द्रादित्यकला ज्योतिः सूर्यचन्द्रसुकुण्डला ॥ ८९

सूर्यमण्डलमध्यस्था चन्द्रमण्डलमानिता ।
सूर्याग्निधाम्नी सर्वेषां धाम्नी धात्री धरित्रिणी ॥ ९०

लज्जा लज्जावती लज्जापूरिणी क्लेशनाशिनी ।
नानारूपधरा नानाव्याधिनाशनतत्परा ॥ ९१

नानागमरहस्यज्ञा नानासाधनसाधिका ।
नानामन्त्रविधानज्ञा नानामन्त्रस्वरूपिणी ॥ ९२

नानाभूषणभूषाङ्गी नानावस्त्वर्थगामिनी ।
नानानाट्यकलाभिज्ञा नानाश्लाघार्थज्ञापिका ॥ ९३

नानाकर्मकरी नानाकर्ममार्गविधायिका ।
तीर्थनाम्नी भीतिहरा तीर्थश्रवणशोधिता ॥ ९४

तीर्थस्थितालङ्करणा तीर्थाश्रितसुखोन्मुखी ।
निरञ्जना निरालम्बा निराधारा निराश्रया ॥ ९५

निरीहा निस्पृहा नारी निर्द्वन्द्वा निरहंकृतिः ।
निर्गुणा गुणसंयुक्ता निर्भ्रमा भ्रमवर्जिता ॥ ९६

गरुडासनगामीया गारुडी गरुडार्चिता ।
गरुडस्कन्धसंस्थाना गरुडार्तिविनाशिनी ॥ ९७

भावपूजकसर्वस्वा भावनिन्दकनाशिनी ।
भावानुगा च भाव्यज्ञा भावाभावस्वरूपिणी ॥ ९८

भूताभूतभविष्यादिज्ञानकर्त्री भवार्तिहा।
चार्वङ्गी चतुरा चित्या चञ्चला चञ्चरीध्वनिः ॥ ९९

चामुण्डा चारुचरणा च्चिरचारणमोदिता।
वामनी वर्तुलमुखी वृत्तिर्वृत्तान्तसेविता ॥ १००

प्रकृत्तिकारिणी प्राप्तिः प्राची प्राणाशुरक्षिणी।
प्राणप्रतिष्ठा प्राकाम्या परमाणुप्रमाणिका ॥ १०१

परमा परमोत्कृष्टा परमाण्वी पराशरा।
परभागवतैर्ध्याता परभागवताभिधा ॥ १०२

श्रीभागवतहार्दिक्या श्रीभागवतमानसा।
श्रीभागवतनिष्ठा च श्रीभागवतभाविता ॥ १०३

श्रीभागवतसंविज्ज्ञा श्रीभागवतभाषिता ॥
सावित्री श्रीसच्चिद्रूपा सवितुः सुगतिप्रदा ॥ १०४

सवित्राराधितपदा सच्चिन्मण्डलमण्डिता।
कल्पान्तस्थापिनी कल्पकल्पिता कल्पनाकुला ॥ १०५

कल्पकल्पायुषः कल्पकरी कल्पप्रभञ्जिका।
मन्वन्तरप्रिया मन्वी मन्वन्तरमनुप्रिया ॥ १०६

शतरूपा शतगुणा शताक्षी च शकुन्तिनी।
सहस्राक्षी दशशतभुजार्पितमहायुधा ॥ १०७

सहस्रशिरसी माता सहस्रचरणैर्युता।
सहस्रदलपद्मान्तर्बद्धपद्मासनार्चिता ॥ १०८

षट्कोणयन्त्रनिलया षट्कोणस्थापितप्रभा।
त्रिकोणगृहमध्यस्था त्रिकोणे पूजिता शुभा ॥ १०९

तुरीया चत्वरा तन्त्री तन्त्रीस्वरविडम्बिनी।
तन्त्रगीता तन्त्रसेव्या तन्त्रोक्ता तान्त्रिकी स्मृतिः ॥ ११०

तन्त्रविद्या स्वतन्त्रा च परतन्त्रप्रिया नदी।
स्मृतिसंस्कारजननी संस्कृतिः संस्कृता पुरा ॥ १११

संन्ध्याध्यानरतिः शङ्का शक्तिः सर्वेषु जन्तुषु।
सौम्या सोमानना सौम्यमार्गबुद्धिप्रदा नृणाम् ॥ ११२

सौम्यागमकरी शुद्धा सौम्यवार्ताविधायिनी।
सौम्यमूर्तिः सौम्यदेहा सौम्याचारविशेषिका ॥ ११३

सौम्याराध्या सौम्ययुक्ता सौम्यपूजकपुत्रिणी।
गुर्वी गुरुविधा गौरी गोरोचनविभूषणा ॥ ११४

गुरुभक्ता गुरुकुला गुरुज्ञाना गुरुस्पृहा।
गुरुतालविशेषज्ञा गुरुपूज्या गुहालया ॥ ११५

सामज्ञा सामगा सामविदितस्वार्थसाधना।
शची सरस्वती दिव्यारुन्धती प्रमदोत्तमा ॥ ११६

जयदा जित्वरा याम्या जयजाप्या जपान्तिका।
हविष्याहुतिभोक्त्री च हविर्धानी मुनिप्रिया ॥ ११७

होत्री होमक्रिया होमसन्तुष्टा होमवत्सला।
यजुःप्रिया यजुर्माता यजुर्वेदप्रणालिका ॥ ११८

यजुर्वेदाभिलाषा च यजुर्वेदकृपाकरी।
ऋचां सारार्थविदुषी ऋग्यजुः सामगायनी ॥ ११९

सामदानमितानन्दा सामगेया च सामगा।
साम सामप्रिया सिद्धिः समाधिनिरतप्रिया ॥ १२०

समाधिशास्त्रश्रवणा समाधिर्व्याधिनाशिनी।
विजया विश्वमाता च जयन्ती वीरबाहुका॥ १२१

शत्रुघ्नी शाम्बरी सेनाक्षौहिणी दलहारिणी।
मञ्जीरपदका कण्ठेहारमाला कराङ्कुशा॥ १२२

भुजाङ्गदा गदहरा गदपीडाक्षयङ्करी।
शङ्खचक्रगदाखड्गनिकुरुम्बानि बिभ्रती॥ १२३

गोपिनी द्रावणकरी द्रवणाख्या सुसंस्कृतिः।
वीरभूमिर्वीरजनी वीरपालनमानसा॥ १२४

वीराकृतिर्वीरमुखी वीरविद्याविशारदा।
वीरा वीरवती वीरवर्णिनी वीरसुन्दरी॥ १२५

क्रोधिनी क्रोधसंविग्ना क्रोधवश्यकरी प्रभा।
गोमती गोधना गङ्गा गोवर्धनगिरिप्रिया॥ १२६

गोवर्धनधरा शक्तिः गोपालनपरव्रता।
हैयङ्गवीनरसिका रसोत्कृष्टा रसायना॥ १२७

विरागिणी विरागा च पूर्णवैराग्यदायिनी।
सरागा वीतरागा च विरागा रागसंयुता॥ १२८

वैराग्यजननी साक्षात् कृष्णभक्तिशरीरभृत्।
वैराग्याङ्गविधेः कर्त्री वैराग्यसुखसागरा॥ १२९

मृत्युदा पापिबृन्दानामायुर्दा धर्मधारिणाम्।
सुभङ्गदा हि दुष्टानां शिष्टानां ज्ञानभक्तिदा॥ १३०

भयदा प्रेतभूतानां साधूनामभयप्रदा।
शिवदा शिवकर्तॄणां पामराणां क्षयङ्करी॥ १३१

योगिनां योगदा रूपधारणाध्यानतत्परा।
बहिर्मुखानामशुभङ्करिका वाग्विलासिनी॥ १३२

यशोदा च यशोरूपा यशसां वृद्धिदा मुखी।
लोकवेदविधिप्रौढा लोकवेदप्रलोभिनी॥ १३३

लोकवेदरता लोकवेदाचारप्रवाहिका।
लोकवेदमया भर्त्री लोकवेदशुभप्रिया॥ १३४

लोकवेदैः पूज्यतमा लोकवेदव्रतस्तुता।
छाया संज्ञानुसूर्या च ब्रह्माणी च मदालसा॥ १३५

महाह्रदा महावापी परिखा च महाखनिः।
प्राकारवलया चैव योगपद्मधरा गया॥ १३६

काशाभा काशिका काशी काश्मीरचन्दनार्चिता।
वंशीकरप्रिया वंशी वंशीवादनहर्षिता॥ १३७

वंशीकरा कृष्णवंशी वंशीनादविमोहिता।
वंशीरूपरवाकारी वंशीराग मनोहरा॥ १३८

वंशीनादेन संहृष्टा वंशीध्वन्यनुकारिणी।
वंशीवश्योर्वशीभ्राता वंशीवंशनिपालिका॥ १३९

श्रुतिस्मृतिप्रिया प्रह्वा श्रुतिस्मृत्यर्थरूपिणी।
श्रुतिस्मृतिसदाचारा श्रुतिस्मृत्यर्थवाचिका॥ १४०

श्रुतिस्मृतिरता कान्ता श्रुतिस्मृत्यर्थपूरणा।
श्रुतिः स्मृतिस्तथा तुष्टिः पुष्टिः कर्तुर्महाबला॥ १४१

प्रह्लादिनी जगन्माता प्रह्लादभक्तिवर्द्धिनी।
हिरण्यकशिपुच्छेत्त्री प्रह्लादानन्दकारिणी॥ १४२

हिरण्याक्षवधोद्युक्ता वाराही प्रीतिमानसा।
राक्षसानां क्षयकरी देवतानां जयावहा॥ १४३

बलिप्रिया सदा स्वेक्ष्या बलिनां बलदा बला।
बलासुरहरा वल्ली बलिभुग्बलघातिनी॥ १४४

राजनीतिः क्रियारूपा राज्यहा राज्यभक्षणा।
राजराजैः स्तुता स्तुत्या स्तवनीयगुणा सती॥ १४५

षडूर्मिहरिणी षड्भा षड्गुणा त्रिगुणालया।
निष्कामधर्मनिरता सकामा कामनिर्मला॥ १४६

आर्या दाक्षिण्यरूपा च दक्षिणा यज्ञपावनी।
दक्षिणागमविद्या च दक्षिणानां वशंवदा॥ १४७

मुद्रा मुद्राप्रिया मुद्राविधानज्ञा मुदान्विता।
निष्कलङ्का कलाधारा सूर्यचन्द्राग्निलोचना॥ १४८

दुर्गा दुर्गगतिर्दुर्गासुरमारणपण्डिता।
त्वगस्थिमांसरुधिरस्नायुमज्जादिशक्तिदा॥ १४९

ग्रहरूपा ग्रहमयी विग्रहा ग्रहिका निशा।
ग्रहणा ग्राहिणी ग्रामग्राहिणी ग्रामवल्लभा॥ १५०

ग्रामाचारपरा पूज्या ग्रामशर्माधिदायिनी।
सुभद्रा भद्रकाली च भद्रमार्गप्रवर्तिका॥ १५१

भद्रासना भद्रमतिर्भद्राङ्गा भद्रकारिणी।
पृथिव्यप्तेजसां रूपा चाद्याकाशस्वरूपिणी॥ १५२

काव्यशक्तिः कवित्वज्ञा कविरूपा कविप्रिया।
शिवा शिवङ्करी कम्बुकण्ठी सर्वाङ्गसुन्दरी॥ १५३

भक्तोद्गीता भक्तकाम्या भक्तसर्वस्वदा सती ।
रजो रजोयुता रक्ता रजसः शुद्धिसाधिका ।। १५४

सत्त्वा च सत्त्वसम्पन्ना सत्त्वगुण्या गुणालया ।
सात्त्विकी सत्त्वसंपूर्णा सत्त्ववृत्तान्तवृत्तिदा ।
सत्त्वाहारा सत्त्वयोनिः सत्त्ववर्णाधिनन्दिनी ।। १५५

सर्वशास्त्रमयी विद्या सर्वदेवमयी प्रभा ।
सर्ववर्णमयी शय्या सर्वाभरणभूषिता ।। १५६

सर्वसामर्थ्यदात्री च सर्वमङ्गलमालिनी ।
सर्वाश्रया सार्वभौमा सर्वरूपागमप्रभा ।। १५७

गान्धर्वी किन्नरी देवी मोहकर्त्री सुबुद्धिदा ।
लज्जाशीला त्रपाशीला शीलसन्तोषसंयुता ।। १५८

कामाक्षी कामिनी काम्या कमनीयवपुर्धरा ।
कामरूपा सिद्धिरूपा सिद्धैर्वन्द्या सुसिद्धिदा ।। १५९

श्रीविद्या त्रिजटा देवी लक्ष्मीर्नीलसरस्वती ।
पीताम्बरा तथाद्या च सर्वविद्यामयीश्वरी ।। १६०

व्यक्ताऽव्यक्ताऽनेकमूर्तिः सर्वतीर्थफलाधिका ।
श्रीरूपा श्रीस्तुता श्राव्या श्रवणात्पापनाशिनी ।। १६१

सर्वधर्मवदान्या च निन्दानिन्दकनाशिनी ।
श्रीप्रसादकरी श्रद्धामेधारूपा सुशर्मदा ।। १६२

गोपी गिरिसुता गुर्वी गौरी गौः सर्वतोमुखी ।
चतुर्भुजा दशभुजा चतुर्वर्गफलप्रदा ।। १६३

चर्मण्वती वेदवती चतुरा चातुरी कला ।
षोडशाधिसहस्राणां स्त्रीणां मध्ये तु वन्दिता ।। १६४

नवमी पञ्चमीभूता षष्ठी षष्ठी च सप्तमी।
अमा च पूर्णिमा पूर्णा शिवरात्रिः प्रभावती॥ १६५

चतुःषष्टिकलायुक्ता षोडशी त्रिपुरेश्वरी।
सर्वप्राणमयी वन्द्या दृढबन्धविमुक्तिदा॥ १६६

सर्वाधारा सर्वदेवी सर्वाराध्या समालिका।
मन्त्रबीजरहस्यादिसर्वविद्याप्रकाशिनी॥ १६७

सर्ववर्णमयीन्द्राणी जपजाप्यपरा च सा।
श्रीधरी श्रीधरावन्द्या श्रीधरप्राणवल्लभा॥ १६८

श्रीराधा (श्री) कृष्णहृदया श्रीधरप्राणजीवनी।
श्रीधरस्य प्रतापादिशा(ज्ञा)पिकाखिलकारणम्॥ १६९

सर्वानुस्यूतशक्तिश्च बृहद्वृन्दवनालया।
इतीदं राधिकादेव्या दिव्यं नामसहस्रकम्।
मया सम्यक्तया प्रोक्तमृषे त्वद्धितकाम्यया॥ १७०

यः पठेत् प्रातरुत्थाय शुचिस्तद्गतमानसः।
स भवेत्सर्वसंपूर्णः शुभाचारः परात्परः॥ १७१

प्रज्ञाचक्षुर्लभेद्दृष्टिं नेत्ररोगैर्न पीड्यते।
मूको वाचं लभेत्सर्वलक्षणैः संयुतां शुभाम्॥ १७२

प्रातःकालेऽथ सायाह्ने निशीथे यः पठेत्स्तवम्।
श्रीराधाकृष्णसाक्षात्कारो जायते सुनिश्चितम्॥ १७३

वैष्णवेषु भवेद्धन्यस्त्रिषु लोकेषु विश्रुतः।
धर्मकर्तृषु धर्मीशः पठेद्यः स्तोत्रमुत्तमम्॥ १७४

स योगी परमोत्कृष्टः स ऋषिः सर्ववेदवित्।
स ज्ञानी स च भक्तस्तु स कर्मसकलार्थवित्॥ १७५

स इन्द्रः स हरिर्ब्रह्मा स रुद्रो ब्रह्मरूपवित्।
स शेषः स मुनिर्व्यासो दत्तात्रेयः सदाशिवः ॥ १७६

प्रातरुत्थाय योऽधीते नाम्नां दशशतीमिमाम्।
सर्वतीर्थेषु यत्स्नानं सर्वलोकेषु यद्धितम् ॥ १७७

सर्ववेदेषु यत्सर्वं सर्वस्मृतिषु यत्फलम्।
पुराणेषु च शास्त्रेषु तथा गीतप्रहेलिषु ॥ १७८

यत्सारं यच्च हार्दं तु या शक्तिः सर्पदस्युहृत्।
तत्सर्वमिदमाख्यातं नातः किञ्चित्परं मुने ॥ १७९

धन्यं यशस्यमायुष्यं श्रीकृष्णप्रेमवर्द्धनम्।
इदमेकं मया दृष्टं राधानामसहस्रकम् ॥ १८०

सर्वपापप्रशमनमकालमृत्युनाशनम्।
सर्वमाङ्गल्यदमिदं पठितव्यं मुमुक्षुभिः ॥ १८१

सर्वागिमप्रियं ह्येतत् सर्वपापप्रणाशनम्।
सर्ववेदशिरोभागे सर्वाधिव्याधिशान्तिकृत् ॥ १८२

भावुकं भव्यसाधूनां तारकं तत्त्वमीक्षताम्।
मारकं सर्वदुष्टानामिदमेव हि निर्मितम् ॥ १८३

एतस्य पठनात्सद्योमुक्तिः स्यादनपायिनी।
भक्तिरप्यस्य श्रीकृष्णे राधया सहिते भवेत् ॥ १८४

कृष्णवश्यकरं सम्यक् ज्ञानविज्ञानवर्द्धनम्।
बहु किं पठनादस्य मासैकेन महामुने ॥ १८५

भक्तियुक्तो लभेज्ज्ञानं श्रद्धावांश्चेन्मुनिः पठेत्।
आयुरारोग्यमैश्वर्यं ज्ञानं वैराग्यसंयुतम् ॥ १८६

यद्यदिष्टतमं लोके तत्तदाप्नोत्यसंशयम्।
महतां सङ्गतिकरं महद्भाग्योदयप्रदम्।। १८७

महतां हि सदा सेव्यमिदमेव ह्युदाहृतम्।
वेदशास्त्रपुराणेभ्य इदमेव समुद्धृतम्।। १८८

तस्मात्सर्वप्रयत्नेन राधानामसहस्रकम्।
भूताष्टम्याममायां च संक्रान्तौ व्यतिपातके।। १८९

सूर्यचन्द्रोपरागे च पठितव्यं शुभेप्सुभिः।
पठ्यमानमिदं स्तोत्रं श्रद्धया यः शृणोति च।। १९०

सर्वाभीष्टेन संयुक्तो जायते राधिकाज्ञया।
एकादश्यां महारात्रौ द्वादश्यां ग्रहपर्वणि।। १९१

पठतां शृण्वतां पुंसां तेषां मुक्तिर्न दुर्लभा।
हिक्कारोगस्तथा छर्दिर्मूत्रकृच्छ्रं तथा ज्वरः।। १९२

अतीसारस्तथा शूलं आमवातादयोपि च।
अन्ये च बहवो रोगाः सन्निपातमुखा ऋषे।। १९३

शान्तिं प्रयान्ति ते सर्वे स्तोत्रस्यास्य प्रभावतः।
स्तोत्रस्य पठनादस्य प्रह्लादः सिद्धतां गतः।। १९४

युधिष्ठिरोऽथ भीष्मश्च जामदग्न्योद्धवौ तथा।
हरिश्चन्द्राम्बरीषौ च ब्रह्मपुत्रास्तथाऽनघाः।। १९५

एते सिद्धिं गताः सर्वे सत्यं सत्यं वदाम्यहम्।
श्रीराधायाः प्रसादेन सर्वानुग्रहणे क्षमाः।। १९६

तस्मात्सदेयमेवात्र पूजनीया मुहुर्मुहुः।
अथास्य साधनं वक्ष्ये उभयोः प्रीतिवर्द्धनम्।। १९७

प्रातरुत्थाय कर्त्तव्यं साधकेन शुभेच्छुना।
प्रक्षाल्य हस्तौ पादौ च त्रिराचम्य शुचिः पुमान्॥ १९८

जलाशये तथा नद्यां देवखाते ह्रदे तथा।
कूपे गृहे स्वकीये वा स्नायाद्वै विधिपूर्वकम्॥ १९९

सदाचारं ततः कृत्वा पुष्पधूपादिचन्दनैः।
पुस्तकं तु प्रपूज्याथ मन्त्रराजमुदीरयेत्॥ २००

अथ मन्त्रं प्रवक्ष्यामि विष्णुभक्तिकरं नृणाम्।
तारं रमानाथसैवतगः यदि मुदीर्य च॥ २०१

पपञ्चमो भगाद्याश्च भक्तिं देहि ततः परम्।
देहि देहि ततः पश्चात्तारं तत्र पुनर्वदेत्॥ २०२

संप्रोक्तो मन्त्रराजोऽयं श्रीराधाया ऋषे तव।
दशवारमसौ मन्त्रो जप्यश्च प्रथमं मुदा॥ २०३

ततः सहस्रनामेदं पठितव्यं मुने त्वया।
एककालस्य पठनाद्विष्णुभक्तो भवेद्यदि॥ २०४

द्वित्रिकालस्य पठनाद्भक्तिः स्यादनपायिनी।
एकोऽद्वयात्मको मन्त्रस्त्रिषु लोकेषु दुर्लभः॥ २०५

गोपनीयः प्रयत्नेन कृष्णस्य पदमिच्छता।
एकोऽद्वयात्मको मन्त्रस्तुभ्यमुक्तो मया मुने।
तस्मात्त्वयाऽपि धूर्तेभ्यः स न देयः कदाचन॥ २०६

इदं खलाय पशवे वेदानां निन्दकाय च।
अश्रद्धायातिमूर्खाय परस्त्रीलम्पटाय च॥ २०७

दुराचाराय मूढाय गीलायाव्रतरूपिणे।
निर्दयायातिह्रस्वाय नास्तिकायात्मघातिने॥ २०८

नैव देयं स्तोत्रमिदं न प्रकाश्यं सुदुर्लभम्।
ददातीदं य एतेभ्यः शिवहा स निगद्यते॥ २०९

भक्ताय भक्तियुक्ताय सर्वभूतदयालवे।
शमदमादियुक्ताय स्वच्छान्तःकरणाय च॥ २१०

गुरुपूजापरायाथ श्रद्धाचारयुताय च।
चिद्विलग्नाय योग्याय मुद्रामालाधराय च॥ २११

जितक्रोधाय शान्ताय विष्णुव्रतपराय च।
अन्यैरपि गुणैः शश्वत् तितिक्षाक्षान्तिरार्जवैः॥ २१२

युक्ताय साधकायाथ देयं स्तोत्रमिदं मुदा।
नन्वीदृशाय भक्ताय यो ददाति शुभं त्विदम्॥ २१३

स वै पुण्यतमो लोके तत्परो नैव कश्चन।
तस्मान्मुनेऽत्र विख्यातं मया त्वद्धितकाम्यया॥ २१४

इदं पठस्व च शृणु यदीच्छसि हरिं प्रभुम्।
एतस्य पठनाद्देवः कृष्णस्ते संप्रसीदति॥ २१५

अथ किं बहुनोक्तेन वर्णनेन पुनः पुनः।
वशयेद्राधिकाकृष्णौ नित्यं पाठकरः पुमान्॥ २१६

—रुद्रयामलतः

# श्रीराधासहस्रनामावलिः

ओं श्रीराधायै नमः । राधिकायै । राधाकृष्णशिवादिभिराराध्यायै । गोपिकायै । गोपराज्यै । गोपानन्दविधायिन्यै । गोपपूज्यायै । गोपहृष्टायै । गोपगोपीभिरावृतायै । गोपाह्लादकर्यै । गोप्यै । गोपायै । गोपशिवंकर्यै । सुन्दर्यै । सुन्दराकारायै । सुन्दरोत्तमवन्दितायै । सुन्दरानन्दसंहृष्टायै । सुन्दर्यै । बहुभाविन्यै । सौन्दर्यनिलायै नमः ।। २०

ओं रामाभिरामायै नमः । बहुमानितायै । श्यामायै । श्यामप्रियायै । आश्यामायै । श्यामाभिवन्दितायै । नवायै । ललितायै । ललिताचारायै । ललिताचारशालिन्यै । कृष्णायै । कृष्णकृपाकर्त्र्यै । कृष्णानन्दपरायणायै । कृष्णप्रियायै । कृष्णपूज्यायै । कृष्णाकर्षणकारिण्यै । कृष्णाराध्यायै । कृष्णवन्द्यायै । कृत्स्नवर्त्मनि बुद्धिदायै । कृष्णपूजनसर्वस्वायै नमः ।। ४०

ओं कृष्णदर्शनतत्परायै नमः । श्रीकृष्णपदसर्वस्वायै । कृष्णकृष्णेतिवादिन्यै । श्रीकृष्णैकान्तसक्तायै । कृष्णप्रेमविवर्धिन्यै । विशेषायै । विशेषज्ञायै । बल्लव्यै । वल्लभार्चितायै । बल्लवीनां च हार्दज्ञायै । बल्लवीनां सुखावहायै । रासमण्डलमध्यस्थायै । रासकेलिकलोत्सुकायै । श्रीकृष्णालिङ्गितभुजायै । रासक्रीडाभिनन्दिन्यै । वृषभानुसुतायै । राधायै । वृषभानुसुखप्रदायै । वृषभानुसुतायै देव्यै । कीर्त्यानन्दप्रदायिन्यै नमः ।। ६०

ओं वृषभानुसुतायै तन्व्यै नमः । वृषभानोःकुलध्वजायै । सर्वागमप्रियायै । सर्वाचारतत्परमानसायै । प्रजासञ्जीवन्यै । जीवनौषध्यै । परमामृतायै । प्रजासेव्यायै । प्रजावन्द्यायै । व्रजमानुषमुक्तिदायै । सौदामिन्यै । दामप्रियायै । तपोयुक्तायै ।

तपोनिध्यै । तापसीगीतगुणकायै । तापसानां गतिप्रियायै । तपः कर्त्र्यै । तपोयुक्तायै । तपोमूर्त्यै । तपोमय्यै नमः ।। ८०

ओं तपसां सिद्धिदायै नमः । सिद्धायै । सिद्धाचारविचारिण्यै । सिद्धागमायै । सिद्धाख्यै । सिद्धिदात्र्यै । सुखावहायै । सुखदायै । सुखसंहृष्टायै । सुखाकारायै । सुखालयायै । सखिभिःसेवितायै । सेव्यायै । सेविकानां शिवंकर्यै । सेविकासेवितपदायै । सेवकार्पितमानसायै । मनोवेगायै । मनोरूपायै । मनोगतिविडं-बिन्यै । मनसःप्रेरिकायै नमः ।। १००

ओं मायायै नमः । मायामयविनाशिन्यै । मोक्षदायै । मोक्षमार्गज्ञायै । मोक्षमार्गप्रकाशिन्यै । मोक्षरूपायै । मोक्षगृहायै । मोक्षस्य कर्त्र्यै । जाह्नव्यै । जह्नुकन्यायै । जलावासायै । जलाधीशायै । जलप्रियायै । समुद्रगायै । विहंगायै । गंगायै । शिवशिरःस्थितायै । शिवरूपायै । शिवकर्यै । शिवहृद्यायै नमः ।। १२०

ओं शिवंवदायै नमः । शिवप्रियायै । शिवगत्यै । शिवमार्गरतिप्रदायै । शिवाचारप्रियायै । गुर्व्यै । गुरुयै । नृणां गुप्तगत्यै । गुप्तायै । गुप्ततरायै । गोप्यायै । गोप्यविद्भिःसमर्चितायै । गुप्तालयायै । गुप्तरूपायै । गुप्तमार्गप्रवर्तिकायै । लक्ष्मीह्रीश्रीदया-मूर्त्यै । तुष्ट्यै । पुष्ट्यै । स्तुत्यै । प्रभायै नमः ।। १४०

ओं क्षमायै नमः । मेधायै । सुधायै । विद्यायै । शुद्ध्यै । बुद्ध्यै । धृत्यै । गत्यै । प्रचण्डचण्डमुण्डघ्न्यै । रक्तबीजविनाशिन्यै । मथुरायै । द्वारकायै । काञ्च्यै । माहिष्मत्यै । कौशिक्यै । अयोध्याकर्णिका-काशीवासिन्यै । कर्मवर्धिन्यै । शान्त्यै । शान्तिकर्यै । पुष्टायै नमः ।। १६०

ओं शान्तविज्ञानदायिकायै नमः । शान्तिरूपायै । सदा साङ्गायै । साङ्गोपाङ्गगतिप्रियायै । मनोहरायै । मनोज्ञायै ।

मनोवृत्तिप्रकाशिन्यै। मनःकान्तिभ्रमकर्यै। भ्रामर्यै। भ्रमकारिकायै । जगद्भ्रमणधारायै। जगतो भुक्तिकारिण्यै। जगन्मात्रे। जगद्धात्र्यै। जगज्जीवनजीविकायै। जगन्मूर्त्यै। जगद्देहायै। जगतां जीवनौषध्यै । जगतां बुद्धिसन्दात्र्यै। जगतां बुद्धिहारिण्यै नमः ॥ १८०

ओं मायायै नमः । मुद्रायै । महाविद्यायै । महायोगीश्वर्यै । मह्यै । योगयुक्तायै । योगविद्यायै । योगाङ्गायै । योगवल्लभायै । योगविद्येश्वर्यै । योग्यायै । युक्ताहारायै । सुखान्वितायै । योगैक-साध्यायै । योगाद्यायै । योगक्षेमप्रवाहिकायै। बृन्दावनप्रियायै । बृन्दायै। बृन्दावनविहारिण्यै। बृन्दावनकृतालास्यायै नमः ॥ २००

ओं बृन्दावनवरार्च्चितायै नमः । बृन्दावनस्थजन्तूनां सर्वतोभद्रकारिण्यै। बृन्दावनरसोत्कण्ठायै। बृन्दावनकृतालयायै। बृन्दावनप्रभावज्ञायै । बृन्दावनसुपूजितायै । वेणुवादरतायै । वेणुनादिन्यै । कलभाषिण्यै । वैष्णव्यै । विष्णुनिरतायै । विष्णु-मायायै । वसुन्धरायै । वसुदायै । वसुकृद्रामायै । विष्णुवामाङ्ग-वासिन्यै । विष्णुभक्तैः सदा सेव्यायै । विष्णुभक्तहितैषिण्यै । विष्णुविद्यायै। विष्णुरूपायै नमः ॥ २२०

ओं विश्वज्ञायै नमः। विवेकिन्यै। विवेकदायिकायै। साध्व्यै। सम्यक्साधुजनार्च्चितायै। सम्यग्ज्ञानपरायै। सम्यग्विद्याविशार-दायै । सारदायै । शारदायै । साध्यायै । शरत्पूर्णनिभाननायै । शराह्वयायै। सदाह्लादकारिण्यै। जयदायै मतायै। मात्रे। मातामह्यै । मन्त्रायै। मूर्त्यै। वन्द्यायै। पितामह्यै नमः ॥ २४०

ओं अर्थैश्वर्यकर्यै नमः। प्रज्ञायै। ब्राह्म्यै। नारायण्यै। दयायै। पुण्यापुण्यविधानज्ञायै । पुण्यदेवद्विजार्च्चितायै । पुण्यमूर्त्यै । पुण्यदेहायै। पुण्यग्रामनिवासिन्यै। गोकुलस्य प्रियायै देव्यै। गोकुले सर्वनर्मदायै । गोकुलाचारसर्वज्ञायै । गोकुलस्य सुखार्थिन्यै ।

गोकुलीयैः सदा ध्येयायै । गोकुलाय गतिप्रदायै । गोकुलाचारविदुष्यै । गोकुलाचारवर्णिन्यै। सुरारिदमन्यै। दिव्यायै नमः ।। २६०

ओं सुरवृन्दविनाशिन्यै नमः । दुष्टदानवसंहर्त्र्यै। कंसचाणूर-मर्दिन्यै । कुमार्यै । कुलजायै । कुन्त्यै । कुलस्त्रियै । कुलपालिकायै । पाञ्चाल्यै । द्रौपद्यै । सीतायै । तारायै । शैब्यायै । रुक्मिण्यै । सत्यभामायै । सत्यायै । सत्यधर्मपरायणायै । बृहत्यै । स्थूलायै । सूक्ष्मायै नमः ।। २८०

ओं ह्रस्वायै नमः । दीर्घिकायै । यशोदायै । देवक्यै । चित्त्यै । अन्तःसंलग्नमानसायै । रोहिण्यै । कुब्जिकायै । गुर्व्यै । किशोर्यै । षोडशाब्दिकायै । चित्रिण्यै । चित्रभावज्ञायै । सदा चित्रकर्मकर्यै । विचित्राभरणायै । नन्दव्रजसौभाग्यवर्धिन्यै । नन्दस्तुतायै । नन्दप्रियायै । नन्दानन्दकर्यै । मह्यै नमः ।। ३००

ओं नन्दादिगोपैः प्रणतायै नमः । नन्दस्मरप्रभावत्यै । यमुनाकृत संक्रीडायै । यमुनारूपधारिण्यै । यमुनायां सदास्नातायै । यमुनारामकारिण्यै । गुणाढ्यायै । गुणदायै । गुण्यायै । त्रिगुणायै । गुणनिर्वृतायै । गुणान्वितायै । गुणमय्यै । गुणग्रामनिवासिन्यै । गोपस्त्रीभिः परिवृतायै । गोपकन्याविनोदिन्यै । गोपस्त्रीणां पराशक्त्यै । परमामृतवर्षिण्यै । परमानन्दसन्तुष्टायै । ब्रह्मानन्दमय्यै नमः ।। ३२०

ओं ईश्वर्यै नमः । ब्रह्मानन्दप्रियायै । ब्रह्मवादिन्यै । ब्राह्मणप्रियायै । सरस्वत्यै । त्रिवेण्यै । पुष्करायै । पुष्करालयायै । त्रयीमय्यै । स्मृतिमय्यै । वेदमार्गविभूषणायै । वेदमार्गरतायै । वेदविद्यायै । विद्वत्सुपूजितायै । पुराणगीतगुणिकायै । पुराणव्रतशोभनायै । पुराणातिपुराणायै । अंबायै । पुराणपर-मार्थदायै । भूतायै नमः ।। ३४०

ओं भूतप्रियायै नमः । भूतग्रामपालनमानसायै । भूतवर्गधरायै । भूतपोषणव्रतपालिकायै। भूतानन्दकर्यै। भूतमात्रे । धात्र्यै। धृत्यै। क्रियायै। भूतप्राणप्रियायै। भूतरक्षिकायै। भूतदर्प-हायै । शर्वाण्यै । सर्वदायै । साध्व्यै । सर्वमोहविधायिन्यै । सर्वसंकटसंहर्त्र्यै। सर्वसिद्धिसमन्वितायै। सर्वाधारायै। सर्वमय्यै नमः ।। ३६०

ओं सर्वरूपायै नमः । सदानवायै । सर्वशक्त्यै । परस्मै ज्योतिषे । सर्वशस्त्रप्रणाशिकायै । रागिण्यै । रागजनन्यै । रागभूम्यै । दृढव्रतायै । रागवश्यायै । वीतरागायै । सर्वरागा-नुरागिण्यै । धर्मदायै। धर्मधारायै। धनदायै। धान्यदायै। शुच्यै। भोगमुक्तिव्रताधारायै। भोगमुक्तिस्वरूपिण्यै। पावन्यै नमः ।। ३८०

ओं पावनुगणायै नमः । पामराणां च पावन्यै । पावन-श्राविण्यै । शश्वत्पावनश्रवणात्मिकायै। पार्वत्यै। पर्वतसुतायै। पर्वतेषु विहारिण्यै। श्रीकृष्णान्वेषणपरायै। कृष्णदर्शनलालसायै। तत्त्वात्मिकायै। तत्त्वभावायै। तत्त्वानां तत्त्ववर्धिन्यै। तत्त्वानु-रागिण्यै । बालायै । तत्त्वाकर्षणकारिण्यै । तत्त्वोत्पत्ति-विधानज्ञायै । तत्त्वानां नाशकारिण्यै। तत्त्वविद्भिःसदा ध्यातायै। तत्त्वविन्मोक्षदायिकायै। तत्त्वविद्विघ्नशमन्यै नमः ।। ४००

ओं तत्त्वविद्याधिकारिकायै नमः । तत्त्ववित्प्रदसर्वस्वायै। तत्त्ववित्प्राणरक्षिकायै। शंखिन्यै। शंखहस्तायै। शंखनादकर्यै। प्रियायै। चक्रिण्यै। चक्रवृत्तिज्ञायै। दुष्टचक्रक्षयंकर्यै। शूलिन्यै। शूलहस्तायै । सदा भक्ताशूलकर्यै । गदनिगदसंहर्त्र्यै । अगदङ्कारजीविन्यै। सदाचाररतायै। साध्व्यै। सदाचारप्रकाशिन्यै। सदाचारायै। असदाचारदूरकर्त्र्यै नमः ।। ४२०

ओं सदार्तिहायै नमः । सदाचारविशेषायै । सदाचार-प्रमाणिकायै । संकेतनिरतायै । लोलायै । संकेतसुसमाहितायै । संकेतस्वामिन्यै । श्यामायै । संकेतप्रीतिदायै । शुभायै । सुसंकेतकृतक्रीडायै । संकेतकृतनिश्चयायै । रामायै । रामागतायै । रामप्रियायै । दुःखादिभञ्जिकायै । पद्मायै । पद्ममुख्यै । पद्म-वासिन्यै । पद्मभूषणायै नमः ।। ४४०

ओं पद्मालयायै नमः । पद्माहस्तायै । पद्माक्ष्यै । पद्मिन्यै । पुर्यै । पद्मवर्णायै । पद्मगर्भायै । पद्मानाक्ष्यै । महानिधये । रुक्माङ्गायै । रुक्मपर्णायै । रुक्मदात्र्यै । निर्भयायै । रुक्माधारायै । रुक्मरुक्मायै । रुक्मिण्यै । रुक्मप्रीतिदायै । कामिन्यै । कामभुवे । काम्यायै नमः ।। ४६०

ओं कमनीयायै नमः । कुटुंबिन्यै । कमनीयस्वभावाढ्यायै । करुणाकारिण्यै । कुरवे । कामरूपायै । काम्यमानायै । कामदेवकृपाधरायै । कालकर्त्र्यै । कलायै । कल्यायै । कलिन्यै । कुलभामिन्यै । तुलस्यै । तुलायै । तन्द्रायै । तोतलायै । तारकायै । ध्वन्यै । तनुकायै नमः ।। ४८०

ओं तालवद्दीर्घायै नमः । तारिण्यै । तामस्यै । नवायै । रंभायै । तिलोत्तमायै । रम्यायै । रमणीयायै । वसुन्धरायै । कोकिलायै । कलनिर्ह्लादायै । कलकण्ठ्यै । कलासुधायै । सुधापानमहानन्दायै । शुद्धाचारपरायणायै । सुधासमुद्रलहर्यै । सुधासिन्धुनिवासिन्यै । सुधामय्यै । सुधामूर्त्यै । सुधाकान्त्यै नमः ।। ५००

ओं सुधाह्वयायै नमः । सुधीभिर्वन्दितायै । शुद्धायै । शुद्धांग्यै । शुद्धकर्मदायै । शुद्धमार्गरतायै । शुद्धकारिकायै । भक्तवत्सलायै । भक्तागमनसाकांक्ष्यै । भक्तकीर्तिविधायिन्यै । सुषुम्नायै । सुषामायै । परमायै सुषमायै । इडायै । महद्भिः ईड्यायै । सूर्यवाहायै । सुशर्मदायै । चन्द्रादित्यकलायै । ज्योतिषे । सूर्यचन्द्रसुकुण्डलायै नमः ।। ५२०

ओं सूर्यमण्डलमध्यस्थायै नमः । चन्द्रमण्डलमानितायै । सूर्याग्निधाम्यै । सर्वेषां धाम्यै । धात्र्यै । धरित्रिण्यै । लज्जायै । लज्जावत्यै । लज्जापूरण्यै । क्लेशनाशिन्यै । नानारूपधरायै । नानाव्याधिनाशनतत्परायै । नानागमरहस्यज्ञायै । नानासाधन-साधिकायै। नानामन्त्रविधानज्ञायै। नानामन्त्रस्वरूपिण्यै। नाना-भूषणभूषाङ्ग्यै। नानावस्त्वर्थगामिन्यै। नानानाट्यकलाभिज्ञायै। नानाश्लाघार्थज्ञापिकायै नमः ।। ५४०

ओं नानाकर्मकर्यै नमः । नानाकर्ममार्गविधायिकायै। तीर्थ-नाम्न्यै। भीतिहरायै। तीर्थश्रवणशोधितायै। तीर्थस्थितालंकरणायै । तीर्थश्रितसुखोन्मुख्यै । निरञ्जनायै । निरालंबायै । निराधारायै। निराश्रयायै। निरीहायै। निस्पृहायै। नार्यै। निर्द्वन्द्वायै। निरहंकृत्यै। निर्गुणायै। गुणसंयुक्तायै। निर्भ्रमायै। भ्रमवर्जितायै नमः ।। ५६०

ओं गरुडासनगामीयायै । गारुड्यै । गरुडार्चितायै । गरुडस्कन्धसंस्थानायै। गरुडार्तिविनाशिन्यै। भावपूजकसर्वस्वायै । भावनिन्दकनाशिन्यै । भावानुगायै । भाव्यज्ञायै । भावभाव-स्वरूपिण्यै । भूताभूतभविष्यादिज्ञानकर्त्र्यै । भवार्तिहायै । चार्वङ्ग्यै । चतुरायै । चित्यायै । चञ्चलायै । चञ्चरीध्वन्यै । चामुण्डायै । चारुचरणायै। चिरच्चारणमोदितायै नमः ।। ५८०

ओं वामन्यै नमः । वर्तुलमुख्यै । वृत्यै । वृत्तान्तसेवितायै । प्रकृत्तिकारिण्यै। प्राप्त्यै। प्राच्यै। प्राणाशुरक्षिण्यै। प्राणप्रतिष्ठायै। प्राकाम्यायै । परमाणु प्रमाणिकायै । परमायै । परमोत्कृष्टायै । परमाण्व्यै। पराशरायै। परभागवतैर्ध्यातायै। परभागवताभिधायै । श्रीभागवतहार्दिक्यायै। श्रीभागवतमानसायै। श्रीभागवतनिष्ठायै नमः ।। ६००

ओं श्रीभागवतभावितायै नमः । श्रीभागवतसंविज्ज्ञायै । श्रीभागवतभाषितायै। सावित्र्यै। श्रीसच्चिद्रूपायै। सवितुःसुगति-प्रदायै। सवित्राराधितपदायै। सच्चिन्मण्डलमण्डितायै। कल्पान्त-स्थापिन्यै । कल्पकल्पितायै । कल्पनाकुलायै । कल्पकल्पायुषः-कल्पकर्यै । कल्पप्रभञ्जिकायै । मन्वन्तरप्रियायै । मन्व्यै । मन्वन्तरमनुप्रियायै। शतरूपायै। शतगुणायै। शताक्ष्यै। शकुन्तिन्यै नमः ।। ६२०

ओं सहस्राक्ष्यै नमः । दशशतभुजार्पितमहायुधायै । सहस्रशिरस्यै मात्रे। सहस्रचरणैर्युतायै। सहस्रदलपद्मान्तर्बद्धपद्मा-सनार्चितायै । षट्कोणयन्त्रनिलयायै । षट्कोणस्थापितप्रभायै । त्रिकोणगृहमध्यस्थायै । त्रिकोणे पूजितायै । शुभायै । तुरीयायै । चत्वरायै। तन्त्र्यै। तन्त्रीस्वरविडंबिन्यै। तन्त्रगीतायै। तन्त्रसेव्यायै । तन्त्रोक्तायै । तान्त्रिक्यै स्मृत्यै । तन्त्रविद्यायै । स्वतन्त्रायै नमः ।। ६४०

ओं परतन्त्रप्रियायै नमः । नद्यै । स्मृतिसंस्कारजनन्यै । संस्कृत्यै ।पुरा संस्कृतायै। सन्ध्याध्यानरत्यै। शङ्कायै। सर्वेषु जन्तुषु शक्त्यै । सौम्यायै । सोमाननायै । नृणां सौम्यमार्गबुद्धिप्रदायै । सौम्यागमकर्यै । शुद्धायै । सौम्यवार्ताविधायिन्यै । सौम्यमूर्त्यै । सौम्यदेहायै । सौम्याचारविशेषिकायै । सौम्याराध्यायै । सौम्ययुक्तायै ।सौम्यपूजकपुत्रिण्यै नमः ।। ६६०

ओं गुर्व्यै नमः । गुरुविधायै । गौर्यै । गोरोचनविभूषणायै । गुरुभक्तायै । गुरुकुलायै । गुरुज्ञानायै । गुरुस्पृहायै । गुरुताल-विशेषज्ञायै । गुरुपूज्यायै । गुहालयायै । सामज्ञायै । सामगायै । सामविदितस्वार्थसाधनायै । शच्यै । सरस्वत्यै । दिव्यारुन्धत्यै । प्रमदोत्तमायै । जयदायै । जित्वरायै नमः ।। ६८०

ओं याम्यायै नमः । जयजाप्यायै । जपान्तिकायै । हविष्याहुतिभोक्त्र्यै। हविर्धान्यै। मुनिप्रियायै। होत्र्यै। होमक्रियायै । होमसन्तुष्टायै । होमवत्सलायै । यजुःप्रियायै । यजुर्मात्रे । यजुर्वेदप्रणालिकायै। यजुर्वेदाभिलाषायै। यजुर्वेदकृपाकर्यै। ऋचां सारार्थविदुष्यै । ऋग्यजुःसामगायन्त्यै । सामदानमितानन्दायै । सामगेयायै। सामगायै नमः ।। ७००

ओं साम्ने नमः। सामप्रियायै। सिद्ध्यै। समाधिनिरतप्रियायै । समाधिशास्त्रश्रवणायै । समाध्यै । व्याधिनाशिन्यै । विजयायै । विश्वमात्रे। जयन्त्यै। वीरबाहुकायै। शत्रुघ्न्यै। शांबर्यै। अक्षौहिण्यै सेनायै । दलहारिण्यै । मञ्जीरपदकायै । कण्ठेहारमालायै । कराङ्कुशायै । भुजाङ्गदायै। गदहरायै नमः ।। ७२०

ओं गदपीडाक्षयङ्कर्यै नमः । शङ्खचक्रगदाखड्गनिकुरुंबानि बिभ्रत्यै । गोपिन्यै । द्रावणकर्यै । द्रवणाख्यायै । सुसंस्कृत्यै । वीरभूम्यै । वीरजन्यै। वीरपालनमानसायै। वीराकृत्यै। वीरमुख्यै । वीरविद्याविशारदायै। वीरायै। वीरवत्यै। वीरवर्णिन्यै। वीरसुन्दर्यै। क्रोधिन्यै। क्रोधसंविघ्नायै। क्रोधवश्यकरीप्रभायै। गोमत्यै नमः ।। ७४०

ओं गोधनायै नमः । गंगायै । गोवर्धनगिरिप्रियायै । गोवर्धनधरायै शक्त्यै । गोपालनपरव्रतायै । हैयङ्गवीनरसिकायै । रसोत्कृष्टायै। रसायनायै। विरागिण्यै । विरागायै। पूर्णवैराग्य-दायिन्यै । सरागायै । वीतरागायै । विरागायै । रागसंयुतायै । वैराग्यजनन्यै । साक्षात् कृष्णभक्तिशरीरभृते । वैराग्याङ्गविधेः कर्त्र्यै । वैराग्यसुखसागरायै। पापिबृन्दानां मृत्युदायै नमः ।। ७६०

ओं धर्मधारिणां आयुर्दायै नमः। दुष्टानां सुभङ्गदायै। शिष्टानां ज्ञानभक्तिदायै । प्रेतभूतानां भयदायै । साधूनामभयप्रदायै ।

शिवकर्तॄणां शिवदायै । पामराणां क्षयङ्कर्यै । योगिनां योगदायै । रूपधारणाध्यानतत्परायै । बहिर्मुखानामशुभंकरिकायै वाग्विला- सिन्यै । यशोदायै । यशोरूपायै । यशसां वृद्धिदामुख्यै । लोकवेद- विधिप्रौढायै । लोकवेदप्रलोभिन्यै । लोकवेदरतायै । लोकवेदाचार- प्रवाहिकायै । लोकवेदमयायै भर्त्र्यै । लोकवेदशुभप्रियायै । लोकवेदैः पूज्यतमायै नमः ।। ७८०

ओं लोकवेदव्रतस्तुतायै नमः । छायासंज्ञानुसूर्यायै । ब्रह्माण्यै । मदालसायै । महाह्रदायै । महावाप्यै । परिखायै । महाखन्यै । प्राकारवलयायै । योगपद्मधरायै । गयायै । काशाभायै । काशिकायै । काश्यै । काश्मीरचन्दनार्च्चितायै । वंशीकरप्रियायै । वंश्यै । वंशीवादनहर्षितायै । वंशीकरायै । कृष्णवंश्यै नमः ।। ८००

ओं वंशीनादविमोहितायै नमः । वंशीरूपरवाकार्यै । वंशीरागमनोहरायै । वंशीनादेन संहृष्टायै । वंशीध्वन्यनुकारिण्यै । वंशीवश्योर्वशीभ्रात्रे । वंशीवंशनिपालिकायै । श्रुतिस्मृतिप्रियायै । प्रह्वायै । श्रुतिस्मृत्यर्थरूपिण्यै । श्रुतिस्मृतिसदाचारायै । श्रुतिस्मृ- त्यर्थवाचिकायै । श्रुतिस्मृतिरतायै । कान्तायै । श्रुतिस्मृर्थत्यपूरणायै । श्रुत्यै । स्मृत्यै । तुष्ट्यै । पुष्ट्यै । कर्तुर्महाबलायै नमः ।। ८२०

ओं प्रह्लादिन्यै नमः । जगन्मात्रे । प्रह्लादभक्तिवर्धिन्यै । हिरण्यकशिपुच्छेत्र्यै । प्रह्लादानन्दकारिण्यै । हिरण्याक्षवधो- द्युक्तायै । वाराह्यै । प्रीतमानसायै । राक्षसानां क्षयकर्यै । देवतानां जयावहायै । बलिप्रियायै । सदा स्वेक्ष्यायै । बलिनां बलदायै । बलायै । बलासुरहर्यै । वल्ल्यै । बलिभुग्बलघातिन्यै । राजनीत्यै । क्रियारूपायै । राज्यहायै नमः ।। ८४०

ओं राज्यभक्षणायै नमः । राजराजस्तुतायै । स्तुत्यायै । स्तवनीयगुणायै । सत्यै । षडूर्मिहारिण्यै । षड्भायै । षड्गुणायै ।

त्रिगुणालयायै। निष्कामधर्मनिरतायै। सकामायै। कामनिर्मलायै। आर्यायै । दाक्षिण्यरूपायै । दक्षिणायै । यज्ञपावन्यै । दक्षिणागमविद्यायै । दक्षिणानां वशंवदायै । मुद्रायै । मुद्राप्रियायै नमः ।। ८६०

ओं मुद्राविधानज्ञायै नमः । मुदान्वितायै । निष्कलङ्कायै । कलाधारायै । सूर्यचन्द्राग्निलोचनायै । दुर्गायै । दुर्गगत्यै । दुर्गासुरमारणपण्डितायै। त्वगस्थिमांसरुधिरस्नायुमज्जादिशक्तिदायै । ग्रहरूपायै। ग्रहमय्यै। विग्रहायै। ग्रहिकायै। निशायै। ग्रहणायै। ग्राहिण्यै। ग्रामग्राहिण्यै। ग्रामवल्लभायै। ग्रामाचारपरायै। पूज्यायै नमः ।। ८८०

ओं ग्रामशर्माधिदायिन्यै नमः । सुभद्रायै । भद्रकाल्यै । भद्रमार्गप्रवर्तिकायै । भद्रासनायै । भद्रमत्यै । भद्राङ्गायै । भद्रकारिण्यै । पृथिव्यप्तेजसां रूपायै। आद्याकाशस्वरूपिण्यै। काव्यशक्त्यै। कवित्वज्ञायै। कविरूपायै। कविप्रियायै। शिवायै। शिवङ्कर्यै। कंबुकण्ठ्यै। सर्वाङ्गसुन्दर्यै। भक्तोद्गीतायै। भक्तकाम्यायै नमः ।। ९००

ओं भक्तसर्वस्वदायै नमः। सत्यै। रजसे। रजोयुतायै। रक्तायै । रजसःशुद्धिसाधिकायै। सत्वायै। सत्वसंपन्नायै। सत्वगुण्यायै। गुणालयायै। सात्विक्यै। सत्वसंपूर्णायै। सत्ववृत्तान्तवृत्तिदायै। सत्वाहारायै। सत्वयोन्यै। सत्ववर्णाधिनन्दिन्यै। सर्वशास्त्रमय्यै विद्यायै । सर्वदेवमय्यै प्रभायै । सर्ववर्णमय्यै शय्यायै । सर्वाभरणभूषितायै नमः ।। ९२०

ओं सर्वसामर्थ्यदात्र्यै नमः । सर्वमङ्गलमालिन्यै । सर्वाश्रयायै । सार्वभोमायै । सर्वरूपागमप्रभायै । गान्धर्व्यै । किन्नर्यै । देव्यै। मोहकर्त्र्यै। सुबुद्धिदायै। लज्जाशीलायै। त्रपा-

शीलायै ।शीलसन्तोषसंयुतायै। कामाक्ष्यै। कामिन्यै। काम्यायै। कमनीयवपुर्धरायै। कामरूपायै। सिद्धिरूपायै। सिद्धैर्वन्द्यायै नमः ।। ९४०

ओं सुसिद्धिदायै नमः। श्रीविद्यायै। त्रिजटायै देव्यै। लक्ष्म्यै। नीलसरस्वत्यै। पीतांबरायै। आद्यायै। सर्वविद्यामयीश्वर्यै। व्यक्तायै । अव्यक्तायै । अनेकमूर्त्यै । सर्वतीर्थफलाधिकायै । श्रीरूपायै । श्रीस्तुतायै। श्राव्यायै। श्रवणात्पापनाशिन्यै। सर्वधर्मवदान्यायै। निन्दानिन्दकनाशिन्यै। श्रीप्रसादकर्यै। श्रद्धमेधारूपायै नमः ।। ९६०

ओं सुशर्मदायै नमः । गोप्यै । गिरिसुतायै । गुर्व्यै । गौर्यै । गवे । सर्वतोमुख्यै। चतुर्भुजायै। दशभुजायै। चतुर्वर्गफलप्रदायै। चर्मण्वत्यै। वेदवत्यै। चतुरायै। चातुर्यै। कलायै। षोडशाधिसहस्राणां स्त्रीणां मध्ये वन्दितायै। नवम्यै। पञ्चमीभूतायै। षष्ठ्यै षष्ठ्यै। सप्तम्यै नमः ।। ९८०

ओं अमायै नमः। पूर्णिमायै। पूर्णायै। शिवरात्र्यै। प्रभावत्यै । चतुःषष्टिकलायुक्तायै । षोडश्यै । त्रिपुरेश्वर्यै । सर्वप्राणमय्यै । वन्द्यायै । दृढबन्धविमुक्तिदायै । सर्वाधारायै । सर्वदेव्यै । सर्वाराध्यायै । समालिकायै । मन्त्रबीजरहस्यादिसर्वविद्या-प्रकाशिन्यै ।सर्ववर्णमय्यै। इन्द्राण्यै। जपजाप्यपरायै तस्यै। श्रीधर्यै नमः ।। १०००

ओं श्रीधरावन्द्यायै नमः । श्रीधरप्राणवल्लभायै । श्रीराधायै श्रीकृष्णहृदयायै। श्रीधरप्राणजीवन्यै। श्रीधरस्य प्रतापादिशा(ज्ञा)-पिकायै अखिलकारणाय। सर्वानुस्यूतशक्त्यै बृहद्वृन्दावनालयायै नमः ।। १००८

# श्रीरेणुकासहस्रनामस्तोत्रम्

गिरिपृष्ठे समासीनं शंकरं लोकशंकरम् ।
प्रणतः परिपप्रच्छ संशयस्थः षडाननः ।।

स्कन्द उवाच

सति सर्वेश्वरस्त्वं हि सर्वज्ञः सर्वभावनः ।
कथयस्व प्रसादेन रहस्यं सकलार्थदम् ।।

विजयः संकटे घोरे निर्विघ्नं बलमुत्कटम् ।
अन्येऽपि वाञ्छितार्थाश्च सिद्ध्यन्त्याशु विना श्रमम् ।।

शंकर उवाच

साधु पृष्टं महाबाहो संशयो मास्तु मास्तु ते ।
यदनुष्ठानमात्रेण सर्वान्कामानवाप्स्यसि ।।

कस्यचिन्न यदाख्यातं तद्रहस्यं वदाम्यहम् ।
स्तोत्रं सहस्रनामाख्यं रेणुकायास्तु सिद्धिदम् ।।

सद्यः प्रत्ययकामस्त्वं शृणु षण्मुख भक्तितः ।
सर्वे देवाश्च वेदाश्च क्षीणवीर्या युगे युगे ।।

अक्षीणफलदात्रीयं त्रिसत्यं मम भाषितम् ।
सर्वदेवमयी देवी रेणुका कामदार्चिता ।।

पुरदाहे मया ध्याता तथैव गरलाशने ।
विष्णुना सागरोन्माथे ब्रह्मणा सृष्टिकर्मणि ।।

गोत्रभेदे मघवता जगतीधारणेऽहिना ।
कामेन शंबरवधे रत्या तत्प्रासये पुनः ।।

गणाधीशेन सततं विघ्नवारणकर्मणि।
किं वत्स बहुनोक्तेन हैमवत्या मदाज्ञया॥

ध्यात्वा सर्वार्थदा सा हि सर्वलोकैकसंश्रया।
महत्कार्योद्यतैरन्यैर्बहुभिश्चिन्तिता शिवा॥

धर्मार्थकाममोक्षार्थमवाङ्मनसगोचरा।
तस्य एव प्रसादात्तां स्तौमि नामावलिच्छलात्॥

ऋष्यादिकं च संक्षेपात्कथयामि षडानन।
त्र्यंबकश्च ऋषिः प्रोक्तोऽनुष्टुप् छंदः प्रकीर्तितम्॥

एकवीरा महामाया रेणुका दैवतं स्मृतम्।
सर्वपापक्षयद्वारा प्रीत्यै देव्या मुहुर्मुहुः॥

सर्वाभीष्टफलप्राप्तौ विनियोग उदाहृतः।
रेणुका राममातेति महापुरनिवासिनी॥

एकवीरा कालरात्रिरेकला नामभिः क्रमात्।
अंगुष्ठादि करन्यासो हृदयादि षडङ्गकम्॥
चतुर्थ्यंतैर्नमोन्तैश्च प्रणवादिभिराचरेत्॥

अस्य श्रीरेणुकासहस्रनामस्तोत्रमन्त्रस्य त्र्यम्बक ऋषिः श्रीरेणुका देवता। अनुष्टुप्छन्दः। सर्वपापक्षयद्वारा श्री जगदम्बारेणुकाप्रीत्यर्थं सर्वाभीष्टफलप्राप्त्यर्थं च जपे विनियोगः। ओं रेणुकायै नमः अंगुष्ठाभ्यां नमः। राममात्रे नमः तर्जनीभ्यां नमः। महापुरनिवासिन्यै नमः मध्यमाभ्यां नमः ओं एकवीरायै नमः अनामिकाभ्यां नमः। ओं कालरात्र्यै नमः कनिष्ठिकाभ्यां नमः। ओं एकलायै नमः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः।

ध्यानम्

ध्यायेन्नित्यमपूर्ववेषललितां कंदर्पलावण्यदां
देवीं देवगणैरुपास्यचरणां कारुण्यरत्नाकराम्।
लीलाविग्रहिणीं विराजितभुजां सच्चन्द्रहासादिभि-
र्भक्तानन्दविधायिनीं प्रमुदितां नित्योत्सवां रेणुकाम्॥

रेणुका रामजननी जमदग्निप्रिया सती।
एकवीरा महामाया कालरात्रिः शिवात्मिका॥ १

महामोहा महादीप्तिः सिद्धविद्या सरस्वती।
योगिनी चन्द्रका सिद्धा सिद्धलक्ष्मीः शिवप्रिया॥ २

कामदा कामजननी मातृका मन्त्रसिद्धिदा।
मन्त्रसिद्धिर्महालक्ष्मीर्मातृमण्डलवल्लभा॥ ३

चंद्रिका चन्द्रकान्तिश्च सूर्यकान्तिः शुचिस्मिता।
योगेश्वरी योगनिद्रा योगदात्री प्रभावती॥ ४

अनाद्यन्तस्वरूपा श्रीः क्रोधरूपा महागतिः।
मनः श्रुतिः स्मृतिर्घ्राणा चक्षुस्त्वग्रसना रसा॥ ५

मातृकापतिरुत्क्रोशा चंडहासा महावरा।
महावीरा महाशूरा महाचापा रथस्थिता॥ ६

बर्हिपत्रप्रिया तन्वी बर्हिपत्रा चतुर्भुजा।
नादप्रिया नादलुब्धा त्र्यक्षरा मृतजीवनी॥ ७

अमृताऽमृतपानेष्टा सिंधुपा पात्रशालिनी।
चण्डहासधरा शूरा वीरा डमरुमालिनी॥ ८

शिरोधरा पात्रकरा वरदा वरवर्णिनी।
त्रिमूर्तिर्वेदजननी वेदविद्या तपोनिधिः॥ ९

तपोयुक्ता तपोलक्ष्मीस्तपसः सिद्धिदा परा।
ललिता सात्त्विकी शान्ता राजसी रक्तदन्तिका ॥ १०

एकला रेणुतनया कामाक्षी सत्परायणा।
ऐन्द्री माहेश्वरी ब्राह्मी वैष्णवी वडवानला ॥ ११

कौबेरी धनदा याम्याग्नेयी वायुतनुर्निशा।
ईशानी नैर्ऋतिः सौम्या माहेन्द्री वारुणी समा ॥ १२

सर्वर्षिध्येयचरणा वारणा नरवल्लभा।
भिल्लीवेषधरा भिल्ली बर्बरालकमण्डिता ॥ १३

शृङ्गीवादनसुरसा गुञ्जाहारविभूषणा।
मयूरपिच्छाभरणा श्यामा नीलाम्बरा शिवा ॥ १४

कालिका रेणुदुहिता शिवपूज्या प्रियम्वदा।
सृष्टिकृत् स्थितिकृत् क्रुद्धा पृथ्वी नारदसेविता ॥ १५

संहारकारिणीन्द्राक्षी रक्षोघ्नी चन्द्रशेखरा।
हुं फट् वौषट् वषड्रूपा स्वधा स्वाहा नमो मनुः ॥ १६

सुषुप्तिर्जागृतिर्निद्रा स्वप्ना तुर्या च चक्रिणी।
तारा मन्दोदरी सीताऽहल्याऽरुन्धतिकाऽदितिः ॥ १७

भागीरथी च कावेरी गौतमी नर्मदा मही।
सरयूर्गौतमी भीमा त्रिवेणी गण्डकी सरी ॥ १८

मानसं चन्द्रभागा च रेवा गंगा च वेदिका।
हरिद्वारं मातृपुरं दत्तात्रेयनिवासभूः ॥ १९

मातृस्थानादिसंस्थाना मातृमण्डलमण्डिता।
मातृमण्डलसम्पूज्या मातृमण्डलमध्यगा ॥ २०

नानास्थानावताराढ्या नानास्थानचरित्रकृत्।
कमला तुलजाऽत्रेयी कोल्हापुरनिवासिनी ।। २१

मन्दाकिनी भोगवती दत्तात्रेयानसूयका।
षट्चक्रदेवता पिंगा जमदग्नीश्वरार्द्धहृत्।। २२

इडाख्या च सुषुम्नाख्या चन्द्रसूर्यगतिर्वियत्।
चन्द्रसूर्यसमाख्याता सर्वस्त्रीनिलया ध्वनिः ।। २३

समस्तविद्यातत्वज्ञा सर्वरूपा सुखाश्रया।
पुण्या पापेश्वरी कीर्तिर्भोक्त्री भोगप्रवर्तिनी ।। २४

जामदग्न्यस्य जननी कविशक्तिः कवित्वदा।
ह्रींकाराऽम्बा तमोरूपा क्लींकारा कामदायिनी ।। २५

वाक्प्रदैकाररूपा च मुक्तिदौंकाररूपिणी।
श्रींकाराखिलदानोत्का सर्वबीजात्मिकाऽऽत्मभूः ।। २६

जमदग्निशिवाङ्कस्था धर्मार्थकाममोक्षदा।
जमदग्निक्रोधहरा जमदग्निवचःकरी ।। २७

जमदग्नितमोहन्त्री जमदग्निसुखैकभूः।
जितवीरा वीरमता वीरभूर्वीरसेविता ।। २८

वीरदीक्षाकरी शौर्यदीक्षिता सर्वमङ्गला।
कात्यायनी परीवारा कालकाला कलानिधिः ।। २९

अष्टसिद्धिप्रदा क्रूरा क्रूरग्रहविनाशिनी।
साकारा च निराकाराऽहंकारा कारणा कृतिः ।। ३०

सम्मता विषमघ्नी च विषहन्त्री विषाशना।
व्यालाभरणसंहृष्टा व्यालमण्डनमण्डिता ।। ३१

अणुरूपा पराणुश्च सद्रूपा च कहापरा।
ह्रस्वा ह्रस्वपरा दीर्घा परदीर्घा परात्परा।। ३२

अद्वयाऽद्वयरूपा च प्रपंचरहिता पृथुः।
स्थूला सूक्ष्मा निरीहा च स्नेहाञ्जनविवर्जिता।। ३३

ब्रह्मसूता महानिद्रा योगनिद्रा हरिस्तुता।
हिरण्यगर्भरूपा च परब्रह्मस्वरूपिणी।। ३४

ब्रह्मशक्तिर्ब्रह्मविद्या विश्वबीजा निरञ्जना।
अतुला कर्मरूपा च श्यामला परिघायुधा।। ३५

नारायणी विष्णुशक्तिः अवाङ्मनसगोचरा।
घृतमारी पुण्यकरी पुण्यशक्ती रमाऽम्बिका।। ३६

रक्तबीजवधोद्रिक्ता रक्तचन्दनचर्चिता।
सुरक्तपुष्पाभरणा रक्तदंष्ट्रा भयप्रदा।। ३७

तीक्ष्णरक्तनखा रक्ता निशुम्भप्राणकृन्तिनी।
शुम्भप्राणनिहन्त्री च महामृत्युविनाशिनी।। ३८

सर्वदेवमहाशक्तिर्महालक्ष्मीः सुरस्तुता।
अष्टादशभुजा ज्यांशा दशदोर्दण्डमण्डिता।। ३९

निष्कलाऽष्टभुजा धात्री कल्पातीता मनोहरा।
कल्पनारहिताऽर्च्याऽद्या दारिद्र्यवनदाहिनी।। ४०

कौस्तुभा पारिजाता च हाहादिरूपधारिणी।
तिलोत्तमाऽप्सरोरूपा नवनागस्वरूपिणी।। ४१

निधिरूपा समाधिस्था खड्गरूपा शवस्थिता।
महिषासुरदत्तांघ्रिः सिंहगा सिंहगामिनी।। ४२

त्रिशूलधारिणी प्रौढा बाला मुग्धा सुधर्मिणी।
शंखभृच्चक्रभृत्पाशगदाभृत्पाशमण्डिता ।। ४३

कालशक्तिः कृपासिन्धुर्मृगारिवरवाहना।
गणराजमहाशक्तिः शिवशक्तिः शिवस्तुता ।। ४४

हरिप्रिया श्राद्धदेवी प्रधाना गुहरूपिणी।
गुहप्रीता गणेट्प्रीता कामप्रीता गुहस्थिता ।। ४५

सर्वार्थदायिनी रौद्री नीला गतिरलोलुपा।
चामुण्डा चित्रघण्टा च विश्वयोनिर्निरन्तरा ।। ४६

श्रावणी श्रमहन्त्री च संसारभ्रमनाशिनी।
संसारफलसम्पन्ना संसारमतिरुच्चगा ।। ४७

उच्चासनसमारूढा विमानवरगामिनी।
विमानस्था विमानघ्नी पाशघ्नी कालनाशिनी ।। ४८

कालचक्रभ्रमभ्रान्ता कालचक्रप्रवर्तिनी।
चेतना चापिनी भव्याऽ भव्याऽभव्यविनाशिनी ।। ४९

सिंहासनसुखाविष्टा क्षीरसागरकन्यका।
वणिक्कन्या क्षेमकरी मुकुटेशाऽवनिस्थिता ।। ५०

श्रुतिज्ञा च पुराणज्ञा स्मृतिज्ञा वेदवादिनी।
वेदवेदार्थतत्वज्ञा हिंगुला कालशालिनी ।। ५१

इतिहासार्थविद्धर्म्या ध्येया हंत्री शिशुप्रिया।
स्तन्यदा स्तन्यधारा च वनस्था पार्वती शिवा ।। ५२

मेना मैनाकभगिनी सुरभिर्जलमुक्तडित्।
सर्वबीजांतरस्थात्री सकलागमदेवता ।। ५३

स्थलस्थला जलस्था च वनस्था वनदेवता।
क्षयहंत्री निहंत्री च निरातंका हरप्रिया ॥ ५४

त्रिकालत्रा त्रिरूपा च लीलाविग्रहधारिणी।
समाधिः पुण्यधिः पुण्या पापाज्ञानविनाशिनी ॥ ५५

दृश्या दृग्विषया दृष्टिः पापहन्त्री शमस्थिता।
विरथा रथनिष्ठा च वरूथरथसंस्थिता ॥ ५६

मधुकैटभहन्त्री च सर्वदेवशरीरभूत्।
त्रिपुरा पुण्यकीर्तिश्च नृपवंश्यप्रदायिनी ॥ ५७

सांख्यविद्या त्रयीविद्या योगविद्या रविस्थिता।
स्थावरा जंगमा क्षान्तिर्बलिशक्तिर्बलिप्रिया ॥ ५८

महिषासुरनिर्णाशी दैत्यहन्त्र्यपरान्तकृत्।
डमड्डमरुडांकारा वीरश्रीर्जनदेवता ॥ ५९

उद्गीथोद्गीथमर्यादा क्षीरसागरशायिनी।
वीरलक्ष्मीर्वीरकान्ता शिवदूती सनातनी ॥ ६०

शक्रादिसंस्तुता हृष्टा चण्डमुण्डविनाशिनी।
पञ्चवक्त्रैकरूपा च त्रिनेत्रा बलिमोहिनी ॥ ६१

धूम्रलोचननिर्नाशाऽहंकारोद्गारभाषिणी।
एकमूर्तिस्त्रिधामूर्तिः त्रिलोकानन्ददायिनी ॥ ६२

भवानी दशमूर्तिश्च पञ्चमूर्तिर्जयन्तिका।
दक्षिणा दक्षिणामूर्तिः अनेकैका दशाकृतिः ॥ ६३

एकचक्षुरनन्ताक्षी विश्वाक्षी विश्वपालिनी।
चतुर्विंशतितत्वाद्या चतुर्विंशतितत्ववित् ॥ ६४

सोऽहं हंसा विशेषज्ञा निर्विशेषा निराकृतिः ।
यमघण्टाऽमृतकला जयघण्टा जयध्वनिः ।। ६५

पाञ्चजन्यस्फुरच्छक्तिर्हनुमच्छक्तिरास्तिका ।
शिलातरणशक्तिश्च रामशक्तिर्विराट् तनुः ।। ६६

लंकाप्रज्वलना वेला सागरक्रमणक्रमा ।
नरनारायणप्रीतिर्लोकनीतिरघौघकृत् ।। ६७

विपाशा पाशहस्ता च विश्वबाहुस्त्रिलिङ्गिका ।
प्राची प्रतीची विदिशा दक्षिणा दक्षकन्यका ।। ६८

शिवलिङ्गप्रतिष्ठात्री शिवलिङ्गप्रतिष्ठिता ।
अज्ञाननाशिनी बुद्धिस्तत्वविद्या सुचेतना ।। ६९

प्रकाशा स्वप्रकाशा चाद्वया द्वयविवर्जिता ।
असद्रूपा च सद्रूपा सदसद्रूपशालिनी ।। ७०

कैलासनिलया गौरी वृषगा वृषवाहना ।
सोमसूर्याग्निनयना सोमसूर्याग्निविग्रहा ।। ७१

विषमेक्षणदुर्धर्षा लंकादाहकरी दितिः ।
वैकुण्ठविलसन्मूर्तिः वैकुण्ठनिलयाऽनिला ।। ७२

नभोमूर्तिस्तमोमूर्तिस्तेजोमूर्तिरमेयधीः ।
सूर्यमूर्तिश्चन्द्रमूर्तिः यजमानशरीरिणी ।। ७३

आप्यमूर्तिरिलामूर्तिः नरनारायणाकृतिः ।
विषयाज्ञानभिन्ना च विषयाज्ञाननिर्वृतिः ।। ७४

सुखवित्सुखिनी सौख्या वेदवेदाङ्गपारगा ।
स्रुक् स्रुवा च वसोर्धारा यागशक्तिरशक्तिहृत् ।। ७५

यज्ञकृत् प्रकृतिर्यज्ञा यज्ञरागविवर्धिनी।
यज्ञभोक्त्री यज्ञभागा सौभाग्यवरदायिनी ॥ ७६

लाकिनी दशदिग्बाहुर्दिगन्ता बलिदायिनी।
कृपा विश्वेश्वरी स्वज्ञा शताक्षी कामदेवता ॥ ७७

कामचारप्रिया कामा कामाचारपरायणा।
चिकित्सा वेदविद्या च वैद्यमाता महौषधिः ॥ ७८

महौषधिरसप्रीता विकराला कलातिगा।
मेघशक्तिर्महावृष्टिः सुवृष्टिः शिवशर्मदा ॥ ७९

रुद्राणी रुद्रवदना रुद्रपूज्याऽन्नपूर्णिका।
अन्नदानरसाऽन्नाद्या तृप्तिदा भोजनप्रिया ॥ ८०

कर्मपाशप्रदा पङ्क्तिः पाकशक्तिः पचिक्रिया।
सुपक्वफलदा वाञ्छा वाञ्छाधिकफलप्रदा ॥ ८१

सर्वयन्त्रमयी पूर्णा सर्वभूताश्रयाऽम्बिका।
ब्राह्मणी ब्रह्म शक्तिश्च चराचरविभाविनी ॥ ८२

चराचरगतिर्जैत्री लक्षा लक्षेश्वराऽर्द्धहृत्।
गुहशक्तिर्गणेट्शक्तिर्नारसिंही सहस्रदृक् ॥ ८३

सर्पमालोत्तरीया च सर्पसर्वाङ्गभूषणा।
वाराही च सहस्राक्षी कूर्मशक्तिः शुभाऽलया ॥ ८४

शेषरूपा शेषशक्तिः शेषपर्यङ्कशायिनी।
वराहदंष्ट्रा वलिधिः कामधीः काममोहिनी ॥ ८५

मायिनी चित्तसदना कामी कामप्रवर्धिनी।
सर्वलक्षणसम्पूर्णा सर्वलक्षणनाशिनी ॥ ८६

नादरूपा बिन्दुरूपा कृतकर्मफलप्रदा।
ध्रुवशक्तिः ध्रुवारोहा ध्रुवाटोपा ध्रुवार्थदा ॥ ८७

ध्रुवाकाराऽग्निहोत्राढ्या ध्रुवाचारा ध्रुवस्थितिः।
ध्रुवा ध्रुवमयी ध्रौव्या चिद्रूपाऽऽनन्दरूपिणी ॥ ८८

हृद्रूपा बगला कृष्णा नीलग्रीवा कुधीहरा।
पवित्रदृष्टिः पावित्र्यकारिणी ऋषिवत्सला ॥ ८९

शिशूत्सङ्गधराऽसङ्गा संगरोगप्रवर्धिनी।
निःसङ्गा संगबहुला चतुराश्रमवासिनी ॥ ९०

चतुर्वर्णपरिष्वङ्गा चतुर्वर्णबहिःस्थिता।
निराश्रया रागवती रागिमानससंश्रया ॥ ९१

ब्राह्मणी राजदुहिता वैश्या शूद्रा परासुरा।
गृहाश्रमसमासीना गृहधर्मनिरूपिणी ॥ ९२

गृहधर्मा विषादघ्नी ब्रह्मचर्यनिषेविणी।
वानप्रस्थाश्रमस्था च यतिधर्मा स्फुरत्तनुः ॥ ९३

संस्थितिः प्रलया सृष्टिः सर्गस्थित्यन्तखेलकृत्।
ज्ञानशक्तिः क्रियाशक्तिश्छायाशक्तिरपूर्वकृत् ॥ ९४

नानावादविशेषज्ञा नानावादनिरङ्कता।
शून्यवादनिराकारा धर्मवादनिरूपिणी ॥ ९५

नवचण्डीक्रियाहेतुः संकल्पा कल्पनातिगा।
निर्विकल्पा विकल्पाढ्या संकल्पा कल्पभूरुहा ॥ ९६

सृष्टिघ्नी च स्थितिघ्नी च विनाशघ्नी त्रिरूपभृत्।
अयोध्या द्वारका काशी मथुरा काञ्च्यवन्तिका ॥ ९७

विशोका शोकमार्तण्डी पाञ्चाली शोकनाशिनी।
शमा नियमशक्तिश्च धर्मशक्तिर्जयध्वजा॥ ९८

मुक्तिः कुण्डलिनी भुक्तिर्विषदृष्टिः समेक्षणा।
कृपेक्षणा कृपार्द्राङ्गी कृपार्चिता कृपाश्रुतिः॥ ९९

महापुराद्रिनिलया महापुरकृतस्थितिः।
अज्ञानकल्पनाऽनंता प्रपंचकलनातिगा॥ १००

साम्यदृष्टिर्देहपुष्टिः कृतसृष्टिर्हताखिला।
वेणुपुण्यपरीपाकाऽयोनिजा वह्निसंभवा॥ १०१

महापुरसुखासीना डमड्डमरुदर्पिता।
महापुरा महादेवी डमरुप्रीतिवल्गिता॥ १०२

भद्रकाली पितृशक्तिर्ह्लसा भुवनेश्वरी।
गायत्री च चतुर्वक्त्रा त्रिपुरा वीरवन्दिता॥ १०३

यमाम्बा त्रिगुणाऽऽनन्दा कैवल्यपददायिनी।
बडबा सदया भूस्था शाक्तसर्गप्रवर्त्तिनी॥ १०४

इन्द्रादिदेवजननी एलाम्बा कोलरूपिणी।
कुंभदर्पहरा दोला दोलाक्रीडनलालसा॥ १०५

शीतला विष्णुमाया च चतुर्वक्त्रनमस्कृता।
मातंगी विष्णुजननी प्रेतासननिवासिनी॥ १०६

गरुत्मद्गमना नीला ब्रह्मास्त्रा ब्रह्मभूषिता।
सिद्धिः पाशुपतास्त्रा च नीलेन्दीवरलोचना॥ १०७

रुक्मा शंकरजननी कर्मनाशा च शाम्भवी।
त्रिगा वामनशक्तिश्च हिरण्यगर्भभूसुरा॥ १०८

वाग्वादिनी च वर्णा च शंकरार्द्धशरीरिणी।
दारुणा मोहरात्रिश्च भ्रमादिगणरूपिणी।। १०९

दीपिका क्रोडवरदा मोहिनी गरलाशना।
कपर्दार्चितसर्वाङ्गी त्रिंशल्लोचनभूषिता।। ११०

कर्पूरकान्तिवदना नीलबाहुरनुत्तमा।
ब्रह्मगेया मुनिध्येया ह्रींकारा कामविग्रहा।। १११

षड्बीजा नवबीजा च नवाक्षरतनुः खगा।
दशार्णा द्वादशार्णाढ्या षोडशार्णा विबीजगा।। ११२

मालामन्त्रमयी जय्या सर्वबीजैकदेवता।
जपमाला च जयदा जपविघ्नविनाशिनी।। ११३

जपकर्त्री जपस्तोत्रा मंत्रयंत्रफलप्रदा।
मंत्रावरणरूपैका यंत्रावरणदेवता।। ११४

पद्मिनी पद्मपत्राक्षी शमी यज्ञांगदेवता।
यज्ञसिद्धिः सहस्राक्षी सहस्राक्षपद प्रदा।। ११५

रेणुवंशावताराढ्या महिषान्तकरी समित्।
ऋग्वेदा च यजुर्वेदा सामवेदा त्रयीपरा।। ११६

अभिचारप्रियाऽथर्वा पंचतन्त्राधिदेवता।
अभिचारक्रिया शान्तिः शांतिमन्त्राधिदेवता।। ११७

अभिचारोपशमनी सर्वानन्दविधायिनी।
अथर्वपाठसंपन्ना लेखनी लेखकस्थिता।। ११८

भूमलेख्या वर्णशक्तिः सर्वशक्तिः प्रसिद्धिदा।
कीर्तिकामा कलाकामा कामाक्षी सर्वमंगला।। ११९

शूलेश्वरी कुशूलघ्नी चिंताशोकविनाशिनी।
चिंतादिदेवता भूतनायका नलकूबरी ॥ १२०

करालाऽत्यूर्ध्वकेशी च श्रीधरी च विनायकी।
कामेश्वरी च कौबेरी पद्मावत्यभिधा गतिः ॥ १२१

ज्वालामुखी च कौमारी विजया मेघवाहना।
महाबला महोत्साहा महाभयनिवारिणी ॥ १२२

कामिनी शांकरी काष्ठा सहस्रभुजनिग्रहा।
प्रभा प्रभाकरी भाषा सप्ताश्वरथसंस्थिता ॥ १२३

अलकापुरसंस्थाना मृडानी विंध्यनिश्चला।
हिमाचलकृतक्रीडा पीडापापनिवारिणी ॥ १२४

अर्धमात्राक्षरा सन्ध्या त्रिमात्रा भारती धृतिः।
वेदमाता वेदगर्भा कौशिकी त्र्यम्बका स्वरा ॥ १२५

अम्बालिका क्षुधा तृष्णा धूम्रा रौद्रा दुरत्यया।
पानपात्रकरा जातिः श्रद्धा वार्ता चितास्थिता ॥ १२६

दुर्गाणी रक्तचामुण्डाकृतिः सोमावतंसिनी।
शरण्याऽऽर्या दुर्गपरा सारा ज्योत्स्ना महास्मृतिः ॥ १२७

जगत्प्रतिष्ठा कल्याणी छाया तुष्टिश्च तामसी।
तृष्णा वाग्धीश्च नद्धा च गदिनी चक्रधारिणी ॥ १२८

लज्जा सहस्रनयना महिषासुरमर्दिनी।
भीमा भद्रा भगवती नवदुर्गाऽपराजिता ॥ १२९

मेधाऽष्टादशदोर्दण्डा दुर्गा कात्यायनी रतिः।
सर्वतः पाणिपादोरुर्भ्रामरी चन्द्ररूपिणी ॥ १३०

इन्द्राणी च महामारी सर्वतो ऽक्षिशिरोमुखा।
क्षोभिणी मोहिनी चैव स्तंभिनी जृंभिणी तथा।। १३१

रथिनी ध्वजिनी सेना सर्वमन्त्रमयी मही।
ज्ञानमुद्रा महामुद्रा जपमुद्रा महोत्सवा।। १३२

जटाजूटधरा मुक्ता सूक्ष्मशान्तिर्विभीषणा।
सप्ताब्धिसंश्रया सत्ता सप्तद्वीपाब्धिमेखला।। १३३

सूर्यदीप्तिर्वज्रपंक्तिः पानोन्मत्ता च पिंगला।
सर्वज्ञा विश्वमाता च भक्तानुग्रहकारिणी।। १३४

विश्वप्रिया प्राणशक्तिरनंतगुणनामधीः।
सर्वकल्याणनिलया शारदा त्र्यम्बिका सुधा।। १३५

श्रीशंकर उवाच

दिव्यं नामसहस्रं ते रेणुकाया मयेरितम्।
सर्वकामसमृद्ध्यर्थमनेन भज षण्मुख।। १३६

भुक्तिदो मुक्तिदश्चापि भजतां कल्पपादपः।
जयप्रदो विशेषेण नानेन सदृशो मनुः।। १३७

पुरश्चरणमुद्दिष्टं सहस्रं नवकं शुभम्।
विजयार्थं विशेषेण प्रयोगं साधयेत्ततः।। १३८

-श्रीपद्मपुराणतः

# श्रीरेणुकासहस्रनामावलिः

ओं ह्रीं रेणुकायै नमः । रामजनन्यै । जमदग्निप्रियायै । सत्यै । एकवीरायै । महामायायै । कालरात्र्यै । शिवात्मिकायै । महामोहायै । महादीप्त्यै । सिद्धविद्यायै । सरस्वत्यै । योगिन्यै । चन्द्रकायै । सिद्धायै । सिद्धलक्ष्म्यै । शिवप्रियायै । कामदायै । कामजनन्यै । मातृकायै नमः ।। २०

ओं मन्त्रसिद्धिदायै नमः । मन्त्रसिद्ध्यै । महालक्ष्म्यै । मातृमण्डलवल्लभायै । चन्द्रिकायै । चन्द्रकान्त्यै । सूर्यकान्त्यै । शुचिस्मितायै । योगेश्वर्यै । योगनिद्रायै । योगदात्र्यै । प्रभावत्यै । अनाद्यन्तस्वरूपायै । श्रियै । क्रोधरूपायै । महागत्यै । मनसे । श्रुत्यै । स्मृत्यै । घ्राणायै नमः ।। ४०

ओं चक्षुषे नमः । त्वचे । रसनायै । रसायै । मातृकापत्यै । उत्क्रोशायै । चण्डहासायै । महावरायै । महावीरायै । महाशूरायै । महाचापायै । रथस्थितायै । बर्हिपत्रप्रियायै । तन्व्यै । बर्हिपत्रायै । चतुर्भुजायै । नादप्रियायै । नादलुब्धायै । त्र्यक्षरायै । मृतजीवन्यै नमः ।। ६०

ओं अमृतायै नमः । अमृतपानेष्टायै । सिन्धुपायै । पात्रशालिन्यै । चण्डहासधरायै । शूरायै । वीरायै । डमरुमालिन्यै । शिरोधरायै । पात्रकरायै । वरदायै । वरवर्णिन्यै । त्रिमूर्त्यै । वेदजनन्यै । वेदविद्यायै । तपोनिधये । तपोयुक्तायै । तपोलक्ष्म्यै । तपसःसिद्धिदायै । परायै नमः ।। ८०

ओं ललितायै नमः । सात्विक्यै । शान्तायै । राजस्यै । रक्तदन्तिकायै । एकलायै । रेणुतनयायै । कामाक्ष्यै । सत्परायणायै ।

ऐन्द्र्यै । माहेश्वर्यै । ब्राह्म्यै । वैष्णव्यै । वडवानलायै । कौबेर्यै । धनदायै । याम्यायै । आग्नेय्यै । वायुतन्वै । निशायै नमः ।। १००

ओं ईशान्यै नमः । नैर्ऋत्यै । सौम्यायै । माहेन्द्र्यै । वारुण्यै । समायै । सर्वर्षिध्येयचरणायै । गारणायै । नरवल्लभायै । भिल्लीवेषधरायै । भिल्ल्यै । बर्बरालकमण्डितायै । शृङ्गीवादन-सुरसायै । गुञ्जाहारविभूषणायै । मयूरपिच्छाभरणायै । श्यामायै । नीलांबरायै । शिवायै । कालिकायै । रेणुदुहित्रे नमः ।। १२०

ओं शिवपूज्यायै नमः । प्रियंवदायै । सृष्टिकृते । स्थितिकृते । क्रुद्धायै । पृथ्व्यै । नारदसेवितायै । संहारकारिण्यै । इन्द्राक्ष्यै । रक्षोघ्न्यै । चन्द्रशेखरायै । हुं । फट् । वौषट् । वषड्रूपायै । स्वधा । स्वाहा । नमः । मनवे । सुषुप्त्यै नमः ।। १४०

ओं जागृत्यै नमः । निद्रायै । स्वप्नायै । तुर्यायै । चक्रिण्यै । तारायै । मन्दोदर्यै । सीतायै । अहल्यायै । अरुन्धतिकायै । अदित्यै । भागीरथ्यै । कावेर्यै । गौतम्यै । नर्मदायै । मह्यै । सरय्वै । गौतम्यै । भीमायै । त्रिवेण्यै नमः ।। १६०

ओं गण्डक्यै नमः । सर्यै । मानसाय । चन्द्रभागायै । रेवायै । गंगायै । वेदिकायै । हरिद्वाराय । मातृपुराय । दत्तात्रेयनिवासभुवे । मातृस्थानादिसंस्थानायै । मातृमण्डलमण्डितायै । मातृमण्डल-संपूज्यायै । मातृमण्डलमध्यगायै । नानास्थानावताराढ्यायै । नानास्थानचरित्रकृते । कमलायै । तुलजायै । आत्रेय्यै । कोल्हापुरनिवासिन्यै नमः ।। १८०

ओं मन्दाकिन्यै नमः । भोगवत्यै । दत्तात्रेयायै । अनसूयकायै । षट्चक्रदेवतायै । पिङ्गायै । जमदग्नीश्वरार्धहृते । इडाख्यायै ।

सुषुम्नाख्यायै । चन्द्रसूर्यगत्यै । वियते । चन्द्रसुर्यसमाख्यातायै । सर्वस्त्रीनिलयायै । ध्वन्यै । समस्तविद्यातत्वज्ञायै । सर्वरूपायै । सुखाश्रयायै । पुण्यायै । पापायै । ईश्वर्यै नमः ।। २००

ओं कीर्त्यै नमः । भोक्त्यै । भोगप्रवर्तिन्यै । जामदग्न्यस्य जनन्यै । कविशक्त्यै । कवित्वदायै । ह्रींकारायै । अंबायै । तमोरूपायै । क्लींकारायै । कामदायिन्यै । वाक्प्रदायै । ऐकाररूपायै । मुक्तिदायै । ओंकाररूपिण्यै । श्रींकारायै । अखिलदानोत्कायै । सर्वबीजात्मिकायै । आत्मभुवे । जमदग्निशिवाङ्कस्थायै नमः ।। २२०

ओं धर्मकामार्थमोक्षदायै नमः । जमदग्निक्रोधहरायै । जमदग्निवचःकर्यै । जमदग्नितमोहन्त्र्यै । जमदग्निसुखैकभुवे । जितवीरायै । वीरमतायै । वीरभुवे । वीरसेवितायै । वीरदीक्षाकर्यै । शौर्यदीक्षितायै । सर्वमङ्गलायै । कात्यायन्यै । परीवारायै । कालकालायै । कलानिधये । अष्टसिद्धिप्रदायै । क्रूरायै । क्रूरग्रहविनाशिन्यै । साकारायै नमः ।। २४०

ओं निराकारायै नमः । अहंकारायै । कारणायै । कृत्यै । संमतायै । विषमघ्न्यै । विषहन्त्र्यै । विषाशनायै । व्यालाभरण-संहृष्टायै । व्यालमण्डनमण्डितायै । अणुरूपायै । पराणवे । सद्रूपायै । कहापरायै । ह्रस्वायै । ह्रस्वपरायै । दीर्घायै । परदीर्घायै । परात्परायै । अद्वयायै नमः ।। २६०

ओं अद्वयरूपायै । प्रपञ्चरहितायै । पृथ्वै । स्थूलायै । सूक्ष्मायै । निरीहायै । स्नेहाञ्जनविवर्जितायै । ब्रह्मसूतायै । महानिद्रायै । योगनिद्रायै । हरिस्तुतायै । हिरण्यगर्भरूपायै । परब्रह्मस्वरूपिण्यै । ब्रह्मशक्त्यै । ब्रह्मविद्यायै । विश्वबीजायै । निरञ्जनायै । अतुलायै । कर्मरूपायै । श्यामलायै नमः ।। २८०

ओं परिघायुधायै नमः । नारायण्यै । विष्णुशक्त्यै । अवाङ्मनसगोचरायै । घृतमार्यै । पुण्यकर्यै । पुण्यशक्त्यै । रमायै । अंबिकायै । रक्तबीजवधोद्रिक्तायै । रक्तचन्दनचर्च्चितायै । सुरक्तपुष्पाभरणायै । रक्तदंष्ट्रायै । भयप्रदायै । तीक्ष्णरक्तनखायै । रक्तायै । निशुंभप्राणकृन्तन्यै । शुंभप्राणनिहन्त्र्यै । महामृत्युविनाशिन्यै । सर्वदेव महाशक्त्यै नमः ।। ३००

ओं महालक्ष्म्यै नमः । सुरस्तुतायै । अष्टादशभुजायै । ज्यांशायै । दशदोर्दण्डमण्डितायै । निष्कलायै । अष्टभुजायै । धात्र्यै । कल्पातीतायै । मनोहरायै । कल्पनारहितायै । अर्च्यायै । आद्यायै । दारिद्र्यवनदाहिन्यै । कौस्तुभायै । पारिजातायै । हाहादिरूपधारिण्यै । तिलोत्तमायै । अप्सरोरूपायै । नवनागस्वरूपिण्यै नमः ।। ३२०

ओं निधिरूपायै नमः । समाधिस्थायै । खड्गरूपायै । शवस्थितायै । महिषासुरदत्तांघ्रये । सिंहगायै । सिंहगामिन्यै । त्रिशूलधारिण्यै । प्रौढायै । बालायै । मुग्धायै । सुधर्मिण्यै । शंखभृते । चक्रभृते । पाशगदाभृते । पाशमण्डितायै । कालशक्त्यै । कृपासिन्धवे । मृगारिवरवाहनायै । गणराजमहाशक्त्यै नमः ।। ३४०

ओं शिवशक्त्यै नमः । शिवस्तुतायै । हरिप्रियायै । श्राद्धदेव्यै । प्रधानायै । गुहरूपिण्यै । गुहप्रीतायै । गणेट्प्रीतायै । कामप्रीतायै । गुहस्थितायै । सर्वार्थदायिन्यै । रौद्र्यै । नीलायै । गत्यै । अलोलुपायै । चामुण्डायै । चित्रघण्टायै । विश्वयोन्यै । निरन्तरायै । श्रावण्यै नमः ।। ३६०

ओं श्रमहन्त्र्यै नमः । संसारभ्रमनाशिन्यै । संसारफल-संपन्नायै । संसारमत्यै । उच्चगायै । उच्चासनसमारूढायै । विमान-वरगामिन्यै । विमानस्थायै । विमानघ्न्यै । पाशघ्न्यै । कालनाशिन्यै । कालचक्रभ्रमभ्रान्तायै । कालचक्रप्रवर्तिन्यै । चेतनायै । चापिन्यै । भव्यायै । अभव्यायै । अभव्यविनाशिन्यै । सिंहासनसुखाविष्टायै । क्षीरसागरकन्यकायै नमः ।। ३८०

ओं वणिक्कन्यायै नमः । क्षेमकर्यै । मुकुटेशायै । अवनिस्थितायै । श्रुतिज्ञायै । पुराणज्ञायै । स्मृतिज्ञायै । वेदवादिन्यै । वेदवेदार्थतत्वज्ञायै । हिंगुलायै । कालनाशिन्यै । इतिहासार्थविदे । धर्म्यायै । ध्येयायै । हन्त्र्यै । शिशुप्रियायै । स्तन्यदायै । स्तन्यधारायै । वनस्थायै । पार्वत्यै नमः ।। ४००

ओं शिवायै नमः । मेनायै । मैनाकभगिन्यै । सुरभ्यै । जलमुचे । तडिते । सर्वबीजान्तरस्थात्र्यै । सकलागमदेवतायै । स्थलस्थलायै । जलस्थायै । वनस्थायै । वनदेवतायै । क्षयहन्त्र्यै । निहन्त्र्यै । निरातङ्कायै । हरप्रियायै । त्रिकालत्रायै । त्रिरूपायै । लीलाविग्रहधारिण्यै । समाध्यै नमः ।। ४२०

ओं पुण्यध्यै नमः । पुण्यायै । पापाज्ञानविनाशिन्यै । दृश्यायै । दृग्विषयायै । दृष्ट्यै । पापहन्त्र्यै । शमस्थितायै । विरथायै । रथनिष्ठायै । वरूथरथसंस्थितायै । मधुकैटभहन्त्र्यै । सर्वदेव-शरीरभृते । त्रिपुरायै । पुण्यकीर्त्यै । नृपवंश्यप्रदायिन्यै । सांख्यविद्यायै । त्रयीविद्यायै । योगविद्यायै । रविस्थितायै नमः ।। ४४०

ओं स्थावरायै नमः । जङ्गमायै । क्षान्त्यै । बलिशक्त्यै । बलिप्रियायै । महिषासुरनिर्णाश्यै । दैत्यहन्त्र्यै । अपरान्तकृते ।

डमड्डमरुडांकारायै । वीरश्रियै । जनदेवतायै । उद्गीथायै । उद्गीथमर्यादायै । क्षीरसागरशायिन्यै । वीरलक्ष्म्यै । वीरकान्तायै । शिवदूत्यै । सनातन्यै । शक्रादिसंस्तुतायै । हृष्टायै नमः ।। ४६०

ओं चण्डमुण्डविनाशिन्यै नमः । पञ्चवक्त्रायै । एकरूपायै । त्रिनेत्रायै । बलिमोहिन्यै । धूम्रलोचननिर्नाशायै । अहंकारोद्धार-भाषिण्यै । एकमूर्त्यै । त्रिधामूर्त्यै । त्रिलोकानन्ददायिन्यै । भवान्यै । दशमूर्त्यै । पञ्चमूर्त्यै । जयन्तिकायै । दक्षिणायै । दक्षिणामूर्त्यै । अनेकायै । एकायै । दशाकृत्यै । एकचक्षुषे नमः ।। ४८०

अनन्ताक्ष्यै नमः । विश्वाक्ष्यै । विश्वपालिन्यै । चतुर्विंशति-तत्त्वाद्यायै । चतुर्विंशतितत्त्वविदे । सोहं । हंसायै । विशेषज्ञायै । निर्विशेषायै । निराकृत्यै । यमघण्टायै । अमृतकलायै । जयघण्टायै । जयध्वन्यै । पाञ्चजन्यस्फुरच्छक्त्यै । हनुमच्छक्त्यै । आस्तिकायै । शिलातरणशक्त्यै । रामशक्त्यै । विराजे नमः ।। ५००

ओं तन्वै नमः । लंकाप्रज्वलनायै । वेलायै । सागरक्रमण-क्रमायै । नरनारायणप्रीत्यै । लोकनीत्यै । अघौघ कृते । विपाशायै । पाशहस्तायै । विश्वबाहवे । त्रिलिङ्गिकायै । प्राच्यै । प्रतीच्यै । विदिशायै । दक्षिणायै । दक्षकन्यकायै । शिवलिङ्गप्रतिष्ठात्र्यै । शिवलिङ्गप्रतिष्ठितायै । अज्ञाननाशिन्यै । बुद्ध्यै नमः ।। ५२०

ओं तत्वविद्यायै नमः । सुचेतनायै । प्रकाशायै । स्वप्रकाशायै । अद्वयायै । द्वयविवर्जितायै । असद्रूपायै । सद्रूपायै । सदसद्रूप-शालिन्यै । कैलासनिलयायै । गौर्यै । वृषगायै । वृषवाहनायै । सोमसूर्याग्निनयनायै । सोमसूर्याग्निविग्रहायै । विषमायै । ईक्षण-दुर्धर्षायै । लंकादाहकर्यै । दित्यै । वैकुण्ठविलसन्मूर्त्यै ।। ५४०

ओं वैकुण्ठनिलयायै नमः । अनिलायै । नभोमूर्त्यै । तमोमूर्त्यै । तेजोमूर्त्यै । अमेयधिये । सूर्यमूर्त्यै । चन्द्रमूर्त्यै । यजमानशरीरिण्यै । आप्यमूर्त्यै । इलामूर्त्यै । नरनारायणाकृत्यै । विषयाज्ञानभिन्नायै । विषयाज्ञाननिर्वृत्यै । सुखविदे । सुखिन्यै । सौख्यायै । वेदवेदाङ्गपारगायै । स्रुचे । स्रुवायै नमः ॥ ५६०

ओं वसोर्धारायै नमः । यागशक्त्यै । अशक्तिहृते । यज्ञकृते । प्रकृत्यै । यज्ञायै । यज्ञरागविवर्धिन्यै । यज्ञभोक्त्यै । यज्ञभागायै । सौभाग्यवरदायिन्यै । लाकिन्यै । दशदिग्बाहवे । दिगन्तायै । बलिदायिन्यै । कृपायै । विश्वेश्वर्यै । स्वङ्गायै । शताक्ष्यै । कामदेवतायै । कामचारप्रियायै नमः ॥ ५८०

ओं कामायै नमः । कामाचारपरायणायै । चिकित्सायै । वेदविद्यायै । वैद्यमात्रे । महौषध्यै । महौषधिरसप्रीतायै । विकरालायै । कलातिगायै । मेघशक्त्यै । महावृष्ट्यै । सुवृष्ट्यै । शिवशर्मदायै । रुद्राण्यै । रुद्रवदनायै । रुद्रपूज्यायै । अन्नपूर्णिकायै । अन्नपानरसायै । अन्नाद्यायै । तृप्तिदायै नमः ॥ ६००

ओं भोजनप्रियायै नमः । कर्मपाशप्रदायै । पंक्त्यै । पाक-शक्त्यै । पचिक्रियायै । सुपक्कफलदायै । वाञ्छायै । वाञ्छाधि-कफलप्रदायै । सर्वयन्त्रमय्यै । पूर्णायै । सर्वभूताश्रयायै । अंबिकायै । ब्राह्मण्यै । ब्रह्मणे । शक्त्यै । चराचरविभाविन्यै । चराचरगत्यै । जैत्र्यै । लक्षायै । लक्षेश्वरायै नमः ॥ ६२०

ओं अर्धहृते नमः । गुहशक्त्यै । गणेट्शक्त्यै । नारसिंह्यै । सहस्रदृशे । सर्पमालोत्तरीयायै । सर्पसर्वाङ्गभूषणायै । वाराह्यै । सहस्राक्ष्यै । कूर्मशक्त्यै । शुभायै । अलयायै । शेषरूपायै । शेषशक्त्यै । शेषपर्यंकशायिन्यै । वराहदंष्ट्रायै । वलिधिये । कामधिये । काममोहिन्यै । मायिन्यै नमः ॥ ६४०

ओं चित्तसदनायै नमः । काम्यै । कामप्रवर्धिन्यै । सर्वलक्षणसंपूर्णायै । सर्वलक्षणनाशिन्यै । नादरूपायै । बिन्दुरूपायै । कृतकर्मफलप्रदायै । ध्रुवशक्त्यै । ध्रुवारोहायै । ध्रुवाटोपायै । ध्रुवार्थदायै । ध्रुवाकारायै । अग्निहोत्राढ्यायै । ध्रुवाचारायै । ध्रुवस्थित्यै । ध्रुवायै । ध्रुवमय्यै । ध्रौव्यायै । चिद्रूपायै नमः ।। ६६०

ओं आनन्दरूपिण्यै नमः । हृद्रूपायै । बगलायै । कृष्णायै । नीलग्रीवायै । कुधीहरायै । पवित्रदृष्ट्यै । पावित्र्यकारिण्यै । ऋषिवत्सलायै । शिशूत्संगधरायै । असङ्गायै । संगरोगप्रवर्धिन्यै । निस्सङ्गायै । संगबहुलायै । चतुराश्रमवासिन्यै । चतुर्वर्णपरिष्वङ्गायै । चतुर्वर्णबहिःस्थितायै । निराश्रयायै । रागवत्यै । रागिमानससंश्रयायै नमः ।। ६८०

ओं ब्राह्मण्यै नमः । राजदुहित्रे । वैश्यायै । शूद्रायै । परासुरायै । गृहाश्रमसमासीनायै । गृहधर्मनिरूपिण्यै । गृहधर्मायै । विषादघ्न्यै । ब्रह्मचर्यनिषेविण्यै । वानप्रस्थाश्रमस्थायै । यतिधर्मायै । स्फुरत्तनवे । संस्थित्यै । प्रलयायै । सृष्ट्यै । सर्गस्थित्यन्तखेलकृते । ज्ञानशक्त्यै । क्रियाशक्त्यै । छायाशक्त्यै नमः ।। ७००

ओं अपूर्वकृते नमः । नानावादविशेषज्ञायै । नानावाद-निरङ्गतायै । शून्यवादनिराकारायै । धर्मवादनिरूपिण्यै । नवचण्डी-क्रियाहेतवे । संकल्पायै । कल्पनातिगायै । निर्विकल्पायै । विकल्पा-ढ्यायै । संकल्पायै । कल्पभूरुहायै । सृष्टिघ्न्यै । स्थितिघ्न्यै । विनाशघ्न्यै । त्रिरूपभृते । अयोध्यायै । द्वारकायै । काश्यै । मथुरायै नमः ।। ७२०

ओं काञ्च्यै नमः । अवन्तिकायै । विशोकायै । शोक-मार्तण्ड्यै । पाञ्चाल्यै । शोकनाशिन्यै । शमायै । नियमशक्त्यै । धर्मशक्त्यै । जयध्वजायै । मुक्त्यै । कुण्डलिन्यै । भुक्त्यै । विषदृष्ट्यै ।

समेक्षणायै। कृपेक्षणायै। कृपार्द्राङ्ग्यै। कृपाचिन्तायै। कृपाश्रुत्यै। महापुराद्रिनिलयायै नमः ।। ७४०

ओं महापुरकृतस्थित्यै नमः। अज्ञानकल्पनायै। अनन्तायै। प्रपञ्चकलनातिगायै । साम्यदृष्ट्यै । देहपुष्ट्यै । कृतसृष्ट्यै । हताखिलायै। वेणुपुण्यपरीपाकायै। अयोनिजायै। वह्निसंभवायै। महापुरसुखासीनायै। डमड्डमरुदर्पितायै। महापुरायै। महादेव्यै। डमरुप्रीतिवल्गितायै। भद्रकाल्यै। पितृशक्त्यै। अलसायै। भुवनेश्वर्यै नमः ।। ७६०

ओं गायत्र्यै नमः। चतुर्वक्त्रायै। त्रिपुरायै। वीरवन्दितायै। यमांबायै। त्रिगुणायै। आनन्दायै। कैवल्यपददायिन्यै। बडबायै। सदयायै। भूस्थायै। शाक्तसर्गप्रवर्तिन्यै। इन्द्रादिदेवजनन्यै। एलांबायै । कोलरूपिण्यै । कुंभदर्पहरायै । दोलायै । दोलाक्रीडनलालसायै । शीतलायै। विष्णुमायायै नमः ।। ७८०

ओं चतुर्वक्त्रनमस्कृतायै नमः। मातङ्ग्यै। विष्णुजनन्यै। प्रेतासननिवासिन्यै। गरुत्मद्गमनायै। नीलायै। ब्रह्मास्त्रायै। ब्रह्मभूषितायै। सिद्ध्यै। पाशुपतास्त्रायै। नीलेन्दीवरलोचनायै। रुक्मायै। शंकरजनन्यै। कर्मनाशायै। शांभव्यै। त्रिगायै। वामनशक्त्यै । हिरण्यगर्भभूसुरायै। वाग्वादिन्यै। वर्णायै नमः ।। ८००

ओं शंकरार्धशरीरिण्यै नमः। दारुणायै। मोहरात्र्यै। भ्रमादिगणरूपिण्यै। दीपिकायै। क्रोडवरदायै। मोहिन्यै। गरलाशनायै। कपर्दाञ्चितसर्वाङ्ग्यै। त्रिंशल्लोचनभूषितायै। कर्पूरकान्तिवदनायै। नीलबाहवे। अनुत्तमायै। ब्रह्मगेयायै। मुनिध्येयायै। ह्रींकारायै। कामविग्रहायै। षड्बीजायै। नवबीजायै। नवाक्षरतन्वै नमः ।। ८२०

ओं खगायै नमः । दशाणयै । द्वादशार्णाढ्यायै । षोडशाणयै । विबीजगायै । मालामन्त्रमय्यै । जय्यायै । सर्वबीजैकदेवतायै । जपमालायै । जयदायै । जपविघ्नविनाशिन्यै । जपकर्त्र्यै । जपस्तोत्रायै । मन्त्रयन्त्रफलप्रदायै । मन्त्रावरणरूपायै । एकायै । यन्त्रावरणदेवतायै । पद्मिन्यै । पद्मपत्राक्ष्यै । शम्यै नमः ॥ ८४०

ओं यज्ञाङ्गदेवतायै नमः । यज्ञसिद्ध्यै । सहस्राक्ष्यै । सहस्राक्षपदप्रदायै । रेणुवंशावताराढ्यायै । महिषान्तकर्यै । समिधे । ऋग्वेदायै । यजुर्वेदायै । सामवेदायै । त्रय्यै । परायै । अभिचारप्रियायै । अथर्वणे । पञ्चतन्त्राधिदेवतायै । अभिचारक्रियायै । शान्त्यै । शान्तिमन्त्राधिदेवतायै । अभिचारोपशमन्यै । सर्वानन्दविधायिन्यै नमः ॥ ८६०

ओं अथर्वपाठसंपन्नायै नमः । लेखन्यै । लेखकस्थितायै । भूमलेख्यायै । वर्णशक्त्यै । सर्वशक्त्यै । प्रसिद्धिदायै । कीर्तिकामायै । कलाकामायै । कामाक्ष्यै । सर्वमङ्गलायै । शूलेश्वर्यै । कुशूलघ्न्यै । चिन्ताशोकविनाशिन्यै । चिन्तादिदेवतायै । भूतनायकायै । नलकूबर्यै । करालायै । अत्यूर्ध्वकेश्यै । श्रीधर्यै नमः ॥ ८८०

ओं विनायक्यै नमः । कामेश्वर्यै । कौबेर्यै । पद्मावत्यभिधायै । गत्यै । ज्वालामुख्यै । कौमार्यै । विजयायै । मेघवाहनायै । महाबलायै । महोत्साहायै । महाभयनिवारिण्यै । कामिन्यै । शांकर्यै । काष्ठायै । सहस्रभुजनिग्रहायै । प्रभायै । प्रभाकर्यै । भाषायै । सप्ताश्वरथ-संस्थितायै नमः ॥ ९००

ओं अलकापुरसंस्थानायै नमः । मृडान्यै । विन्ध्यनिश्चलायै । हिमाचलकृतक्रीडायै । पीडापापनिवारिण्यै । अर्धमात्राक्षरायै । सन्ध्यायै । त्रिमात्रायै । भारत्यै । धृत्यै । वेदमात्रे । वेदगर्भायै ।

कौशिक्यै। त्र्यंबकायै। स्वरायै। अंबालिकायै। क्षुधायै। तृष्णायै। धूम्रायै। रौद्रायै नमः ॥ ९२०

ओं दुरत्ययायै नमः। पानपात्रकरायै। जात्यै। श्रद्धायै। वार्तायै। चितास्थितायै। दुर्गाण्यै। रक्तचामुण्डायै। आवृत्यै। सोमावतंसिन्यै। शरण्यायै। आयायै। दुर्गपरायै। सारायै। ज्योत्स्नायै। महास्मृत्यै। जगत्प्रतिष्ठायै। कल्याण्यै। छायायै। तुष्ट्यै नमः ॥ ९४०

ओं तामस्यै नमः। तृष्णायै। वाच्ये। धिये। नद्धायै। गदिन्यै। चक्रधारिण्यै। लज्जायै। सहस्रनयनायै। महिषासुरमर्दिन्यै। भीमायै। भद्रायै। भगवत्यै। नवदुर्गायै। अपराजितायै। मेधायै। अष्टादशदोर्दण्डायै। दुर्गायै। कात्यायन्यै। रत्यै नमः ॥ ९६०

ओं सर्वतःपाणिपादोरवे नमः। भ्रामर्यै। चन्द्ररूपिण्यै। इन्द्राण्यै। महामार्यै। सर्वतोऽक्षिशिरोमुखायै। क्षोभिण्यै। मोहिन्यै। स्तंभिन्यै। जृंभिण्यै। रथिन्यै। ध्वजिन्यै। सेनायै। सर्वमन्त्रमय्यै। मह्यै। ज्ञानमुद्रायै। महामुद्रायै। जपमुद्रायै। महोत्सवायै। जटाजूटधरायै नमः ॥ ९८०

ओं मुक्तायै नमः। सूक्ष्मशान्त्यै। विभीषणायै। सप्ताब्धिसंश्रयायै। सत्तायै। सप्तद्वीपाब्धिमेखलायै। सूर्यदीप्त्यै। वज्रपंक्त्यै। पानोन्मत्तायै। पिङ्गलायै। सर्वज्ञायै। विश्वमात्रे। भक्तानुग्रहकारिण्यै। विश्वप्रियायै। प्राणशक्त्यै। अनन्तगुण-नामधिये। सर्वकल्याणनिलयायै। शारदायै। त्र्यंबिकायै। सुधायै नमः ॥ १०००

*—*—*

# श्रीललितासहस्रनामस्तोत्रम्

(शिवकृताम्)

श्रीमहादेव उवाच-

हरनेत्रसमुद्भूतः स वह्निर्न महेश्वरम्।
पुनर्गन्तुं शशाकाथ कदाचिदपि नारद॥ १॥

बभूव वडवारूपस्तापयामास मेदिनीम्।
ततो ब्रह्मा समागत्य वडवारूपिणं च तम्॥ २॥

नीत्वा समुद्रं सम्प्रार्थ्य तत्तोयेऽस्थापयन्मुने।
ययुर्देवा निजं स्थानं कामशोकेन मोहिताः॥ ३॥

समाश्वस्य रतिं स्वामी पुनस्ते जीवितो भवेत्॥ ४॥

अथ प्राह महादेवं पार्वती रुचिरानना।
त्रिजगज्जननी स्मित्वा निर्जने तत्र कानने॥ ५॥

श्रीदेव्युवाच-

मामाद्यां प्रकृतिं देव लब्धुं पत्नीं महत्तपः।
चिरं करोषि तत्कस्मात्कामोऽयं नाशितस्त्वया॥ ६॥

कामे विनष्टे पत्न्याः किं विद्यते ते प्रयोजनम्।
योगिनामेष धर्मो वै यत्कामस्य विनाशनम्॥ ७॥

इति श्रुत्वा वचस्तस्याः शङ्करश्चकितस्तदा।
सन्ध्यायन् ज्ञातवानाद्यां प्रकृतिं पर्वतात्मजाम्॥ ८॥

ततो निमील्य नेत्राणि प्रहर्षपुलकान्वितः।
निरीक्ष्य पार्वतीं प्राह सर्वलोकैकसुन्दरीम्॥ ९॥

जाने त्वां प्रकृतिं पूर्णामाविर्भूतां स्वलीलया।
त्वामेव लब्धुं ध्यानस्थश्चिरं तिष्ठामि कानने॥ १०॥

अद्याहं कृतकृत्योऽस्मि यत्त्वां साक्षात्परात्पराम्।
पुरः पश्यामि चार्वङ्गीं सतीमिव मम प्रियाम्॥ ११॥

श्रीदेव्युवाच-

तव भावेन तुष्टाऽहं सम्भूय हिमवद्गृहे।
त्वामेव च पतिं लब्धुं समायाता तवान्तिकम्॥ १२॥

यो मां यादृशभावेन सम्प्रार्थयति भक्तितः।
तस्य तेनैव भावेन पूरयामि मनोरथान्॥ १३॥

अहं सैव सती शम्भो दक्षस्य च महाध्वरे।
विहाय त्वां गता काली भीमा त्रैलोक्यमोहिनी॥ १४॥

शिव उवाच-

यदि मे प्राणतुल्यासि सती त्वं चारुलोचना।
तदा यथा महामेघप्रभा सा भीमरूपिणी॥ १५॥

बभूव दक्षयज्ञस्य विनाशाय दिगम्बरी।
काली तथा स्वरूपेण चात्मानं दर्शयस्व माम्॥ १६॥

इत्युक्ता सा हिमसुता शम्भुना मुनिसत्तम्।
बभूव पूर्ववत्काली स्निग्धाञ्जनचयप्रभा॥ १७॥

दिगम्बरी क्षरद्रक्ता भीमायतविलोचना।
पीनोन्नतकुचद्वन्द्वचारुशोभितवक्षसा॥ १८॥

गलदापादसंलम्बिकेशपुञ्जभयानका।
ललज्जिह्वा ज्वलद्दन्तनखरैरुपशोभिता॥ १९॥

उद्यच्छशाङ्कनिच्चयैर्मेघपङ्क्तिरिवाम्बरे।
आजानुलम्बिमुण्डालिमालयाऽतिविशालया॥ २० ॥

राजमाना महामेघपङ्क्तिश्चञ्चलया यथा।
भुजैश्चतुर्भिर्भूयोच्चैः शोभमाना महाप्रभा॥ २१ ॥

विचित्ररत्नविभ्राजन्मुकुटोज्ज्वलमस्तका।
तां विलोक्य महादेवः प्राह गद्गदया गिरा॥ २२ ॥

रोमाञ्चिततनुर्भक्त्या प्रहृष्टात्मा महामुने।
चिरं त्वद्विरहेनेदं निर्दग्धं हृदयं मम॥ २३ ॥

त्वमन्तर्यामिनी शक्तिर्हृदयस्था महेश्वरी।
आराध्य त्वत्पदाम्भोजं धृत्वा हृदयपङ्कजे॥ २४ ॥

त्वद्विच्छेदसमुत्तप्तं हृत्करोमि सुशीतलम्॥ २५ ॥

इत्युक्त्वा स महादेवो योगं परममास्थितः।
शयितस्तत्पदाम्भोजं दधार हृदये तदा॥ २६ ॥

ध्यानानन्देन निष्पन्दशवरूपधरः स्थितः।
व्याघूर्णमाननेत्रस्तां ददर्श परमादरः॥ २७॥

अंशतः पुरतः स्थित्वा पञ्चवक्त्रः कृताञ्जलिः।
सहस्रनामभिः कालीं तुष्टाव परमेश्वरीम्॥ २८ ॥

शिव उवाच-

अनाद्या परमा विद्या प्रधाना प्रकृतिः परा।
प्रधानपुरुषाराध्या प्रधानपुरुषेश्वरी॥ २९ ॥

प्राणात्मिका प्राणशक्तिः सर्वप्राणहितैषिणी।
उमा चोत्तमकेशिन्युत्तमा चोन्मत्तभैरवी॥ ३० ॥

उर्वशी चोन्नता चोग्रा महोग्रा चोन्नतस्तनी।
उग्रचण्डोग्रनयना महोग्रा दैत्यनाशिनी॥ ३१॥

उग्रप्रभावती चोग्रवेगाऽनुग्राऽप्रमर्दिनी।
उग्रतारोग्रनयना चोर्ध्वस्थाननिवासिनी॥ ३२

उन्मत्तनयनाऽत्युग्रदन्तोत्तुङ्गस्थलालया।
उल्लासिन्युल्लासचित्ता चोत्फल्लनयनोज्ज्वला॥ ३३॥

उत्फुल्लकमलारूढा कमला कामिनी कला।
काली करालवदना कामिनी मुखकामिनी॥ ३४॥

कोमलाङ्गी कृशाङ्गी च कैटभासुरमर्दिनी।
कालिन्दी कमलस्था च कान्ता काननवासिनी॥ ३५॥

कुलीना निष्कला कृष्णा कालरात्रिस्वरूपिणी।
कुमारी कामरूपा च कामिनी कृष्णपिङ्गला॥ ३६॥

कपिला शान्तिदा शुद्धा शङ्करार्धशरीरिणी।
कौमारी कार्त्तिकी दुर्गा कौशिकी कुण्डलोज्ज्वला॥ ३७॥

कुलेश्वरी कुलश्रेष्ठा कुन्तलोज्ज्वलमस्तका।
भवानी भाविनी वाणी शिवा च शिवमोहिनी॥ ३८॥

शिवप्रिया शिवाराध्या शिवप्राणैकवल्लभा।
शिवपत्नी शिवस्तुत्या शिवानन्दप्रदायिनी॥ ३९॥

नित्यानन्दमयी नित्या सच्चिदानन्दविग्रहा।
त्रैलोक्यजननी शम्भुहृदयस्था सनातनी॥ ४०॥

सदया निर्दया माया शिवा त्रैलोक्यमोहिनी।
ब्रह्मादित्रिदशाराध्या सर्वाभीष्टप्रदायिनी॥ ४१॥

ब्रह्माणी ब्रह्म गायत्री सावित्री ब्रह्मसंस्तुता।
ब्रह्मोपास्या ब्रह्मशक्तिर्ब्रह्मसृष्टिविधायिनी॥ ४२॥

कमण्डलुकरा सृष्टिकर्त्री ब्रह्मस्वरूपिणी।
चतुर्भुजात्मिका यज्ञसूत्ररूपा दृढव्रता॥ ४३॥

हंसारूढा चतुर्वक्त्रा चतुर्वेदाभिसंस्तुता।
वैष्णवी पालनकरी महालक्ष्मीर्हरिप्रिया॥ ४४॥

शङ्खचक्रधरा विष्णुशक्तिर्विष्णुस्वरूपिणी।
विष्णुप्रिया विष्णुमाया विष्णुप्राणैकवल्लभा॥ ४५॥

योगनिद्राऽक्षरा विष्णुमोहिनी विष्णुसंस्तुता।
विष्णुसंमोहनकरी त्रैलोक्यपरिपालिनी॥ ४६॥

शङ्खिनी चक्रिणी पद्मा पद्मिनी मुसलायुधा।
पद्मालया पद्महस्ता पद्ममालादिभूषिता॥ ४७॥

गरुडस्था चारुरूपा सम्पद्रूपा सरस्वती।
विष्णुपार्श्वस्थिता विष्णुपरमाऽऽह्लाददायिनी॥ ४८॥

सम्पत्तिः सम्पदाधारा सर्वसम्पत्प्रदायिनी।
श्रीर्विद्या सुखदा सौख्यदायिनी दुःखनाशिनी॥ ४९॥

दुःखहन्त्री सुखकरी सुखासीना सुखप्रदा।
सुखप्रसन्नवदना नारायणमनोरमा॥ ५०॥

नारायणी जगद्धात्री नारायणविमोहिनी।
नारायणशरीरस्था वनमालाविभूषिता॥ ५१॥

दैत्यघ्नी पीतवसना सर्वदैत्यप्रमर्दिनी।
वाराही नारसिंही च रामचन्द्रस्वरूपिणी॥ ५२॥

रक्षोघ्नी काननावासा चाहल्याशापमोचिनी।
सेतुबन्धकरी सर्वरक्षःकुलविनाशिनी ॥ ५३ ॥

सीता पतिव्रता साध्वी रामप्राणैकवल्लभा।
अशोककाननावासा लङ्केश्वरविनाशिनी ॥ ५४ ॥

नीतिः सुनीतिः सुकृतिः कीर्तिर्मेधा वसुन्धरा।
दिव्यमाल्यधरा दिव्या दिव्यगन्धानुलेपना ॥ ५५ ॥

दिव्यवस्त्रपरीधाना दिव्यस्थाननिवासिनी।
माहेश्वरी प्रेतसंस्था प्रेतभूमिनिवासिनी ॥ ५६ ॥

निर्जनस्था श्मशानस्था भैरवी भीमलोचना।
सुघोरनयना घोरा घोररूपा घनप्रभा ॥ ५७ ॥

घनस्तनी वरा श्यामा प्रेतभूमिकृतालया।
खट्वाङ्गधारिणी द्वीपिचर्माम्बरसुशोभना ॥ ५८ ॥

महाकाली चण्डवक्त्रा चण्डमुण्डविनाशिनी।
उद्यानकाननावासा पुष्पोद्यानवनप्रिया ॥ ५९ ॥

बलिप्रिया मांसभक्ष्या रुधिरासवभक्षिणी।
भीमरावा साट्टहासा रणनृत्यपरायणा ॥ ६० ॥

असुरासृक्प्रिया तुष्टा दैत्यदानवमर्दिनी।
दैत्यविद्राविणी दैत्यमथनी दैत्यसूदनी ॥ ६१ ॥

दैत्यघ्नी दैत्यहन्त्री च महिषासुरमर्दिनी।
रक्तबीजनिहन्त्री च शुम्भासुरविनाशिनी ॥ ६२ ॥

निशुंभहन्त्री धूम्राक्षमर्दिनी दुर्गहारिणी।
दुर्गासुरनिहन्त्री च शिवदूती महाबला ॥ ६३ ॥

महाबलवती चित्रवस्त्रा रक्ताम्बराऽमला।
विमला ललिता चारुहासा चारुस्त्रिलोचना॥ ६४॥

अजेया जयदा ज्येष्ठा जयशीलाऽपराजिता।
विजया जाह्नवी दुष्टजृम्भिणी जयदायिनी॥ ६५॥

जगद्रक्षाकरी सर्वजगच्चैतन्यकारिणी।
जया जयन्ती जननी जनभक्षणतत्परा॥ ६६॥

जलरूपा जलस्था च जप्या जापकवत्सला।
जाज्वल्यमाना यज्ञाशा जन्मनाशविवर्जिता॥ ६७॥

जरातीता जगन्माता जगद्रूपा जगन्मयी।
जङ्गमा ज्वालिनी जृम्भा स्तम्भिनी दुष्टतापिनी॥ ६८॥

त्रिपुरघ्नी त्रिनयना महात्रिपुरतापिनी।
तृष्णा जातिः पिपासा च बुभुक्षा त्रिपुरा प्रभा॥ ६९॥

त्वरिता त्रिपुटा त्र्यक्षा तन्वी तापविवर्जिता।
त्रिलोकेशी तीव्रवेगा तीव्रा तीव्रबलाऽलया॥ ७०॥

निःशङ्का निर्मलाभा च निरातङ्काऽमलप्रभा।
विनीता विनयाभिज्ञा विशेषज्ञा विलक्षणा॥ ७१॥

वरदा वल्लभा विद्युत्प्रभा विनयशालिनी।
बिम्बोष्ठी विधुवक्त्रा च विवस्त्रा विनयप्रभा॥ ७२॥

विश्वेशपत्नी विश्वात्मा विश्वरूपा बलोत्कटा।
विश्वेशी विश्ववनिता विश्वमाता विचक्षणा॥ ७३॥

विदुषी विश्वविदिता विश्वमोहनकारिणी।
विश्वमूर्तिर्विश्वधरा विश्वेशपरिपालिनी॥ ७४॥

विश्वकर्त्री विश्वहर्त्री विश्वपालनतत्परा।
विश्वेशहृदयावासा विश्वेश्वरमनोरमा॥ ७५॥

विश्वहा विश्वनिलया विश्वमाया विभूतिदा।
विश्वा विश्वोपकारा च विश्वप्राणात्मिकापि च॥ ७६॥

विश्वप्रिया विश्वमयी विश्वदुष्टविनाशिनी।
दाक्षायणी दक्षकन्या दक्षयज्ञविनाशिनी॥ ७७॥

विश्वम्भरी वसुमती वसुधा विश्वपावनी।
सर्वातिशायिनी सर्वदुःखदारिद्र्यहारिणी॥ ७८॥

महाविभूतिरव्यक्ता शाश्वती सर्वसिद्धिदा।
अचिन्त्याऽचिन्त्यरूपा च केवला परमात्मिका॥ ७९॥

सर्वज्ञा सर्वविषया सर्वोपरिपरायणा।
सर्वस्यार्तिहरा सर्वमङ्गला मङ्गलप्रदा॥ ८०॥

मङ्गलार्हा महादेवी सर्वमङ्गलदायिका।
सर्वान्तरस्था सर्वार्थरूपिणी च निरञ्जना॥ ८१॥

चिच्छक्तिश्चिन्मयी सर्वविद्या सर्वविधायिनी।
शान्तिः शान्तिकरी सौम्या सर्वा सर्वप्रदायिनी॥ ८२॥

शान्तिः क्षमा क्षेमकरी क्षेत्रज्ञा क्षेत्रवासिनी।
क्षणात्मिका क्षीणतनुः क्षीणाङ्गी क्षीणमध्यमा॥ ८३॥

क्षिप्रगा क्षेमदा क्षिप्ता क्षणदा क्षणवासिनी।
वृत्तिर्निवृत्तिर्भूतानां प्रवृत्तिर्वृत्तलोचना॥ ८४॥

व्योममूर्तिर्व्योमसंस्था व्योमालयकृताश्रया।
चन्द्रानना चन्द्रकान्तिश्चन्द्रार्धाङ्कितमस्तका॥ ८५॥

चन्द्रप्रभा चन्द्रकला शरच्चन्द्रनिभानना।
चन्द्रात्मिका चन्द्रमुखी चन्द्रशेखरवल्लभा॥ ८६॥

चन्द्रशेखरवक्षःस्था चन्द्रलोकनिवासिनी।
चन्द्रशेखरशैलस्था चञ्चला चञ्चलेक्षणा॥ ८७॥

छिन्नमस्ता छागमांसप्रिया छागबलिप्रिया।
ज्योत्स्ना ज्योतिर्मयी सर्वज्यायसी जीवनात्मिका॥ ८८॥

सर्वकार्यनियन्त्री च सर्वभूतहितैषिणी।
गुणातीता गुणमयी त्रिगुणा गुणशालिनी॥ ८९॥

गुणैकनिलया गौरी गुह्या गोपकुलोद्भवा।
गरीयसी गुरुरता गुह्यस्थाननिवासिनी॥ ९०॥

गुणज्ञा निर्गुणा सर्वगुणार्हा गुह्यकाऽम्बिका।
गलज्जटा गलत्केशा गलद्रुधिरचर्चिता॥ ९१॥

गजेन्द्रगमना गन्त्री गीतनृत्यपरायणा।
गमनस्था गयाध्यक्षा गणेशजननी तथा॥ ९२॥

गानप्रिया गानरता गृहस्था गृहिणी परा।
गजसंस्था गजारूढा ग्रसन्ती गरुडासना॥ ९३॥

योगस्था योगिनीगम्या योगचिन्तापरायणा।
योगिध्येया योगिवन्द्या योगलभ्या युगात्मिका॥ ९४॥

योगिज्ञेया योगयुक्ता महायोगेश्वरेश्वरी।
योगानुरक्ता युगदा युगान्तजलदप्रभा॥ ९५॥

युगानुकारिणी यज्ञरूपा सूर्यसमप्रभा।
युगान्तानिलवेगा च सर्वयज्ञफलप्रदा॥ ९६॥

संसारयोनिः संसारव्यापिनी सफलास्पदा।
संसारतरुनिःसेव्या संसारार्णवतारिणी।। ९७।।

सर्वार्थसाधिका सर्वा संसारव्यापिनी तथा।
संसारबन्धकर्त्री च संसारपरिवर्जिता।। ९८ ।।

दुर्निरीक्ष्या सुदुष्प्राप्या भूतिर्भूतिमतीत्यपि।
अत्यन्तविभवाऽरूपा महाविभवरूपिणी।। ९९ ।।

शब्दब्रह्मस्वरूपा च शब्दयोनिः परात्परा।
भूतिदा भूतिमाता च भूतिस्तन्द्री विभूतिदा।। १०० ।।

भूतान्तरस्था कूटस्था भूतनाथप्रियाङ्गना।
भूतमाता भूतनाथा भूतालयनिवासिनी।। १०१ ।।

भूतनृत्यप्रिया भूतसङ्गिनी भूतलाश्रया।
जन्ममृत्युजरातीता महापुरुषसङ्गता।। १०२ ।।

भुजगा तामसी व्यक्ता तमोगुणवती तथा।
त्रितत्त्वा तत्त्वरूपा च तत्त्वज्ञा तत्त्वकप्रिया।। १०३ ।।

त्र्यम्बका त्र्यम्बकरता शुक्ला त्र्यम्बकरूपिणी।
त्रिकालज्ञा जन्महीना रक्ताङ्गी ज्ञानरूपिणी।। १०४ ।।

अकार्या कार्यजननी ब्रह्माख्या ब्रह्मसंस्थिता।
वैराग्ययुक्ता विज्ञानगम्या धर्मस्वरूपिणी।। १०५ ।।

सर्वधर्मविधानज्ञा धर्मिष्ठा धर्मतत्परा।
धर्मिष्ठपालनकरी धर्मशास्त्रपरायणा।। १०६ ।।

धर्माधर्मविहीना च धर्मजन्यफलप्रदा।
धर्मिणी धर्मनिरता धर्मिणामिष्टदायिनी।। १०७।।

धन्या धीर्धारिणा धीरा धन्वनी धनदायिनी।
धनुष्मती धरासंस्था धरणी स्थितिकारिणी॥ १०८॥

सर्वयोनिर्विश्वयोनिरपांयोनिरयोनिजा।
रुद्राणी रुद्रवनिता रुद्रैकादशरूपिणी॥ १०९॥

रुद्राक्षमालिनी रौद्री भुक्तिमुक्तिफलप्रदा।
ब्रह्मोपेन्द्रप्रवन्द्या च नित्यं मुदितमानसा॥ ११०॥

इन्द्राणी वासवी चैन्द्री विचित्रैरावतस्थिता।
सहस्रनेत्रा दिव्याङ्गी दिव्यकेशविलासिनी॥ १११॥

दिव्याङ्गना दिव्यनेत्रा दिव्यचन्दनचर्चिता।
दिव्यालङ्करणा दिव्यश्वेतचामरवीजिता॥ ११२॥

दिव्यहारा दिव्यपदा दिव्यनूपुरशोभिता।
केयूरशोभिता हृष्टा हृष्टचित्त प्रहर्षिणी॥ ११३॥

सम्प्रहृष्टमना हर्षप्रसन्नवदना तथा।
देवेन्द्रवन्द्यपादाब्जा देवेन्द्रपरिपूजिता॥ ११४॥

रजसा रक्तनयना रक्तपुष्पप्रिया सदा।
रक्ताङ्गी रक्तनेत्रा च रक्तोत्पलविलोचना॥ ११५॥

रक्ताभा रक्तवस्त्रा च रक्तचन्दनचर्चिता।
रक्तेक्षणा रक्तभक्ष्या रक्तमत्तोरगाश्रया॥ ११६॥

रक्तदन्ता रक्तजिह्वा रक्तभक्षणतत्परा।
रक्तप्रिया रक्ततुष्टा रक्तपानसुतत्परा॥ ११७॥

बन्धूककुसुमाभा च रक्तमाल्यानुलेपना।
स्फुरद्रक्ताञ्चिततनुः स्फुरत्सूर्यशतप्रभा॥ ११८॥

स्फुरन्नेत्रा पिङ्गजटा पिङ्गला पिङ्गलेक्षणा।
बगला पीतवस्त्रा च पीतपुष्पप्रिया सदा।। ११९ ।।

पीताम्बरा पिबद्रक्ता पीतपुष्पोपशोभिता।
शत्रुघ्नी शत्रुसम्मोहजननी शत्रुतापिनी।। १२० ।।

शत्रुप्रमर्दिनी शत्रुवाक्यस्तम्भनकारिणी।
उच्चाटनकरी सर्वदुष्टोत्सारणकारिणी।। १२१ ।।

शत्रुविद्राविणी शत्रुसम्मोहनकरी तथा।
विपक्षमर्दनकरी शत्रुपक्षक्षयङ्करी।। १२२ ।।

सर्वदुष्टघातिनी च सर्वदुष्टविनाशिनी।
द्विभुजा शूलहस्ता च त्रिशूलवरधारिणी।। १२३ ।।

दुष्टसन्तापजननी दुष्टक्षोभप्रवर्धिनी।
दुष्टानां क्षोभसम्बद्धा भक्तक्षोभनिवारिणी।। १२४ ।।

दुष्टसन्तापिनी दुष्टसन्तापपरिमर्दिनी।
सन्तापरहिता भक्तसन्तापपरिनाशिनी।। १२५ ।।

अद्वैता द्वैतरहिता निष्कला ब्रह्मरूपिणी।
त्रिदशेशी त्रिलोकेशी सर्वेशी जगदीश्वरी।। १२६ ।।

ब्रह्मेशसेवितपदा सर्ववन्द्यपदाम्बुजा।
अचिन्त्यरूपचरिता चाचिन्त्यबलविक्रमा।। १२७।।

सर्वाचिन्त्यप्रभावा च स्वप्रभावप्रदर्शिनी।
अचिन्त्यमहिमाऽचिन्त्यरूपा सौन्दर्यशालिनी।। १२८ ।।

अचिन्त्यवेशशोभा च लोकाचिन्त्यगुणान्विता।
अचिन्त्यशक्तिर्दुश्चिन्त्यप्रभावा चिन्त्यरूपिणी।। १२९ ।।

योगचिन्त्या महाचिन्तानाशिनी चेतनात्मिका।
गिरिजा दक्षजा विश्वजनयित्री जगत्प्रसूः ॥ १३० ॥

संनम्याऽप्रणता सर्वप्रणतार्तिहरी तथा।
प्रणतैश्वर्यदा सर्वप्रणताशुभनाशिनी ॥ १३१ ॥

प्रणतापन्नाशकरी प्रणताशुभमोचनी।
सिद्धेश्वरी सिद्धसेव्या सिद्धचारणसेविता ॥ १३२ ॥

सिद्धिप्रदा सिद्धिकरी सर्वसिद्धगणेश्वरी।
अष्टसिद्धिप्रदा सिद्धगणसेव्यपदाम्बुजा ॥ १३३ ॥

कात्यायनी स्वधा स्वाहा वषड्वौषट्स्वरूपिणी।
पितॄणां तृप्तिजननी कव्यरूपा सुरेश्वरी ॥ १३४ ॥

हव्यभोक्त्री हव्यतुष्टा पितृरूपाऽसितप्रिया।
कृष्णपक्षप्रपूज्या च प्रेतपक्षसमर्चिता ॥ १३५ ॥

अष्टहस्ता दशभुजा चाष्टादशभुजान्विता।
चतुर्दशभुजाऽसंख्यभुजवल्लीविराजिता ॥ १३६ ॥

सिंहपृष्ठसमारूढा सहस्रभुजराजिता।
भुवनेशी चान्नपूर्णा महात्रिपुरसुन्दरी ॥ १३७ ॥

त्रिपुरा सुन्दरी सौम्यमुखी सुन्दरलोचना।
सुन्दरास्या शुभ्रदंष्ट्रा सुभ्रूः पर्वतनन्दिनी ॥ १३८ ॥

नीलोत्पलदलश्यामा स्मेरोत्फुल्लमुखाम्बुजा।
सत्यसंधा पद्मवक्त्रा भ्रुकुटीकुटिलानना ॥ १३९ ॥

विद्याधरी वरारोहा महासन्ध्यास्वरूपिणी।
अरुन्धती हिरण्याक्षी सुधूम्राक्षी शुभेक्षणा ॥ १४० ॥

श्रुतिः स्मृतिः कृतिर्योगमाया पुण्या पुरातनी।
वाग्देवता वेदविद्या ब्रह्मविद्यास्वरूपिणी॥ १४१॥

वेदशक्तिर्वेदमाता वेदाद्या परमा गतिः।
आन्वीक्षिकी तर्कविद्या योगशास्त्रप्रकाशिनी॥ १४२॥

धूमावती वियन्मूर्तिर्विद्युन्माला विलासिनी।
महाव्रता सदानन्दनन्दिनी नगनन्दिनी॥ १४३॥

सुनन्दा यमुना चण्डी रुद्रचण्डी प्रभावती।
पारिजातवनावासा पारिजातवनप्रिया॥ १४४॥

सुपुष्पगन्धसन्तुष्टा दिव्यपुष्पोपशोभिता।
पुष्पकाननसद्वासा पुष्पमालाविलासिनी॥ १४५॥

पुष्पमाल्यधरा पुष्पगुच्छालङ्कृतदेहिका।
प्रतप्तकाञ्चनाभासा शुद्धकाञ्चनमण्डिता॥ १४६॥

सुवर्णकुण्डलवती स्वर्णपुष्पप्रिया सदा।
नर्मदा सिन्धुनिलया समुद्रतनया तथा॥ १४७॥

षोडशी षोडशभुजा महाभुजगमण्डिता।
पातालवासिनी नागी नागेन्द्रकृतभूषणा॥ १४८॥

नागिनी नागकन्या च नागमाता नगालया।
दुर्गाऽऽपत्तारिणी दुर्गदुष्टग्रहनिवारिणी॥ १४९॥

अभयाऽऽपन्निहन्त्री च सर्वापत्परिनाशिनी।
ब्रह्मण्या श्रुतिशास्त्रज्ञा जगतां कारणात्मिका॥ १५०॥

निष्कारणा जन्महीना मृत्युञ्जयमनोरमा।
मृत्युञ्जयहृदावासा मूलाधारनिवासिनी॥ १५१॥

षट्चक्रसंस्था महती महोत्सवविलासिनी ।
रोहिणी सुन्दरमुखी सर्वविद्याविशारदा ॥ १५२ ॥

सदसद्वस्तुरूपा च निष्कामा कामपीडिता ।
कामातुरा काममत्ता काममानससत्तनुः ॥ १५३ ॥

कामरूपा च कालिन्दी कचालम्बितविग्रहा ।
अतसीकुसुमाभासा सिंहपृष्ठनिषेदुषी ॥ १५४ ॥

युवती यौवनोद्रिक्ता यौवनोद्रिक्तमानसा ।
अदितिर्देवजननी त्रिदशार्तिविनाशिनी ॥ १५५ ॥

दक्षिणाऽपूर्ववसना पूर्वकालविवर्जिता ।
अशोका शोकरहिता सर्वशोकनिवारिणी ॥ १५६ ॥

अशोककुसुमाभासा शोकदुःखक्षयङ्करी ।
सर्वयोषित्स्वरूपा च सर्वप्राणिमनोरमा ॥ १५७ ॥

महाश्चर्या मदाश्चर्या महामोहस्वरूपिणी ।
महामोक्षकरी मोहकारिणी मोहदायिनी ॥ १५८ ॥

अशोच्या पूर्णकामा च पूर्णा पूर्णमनोरथा ।
पूर्णाभिलषिता पूर्णनिशानाथसमानना ॥ १५९ ॥

द्वादशार्कस्वरूपा च सहस्रार्कसमप्रभा ।
तेजस्विनी सिद्धमाता चन्द्रा नयनरक्षणा ॥ १६० ॥

अपराऽपारमाहात्म्या नित्यविज्ञानशालिनी ।
विवस्वती हव्यवाहा जातवेदःस्वरूपिणी ॥ १६१ ॥

स्वैरिणी स्वेच्छविहरा निर्बीजा बीजरूपिणी ।
अनन्तवर्णाऽनन्ताख्याऽनन्तसंस्था महोदरी ॥ १६२ ॥

दुष्टभूतापहन्त्री च सद्वृत्तपरिपालिका।
कपालिनी पानमत्ता मत्तवारणगामिनी ॥ १६३ ॥

विन्ध्यस्था विन्ध्यनिलया विन्ध्यपर्वतवासिनी।
बन्धुप्रिया जगद्बन्धुः पवित्रा सपवित्रिणी ॥ १६४ ॥

परामृताऽमृतकला चापमृत्युविनाशिनी।
महारजतसङ्काशा रजताद्रिनिवासिनी ॥ १६५ ॥

काशीविलासिनी काशीक्षेत्ररक्षणतत्परा।
योनिरूपा योनिपीठस्थिता योनिस्वरूपिणी ॥ १६६ ॥

कामोल्लसितचार्वङ्गी कटाक्षक्षेपमोहिनी।
कटाक्षक्षेपनिरता कल्पवृक्षस्वरूपिणी ॥ १६७ ॥

पाशाङ्कुशधरा शक्तिधारिणी खेटकायुधा।
बाणायुधाऽमोघशस्त्रा दिव्यशस्त्राऽस्त्रवर्षिणी ॥ १६८ ॥

महास्त्रजालविक्षेपविपक्षक्षयकारिणी।
घण्टिनी पाशिनी पाशहस्ता पाशाङ्कुशायुधा ॥ १६९ ॥

चित्रसिंहासनगता महासिंहासनस्थिता।
मन्त्रात्मिका मन्त्रबीजा मन्त्राधिष्ठातृदेवता ॥ १७० ॥

सुरूपाऽनेकरूपा च विरूपा बहुरूपिणी।
विरूपाक्षप्रियतमा विरूपाक्षमनोरमा ॥ १७१ ॥

विरूपाक्षा कोटराक्षी कूटस्था कूटरूपिणी।
करालास्या विशालास्या धर्मशास्त्रार्थपारागा ॥ १७२ ॥

मूलक्रिया मूलरूपा मूलप्रकृतिरूपिणी।
कामाक्षी कमनीया च कामेशी भगमङ्गला ॥ १७३ ॥

सुभगा भोगिनी भोग्या भाग्यदा सुभगा भगा।
श्वेताऽरुणा बिन्दुरूपा वेदयोनिर्ध्वनिक्षणा ॥ १७४ ॥

अध्यात्मविद्या शास्त्रार्थकुशला शैलनन्दिनी।
नगाधिराजपुत्री च नगपुत्री नगोद्भवा ॥ १७५ ॥

गिरीन्द्रबाला गिरिशप्राणतुल्या मनोरमा।
प्रसन्ना चारुवदना प्रसन्नास्या प्रसन्नदा ॥ १७६ ॥

शिवप्राणा पतिप्राणा पतिसम्मोहकारिणी।
मृगाक्षी चञ्चलापाङ्गी सुदृष्टिर्हंसगामिनी ॥ १७७ ॥

नित्यं कुतूहलपरा नित्यानन्दाऽभिनन्दिता।
सत्यविज्ञानरूपा च तत्त्वज्ञानैककारिणी ॥ १७८ ॥

त्रैलोक्यसाक्षिणी लोकधर्माधर्मप्रदर्शिनी।
धर्माधर्मविधात्री च शम्भुप्राणात्मिका परा ॥ १७९ ॥

मेनकागर्भसम्भूता मैनाकभगिनी तथा।
श्रीकण्ठा कण्ठहारा च श्रीकण्ठहृदयस्थिता ॥ १८० ॥

श्रीकण्ठकण्ठजप्या च नीलकण्ठमनोरमा।
कालकूटात्मिका कालकूटभक्षणकारिणी ॥ १८१ ॥

वर्णमाला सिद्धिकला षट्चक्रक्रमवासिनी।
मूलकेलीरता स्वाधिष्ठाना तुर्यनिवासिनी ॥ १८२ ॥

मणिपूरस्थितिः स्निग्धा कूर्मचक्रपरायणा।
अनाहतगतिर्दीपशिखा मणिमयाकृतिः ॥ १८३

विशुद्धिचक्रसंस्थाना चाज्ञाचक्राब्जमध्यगा।
महाकालप्रिया कालकलनैकविधायिनी।
अक्षोभ्यपत्नी संक्षोभनाशिनी ते नमो नमः ॥ १८४ ॥

श्रीमहादेव उवाच-

एवं नामसहस्रेण संस्तुता पर्वतात्मजा।
वाक्यमेतन्महेशानमुवाच मुनिसत्तम्॥ १८५॥

श्रीदेव्युवाच-

अहं त्वदर्थे शैलेन्द्रतनयात्वमुपागता।
त्वं मे प्राणसमो भर्ता त्वदनन्याऽहमङ्गना॥ १८६॥

त्वं मदर्थे तपस्तीव्रं सुचिरं कृतवानसि।
अहं च तपसाराध्या त्वां लप्स्यामि पुनः पतिम्॥ १८७॥

श्रीमहादेव उवाच-

त्वमाराध्यतमा सर्वजननी प्रकृतिः परा।
तवाराध्यो जगत्यत्र विद्यते नैव कोऽपि हि॥ १८८॥

अहं त्वया निजगुणैरनुग्राह्यो महेश्वरि।
प्रार्थनीयस्त्वयि शिवे एष एव वरो मम॥ १८९॥

यत्र यत्र तवेदं हि कालीरूपं मनोहरम्।
आविर्भवति तत्रैव शिवरूपस्य मे हृदि॥ १९०॥

संस्थातव्यं त्वया लोके ख्याता च शववाहना।
भविष्यसि महाकाली प्रसीद जगदम्बिके॥ १९१॥

श्रीमहादेव उवाच-

इत्युक्त्वा शम्भुना काली कालमेघसमप्रभा।
तथेत्युक्त्वा समभवत्पुनर्गौरी यथा पुरा॥ १९२॥

य इदं पठते देव्या नाम्नां भक्त्या सहस्रकम्।
स्तोत्रं श्रीशम्भुना प्रोक्तं स देव्याः समतामियात्॥ १९३॥

अभ्यर्च्य गन्धपुष्पैश्च धूपदीपैर्महेश्वरीम्।
यः पठेत्स्तोत्रमेतच्च स लभेत्परमं पदम्॥ १९४॥

अनन्यमनसा देवीं स्तोत्रेणानेन यो नरः।
संस्तौति प्रत्यहं तस्य सर्वसिद्धिः प्रजायते॥ १९५॥

राजानो वशगास्तस्य नश्यन्ति रिपवस्तथा।
सिंहव्याघ्रमुखाः सर्वे हिंसका दस्यवस्तथा॥ १९६॥

दूरादेव पलायन्ते तस्य दर्शनमात्रतः।
अव्याहताज्ञः सर्वत्र लभते मङ्गलं महत्।
अन्ते दुर्गास्मृतिं लब्ध्वा स्वयं देवीकलामियात्॥ १९७॥

—महाभागवततः

## श्रीललितासहस्रनामावलिः

ओं ऐं ह्रीं श्रीं। अनाद्यायै नमः। परमायै। विद्यायै। प्रधानायै। प्रकृत्यै। परायै। प्रधानपुरुषाराध्यायै। प्रधानपुरुषेश्वर्यै। प्राणात्मिकायै। प्राणशक्त्यै। सर्वप्राणहितैषिण्यै। उमायै। उत्तमकेशिन्यै। उत्तमायै। उन्मत्तभैरव्यै। उर्वश्यै। उन्नतायै। उग्रायै। महोग्रायै। उन्नतस्तन्यै नमः॥ २०

ओं उग्रचण्डायै नमः। उग्रनयनायै। महोग्रायै। दैत्यनाशिन्यै। उग्रप्रभावत्यै। उग्रवेगायै। अनुग्रायै। अप्रमर्दिन्यै। उग्रतारायै। उग्रनयनायै। ऊर्ध्वस्थाननिवासिन्यै। उन्मत्तनयनायै। अत्युग्रदन्तायै। उत्तुङ्गस्थलालयायै। उल्लासिन्यै। उल्लासचित्तायै। उत्फुल्लनयनायै। उज्ज्वलायै। उत्फुल्लकमलारूढायै। कमलायै नमः॥ ४०

ओं कामिन्यै नमः । कलायै । काल्यै । करालवदनायै । कामिन्यै । मुखकामिन्यै । कोमलांग्यै । कृशाङ्ग्यै । कैटभासुर-मर्दिन्यै । कालिन्द्यै । कमलस्थायै । कान्तायै । काननवासिन्यै । कुलीनायै । निष्कलायै । कृष्णायै । कालरात्रिस्वरूपिण्यै । कुमार्यै । कामरूपायै । कामिन्यै नमः ।। ६०

ओं कृष्णपिङ्गलायै नमः । कपिलायै । शान्तिदायै । शुद्धायै । शङ्करार्धशरीरिण्यै । कौमार्यै । कार्तिक्यै । दुर्गायै । कौशिक्यै । कुण्डलोज्ज्वलायै । कुलेश्वर्यै । कुलश्रेष्ठायै । कुन्तलोज्ज्वलमस्तकायै । भवान्यै । भाविन्यै । वाण्यै । शिवायै । शिवमोहिन्यै । शिवप्रियायै । शिवाराध्यायै नमः ।। ८०

शिवप्राणैकवल्लभायै नमः । शिवपत्न्यै । शिवस्तुत्यायै । शिवानन्दप्रदायिन्यै । नित्यानन्दमय्यै । नित्यायै । सते । चिते । आनन्दविग्रहायै । त्रैलोक्यजनन्यै । शंभुहृदयस्थायै । सनातन्यै । सदयायै । निर्दयायै । मायायै । शिवायै । त्रैलोक्यमोहिन्यै । ब्रह्मादित्रिदशाराध्यायै । सर्वाभीष्टप्रदायिन्यै । ब्रह्माण्यै नमः ।। १००

ओं ब्रह्मणे नमः । गायत्र्यै । सावित्र्यै । ब्रह्मसंस्तुतायै । ब्रह्मोपास्यायै । ब्रह्मशक्त्यै । ब्रह्मसृष्टिविधायिन्यै । कमण्डलुकरायै । सृष्टिकर्त्र्यै । ब्रह्मस्वरूपिण्यै । चतुर्भुजात्मिकायै । यज्ञसूत्ररूपायै । दृढव्रतायै । हंसारूढायै । चतुर्वक्त्रायै । चतुर्वेदाभिसंस्तुतायै । वैष्णव्यै । पालनकर्यै । महालक्ष्म्यै । हरिप्रियायै नमः ।। १२०

ओं शङ्खचक्रधरायै नमः । विष्णुशक्त्यै । विष्णुस्वरूपिण्यै । विष्णुप्रियायै । विष्णुमायायै । विष्णुप्राणैकवल्लभायै । योगनिद्रायै । अक्षरायै । विष्णुमोहिन्यै । विष्णुसंस्तुतायै । विष्णुसंमोहनकर्यै । त्रैलोक्यपरिपालिन्यै । शंखिन्यै । चक्रिण्यै । पद्मायै । पद्मिन्यै । मुसलायुधायै । पद्मालयायै । पद्महस्तायै । पद्ममालादिभूषितायै नमः ।। १४०

ओं गरुडस्थायै नमः । चारुरूपायै । संपद्रूपायै । सरस्वत्यै । विष्णुपार्श्वस्थितायै । विष्णुपरमायै । आह्लाददायिन्यै । संपत्त्यै । संपदाधारायै । सर्वसंपत्प्रदायिन्यै । श्रियै । विद्यायै । सुखदायै । सौख्यदायिन्यै । दुःखनाशिन्यै । दुःखहन्त्र्यै । सुखकर्यै । सुखासीनायै । सुखप्रदायै । सुखप्रसन्नवदनायै नमः ।। १६०

ओं नारायणमनोरमायै नमः । नारायण्यै । जगद्धात्र्यै । नारायणविमोहिन्यै । नारायणशरीरस्थायै । वनमालाविभूषितायै । दैत्यघ्न्यै । पीतवसनायै । सर्वदैत्यप्रमर्दिन्यै । वाराह्यै । नारसिंह्यै । रामचन्द्रस्वरूपिण्यै । रक्षोघ्न्यै । काननावासायै । अहल्याशाप-मोचिन्यै । सेतुबन्धकर्यै । सर्वरक्षःकुलविनाशिन्यै । सीतायै । पतिव्रतायै । साध्व्यै नमः ।। १८०

ओं रामप्राणैकवल्लभायै नमः । अशोककाननावासायै । लङ्केश्वरविनाशिन्यै । नीत्यै । सुनीत्यै । सुकृतये । कीर्त्यै । मेधायै । वसुन्धरायै । दिव्यमाल्यधरायै । दिव्यायै । दिव्यगन्धानुलेपनायै । दिव्यवस्त्रपरीधानायै । दिव्यस्थाननिवासिन्यै । माहेश्वर्यै । प्रेतसंस्थायै । प्रेतभूमिनिवासिन्यै । निर्जनस्थायै । श्मशानस्थायै । भैरव्यै नमः ।। २००

ओं भीमलोचनायै नमः । सुघोरनयनायै । घोरायै । घोररूपायै । घनप्रभायै । घनस्तन्यै । वरायै । श्यामायै । प्रेतभूमि-कृतालयायै । खट्वाङ्गधारिण्यै । द्वीपिचर्माम्बरसुशोभनायै । महाकाल्यै । चण्डवक्त्रायै । चण्डमुण्डविनाशिन्यै । उद्यानकान-नावासायै । पुष्पोद्यानवनप्रियायै । बलिप्रियायै । मांसभक्ष्यायै । रुधिरासवभक्षिण्यै । भीमरावायै नमः ।। २२०

ओं साट्टहासायै नमः । रणनृत्यपरायणायै । असुरासृ-क्प्रियायै । तुष्टायै । दैत्यदानवमर्दिन्यै । दैत्यविद्राविण्यै ।

दैत्यमथन्यै । दैत्यसूदन्यै । दैत्यघ्न्यै । दैत्यहन्त्र्यै । महिषासुरमर्दिन्यै । रक्तबीजनिहन्त्र्यै । शुंभासुरविनाशिन्यै । निशुंभहन्त्र्यै । धूम्राक्ष-मर्दिन्यै । दुर्गहारिण्यै । दुर्गासुरनिहन्त्र्यै । शिवदूत्यै । महाबलायै । महाबलवत्यै नमः ।। २४०

ओं चित्रवस्त्रायै नमः । रक्तांबरायै । अमलायै । विमलायै । ललितायै । चारुहासायै । चारवे । त्रिलोचनायै । अजेयायै । जयदायै । ज्येष्ठायै । जयशीलायै । अपराजितायै । विजयायै । जाह्नव्यै । दुष्टजृंभिण्यै । जयदायिन्यै । जगद्रक्षाकर्यै । सर्वजगच्चैतन्यकारिण्यै । जयायै नमः ।। २६०

ओं जयन्त्यै नमः । जनन्यै । जनभक्षणतत्परायै । जलरूपायै । जलस्थायै । जप्यायै । जापकवत्सलायै । जाज्वल्यमानायै । यज्ञाशायै । जन्मनाशविवर्जितायै । जरातीतायै । जगन्मात्रे । जगद्रूपायै । जगन्मय्यै । जङ्गमायै । ज्वालिन्यै । जृंभायै । स्तंभिन्यै । दुष्टतापिन्यै नमः ।। २८०

ओं त्रिपुरघ्न्यै नमः । त्रिनयनायै । महात्रिपुरतापिन्यै । तृष्णायै । जात्यै । पिपासायै । बुभुक्षायै । त्रिपुरायै । प्रभायै । त्वरितायै । त्रिपुटायै । त्र्यक्षायै । तन्व्यै । तापविवर्जितायै । त्रिलोकेश्यै । तीव्रवेगायै । तीव्रायै । तीव्रबलायै । अलयायै । निःशङ्कायै नमः ।। ३००

ओं निर्मलाभायै नमः । निरातङ्कायै । अमलप्रभायै । विनीतायै । विनयाभिज्ञायै । विशेषज्ञायै । विलक्षणायै । वरदायै । वल्लभायै । विद्युत्प्रभायै । विनयशालिन्यै । बिबोष्ठ्यै । विधुवक्त्रायै । विवस्त्रायै । विनयप्रभायै । विश्वेशपत्न्यै । विश्वात्मने । विश्वरूपायै । बलोत्कटायै । विश्वेश्यै नमः ।। ३२०

ओं विश्ववनितायै नमः । विश्वमात्रे । विचक्षणायै । विदुष्यै । विश्वविदितायै । विश्वमोहनकारिण्यै । विश्वमूर्त्यै । विश्वधरायै । विश्वेशपरिपालिन्यै । विश्वकर्त्र्यै । विश्वहर्त्र्यै । विश्वपालनतत्परायै । विश्वेशहृदयावासायै । विश्वेश्वरमनोरमायै । विश्वहायै । विश्वनिलयायै । विश्वमायायै । विभूतिदायै । विश्वायै । विश्वोपकारायै नमः ।। ३४०

ओं विश्वप्राणात्मिकायै नमः । विश्वप्रियायै । विश्वमय्यै । विश्वदुष्टविनाशिन्यै । दाक्षायण्यै । दक्षकन्यायै । दक्षयज्ञविनाशिन्यै । विश्वंभर्यै । वसुमत्यै । वसुधायै । विश्वपावन्यै । सर्वातिशायिन्यै । सर्वदुःखदारिद्र्यहारिण्यै । महाविभूत्यै । अव्यक्तायै । शाश्वत्यै । सर्वसिद्धिदायै । अचिन्त्यायै । अचिन्त्यरूपायै । केवलायै नमः ।। ३६०

ओं परमात्मिकायै नमः । सर्वज्ञायै । सर्वविषयायै । सर्वोपरिपरायणायै । सर्वस्यार्तिहरायै । सर्वमङ्गलायै । मङ्गलप्रदायै । मङ्गलाहर्यै । महादेव्यै । सर्वमङ्गलदायिकायै । सर्वान्तरस्थायै । सर्वार्थरूपिण्यै । निरञ्जनायै । चिच्छक्त्यै । चिन्मय्यै । सर्वविद्यायै । सर्वविधायिन्यै । शान्त्यै । शान्तिकर्यै । सौम्यायै नमः ।। ३८०

ओं सर्वायै नमः । सर्वप्रदायिन्यै । शान्त्यै । क्षमायै । क्षेमकर्यै । क्षेत्रज्ञायै । क्षेत्रवासिन्यै । क्षणात्मिकायै । क्षीणतन्वै । क्षीणाङ्ग्यै । क्षीणमध्यमायै । क्षिप्रगायै । क्षेमदायै । क्षिप्तायै । क्षणदायै । क्षणवासिन्यै । वृत्त्यै । निवृत्त्यै । भूतानां प्रवृत्त्यै । वृत्तलोचनायै नमः ।। ४००

ओं व्योममूर्त्यै नमः । व्योमसंस्थायै । व्योमालयकृताश्रयायै । चन्द्राननायै । चन्द्रकान्त्यै । चन्द्रार्धाङ्कितमस्तकायै । चन्द्रप्रभायै । चन्द्रकलायै । शरच्चन्द्रनिभाननायै । चन्द्रात्मिकायै । चन्द्रमुख्यै ।

चन्द्रशेखरवल्लभायै। चन्द्रशेखरवक्षःस्थायै। चन्द्रलोकनिवासिन्यै । चन्द्रशेखरशैलस्थायै । चञ्चलायै । चञ्चलेक्षणायै । छिन्नमस्तायै । छागमांसप्रियायै। छागबलिप्रियायै नमः ।। ४२०

ओं ज्योत्स्नायै नमः । ज्योतिर्मय्यै । सर्वज्यायस्यै । जीवनात्मिकायै । सर्वकार्यनियन्त्र्यै । सर्वभूतहितैषिण्यै । गुणातीतायै । गुणमय्यै । त्रिगुणायै । गुणशालिन्यै । गुणैकनिलयायै ।गौर्यै। गुह्यायै। गोपकुलोद्भवायै। गरीयस्यै। गुरुरतायै । गुह्यस्थाननिवासिन्यै। गुणज्ञायै। निर्गुणायै। सर्वगुणाहर्यै नमः ।। ४४०

ओं गुह्यकायै नमः। अम्बिकायै। गलज्जटायै। गलत्केशायै। गलद्रुधिरचर्चितायै। गजेन्द्रगमनायै। गन्त्र्यै। गीतनृत्यपरायणायै । गमनस्थायै। गयाध्यक्षायै। गणेशजनन्यै। गानप्रियायै। गानरतायै । गृहस्थायै। गृहिण्यै। परायै। गजसंस्थायै। गजारूढायै। ग्रसन्त्यै। गरुडासनायै नमः ।। ४६०

ओं योगस्थायै नमः । योगिनीगम्यायै । योगचिन्तापरायणायै । योगिध्येयायै। योगिवन्द्यायै। योगलभ्यायै। युगात्मिकायै। योगिज्ञेयायै। योगयुक्तायै। महायोगेश्वरेश्वर्यै। योगानुरक्तायै । युगदायै । युगान्तजलदप्रभायै । युगानुकारिण्यै । यज्ञरूपायै । सूर्यसमप्रभायै। युगान्तनिलवेगायै। सर्वयज्ञफलप्रदायै। संसारयोनये । संसारव्यापिन्यै नमः ।। ४८०

ओं सफलास्पदायै नमः । संसारतरुनिःसेव्यायै । संसारार्णवतारिण्यै। सर्वार्थसाधिकायै। सर्वायै। संसारव्यापिन्यै। संसारबन्धकर्त्र्यै। संसारपरिवर्जितायै। दुर्निरीक्ष्यायै। सुदुष्प्राप्यायै । भूत्यै । भूतिमत्यै । अत्यन्तविभवायै । अरूपायै । महाविभवरूपिण्यै । शब्दब्रह्मस्वरूपायै । शब्दयोन्यै । परात्परायै । भूतिदायै । भूतिमात्रे नमः ।। ५००

ओं भूत्यै नमः । तन्द्र्यै । विभूतिदायै । भूतान्तरस्थायै । कूटस्थायै । भूतनाथप्रियाङ्गनायै । भूतमात्रे । भूतनाथायै । भूतालयनिवासिन्यै। भूतनृत्यप्रियायै। भूतसङ्गिन्यै। भूतलाश्रयायै । जन्ममृत्युजरातीतायै । महापुरुषसङ्गतायै । भुजगायै । तामस्यै । व्यक्तायै। तमोगुणवत्यै। त्रितत्वायै। तत्वरूपायै नमः ।। ५२०

ओं तत्वज्ञायै नमः । तत्वकप्रियायै । त्र्यंबकायै । त्र्यंबकरतायै । शुक्लायै । त्र्यंबकरूपिण्यै । त्रिकालज्ञायै । जन्महीनायै । रक्ताङ्ग्यै । ज्ञानरूपिण्यै । अकार्यायै । कार्यजनन्यै । ब्रह्माख्यायै । ब्रह्मसंस्थितायै। वैराग्ययुक्तायै। विज्ञानगम्यायै। धर्मस्वरूपिण्यै। सर्वधर्मविधानज्ञायै। धर्मिष्ठायै। धर्मतत्परायै नमः ।। ५४०

ओं धर्मिष्ठपालनकर्यै । धर्मशास्त्रपरायणायै । धर्माधर्मविहीनायै । धर्मजन्यफलप्रदायै। धर्मिण्यै। धर्मनिरतायै। धर्मिणामिष्टदायिन्यै । धन्यायै । धियै । धारणायै । धीरायै । धन्वन्यै । धनदायिन्यै। धनुष्मत्यै। धरासंस्थायै। धरण्यै। स्थितिकारिण्यै। सर्वयोन्यै। विश्वयोन्यै। अपांयोन्यै नमः ।। ५६०

ओं अयोनिजायै नमः । रुद्राण्यै। रुद्रवनितायै। रुद्रैकादशरूपिण्यै। रुद्राक्षमालिन्यै। रौद्र्यै। भुक्तिमुक्तिफलप्रदायै। ब्रह्मोपेन्द्रप्रवन्द्यायै । नित्यं मुदितमानसायै । इन्द्राण्यै । वासव्यै । ऐन्द्र्यै । विचित्रायै। ऐरावतस्थितायै। सहस्रनेत्रायै। दिव्याङ्ग्यै। दिव्यकेशविलासिन्यै। दिव्याङ्गनायै। दिव्यनेत्रायै। दिव्यचन्दनचर्चितायै नमः ।। ५८०

ओं दिव्यालङ्करणायै नमः । दिव्यश्वेतचामरवीजितायै । दिव्यहारायै। दिव्यपदायै। दिव्यनूपुरशोभितायै। केयूरशोभितायै। हृष्टायै । हृष्टचित्तप्रहर्षिण्यै । संप्रहृष्टमनसे । हर्षप्रसन्नवदनायै । देवेन्द्रवन्द्यपादाब्जायै। देवेन्द्रपरिपूजितायै। रजसा रक्तनयनायै।

सदा रक्तपुष्पप्रियायै। रक्ताङ्ग्यै। रक्तनेत्रायै। रक्तोत्पलविलोचनायै। रक्ताभायै। रक्तवस्त्रायै। रक्तचन्दनचर्चितायै नमः ॥ ६००

ओं रक्तेक्षणायै नमः। रक्तभक्ष्यायै। रक्तमत्तायै। उरगाश्रयायै। रक्तदन्तायै। रक्तजिह्वायै। रक्तभक्षणतत्परायै। रक्तप्रियायै। रक्ततुष्टायै। रक्तपानसुतत्परायै। बन्धूककुसुमाभायै। रक्तमाल्यानुलेपनायै। स्फुरद्रक्ताञ्चिततनवे। स्फुरत्सूर्यशतप्रभायै। स्फुरन्नेत्रायै। पिङ्गजटायै। पिङ्गलायै। पिङ्गलेक्षणायै। बगलायै। पीतवस्त्रायै नमः ॥ ६२०

ओं सदा पीतपुष्पप्रियायै नमः। पीतांबरायै। पिबद्रक्तायै। पीतपुष्पोशोभितायै। शत्रुघ्न्यै। शत्रुसंमोहजनन्यै। शत्रुतापिन्यै। शत्रुप्रमर्दिन्यै। शत्रुवाक्यस्तंभनकारिण्यै। उच्चाटनकर्यै। सर्वदुष्टोत्सारणकारिण्यै। शत्रुविद्राविण्यै। शत्रुसंमोहनकर्यै। विपक्षमर्दनकर्यै। शत्रुपक्षक्षयंकर्यै। सर्वदुष्टघातिन्यै। सर्वदुष्टविनाशिन्यै। द्विभुजायै। शूलहस्तायै। त्रिशूलवरधारिण्यै नमः ॥ ६४०

ओं दुष्टसन्तापशमन्यै नमः। दुष्टक्षोभप्रवर्धिन्यै। दुष्टानां क्षोभसंबद्धायै। भक्तक्षोभनिवारिण्यै। दुष्टसंतापिन्यै। दुष्टसन्तापपरिमर्दिन्यै। सन्तापरहितायै। भक्तसन्तापपरिनाशिन्यै। अद्वैतायै। द्वैतरहितायै। निष्कलायै। ब्रह्मरूपिण्यै। त्रिदशेश्यै। त्रिलोकेश्यै। सर्वेश्यै। जगदीश्वर्यै। ब्रह्मेशसेवितपदायै। सर्ववन्द्यपदाम्बुजायै। अचिन्त्यरूपचरितायै। अचिन्त्यबलविक्रमायै नमः ॥ ६६०

ओं सर्वाचिन्त्यप्रभावायै नमः। स्वप्रभावप्रदर्शिन्यै। अचिन्त्यमहिमायै। अचिन्त्यरूपायै। सौन्दर्यशालिन्यै। अचिन्त्यवेशशोभायै। लोकाचिन्त्यगुणान्वितायै। अचिन्त्यशक्त्यै। दुश्चिन्त्यप्रभावायै। चिन्त्यरूपिण्यै। योगचिन्त्यायै। महाचिन्ता-

नाशिन्यै। चेतनात्मिकायै। गिरिजायै। दक्षजायै। विश्वजनयित्र्यै। जगत्प्रसुवे। सन्नम्यायै। अप्रणतायै। सर्वप्रणतार्तिहर्यै नमः ।। ६८०

ओं प्रणतैश्वर्यदायै नमः । सर्वप्रणताशुभनाशिन्यै । प्रणतापन्नाशकर्यै। प्रणताशुभमोचन्यै। सिद्धेश्वर्यै। सिद्धसेव्यायै। सिद्धचारणसेवितायै । सिद्धिप्रदायै । सिद्धिकर्यै । सर्वसिद्धगणेश्वर्यै । अष्टसिद्धिप्रदायै। सिद्धगणसेव्यपदाम्बुजायै। कात्यायन्यै। स्वधा । स्वाहा । वषट् । वौषट्स्वरूपिण्यै । पितॄणां तृप्तिजनन्यै । कव्यरूपायै । सुरेश्वर्यै नमः ।। ७००

ओं हव्यभोक्त्र्यै नमः । हव्यतुष्टायै । पितृरूपायै । असितप्रियायै । कृष्णपक्षप्रपूज्यायै । प्रेतपक्षसमर्च्चितायै । अष्टहस्तायै । दशभुजायै । अष्टादशभुजान्वितायै । चतुर्दशभुजायै । असंख्यभुजवल्लीविराजितायै। सिंहपृष्ठसमारूढायै। सहस्रभुजराजितायै। भुवनेश्र्यै । अन्नपूर्णायै । महात्रिपुरसुन्दर्यै । त्रिपुरायै । सुन्दर्यै । सौम्यमुख्यै। सुन्दरलोचनायै नमः ।। ७२०

ओं सुन्दरास्यायै नमः। शुभ्रदंष्ट्रायै। सुभ्रुवे। पर्वतनन्दिन्यै। नीलोत्पलदलश्यामायै । स्मेरोत्फुल्लमुखांबुजायै । सत्यसन्धायै । पद्मवक्त्रायै । भ्रुकुटीकुटिलाननायै । विद्याधर्यै । वरारोहायै । महासन्ध्यास्वरूपिण्यै । अरुन्धत्यै । हिरण्याक्ष्यै । सुधूम्राक्ष्यै । शुभेक्षणायै। श्रुत्यै। स्मृत्यै। कृत्यै। योगमायायै नमः ।। ७४०

ओं पुण्यायै नमः । पुरातन्यै । वाग्देवतायै । वेदविद्यायै । ब्रह्मविद्यास्वरूपिण्यै । वेदशक्त्यै । वेदमात्रे । वेदाद्यायै । परमायै गतये । आन्वीक्षिक्यै । तर्कविद्यायै । योगशास्त्रप्रकाशिन्यै । धूमावत्यै । वियन्मूर्त्यै। विद्युन्मालायै। विलासिन्यै। महाव्रतायै। सदानन्दनन्दिन्यै। नगनन्दिन्यै। सुनन्दायै नमः ।। ७६०

ओं यमुनायै नमः । चण्ड्यै । रुद्रचण्ड्यै । प्रभावत्यै । पारिजातवनावासायै। पारिजातवनप्रियायै। सुपुष्पगन्धसन्तुष्टायै । दिव्यपुष्पोपशोभितायै । पुष्पकाननसद्वासायै । पुष्पमाला-विलासिन्यै । पुष्पमाल्यधरायै । पुष्पगुच्छालंकृतदेहिकायै । प्रतप्तकाञ्चनाभासायै। शुद्धकाञ्चनमण्डितायै। सुवर्णकुण्डलवत्यै। सदा स्वर्णपुष्पप्रियायै। नर्मदायै। सिन्धुनिलयायै। समुद्रतनयायै। षोडश्यै नमः ।। ७८०

ओं षोडशभुजायै नमः । महाभुजगमण्डितायै । पाताल-वासिन्यै। नाग्यै। नागेन्द्रकृतभूषणायै। नागिन्यै। नागकन्यायै। नागमात्रे । नगालयायै । दुर्गायै । आपत्तारिण्यै । दुर्गदुष्टग्रह-निवारिण्यै । अभयायै । आपन्निहन्त्र्यै । सर्वापत्परिनाशिन्यै । ब्रह्मण्यायै । श्रुतिशास्त्रज्ञायै । जगतां कारणात्मिकायै । निष्कारणायै । जन्महीनायै नमः ।। ८००

ओं मृत्युञ्जमनोरमायै नमः । मृत्युञ्जयहृदावासायै । मूलाधारनिवासिन्यै । षट्चक्रसंस्थायै । महत्यै । महोत्सव-विलासिन्यै । रोहिण्यै । सुन्दरमुख्यै । सर्वविद्याविशारदायै । सदसद्वस्तुरूपायै । निष्कामायै । कामपीडितायै । कामातुरायै । काममत्तायै । काममानससत्तन्वै । कामरूपायै । कालिन्द्यै । कचालंबितविग्रहायै। अतसीकुसुमाभासायै। सिंहपृष्ठनिषेदुष्यै नमः ।। ८२०

ओं युवत्यै नमः । यौवनोद्रिक्तायै। यौवनोद्रिक्तमानसायै। अदित्यै । देवजनन्यै । त्रिदशार्तिविनाशिन्यै । दक्षिणायै । अपूर्ववसनायै। पूर्वकालविवर्जितायै। अशोकायै। शोकरहितायै। सर्वशोकनिवारिण्यै। अशोककुसुमाभासायै। शोकदुःखक्षयङ्कर्यै। सर्वयोषित्स्वरूपायै । सर्वप्राणिमनोरमायै । महाश्चर्यायै । मदाश्चर्यायै । महामोहस्वरूपिण्यै। महामोक्षकर्यै नमः ।। ८४०

ओं मोहकारिण्यै नमः । मोहदायिन्यै । अशोच्यायै । पूर्णकामायै । पूर्णायै । पूर्णमनोरथायै । पूर्णाभिलषितायै । पूर्णनिशानाथसमाननायै । द्वादशार्कस्वरूपायै । सहस्रार्कसम-प्रभायै । तेजस्विन्यै । सिद्धमात्रे । चन्द्रायै । नयलरक्षणायै । अपरायै । अपारमाहात्म्यायै । नित्यविज्ञानशालिन्यै । विवस्वत्यै । हव्यवाहायै । जातवेदःस्वरूपिण्यै नमः ।। ७६०

ओं स्वैरिण्यै नमः । स्वेच्छविहरायै । निर्बीजायै । बीजरूपिण्यै । अनन्तवर्णायै । अनन्ताख्यायै । अनन्तसंस्थायै । महोदर्यै । दुष्टभूतापहन्त्र्यै । सद्वृत्तपरिपालिकायै । कपालिन्यै । पानमत्तायै । मत्तवारणगामिन्यै । विन्ध्यस्थायै । विन्ध्यनिलयायै । विन्ध्यपर्वतवासिन्यै । बन्धुप्रियायै । जगद्बन्धवे । पवित्रायै । सपवित्रिण्यै नमः ।। ८८०

ओं परामृतायै नमः । अमृतकलायै । अपमृत्युविनाशिन्यै । महारजतसङ्काशायै । रजताद्रिनिवासिन्यै । काशीविलासिन्यै । काशीक्षेत्ररक्षणतत्परायै । योनिरूपायै । योनिपीठस्थितायै । योनिस्वरूपिण्यै । कामोल्लसितचार्वङ्ग्यै । कटाक्षक्षेपमोहिन्यै । कटाक्षक्षेपनिरतायै । कल्पवृक्षस्वरूपिण्यै । पाशाङ्कुशधरायै । शक्त्यै । धारिण्यै । खेटकायुधायै । बाणायुधायै । अमोघशस्त्रायै नमः ।। ९००

ओं दिव्यशस्त्रायै नमः । अस्त्रवर्षिण्यै । महास्त्रजाल-विक्षेपविपक्षक्षयकारिण्यै । घण्टिन्यै । पाशिन्यै । पाशहस्तायै । पाशाङ्कुशायुधायै । चित्रसिंहासनगतायै । महासिंहासनस्थितायै । मन्त्रात्मिकायै । मन्त्रबीजायै । मन्त्राधिष्ठातृदेवतायै । सुरूपायै । अनेकरूपायै । विरूपायै । बहुरूपिण्यै । विरूपाक्षप्रियतमायै । विरूपाक्षमनोरमायै । विरूपाक्षायै । कोटराक्ष्यै नमः ।। ९२०

ओं कूटस्थायै नमः । कूटरूपिण्यै । करालास्यायै । विशालास्यायै । धर्मशास्त्रार्थपारगायै । मूलक्रियायै । मूलरूपायै । मूलप्रकृतिरूपिण्यै । कामाक्ष्यै । कमनीयायै । कामेश्यै । भगमङ्गलायै । सुभगायै । भोगिन्यै । भोग्यायै । भाग्यदायै । सुभगायै । भगायै । श्वेतायै । अरुणायै नमः ।। ९४०

ओं बिन्दुरूपायै नमः । वेदयोन्यै । ध्वनिक्षणायै । अध्यात्म-विद्यायै । शास्त्रार्थकुशलायै । शैलनन्दिन्यै । नगाधिराजपुत्र्यै । नगपुत्र्यै । नगोद्भवायै । गिरीन्द्रबालायै । गिरिशप्राणतुल्यायै । मनोरमायै । प्रसन्नायै । चारुवदनायै । प्रसन्नास्यायै । प्रसन्नदायै । शिवप्राणायै । पतिप्राणायै । पतिसंमोहकारिण्यै । मृगाक्ष्यै नमः ।। ९६०

ओं चञ्चलापांग्ये नमः । सुदृष्ट्यै । हंसगामिन्यै । नित्यंकुतूहल-परायै । नित्यानन्दायै । अभिनन्दितायै । सत्यविज्ञानरूपायै । तत्वज्ञानैककारिण्यै । त्रैलोक्यसाक्षिण्यै । लोकधर्माधर्मप्रदर्शिन्यै । धर्माधर्मविधात्र्यै । शंभुप्राणात्मिकायै । परायै । मेनकागर्भसंभूतायै । मैनाकभगिन्यै । श्रीकण्ठायै । कण्ठहारायै । श्रीकण्ठहृदयस्थितायै । श्रीकण्ठकण्ठजप्यायै । नीलकण्ठमनोरमायै नमः ।। ९८०

ओं कालकूटात्मिकायै नमः । कालकूटभक्षणकारिण्यै । वर्णमालायै । सिद्धिकलायै । षट्चक्रक्रमवासिन्यै । मूलकेलीरतायै । स्वाधिष्ठानायै । तुर्यनिवासिन्यै । मणिपूरस्थित्यै । स्निग्धायै । कूर्मचक्रपरायणायै । अनाहतगत्यै । दीपशिखायै । मणिमयाकृत्यै । विशुद्धिचक्रसंस्थानायै । आज्ञाचक्राब्जमध्यगायै । महाकाल-प्रियायै । कालकलनैकविधायिन्यै । अक्षोभ्यपत्न्यै । संक्षोभनाशिन्यै नमः ।। १०००

# ललिताष्टोत्तरशतनामस्तोत्रम्।

ध्यानम्-

वाचामीश्वरि भक्तकल्पलतिके सर्वार्थसिद्धिप्रदे
गद्यप्राकृत पद्यजात रचनाविज्ञानसिद्धिप्रदे।
नीलेन्दीवरलोचनत्रययुते कारुण्यवारांनिधे
सौभाग्यामृतवर्षणेन कृपया सिंच त्वमस्मादृशम्॥

शिवा भवानी कल्याणी गौरी काली शिवप्रिया।
कात्यायनी महादेवी दुर्गाऽऽर्या चण्डिका भवा॥ २

चन्द्रचूडा चन्द्रमुखी चन्द्रमण्डलवासिनी।
चन्द्रहासकरा चन्द्रहासिनी रुद्रकोटिभा॥ ३

चिद्रूपा चित्कला नित्या निर्मला निष्कला कला।
भव्या भवप्रिया भव्यरूपिणी कलभाषिणी॥ ४

कविप्रिया कामकला कामदा कामरूपिणी।
कारुण्यसागरा काली संसारार्णवतारका॥ ५

दूर्वाभा दुष्टभयदा दुर्जया दुरितापहा।
ललिता राज्यदा सिद्धा सिद्धेशी सिद्धिदायिनी॥ ६

शर्मदा शान्तिरव्यक्ता शंखकुण्डलमण्डिता।
शारदा शाङ्करी साध्वी श्यामला कोमलाकृतिः॥ ७

पुष्पिणी पुष्पबाणांबा कमला कमलासना।
पञ्चबाणस्तुता पञ्चवर्णरूपा सरस्वती॥ ८

पञ्चमी परमा लक्ष्मीः पावनी पापहारिणी।
सर्वज्ञा वृषभारूढा सर्वलोकवशंकरी॥ ९

सर्वस्वतन्त्रा सर्वेशी सर्वमंगलकारिणी।
निरवद्या नीरदाभा निर्मला निश्चयात्मिका।। १०

निर्मदा नियताचारा निष्कामा निगमालया।
अनादिबोधा ब्रह्माणी कौमारी गुरुरूपिणी।। ११

वैष्णवी समयाचारा कौलिनी कुलदेवता।
सामगानप्रिया सर्ववेदरूपा सरस्वती।। १२

अन्तर्यागप्रियाऽऽनन्दा बहिर्यागपरार्चिता।
वीणागानरसानन्दा चार्धोन्मीलितलोचना।। १३

दिव्यचन्दनदिग्धांगी सर्वसाम्राज्यरूपिणी।
तरंगीकृतस्वापाङ्ग वीक्षारक्षित सज्जना।। १४

सुधापानसमुद्वेल हेलामोहितधूर्जटिः।
मतङ्ग मुनि संपूज्या मतङ्ग कुलभूषणा।। १५

मकुटांगदमञ्जीरमेखला दामभूषिता।
ऊर्मिकाकिंकिणीरत्न कंकणादिपरिष्कृता।। १६

मल्लिकामालती कुन्दमन्दाराञ्चितमस्तका।
तांबूलकवलोदञ्चत्कपोलतलशोभिनी।। १७

त्रिमूर्तिरूपा त्रैलोक्यसुमोहन तनुप्रभा।
श्रीमच्चक्राधिनगरी साम्राज्यश्रीस्वरूपिणी।। १८

इदं नाम्नां साष्ट शतं ललितायाः मतिप्रदम्।
विद्याधनयशः काम पूर्तिदं सर्वमङ्गलम्।। १९

# ललिताष्टोत्तरशतनामावलिः

ओं ह्रीं। शिवायै नमः। भवान्यै। कल्याण्यै। गौर्यै। काल्यै। शिवप्रियायै। कात्यायन्यै। महादेव्यै। दुर्गायै। आर्यायै। चण्डिकायै। भवायै। चन्द्रचूडायै। चन्द्रमुख्यै। चन्द्रमण्डलवासिन्यै। चन्द्रहासकरायै। चन्द्रहासिन्यै। रुद्रकोटिभायै। चिद्रूपायै। चित्कलायै नमः॥ २०

ओं नित्यायै नमः। निर्मलायै। निष्कलायै। कलायै। भव्यायै। भवप्रियायै। भव्यरूपिण्यै। कलभाषिण्यै। कविप्रियायै। कामकलायै। कामदायै। कामरूपिण्यै। कारुण्यसागरायै। काल्यै। संसारर्णवतारकायै। दूर्वाभायै। दुष्टभयदायै। दुर्जयायै। दुरितापहायै। ललितायै नमः॥ ४०

ओं राज्यदायै नमः। सिद्धायै। सिद्धेश्यै। सिद्धिदायिन्यै। शर्मदायै। शान्त्यै। अव्यक्तायै। शंखकुण्डलमण्डितायै। शारदायै। शांकर्यै। साध्व्यै। श्यामलायै। कोमलाकृत्यै। पुष्पिण्यै। पुष्पबाणांबायै। कमलायै। कमलासनायै। पञ्चबाणस्तुतायै। पञ्चवर्णरूपायै। सरस्वत्यै नमः॥ ६०

ओं पञ्चम्यै नमः। परमायै। लक्ष्म्यै। पावन्यै। पापहारिण्यै। सर्वज्ञायै। वृषभारूढायै। सर्वलोकवशंकर्यै। सर्वस्वतन्त्रायै। सर्वेश्यै। सर्वमंगलकारिण्यै। निरवद्यायै। नीरदाभायै। निर्मलायै। निश्चयात्मिकायै। निर्मदायै। नियताचारायै। निष्कामायै। निगमालयायै। अनादिबोधायै नमः॥ ८०

ओं ब्रह्माण्यै नमः। कौमार्यै। गुरुरूपिण्यै। वैष्णव्यै। समयाचारायै। कौलिन्यै। कुलदेवतायै। सामगानप्रियायै।

सर्ववेदरूपायै। सरस्वत्यै। अन्तर्यागप्रियायै। आनन्दायै। बहिर्याग-परार्चितायै । वीणागानरसानन्दायै । अर्धोन्मीलितलोचनायै । दिव्यचन्दनदिग्धांग्यै । सर्वसाम्राज्यरूपिण्यै । तरंगीकृत-स्वापांगवीक्षारक्षित सज्जनायै । सुधापानसमुद्वेलहेलामोहित-धूर्जटये । मवंगमुनिसंपूज्यायै नमः ।। १००

ओं मतंगकुलभूषणायै नमः । मकुटांगदमञ्जीरमेखलादाम-भूषितायै। ऊर्मिकाकिंकिणीरत्न कंकणादिपरिष्कृतायै। मल्लिका-मालतीकुन्दमन्दाराञ्चितमस्तकायै। तांबूलकवलोदञ्चत्कपोलतल-शोभिन्यै । त्रिमूर्तिरूपायै । त्रैलोक्यसुमोहनतनुप्रभायै । श्रीमच्चक्राधिनगरी साम्रज्यश्रीस्वरूपिण्यै नमः ।। १०८

## शाकम्भरी (वनशङ्करी) सहस्रनामस्तोत्रम्

शान्ता शारदचन्द्रसुन्दरमुखी शाल्यन्नभोज्यप्रिया
शाकैः पालितविष्टपा शतदृशा शाकोल्लसद्विग्रहा।
श्यामाङ्गी शरणागतार्तिशमनी शक्रादिभिः शंसिता
शङ्कर्यष्टफलप्रदा भगवती शाकंभरी पातु माम् ।।

शूलं पाशकपालचापकुलिशान् बाणान् सृणिं खेटकां
शङ्खं चक्रगदाहिखड्गमभयं खट्वाङ्गदण्डान्धराम्।
वर्षाभाववशाद्धतान्मुनिगणान् शाकेन या रक्षति
लोकानां जननीं महेशदयितां तां नौमि शाकंभरीम्।।

कैलासशिखरासीनं स्कन्दं मुनि गणान्वितम्।
प्रणम्य शक्रः पप्रच्छ लोकानां हितकाम्यया।। २

शक्र उवाच—

स्कन्द स्कन्द महाबाहो सर्वज्ञ शिवनन्दन।
नाम्नां सहस्रमाचक्ष्व शाकंभर्याः सुसिद्धिदम्।। ३

स्कन्द उवाच—

या देवी शतवार्षिक्यामनावृष्ट्यां स्वदेहजैः ।
शाकैरबीभरत्सर्वानृषीन् शक्र शतं समाः ।। ४

महासरस्वती सैव जाता शाकंभरी शिवा ।
नाम्नां सहस्रं तस्यास्ते वक्ष्यामि शृणु भक्तितः ।। ५

ओं अस्य श्रीशाकंभरीसहस्रनाममालामन्त्रस्य । महादेवः ऋषिः । अनुष्टुप् छन्दः । शाकंभरी देवता, सौः बीजं, क्लीं शक्तिः, ह्रीं कीलकं, मम श्री शाकम्भरीप्रसादसिद्ध्यर्थे तत्सहस्रनामपारायणे विनियोगः ।

करन्यासः— ओं सौः चामुण्डायै अङ्गुष्ठाभ्यां नमः । ओं क्लीं शताक्ष्यै तर्जनीभ्यां नमः । ओं ह्रीं शाकंभर्यै मध्यमाभ्यां नमः । ओं सौः चामुण्डायै अनामिकाभ्यां नमः । ओं क्लीं शताक्ष्यै कनिष्ठिकाभ्यां नमः । ओं ह्रीं शाकंभर्यै करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । ओं सौः क्लीं ह्रीं ओं मन्त्रेण दिग्बन्धः । इति

सौवर्णसिंहासन संस्थितां शिवां त्रिलोचना चन्द्रकलावतंसिकाम् ।
शूलं कपालं निजवामहस्तयोस्तदन्ययोः खड्गमभीतिमुद्रिकाम् ।।

पाण्योर्दधानां मणिभूषणोज्ज्वलां सुवाससं माल्यविलेपनांचिताम्
प्रसन्नवक्त्रां परदेवतां मुदा ध्यायामि भक्त्या वनशाङ्करीं हृदि ।।

लमित्यादिपञ्चपूजा

१ - ओं सौः क्लीं ह्रीं ओं ।, २. शाकम्भर्यै नमः । ३. ह्रीं शाकम्भर्यै नमः । ४. ओं ह्रीं शाकम्भर्यै नमः । ५. सौः क्लीं ह्रीं शाकम्भर्यै नमः । ६. ओं सौः क्लीं ह्रीं शाकम्भर्यै नमः । ७. ओं सौः क्लीं ह्रीं शाकम्भर्यै नमः ओं । इति एषु गुरूपदिष्टं मन्त्रं जपेत् ।

अथ सहस्रनामस्तोत्रम्

ओं शाकंभरी शताक्षी च चामुण्डा रक्तदन्तिका।
महाकाली महाशक्तिर्मधुकैटभनाशिनी ।। १

ब्रह्मादितेजः संभूता महालक्ष्मीर्वरानना।
अष्टादशभुजा सम्राण्महिषासुरमर्दिनी ।। २

महामाया महादेवी सृष्टिस्थित्यंतकारिणी।
कान्तिः कामप्रदा काम्या कल्याणी करुणानिधिः ।। ३

सिंहस्थिता नारसिंही वैष्णवी विष्णुवल्लभा।
भ्रामरी रक्तचामुण्डा रक्ताक्षी रक्तपायिनी ।। ४

रक्तप्रिया सुरक्तोष्ठी रक्तबीजविनाशिनी।
सुरक्तवसना रक्तमाल्या रक्तविभूषणा ।। ५

रक्तपाणितला रक्तनखी रक्तोत्पलाङ्किका।
रक्तचन्दनलिप्ताङ्गी रमणी रतिदायिनी ।। ६

सुरभिः सुन्दरी बाला बगला भैरवी समित्।
चन्द्रलाम्बा सुमङ्गल्या भीमा भयनिवारिणी ।। ७

जागृतिः स्वप्नरूपा च सुषुप्तिसुखरूपिणी।
तुर्योन्मनी त्रिमात्रा च त्रयी त्रेता त्रिमूर्तिका ।। ८

विष्णुमाया विष्णुशक्तिर्विष्णुजिह्वा विनोदिनी।
छाया शान्तिः क्षमा क्षुत्तृट् तुष्टिः पुष्टिर्धृतिर्भृतिः ।। ९

मतिर्मितिर्नतिर्नीतिः संयतिर्नियतिः कृतिः।
स्फूर्तिः कीर्तिः स्तुतिर्जूतिः पूर्तिर्मूर्तिर्निजप्रदा ।। १०

त्रिशूलधारिणी तीक्ष्णगदिनी खड्गधारिणी।
पाशिनी वासिनी वामा वामदेवी वरानना ।। ११

वामाक्षी वारुणीमत्ता वामोरुर्वासिवस्तुता।
ब्रह्मविद्या महाविद्या योगिनी योगपूजिता ।। १२

त्रिकूटनिलया नित्या कल्पातीता च कल्पना।
कामेश्वरी कामदात्री कामान्तककुटुम्बिनी ।। १३

कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा।
नानाद्रुमलताकीर्णगिरिमध्यनिवासिनी ।। १४

शाकपोषितसर्वर्षिः पाकशासनपूजिता।
क्लेदिनी भेदिनी भ्रान्तिर्भीतिदा भ्रान्तिनाशिनी ।। १५

क्रान्तिः सङ्क्रान्तिरुत्क्रान्तिर्विक्रान्तिः क्रान्तिवर्जिता।
डिंडिमध्वनिसंहृष्टा भेरीनादविनोदिनी ।। १६

सुतन्त्रीवादनरता स्वरभेदविचक्षणा।
गान्धर्व शास्त्रनिपुणा नाट्यशास्त्रविशारदा ।। १७

हावभावप्रमाणज्ञा चतुःषष्टिकलान्विता।
पदवाक्यप्रमाणाब्धिपारीणा वादिभङ्गिनी ।। १८

सर्वतन्त्रस्वतन्त्रा च मन्त्रशास्त्राब्धिपारगा।
नानायन्त्र विधानज्ञा सौगतागमकोविदा ।। १९

वैखानसाद्यागमज्ञा शैवागम विचक्षणा।
वामदक्षिणमार्गज्ञा भैरवागमभेदवित् ।। २०

पञ्चायतनतत्त्वज्ञा पञ्चाम्नायप्रपञ्चवित्।
राजराजेश्वरी भट्टारिका त्रिपुरसुन्दरी ।। २१

महादक्षिणकाली च मातङ्गी मद्यमांसभुक्।
लुलायबलिसन्तुष्टा मेषच्छागबलिप्रिया ॥ २२

दीपिकाक्रीडनरता डमड्डमरुनादिनी।
महाप्रदीपिकादेहलेहनाद्भुतशक्तिदा ॥ २३

निजावेशवदुन्मत्तभक्तोक्त फलदायिनी।
उदोउदोमहाध्वान श्रवणासक्तमानसा ॥ २४

चौंडेश्वरी चौंडवाद्यप्रवादनपरायणा।
कपर्दमालाभरणा कपर्दिप्राणवल्लभा ॥ २५

नग्नस्त्रीवीक्षणरता नग्निकोद्भिन्नयौवना।
बाला बदरवक्षोजा मध्या बिल्वफलस्तनी ॥ २६

नारिकेलस्तनी प्रौढा प्रगल्भा च घटस्तनी।
कात्यायनी नम्रकुचा प्रौढाद्भुतपराक्रमा।
कदलीवनमध्यस्था कदम्बवनवासिनी ॥ २७

निजोपकण्ठसम्प्राप्तनदीमाहात्म्यवर्धिनी।
कावेरी ताम्रपर्णी च कामाक्षी कामितार्थदा ॥ २८

मूकाम्बिका महाशक्तिः श्रीशैलभ्रमराम्बिका।
जोगलाम्बा जगन्माता मातापुरनिवासिनी ॥ २९

जमदग्निप्रिया साध्वी तापसीवेषधारिणी।
कार्तवीर्यमुखानेकक्षत्रविध्वंसकारिणी ॥ ३०

नानावतारसम्पन्ना नानाविधचरित्रकृत्।
करवीरमहालक्ष्मीः कोल्हासुरविनाशिनी ॥ ३१

नागलिङ्गभगाङ्काढ्यमौलिः शक्रादिसंस्तुता।
दुर्गमासुरसंहर्त्री दुर्गाऽनर्गलशासना ॥ ३२

नानाविधभयत्रात्री सुत्रामादिसुधाशना।
नागपर्यंकशयना नागी नागांगनार्चिता।। ३३

हाटकालंकृतिमती हाटकेशसभाजिता।
वाग्देवतास्फूर्तिदात्री त्रातवाग्बीजजापका।। ३४

जप्या जपविधिज्ञा च जपसिद्धिप्रदायिनी।
मन्त्रशक्तिर्मंत्रविद्या सुमन्त्रा मांत्रिकप्रिया।। ३५

इन्दुमण्डलपीठस्था सूर्यमण्डलपीठगा।
चन्द्रशक्तिः सूर्यशक्तिर्ग्रहशक्तिर्ग्रहार्तिहा।। ३६

ग्रहपीडाहरी सौम्या शुभग्रहफलप्रदा।
ज्योतिर्मण्डलसंस्थाना ग्रहताराधिदेवता।। ३७

सप्तविंशतियोगेशी बवादिकरणेश्वरी।
प्रभवाद्यब्दशक्तिश्च कालचक्रप्रवर्तिनी।। ३८

सोहंमन्त्रजपाधारा ऊर्ध्वषट्चक्रदेवता।
इडाख्या पिंगलाख्या च सुषुम्ना ब्रह्मरन्ध्रगा।। ३९

शिवशक्तिः कुंडलिनी नाभिमण्डलनिद्रिता।
योगोद्बुद्धा मुक्तिदात्री सहस्राराब्जपीठगा।। ४०

पीयूषवर्षिणी जीवशिवभेदविनाशिनी।
नाभौ परा च पश्यन्ती हृदये मध्यमा गले।। ४१

जिह्वाग्रे वैखरीवाणी पञ्चाशन्मातृकात्मिका।
ओंकाररूपिणी शब्दसृष्टिरूपाऽर्थरूपिणी।। ४२

मौनशक्तिर्मुनिध्येया मुनिमानससंस्थिता।
व्यष्टिः समष्टिस्त्रिपुटी तापत्रयविनाशिनी।। ४३

गायत्री व्याहृतिः संध्या सावित्री च पितृप्रसूः।
नन्दा भद्रा जया रिक्ता पूर्णा विष्टिश्च वैधृतिः ॥ ४४

श्रुतिः स्मृतिश्च मीमांसा विद्याऽविद्या परावरा।
सुमेरुशृंगनिलया लोकालोकनिवासिनी ॥ ४५

मानसोत्तरगोत्रस्था पुष्करद्वीपदेवता।
मन्दराद्रिकृतक्रीडा नीपोपवनवासिनी ॥ ४६

मणिद्वीपकृतावासा पीतवासःसुपूजिता।
प्लक्षादिद्वीपगोत्रस्था तत्रत्यजनपूजिता ॥ ४७

सुराब्धि द्वीपनिलया सुरापानपरायण।
एकपादेकहस्तैकदृगेकश्रुतिपार्श्विका ॥ ४८

अर्धनारीश्वरार्धांगी स्यूतालोकोत्तराकृतिः।
भक्तैकभक्ति संसाध्या ध्यानाधारा परार्हणा ॥ ४९

पञ्चकोशांतरगता पञ्चकोशविवर्जिता।
पञ्चभूतांतरालस्था प्रपञ्चातीतवैभवा ॥ ५०

पञ्चीकृतमहाभूतनिर्मितानेकभौतिका।
सर्वांतर्यामिणी शंभुकामिनी सिंहगामिनी ॥ ५१

यामिनीकृतसञ्चारा शाकिन्यादिगणेश्वरी।
खड्गांगिनी खेटकिनी कुंतिनी भिंदिपालिनी ॥ ५२

वर्मिणी चर्मिणी चण्डी चण्डमुंडप्रमाथिनी।
अनीकिनी च ध्वजिनी मोहिन्येजल्पताकिनी ॥ ५३

अश्विनी गजिनी चाट्टहासिनी दैत्यनाशिनी।
शुंभघ्नी च निशुंभघ्नी धूम्रलोचननाशिनी ॥ ५४

बहुशीर्षा बहुकुक्षिर्व्यादितास्याऽशितासुरा।
दंष्ट्रासंकटसंलग्नदैत्यसास्रांत्र मालिनी॥ ५५

दैत्यासृङ्मांससन्तृप्ता क्रव्यादकृतवन्दना।
लम्बकेशी प्रलम्बोष्ठी लम्बकुक्षिर्महाकटी॥ ५६

लम्बस्तनी लम्बजिह्वा लम्बपाण्यङ्घ्रिजंघिका।
लम्बोरुर्लंबजघना कालिका कर्कशाकृतिः॥ ५७

भिन्नभेरीखररवा वारणग्रासकारिणी।
प्रेतदेहपरीधाना रुण्डकुण्डलमण्डिता॥ ५८

गण्डशैलस्पर्धिगण्डा शैलकंदुकधारिणी।
शिवदूती घोररूपा शिवाशतनिनादिनी॥ ५९

नारायणी जगद्धात्री जगत्पात्री जगन्मयी।
अल्लांम्बाक्का कामदुघाऽनल्पदा कल्पवल्लिका॥ ६०

मल्लीमतल्लिका गुंजालंकृतिः शिवमोहिनी।
गांधर्वगानरसिका केकावाक्कीरपालिनी॥ ६१

सिनीवाली कुहू राकाऽनुमतिः कौमुदी ककुप्।
ब्रह्मांडमण्डपस्थूणा ब्रह्माण्डगृहदेवता॥ ६२

महागृहस्थमहिषी पशुपाशविमोचिनी।
वीरस्थानगता वीरा वीरासनपरिग्रहा॥ ६३

दीपस्थानगता दीप्ता दीपोत्सवकुतूहला।
तीर्थपात्रप्रदा तीर्थकुंभपूजनसंभ्रमा॥ ६४

माहेश्वरजनप्रीता पशुलोकपराङ्मुखी।
चतुःषष्टिमहातंत्रप्रतिपाद्यागमाध्वगा॥ ६५

शुद्धाचारा शुद्धपूज्या शुद्धपूजा जनाश्रिता।
अष्टादशमहापीठा श्रीचक्रपरदेवता ॥ ६६

योगिनीपूजनप्रीता योगिनीचक्रवंदिता।
रणत्कांचीक्षुद्रघंटा घंटाध्वनिविनोदिनी ॥ ६७

तौर्यत्रिककलाभिज्ञा मनोज्ञा मंजुभाषिणी।
शिववामांकलसिता सुस्मिता ललितालसा ॥ ६८

लावण्यभूमिस्तल्लेशनिर्मितामरसुंदरी।
श्रीर्धीर्भीर्ह्रीर्निर्तिर्जातिरीज्याज्या पूज्यपादुका ॥ ६९

सुरस्रवन्ती यमुना तथा गुप्तसरस्वती।
गोमती गण्डकी तापी शतद्रुश्च विपाशिका ॥ ७०

सरयूर्नर्मदा गोदा पयोष्णी च पुनः पुना।
भीमा कृष्णा तुंगभद्रा नानातीर्थस्वरूपिणी ॥ ७१

द्वारका मथुरा माया काश्ययोध्या त्ववन्तिका।
गया कांची विशाला च मुक्तिक्षेत्र स्वरूपिणी ॥ ७२

मन्त्रदीक्षा यागदीक्षा योगदीक्षाऽक्षतव्रता।
अक्षमालाविभेदज्ञाऽऽसनभेदविचक्षणा ॥ ७३

मातृकान्यासकुशला मन्त्रन्यासविशारदा।
नानामुद्राप्रभेदज्ञा पञ्चोपास्तिप्रभेदवित् ॥ ७४

सर्वमन्त्रोपदेष्ट्री च व्याख्यात्री देशिकोत्तरा।
वाग्वादिनी दुर्विवादिप्रौढवाक्स्तंम्भकारिणी ॥ ७५

स्वतन्त्रयन्त्रणाशक्तिस्तद्यन्त्रितजगत्त्रयी।
ब्रह्माद्याकर्षिणी शम्भुमोहिन्युच्चाटिनी द्विषाम् ॥ ७६

सुरासुराणां प्रद्वेषकारिणी दैत्यमारिणी ।
पूरिणी भक्तकामानां श्रितप्रत्यूहवारिणी ।। ७७

साधारणी धारिणी च प्रौढवाग्धारिणी प्रधूः ।
प्रभूर्विभूः स्वयंभूश्च निग्रहानुग्रहक्षमा ।। ७८

क्षमाऽक्षमा क्षमाधारा धाराधरनिभद्युतिः ।
कादम्बिनी कालशक्तिः कर्षिणी वर्षिणीर्षिणी ।। ७९

अदेवमातृका देवमातृका चोर्वरा कृषिः ।
कृष्टपच्याऽकृष्टपच्याऽनूषराऽधित्यका गुहा ।। ८०

उपत्यका दरी वन्याऽरण्यानी शैलनिम्नगा ।
केदारभूमिर्व्रीहिला कमलर्धिर्महाफला ।। ८१

इक्षुमत्यूर्जिता जंबूपनसाम्रादिशालिनी ।
अष्टापदखनी रौप्यखनी रत्नखनिः खनिः ।। ८२

रुचां भावखनिर्जीवखनिः सौभाग्यसत्खनिः ।
लावण्यस्य खनिर्धैर्यखनिः शौर्यखनिःखनिः ।। ८३

गांभीर्यस्य विलासस्य खनिः साहित्यसत्खनिः ।
पक्षमासर्तुवर्षाणां खनिः खनिरनेहसाम् ।। ८४

खनिश्च युगकल्पानां सूर्यचन्द्रमसोः खनिः ।
खनिर्मनूनामिंद्राणां खनिः कौतुकसत्खनिः ।। ८५

मषी लेखनिका पात्री वर्णपंक्तिर्लिपिः कथा ।
कविता काव्यकर्त्री च देशभाषा जनश्रुतिः ।। ८६

रचना कल्पनाऽऽचारभटी धाटी पटीयसी ।
अपसव्यलिपिर्देवलिपी रक्षोलिपिर्लिपिः ।। ८७

तुलजा रामवरदा शबरी बर्बरालका।
ज्योतिर्लिंगमयी लिंगमस्तका लिंगधारिणी ।। ८८

रुद्राक्षधारिणी भूतिधारिणी लैंगिकव्रता।
विष्णुव्रतपरा विष्णुमुद्रिका प्रियवैष्णवी ।। ८९

जैनी दैगंबरी नानाविधवैदिक मार्गगा।
पंचद्रविडसंसेव्या पंचगौडसमर्चिता ।। ९०

हिंगुला शारदा ज्वालामुखी गङ्गाधिदेवता।
मंदुरादेवताऽऽलानदेवता गोष्ठदेवता ।। ९१

गृहादिदेवता सौधदेवतोद्यानदेवता।
शृंगारदेवता ग्रामदेवता चैत्यदेवता ।। ९२

पूर्देवता राजसभादेवताऽशोकदेवता।
चतुर्दशानां लोकानां देवता परदेवता ।। ९३

वापीकूपतडागादिदेवता वनदेवता।
सृष्टिखेला क्षेमखेला प्रतिसंहारखेलना ।। ९४

पुष्पपर्यङ्कशयना पुष्पवत्कुण्डलद्वयी।
तांबूलचर्वणप्रीता गौरी प्रथमपुष्पिणी ।। ९५

कल्याणीयुगसंपन्ना कामसंजीवनी कला।
कलाकलापकुशला कलातीता कलात्मिका ।। ९६

महाजांगलकी कालभुजंगविषनाशिनी।
चिकित्सा वैद्यविद्या च नानामयनिदानवित् ।। ९७

पित्तप्रकोपशमनी वातघ्नी कफनाशिनी।
आमज्वरप्रकोपघ्नी नवज्वरनिवारिणी ।। ९८

अर्शोघ्नी शूलशमनी गुल्मव्याधिनिवारिणी।
ग्रहणीनिग्रहकरी राजयक्ष्मविनाशिनी ॥ ९९

मेहघ्नी पांडुरोगघ्नी क्षयापस्मारनाशिनी।
उपदंशहरी श्वासकासच्छर्दिनिवारिणी ॥ १००

प्लीहप्रकोपसंहर्त्री पामाकंडूविनाशिनी।
दद्रुकुष्ठादिरोगघ्नी नानारोगविनाशिनी ॥ १०१

यक्षराक्षसवेतालकूष्मांडग्रहभेदिनी।
बालग्रहघ्नी चंडालग्रहचंडग्रहार्दिनी ॥ १०२

भूतप्रेतपिशाचघ्नी नानाग्रहविमर्दिनी।
शाकिनीडाकिनीलामदस्त्रीग्रहनिषूदिनी ॥ १०३

अभिचारकदुर्बाधोन्मथिन्युन्मादनाशिनी।
नानाविषार्तिसंहर्त्री दुष्टदृष्ट्यार्तिनाशिनी ॥ १०४

दुष्टस्थानस्थितार्कादिग्रहपीडाविनाशिनी।
योगक्षेमकरी पुष्टिकरी तुष्टिकरीष्टदा ॥ १०५

धनदा धान्यदा गोदा वासोदा बहुमानदा।
कामितार्थप्रदा शंदा चतुर्विधपुमर्थदा ॥ १०६

ब्रह्ममान्या विष्णुमान्या शिवमान्येन्द्रमानिता।
देवर्षिमान्या ब्रह्मर्षिमान्या राजर्षिमानिता ॥ १०७

जगन्मान्या जगद्धात्री त्र्यंबका त्र्यंबकांगना।
गुहेभवक्त्रजननी भद्रकाल्यभयंकरी ॥ १०८

सती दाक्षायणी दक्षा दक्षाध्वरनिषूदिनी।
उमा हिमाद्रिजाऽपर्णा कर्णपूरांचितानना ॥ १०९

क्षोणीधरनितंबांबा बिंबाभरदनच्छदा।
कुंदकोरकनीकाशरदपंक्तिः सुनासिका।। ११०

नासिकामौक्तिकमणिप्रभामलरदच्छदा।
सुमंदहसितालोकविमुह्यच्छंभु मानसा।। १११

मानसौकोगतिः सिंजन्मंजीरादिविभूषणा।
कांचीक्वणत्क्षुद्रघंटा कलधौतघटस्तनी।। ११२

मुक्ताविद्रुमहारश्रीराजत्कुचतटस्थली
ताटंकयुगसत्कांतिविलसद्गंडदर्पणा।। ११३

धम्मिल्लप्रोत सौवर्णकेतकीदलमंडिता।
शिवार्पितस्वलावण्यतारुण्यकिलिकिंचिता।। ११४

सग्रैवेयकचिंताकविभ्राजत्कंबुकंधरा।
सखीस्कंधासक्तबाहुलतासुललितांगिका।। ११५

नितंबकुचभारार्तकृशमध्यसुमध्यमा।
नाभीसरोवरोद्भूतरोमावलिविराजिता।। ११६

त्रिवलीराजललितगौरवर्णतलोदरी।
चामरग्राहिणीवीज्यमानेन्दुद्युतिचामरा।। ११७

महाकुरबकाशोकपुष्पावचयलालसा।
स्वतपःसुफलीभूतवरोत्तममहेश्वरी।। ११८

हिमाचलतपःपुण्यफलभूतसुताकृतिः।
त्रैलोक्यरमणीरत्ना शिवचिच्चंद्रचंद्रिका।। ११९

कीर्तिज्योत्स्नाधवलितानेकब्रह्मांडगोलिका।
शिवजीवातुगुलिकालसदंगुलिमुद्रिका।। १२०

प्रीतिलालितसत्पुत्रगजाननषडानना।
गंगासापत्न्यजनितेर्ष्यायितेक्षणशोणिमा॥ १२१

शिववामांकपर्यङ्ककृतासनपरिग्रहा।
शिवदृष्टिचकोरीष्टमुखपूर्णेन्दुमंडला॥ १२२

उरोजशैलयुगलभ्रमच्छिवमनोमृगा।
ब्रह्मविष्णुमुखाशेषवृंदारकनमस्कृता॥ १२३

अपांगांगणसंतिष्ठन्निग्रहानुग्रहद्वयी।
सनत्कुमारदुर्वासःप्रमुखोपासकार्थिता॥ १२४

हादिकूटत्रयोपास्या कादिकूटत्रयार्चिता।
मृद्वीकमधुपानाद्युद्बोधघूर्णितलोचना॥ १२५

अव्यक्तभाषणा चेटीदत्तवीटीग्रहालसा।
गायंती विलसंती च लिखंती प्रियलेखना॥ १२६

उल्लसंती लसंती च दोलांदोलनतुष्टिभाक्।
विपंचीवादनरता सप्तस्वरविभेदवित्॥ १२७

गंधर्वीकिन्नरीविद्याधरीयक्षसुरीनुता।
अमरीकबरीभृंगीस्थगितांघ्रिसरोरुहा॥ १२८

गंधर्वगानश्रवणानंदांदोलितमस्तका।
तिलोत्तमोर्वशीरंभानृत्यदर्शनजातमुत्॥ १२९

अचिंत्यमहिमाऽचिंत्यगरिमाऽचिंत्यलाघवा।
अचिंत्यविभवाऽचिंत्यविक्रमाऽचिंत्यसद्गुणा॥ १३०

स्तुतिः स्तव्या नतिर्नम्या गतिर्गम्या महासती।
अनसूयाऽरुंधती च लोपामुद्राऽदितिर्दितिः॥ १३१

सप्तसंस्थास्वरूपा चारणिः स्रुग्वेदिका ध्रुवा।
इडा प्रणीता पात्री च स्वधा स्वाहाऽऽहुतिर्वपा॥ १३२

कव्यरूपा हव्यरूपा यज्ञपात्रस्वरूपिणी।
शंकराहोपुरुषिका गायत्रीगर्भवल्लभा॥ १३३

चतुर्विंशत्यक्षरात्मपरोरजसिसावदोम्।
वेदप्रसूर्वेदगर्भा विश्वामित्रर्षिपूजिता॥ १३४

ऋग्यजुःसामत्रिपदा महासवितृदेवता।
द्विजत्वसिद्धिदात्री च सांख्यायनसगोत्रिका॥ १३५

गातृदुर्गतिसंहर्त्री च गातृस्वर्गापवर्गदा।
भृगुवल्ली ब्रह्मवल्ली कठवल्ली परात्परा॥ १३६

कैवल्योपनिषद्ब्रह्मोपनिष न्मुंडकोपनिषत्।
छांदोग्योपनिषच्चैव सर्वोपनिषदात्मिका॥ १३७

तत्त्वमादिमहावाक्यरूपाखंडार्थबोधकृत्।
उपक्रमादिषड्लिंगमहातात्पर्यबोधिनी॥ १३८

जहत्स्वार्थाजहत्स्वार्थभागत्यागाख्यलक्षणा।
असत्ख्यातिश्च सत्ख्यातिर्मिथ्याख्यातिः प्रभाऽप्रभा॥ १३९

अस्तिभातिप्रियात्मा च नामरूपस्वरूपिणी।
षण्मतस्थापनाचार्यमहादेवकुटुंबिनी॥ १४०

भ्रांतिर्भ्रांतिहरी भ्रांतिदायिनी भ्रांतिकारिणी।
विकृतिर्निकृतिश्चापि कृतिश्चोपकृतिस्तथा॥ १४१

सकृतिः सत्कृतिः पापकृतिः सुकृतिरुत्कृतिः।
आकृतिर्व्याकृतिः प्रायश्चित्तिर्निर्वृत्तिः स्थितिर्गतिः॥१४२

नवकुंडी पंचकुंडी चतुष्कुंड्येककुंडिका।
देवसेनादैत्यसेनारक्षःसेनादिभेदभाक्॥ १४३

महिषास्योद्धतोद्दंडदैत्यवेतंडरुंडहृत्।
दैत्यसेनातृणारण्यज्वाला ज्योतिःस्वरूपिणी॥ १४४

चंडमुंड महादैत्यरुंडकंदुकखेलकृत्।
पशुदेहासृक्पललतृसा दक्षिणकालिका॥ १४५

तदंचत्प्रेततद्रुंडमाला व्यालविभूषणा।
हलदंष्ट्रा शंकुरदा पीतानेकसुराघटा॥ १४६

नेत्रभ्रमिपराभूतरथचक्रद्वयभ्रमिः।
व्यायामाग्राह्यवक्षोजन्यकृतेभेंद्रकुंभिका॥ १४७

मातृमंडलमध्यस्था मातृमंडलपूजिता।
घंटाघणघणध्वानप्रीता प्रेतासनस्थिता॥ १४८

महालसा च मार्तंडभैरवप्राणवल्लभा।
राजविद्या राजसती राजस्त्री राजसुंदरी॥ १४९

गजराजादिरलकापुरीस्था यक्षदेवता।
मत्स्यमूर्तिः कूर्ममूर्तिः स्वीकृतक्रोडविग्रहा॥ १५०

नृसिंहमूर्तिरत्युग्रा धृतवामनविग्रहा।
श्रीजामदग्न्यमूर्तिश्च श्रीराममूर्तिर्हलास्त्रपा॥ १५१

कृष्णमूर्तिर्बुद्धमूर्तिः कल्किमूर्तिरमूर्तिका।
विराण्मूर्तिर्जगन्मूर्तिर्जगज्जन्मादिकारिणी॥ १५२

आधाराधेयसंबंधहीना तदुभयात्मिका।
निर्गुणा निष्क्रियाऽसंगा धर्माधर्मविवर्जिता॥ १५३

मायासंबंधरहिता सच्चिदानन्दविग्रहा।
जगत्तरंगजलधिरूपा चीत्कृतिभेदभाक्॥ १५४

महातत्त्वात्मिका वैकाराहंकारस्वरूपिणी।
रजोहंकाररूपा च तमोहंकाररूपिणी॥ १५५

आकाश रूपिणी वायुरूपिण्यग्निस्वरूपिणी।
अबात्मिका भूस्वरूपा पंचज्ञानेंद्रियात्मिका॥ १५६

कर्मेन्द्रियात्मिका प्राणापानव्यानादिरूपिणी।
नागकूर्मादिरूपा च सर्वनाडीविहारिणी॥ १५७

आधारचक्राधिष्ठात्री स्वाधिष्ठानप्रतिष्ठिता।
मणिपूरकसंस्थानाऽनाहताब्जाधिदेवता॥ १५८

विशुद्धचक्रपीठस्थाऽऽज्ञाचक्रपरमेश्वरी।
द्विपत्री षोडशदली तथा द्वादशपत्रिका॥ १५९

प्रदलद्दशपत्री च षड्दली च चतुर्दली।
वासांतमातृका बादिलांतवर्णाधिदेवता॥ १६०

डादिफान्ताक्षरवती कादिठान्ताक्षरेश्वरी।
षोडशस्वरबीजेशी स्पर्शोष्मांतःस्थदेवता॥ १६१

हक्षाक्षरद्वयीरूपा पंचाशन्मातृकेश्वरी।
सहस्राराब्जपीठस्था शिवशक्तिर्विमुक्तिदा॥ १६२

पंचाम्नायशिवप्रोक्ता मंत्र बीजाधिदेवता।
सौः क्लींह्रींबीजफलदा महाप्लक्षसरस्वती॥ १६३

नवार्णवा सप्तशती मालामंत्रस्वरूपिणी।
अर्गलेशी कीलकेशी कवचेशी त्रिमूर्तिका॥ १६४

सकारादिहकारांतमहामंत्राधिदेवता।
सकृत्सप्तशतीपाठप्रीता प्रोक्तफलप्रदा॥ १६५

कुमारीपूजनोद्यन्मुच्चिरंटीपूजनोत्सुका।
विप्रपूजनसंतुष्टा नित्यश्रीर्नित्यमंगला॥ १६६

जयदादिमचारित्रा श्रीद मध्यचरित्रिका।
विद्यादोत्तमचारित्रा कामितार्थप्रदायिका॥ १६७

इष्टकृष्णाष्टमी चेष्टनवमी भूतपूर्णिमा।
इष्टशुक्रारदिवसा घृतदीपद्वयोत्सुका॥ १६८

नवरात्रोत्सवासक्ता पूजाहोमबलिप्रिया।
इष्टेक्षुकूष्मांडफलाहुतिरिष्टफलाहुतिः॥ १६९

प्रतिमासूत्कृष्टपुण्या च महायंत्रार्चना विधिः।
कात्यायनी कामदोग्ध्री खेचरी खड्गचर्मधृक्॥ १७०

गजास्यमाता घटिका चंडिका चक्रधारिणी।
छाया छविमयी छन्ना जरामृत्युविवर्जिता॥ १७१

झल्लीझंकारमुदिता झंझावातझणत्कृतिः।
टंकहस्ता टणच्चापठद्वयी पल्लवोन्मनुः॥ १७२

डमरुध्वानमुदिता डाकिनीशाकिनीश्वरी।
ढुंढिराजस्य जननी ढक्कावाद्यविलासिनी॥ १७३

तरिका तारिका तारा तन्वंगी तनुमध्यमा।
धूपीकृतासुरा दीर्घवेणी दृप्ता सुरार्तिहृत्॥ १७४

धूम्रवर्णा धूम्रकेशी धूम्राक्षप्राणहारिणी।
नगेशतनया नारी मतल्ली पट्टिहेतिका॥ १७५

पाताललोकाधिष्ठात्री फेरूकृतमहासुरा।
फणींद्रशयना बोधदायिनी बहुरूपिणी।। १७६

भामिनी भासिनी भ्रांतिकरी भ्रांतिविनाशिनी।
मातंगी मदिरामत्ता माधवी माधवप्रिया।। १७७

यायजूकार्चिता योगिध्येया योगीशवल्लभा।
राकाचंद्रमुखी रामा रेणुका रेणुकात्मजा।। १७८

लोकाक्षी लोहिता लज्जा वामाक्षी वास्तुशांतिदा।
शातोदरी शाश्वतिका शातकुंभविभूषणा।। १७९

षडास्यमाता षट्चक्रवासिनी सर्वमंगला।
स्मेरानना सुप्रसन्ना हरवामांकसंस्थिता।। १८०

हरिवंदितपादाब्जा ह्रींबीजभुवनेश्वरी।
क्षौमांबरेंदुगोक्षीरधवला वनशंकरी।। १८१

(षडङ्गन्यासध्यान मानसोपचार पूजनम्।।)

अथ फलश्रुतिः

इतीदं वनशंकर्याः प्रोक्तं नामसहस्रकम्।
शांतिदं पुष्टिदं पुण्यं महाविपत्तिनाशनम्।। १

दारिद्र्यदुःखशमनं नानारोगनिवारणम्।
इदं स्तोत्रं पठेद्भक्त्या यस्त्रिसन्ध्यं नरः शुचिः।। २

नारी वा नियता भक्त्या सर्वान्कामानवाप्नुयात्।
अस्य स्तोत्रस्य सततं यत्र पाठः प्रवर्तते।। ३

तस्मिन्गृहे महालक्ष्मीः स्वभर्त्रा सह मोदते।
नानेन सदृशं स्तोत्रं भुक्तिमुक्तिप्रदायकम्।। ४

विद्यतेऽन्यत्सत्यमेतत् शक्र वच्मि पुनः पुनः ।
बकवंध्या काकवंध्या नारीस्तोत्रमिदं पठेत् ॥ ५

वर्षेणैकेन सा पुत्रं लभेन्नात्रास्ति संशयः ।
सामान्यकार्यसिद्धिस्तु शतावर्तनतो भवेत् ॥ ६

महाकार्यस्य सिद्धिस्तु सहस्रावर्तनाद्ध्रुवम् ।
न तत्र पीडा जायेत भूतप्रेतग्रहोद्भवा ॥ ७

लोकवश्यं राजवश्यं स्तोत्रस्य पठनाद्भवेत् ।
शत्रवः संक्षयं यांति दस्यवः पिशुनास्तथा ॥ ८

नैव शाकंभरीभक्ताःसीदंति बलसूदन ।
शाकंभरी स्वभक्तानामवित्री जननी यथा ॥ ९

यद्यत्कार्यं समुद्दिश्य ध्यायन् शाकंभरीं हृदि ।
स्तोत्रमेतत्पठेत्तस्य तत्कार्यं च प्रसिद्ध्यति ॥ १०

मुच्यते बंधनाद्बद्धो रोगी मुच्येत रोगतः ।
ऋणवानृणतो मुच्येन्नात्र कार्या विचारणा ॥ ११

पौषे मासि सिते पक्षे प्रारभ्य तिथिमष्टमीम् ।
देव्याः आराधनं कुर्यादन्वहं पूर्णिमावधि ॥ १२

सशाकैरुत्तमान्नैश्च ब्राह्मणांश्च सुवासिनीः ।
संतर्पयेद्यथाशक्ति देवीं संपूज्य भक्तितः ॥ १३

वित्तशाठ्यं न कुर्वीत शाकंभर्याः समर्चने ।
तस्मै प्रसन्ना भक्ताय दद्यात्कामानभीप्सितान् ॥ १४

विद्यार्थी प्राप्नुयाद्विद्यां धनार्थी चाप्नुयाद्धनम् ।
दारार्थी प्राप्नुयाद्दारानपत्यार्थी तदाप्नुयात् ॥ १५

आप्नुयान्मन्दबुद्धिस्तु ग्रंथधारणपाटवम्।
अस्य स्तोत्रस्य पाठेन प्राप्नुयाद्यद्यदीप्सितम्॥ १६

अयुतावर्तनादस्य स्तोत्रस्य बलसूदन।
पश्येच्छाकंभरीं साक्षात्तद्भक्तो नात्र संशयः॥ १७

होमं च कुर्याद्विधिवत्पायसेन ससर्पिषा।
सौभाग्यद्रव्ययुक्तेन सेक्षुकूष्मांडकेन च॥ १९

सुवासिनीः कुमारीश्च ब्राह्मणांश्च दिने दिने।
संभोजयेत्सदन्नेन ससितामधुसर्पिषा॥ २०

दद्यात्तेभ्यश्च ताभ्यश्च वस्त्रालंकारदक्षिणाः।
तस्मै शाकम्भरी दद्यात्पुरुषार्थचतुष्टयम्॥ २१

आचन्द्रार्कं तस्य वशः स्थास्यत्यत्र गुणी सुखी।
शांकभर्यै नम इति यस्तु मंत्रं षडक्षरम्॥ २२

भक्त्या जपेन्नरस्तस्य सर्वत्र जयमंगलम्।
शांकभर्या इदं शक्र दिव्यं नामसहस्रकम्॥ २३

गुरुभक्ताय शांताय देयं श्रद्धालवे त्वया।
त्वमप्याखंडल सदा पठेदं स्तोत्रमुत्तमम्॥ २४

शत्रून् जेष्यसि संग्रामे सर्वान्कामानवाप्स्यसि।
इति श्रुत्वा स्कंदवाक्यं शक्रः संतुष्टमानसः॥ २५

प्रणम्य गुहमापृष्ट्वा सगणः स्वदिवं ययौ॥ २६

सूत उवाच

दुर्भिक्षे ऋषिपोषिण्याः शाकंभर्याः प्रकीर्तितम्।
इदं नामसहस्रं वः किं भूयः श्रोतुमिच्छथ॥ २६

स्कंदपुराणे

# शाकम्भरी(वनशंकरी)सहस्रनामावलिः

ओं सौः क्लीं ह्रीं । शाकंभर्यै नमः । शताक्ष्यै । चामुण्डायै । रक्तदंतिकायै । महाकाल्यै । महाशक्त्यै । मधुकैटभनाशिन्यै । ब्रह्मादितेजःसंभूतायै । महालक्ष्म्यै । वराननायै । अष्टादशभुजायै । सम्राजे । महिषासुरमर्दिन्यै । महामायायै । महादेव्यै । सृष्टिस्थित्यंतकारिण्यै । कांत्यै । कामप्रदायै । काम्यायै । कल्याण्यै नमः ।। २०

ओं करुणानिधये नमः । सिंहस्थितायै । नारसिंह्यै । वैष्णव्यै । विष्णुवल्लभायै । भ्रामर्यै । रक्तचामुंडायै । रक्ताक्ष्यै । रक्तपायिन्यै । रक्तप्रियायै । सुरक्तोष्ठ्यै । रक्तबीजविनाशिन्यै । सुरक्तवसनायै । रक्तमाल्यायै । रक्तविभूषणायै । रक्तपाणितलायै । रक्तनख्यै । रक्तोत्पलांघ्रिकायै । रक्तचन्दनलिप्तांग्यै । रमण्यै नमः ।। ४०

ओं रतिदायिन्यै नमः । सुरभ्यै । सुन्दर्यै । बालायै । बगलायै । भैरव्यै । समिधे । चन्द्रलाम्बायै । सुमंगल्यायै । भीमायै । भयनिवारिण्यै । जागृत्यै । स्वप्नरूपायै । सुषुप्तिसुखरूपिण्यै । तुर्यायै । उन्मन्यै । त्रिमात्रायै । त्रय्यै । त्रेतायै । त्रिमूर्तिकायै नमः ।। ६०

ओं विष्णुमायायै नमः । विष्णुशक्त्यै । विष्णुजिह्वायै । विनोदिन्यै । छायायै । शान्त्यै । क्षमायै । क्षुधे । तृषे । तुष्ट्यै । पुष्ट्यै । धृत्यै । भृत्यै । मत्यै । मित्यै । नत्यै । नीत्यै । संयत्यै । नियत्यै । कृत्यै नमः ।। ८०

ओं स्फूर्त्यै नमः । कीर्त्यै । स्तुत्यै । जूत्यै । पूर्त्यै । मूर्त्यै । निजप्रदायै । त्रिशूलधारिण्यै । तीक्ष्णगदिन्यै । खड्गधारिण्यै । पाशिन्यै । वासिन्यै । वामायै । वामदेव्यै । वराननायै । वामाक्ष्यै ।

वारुणी मत्तायै । वामोरवे । वासवस्तुतायै । ब्रह्मविद्यायै नमः ॥ १००

ओं महाविद्यायै नमः । योगिन्यै । योगपूजितायै । त्रिकूटनिलयायै । नित्यायै । कल्पातीतायै । कल्पनायै । कामेश्वर्यै । कामदात्र्यै । कामांतककुटुंबिन्यै । कालरात्र्यै । महारात्र्यै । मोहरात्र्यै । दारुणायै । नानाद्रुमलताकीर्णगिरिमध्यनिवासिन्यै । शाकपोषित-सर्वर्ष्यै । पाकशासनपूजितायै । क्लेदिन्यै । भेदिन्यै । भ्रांत्यै नमः ॥ १२०

ओं भीतिदायै नमः । भ्रांतिनाशिन्यै । क्रांत्यै । संक्रांत्यै । उत्क्रांत्यै । विक्रांत्यै । क्रांतिवर्जितायै । डिंडिमध्वनिसंहृष्टायै । भेरीनादविनोदिन्यै । सुतंत्रीवादनरतायै । स्वरभेदविचक्षणायै । गांधर्वशास्त्रनिपुणायै । नाठ्यशास्त्रविशारदायै । हावभावप्रमाण-ज्ञायै । चतुःषष्टिकलान्वितायै । पदवाक्यप्रमाणाब्धिपारीणायै । वादिभंगिन्यै । सर्वतंत्रस्वतंत्रायै । मंत्रशास्त्राब्धिपारगायै । नानायंत्रविधानज्ञायै नमः ॥ १४०

ओं सौगतागमकोविदायै नमः । वैखानसाद्यागमज्ञायै । शैवागमविचक्षणायै । वामदक्षिणमार्गज्ञायै । भैरवागमभेदविदे । पंचायतनतत्वज्ञायै । पंचाम्नायप्रपञ्चविदे । राजराजेश्वर्यै । भट्टारिकायै । त्रिपुरसुंदर्यै । महादक्षिणकाल्यै । मातंग्यै । मद्यमांसभुजे । लुलायबलिसंतुष्टायै । मेषच्छागबलिप्रियायै । दीपिकाक्रीडनरतायै । डमड्डमरुनादिन्यै । महाप्रदीपिकादे-हलेहनाद्भुतशक्तिदायै । निजावेशवदुन्मत्तभक्तोक्तफलदायिन्यै । उदोउदोमहाध्वानश्रवणासक्तमानसायै नमः ॥ १६०

ओं चौडेश्वर्यै नमः । चौडवाद्यप्रवादनपरायणायै । कपर्दमालाभरणायै । कपर्दिप्राणवल्लभायै । नग्नस्त्रीवीक्षणरतायै । नग्निकायै । उद्भिन्नयौवनायै । बालायै । बदरवक्षोजायै । मध्यायै बिल्वफलस्तन्यै । नारिकेलस्तन्यै प्रौढायै । प्रगल्भायै । घटस्तन्यै । कात्यायन्यै । नम्रकुचायै । प्रौढाद्भुतपराक्रमायै । कदलीवन-मध्यस्थायै । कदंबवनवासिन्यै । निजोपकंठसंप्राप्तनदीमाहात्म्य-वर्धिन्यै । कावेर्यै नमः ॥ १८०

ओं ताम्रपर्ण्यै नमः । कामाक्ष्यै । कामितार्थदायै । मूकांबिकायै । महाशक्त्यै । श्रीशैलभ्रमरांबिकायै । जोगलांबायै । जगन्मात्रे । मातापुरनिवासिन्यै । जमदग्निप्रियायै साध्व्यै । तापसीवेषधारिण्यै । कार्तवीर्यमुखानेकक्षत्रविध्वंसकारिण्यै । नानावतारसंपन्नायै । नानाविधचरित्रकृते । करवीरमहालक्ष्म्यै । कोल्हासुरविनाशिन्यै । नागलिंगभगांकाढ्यमौलये । शक्रादिसं-स्तुतायै । दुर्गमासुरसंहर्त्र्यै । दुर्गायै नमः ॥ २००

ओं अनर्गलशासनायै नमः । नानाविधभयत्रात्र्यै । सुत्रामादि-सुधाशनायै । नागपर्यंकशयनायै । नाग्यै । नागांगनार्चितायै । हाटकालंकृतिमत्यै । हाटकेशसभाजितायै । वाग्देवतास्फूर्तिदात्र्यै । त्रातवाग्बीजजापकायै । जप्यायै । जपविधिज्ञायै । जपसिद्धि-प्रदायिन्यै । मंत्रशक्त्यै । मंत्रविद्यायै । सुमंत्रायै । मांत्रिकप्रियायै । इन्दुमण्डलपीठस्थायै । सूर्यमण्डलपीठगायै । चंद्रशक्त्यै नमः ॥ २२०

ओं सूर्यशक्त्यै नमः । ग्रहशक्त्यै । ग्रहार्तिहायै । ग्रहपीडाहर्यै । सौम्यायै । शुभग्रहफलप्रदायै । ज्योतिर्मण्डलसंस्थानायै । ग्रहताराधिदेवतायै । सप्तविंशतियोगेश्यै । बवादिकरणेश्वर्यै । प्रभवाद्यब्दशक्त्यै । कालचक्रप्रवर्तिन्यै । सोहंमंत्रजपाधारायै ।

ऊर्ध्वषट्चक्रदेवतायै । इडाख्यायै । पिंगलाख्यायै । सुषुम्नायै । ब्रह्मरंध्रगायै । शिवशक्त्यै । कुंडलिन्यै नमः ।। २४०

ओं नाभिमण्डलनिद्रितायै नमः । योगोद्बुद्धायै । मुक्तिदात्र्यै । सहस्राराब्जपीठगायै । पीयूषवर्षिण्यै । जीवशिवभेदविनाशिन्यै । नाभौ परायै । हृदये पश्यंत्यै । गले मध्यमायै । जिह्वाग्रे वैखरीवाण्यै । पंचाशन्मातृकात्मिकायै । ओंकाररूपिण्यै । शब्दसृष्टिरूपायै । अर्थरूपिण्यै । मौनशक्त्यै । मुनिध्येयायै । मुनिमानससंस्थितायै । व्यष्ट्यै । समष्ट्यै । त्रिपुट्यै नमः ।। २६०

ओं तापत्रय विनाशिन्यै नमः । गायत्र्यै । व्याहृत्यै । संध्यायै । सावित्र्यै । पितृप्रसवे । नंदायै । भद्रायै । जयायै । रिक्तायै । पूर्णायै । विष्ट्यै । वैधृत्यै । श्रुत्यै । स्मृत्यै । मीमांसायै । विद्याविद्यायै । परावरायै । सुमेरुशृंगनिलयायै । लोकालोकनिवासिन्यै नमः ।। २८०

ओं मानसोत्तरगोत्रस्थायै नमः । पुष्करद्वीपदेवतायै । मंदराद्रिकृतक्रीडायै । नीपोपवनवासिन्यै । मणिद्वीपकृतावासायै । पीतवासःसुपूजितायै । प्लक्षादिद्वीपगोत्रस्थायै । तत्रत्यजन-पूजितायै । सुराब्धिद्वीपनिलयायै । सुरापानपरायणायै । एकपदे । एकहस्तायै । एकदृशे । एकश्रुतिपार्श्विकायै । अर्धनारीश्वरार्धांग्यै । स्यूतालोकोत्तराकृत्यै । भक्तैकभक्तिसंसाध्यायै । ध्यानाधारायै । परार्हणायै । पञ्चकोशांतरगतायै नमः ।। ३००

ओं पञ्चकोशविवर्जितायै नमः । पञ्चभूतांतरालस्थायै । प्रपञ्चातीतवैभवायै । पंचीकृतमहाभूतनिर्मितानेकभौतिकायै । सर्वांतर्यामिण्यै । शंभुकामिन्यै । सिंहगामिन्यै । यामिनीकृत-संचारायै । शाकिन्यादिगणेश्वर्यै । खट्वांगिन्यै । खेटकिन्यै । कुंतिन्यै । भिंदिपालिन्यै । वर्मिण्यै । चर्मिण्यै । चंड्यै । चण्डमुण्ड-प्रमाथिन्यै । अनीकिन्यै । ध्वजिन्यै । मोहिन्यै नमः ।। ३२०

ओं एजत्पताकिन्यै नमः । अश्विन्यै । गजिन्यै । अट्टहासिन्यै । दैत्यनाशिन्यै । शुंभघ्न्यै । निशुंभघ्न्यै । धूम्रलोचननाशिन्यै । बहुशीर्षायै । बहुकुक्ष्यै । व्यादितास्यायै । अशितासुरायै । दंष्ट्रासंकटसंलग्नदैत्यसास्रांत्रमालिन्यै । दैत्यासृङ्मांससंतृप्तायै । क्रव्यादकृतवंदनायै । लंबकेश्यै । प्रलंबोष्ठ्यै । लंबकुक्ष्यै । महाकट्यै । लबस्तन्यै नमः ।। ३४०

ओं लंबजिह्वायै नमः । लंबपाण्यङ्घ्रिजंघिकायै । लंबोरवे । लंबजघनायै । कालिकायै । कर्कशाकृतये । भिन्नभेरीखररवायै । वारणग्रासकारिण्यै । प्रेतदेहपरीधानायै । रुंडकुंडलमंडितायै । गंडशैलस्पर्धिगंडायै । शैलकंदुकधारिण्यै । शिवदूत्यै । घोररूपायै । शिवाशतनिनादिन्यै । नारायण्यै । जगद्धात्र्यै । जगत्पात्र्यै । जगन्मय्यै । अल्लायै नमः ।। ३६०

ओं अंबायै । अक्कायै । कामदुघायै । अनल्पदायै । कल्पवल्लिकायै । मल्लीमतल्लिकायै । गुंजालंकृतये । शिवमोहिन्यै । गांधर्वगानरसिकायै । केकावाचे । कीरपालिन्यै । सिनीवाल्यै । कुहवे । राकायै । अनुमत्यै । कौमुद्यै । ककुभे । ब्रह्माण्डमंडपस्थूणायै । ब्रह्मांडगृहदेवतायै । महागृहस्थमहिष्यै नमः ।। ३८०

ओं पशुपाशविमोचिन्यै नमः । वीरस्थानगतायै । वीरायै । वीरासनपरिग्रहायै । दीपस्थानगतायै । दीप्तायै । दीपोत्सवकुतूहलायै । तीर्थपात्रप्रदायै । तीर्थकुंभपूजनसंभ्रमायै । माहेश्वरजनप्रीतायै । पशुलोकपराङ्मुख्यै । चतुःषष्टिमहातंत्रप्रतिपाद्यागमाध्वगायै । शुद्धाचारायै । शुद्धपूज्यायै । शुद्धपूजायै । जनाश्रितायै । अष्टादशमहापीठायै । श्रीचक्रपरदेवतायै । योगिनीपूजनप्रीतायै । योगिनीचक्रवंदितायै नमः ।। ४००

ओं घंटाध्वनिविनोदिन्यै नमः । तौर्यत्रिककलाभिज्ञायै । मनोज्ञायै । मंजुभाषिण्यै । शिववामांकलसितायै । सुस्मितायै । ललितालसायै। लावण्यभूम्यै। तल्लेशनिर्मितामरसुंदर्यै। श्रियै। धियै । भियै । ह्रियै । नत्यै । जात्यै । ईज्यायै । आज्यायै । पूज्यपादुकायै । सुरस्रवंत्यै । यमुनायै ।। ४२०

ओं गुप्तसरस्वत्यै नमः । गोमत्यै । गंडक्यै । ताप्यै । शतद्रवे । विपाशिकायै । सरय्वै । नर्मदायै । गोदायै । पयोष्ण्यै । पुनःपुनायै । भीमायै । कृष्णायै । तुंगभद्रायै । नानातीर्थस्वरूपिण्यै । द्वारकायै । मथुरायै । मायायै । काश्यै । अयोध्यायै नमः ।। ४४०

ओं अवंतिकायै । गयायै । कांच्यै । विशालायै । मुक्तिक्षेत्रस्वरूपिण्यै । मंत्रदीक्षायै । यागदीक्षायै ।योगदीक्षायै । अक्षतव्रतायै । अक्षमालाविभेदज्ञायै । आसनभेदविचक्षणायै । मातृकान्यासकुशलायै । मंत्रन्यासविशारदायै । नानामुद्रा-प्रभेदज्ञायै । पंचोपास्तिप्रभेदविदे। सर्वमंत्रोपदेष्ट्र्यै। व्याख्यात्र्यै । देशिकोत्तरायै। वाग्वादिन्यै। दुर्विवादिप्रौढवाक्स्तंभकारिण्यै नमः ।। ४६०

ओं स्वतंत्रयंत्रणाशक्त्यै नमः । तद्यंत्रितजगत्त्रय्यै । ब्रह्माद्याकर्षिण्यै । शंभुमोहिन्यै । द्विषामुच्चाटिन्यै । सुरासुराणां प्रद्वेषकारिण्यै । दैत्यमारिण्यै । भक्तकामानां पूरिण्यै । श्रितप्रत्यूहवारिण्यै । साधारण्यै । धारिण्यै । प्रौढवाग्धारिण्यै । प्रभ्वै । प्रभवे । विभवे । स्वयंभुवे । निग्रहानुग्रहक्षमायै । क्षमायै । अक्षमायै । क्षमाधारायै नमः ।। ४८०

ओं धाराधरनिभद्युतये नमः । कादंबिन्यै । कालशक्त्यै । कर्षिण्यै । वर्षिण्यै । ईर्षिण्यै । अदेवमातृकायै । देवमातृकायै ।

उर्वरायै । कृष्यै । कृष्टपच्यायै । अकृष्टपच्यायै । अनूषरायै । अधित्यकायै । गुहायै । उपत्यकायै । दर्यै । वन्यायै । अरण्यान्यै । शैलनिम्नगायै नमः ।। ५००

ओं केदारभूम्यै नमः । व्रीहिलायै । कमलर्धयै । महाफलायै । इक्षुमत्यै । ऊर्जितायै । जंबूपनसाम्रादिशालिन्यै । अष्टा पदखन्यै । रौप्यखन्यै । रत्नखन्यै । रुचांखन्यै । भावखन्यै । जीवखन्यै । सौभाग्यसत्खन्यै । लावण्यस्य खन्यै । धैर्यखन्यै । शौर्यखन्यै । गांभीर्यस्य खन्यै । विलासस्य खन्यै । साहित्यसत्खन्यै नमः ।। ५२०

ओं पक्षमासर्तुवर्षाणां खन्यै नमः । अनेहसां खन्यै । युगकल्पानां खन्यै । सूर्यचंद्रमसोः खन्यै । मनूनां खन्यै । इंद्राणां खन्यै । कौतुकसत्खन्यै । मष्यै । लेखनिकायै । पात्र्यै । वर्णपङ्क्त्यै । लिप्यै । कथायै । कवितायै । काव्यकर्त्र्यै । देशभाषायै । जनश्रुत्यै । रचनायै । कल्पनायै । आचारभट्यै नमः ।। ५४०

ओं धाट्यै नमः । पटीयस्यै । अपसव्यलिप्यै । देवलिप्यै । रक्षोलिप्यै । लिप्यै । तुलजायै । रामवरदायै । शबर्यै । बर्बरालकायै । ज्योतिर्लिङ्गमय्यै । लिंगमस्तकायै । लिंगधारिण्यै । रुद्राक्षधारिण्यै । भूतिधारिण्यै । लैंगिकव्रतायै । विष्णुव्रतपरायै । विष्णुमुद्रिकायै । प्रियवैष्णव्यै । जैन्यै नमः ।। ५६०

ओं दैगंबर्यै नमः । नानाविधवैदिकमार्गगायै । पंचद्रविडसंसेव्यायै । पंचगौडसमर्चितायै । हिंगुलायै । शारदायै । ज्वालामुख्यै । गंजाधिदेवतायै । मंदुरादेवतायै । आलानदेवतायै । गोष्ठदेवतायै । गृहादिदेवतायै । सौधदेवतायै । उद्यानदेवतायै । शृंगारदेवतायै । ग्रामदेवतायै । चैत्यदेवतायै । पूर्देवतायै । राजसभादेवतायै । अशोकदेवतायै नमः ।। ५८०

ओं चतुर्दशानां लोकांनां देवतायै नमः । परदेवतायै । वापीकूपतडागादिदेवतायै। वनदेवतायै। सृष्टिखेलायै। क्षेमखेलायै । प्रतिसंहारखेलनायै । पुष्पपर्यङ्कशयनायै । पुष्पवत्कुंडलद्ध्यै । तांबूलचर्वणप्रीतायै। गौर्यै। प्रथमपुष्पिण्यै। कल्याणीयुगसंपन्नायै । कामसंजीविनीकलायै । कलाकलापकुशलायै । कलातीतायै । कलात्मिकायै । महाजांगलक्यै । कालभुजंगविषनाशिन्यै । चिकित्सायै नमः ।। ६००

ओं वैद्यविद्यायै नमः । नानामयनिदानविदे । पित्तप्रकोप-शमन्यै । वातघ्न्यै । कफनाशिन्यै । आमज्वरप्रकोपघ्न्यै । नवज्वर-निवारिण्यै । अर्शोघ्न्यै । शूलशमन्यै । गुल्मव्याधिनिवारिण्यै । ग्रहणीनिग्रहकर्यै । राजयक्ष्मविनाशिन्यै । मेहघ्न्यै । पांडुरोगघ्न्यै । क्षयापस्मारनाशिन्यै । उपदंशहर्यै । श्वासकासच्छर्दिनिवारिण्यै । प्लीहप्रकोपसंहर्त्र्यै । पामाकंडूविनाशिन्यै । दद्रुकुष्ठादिरोगघ्न्यै नमः ।। ६२०

ओं नानारोगविनाशिन्यै नमः । यक्षराक्षसवेतालकूष्माण्ड-ग्रहभेदिन्यै । बालग्रहघ्न्यै । चंडालग्रहचंडग्रहार्दिन्यै । भूतप्रेतपिशा-चघ्न्यै । नानाग्रहविमर्दिन्यै । शाकिनीडाकिनीलामदस्त्रीग्रह-निषूदिन्यै । अभिचारकदुर्बाधोन्मथिन्यै । उन्मादनाशिन्यै । नानाविषार्तिसंहर्त्र्यै । दुष्टदृष्टचार्तिनाशिन्यै । दुष्टस्थानस्थितार्कादि-ग्रहपीडाविनाशिन्यै । योगक्षेमकर्यै । पुष्टिकर्यै । तुष्टिकर्यै । इष्टदायै । धनदायै । धान्यदायै । गोदायै । वासोदायै । बहुमानदायै नमः ।। ६४०

ओं कामितार्थप्रदायै नमः । शंदायै । चतुर्विधपुमर्थदायै । ब्रह्ममान्यायै । विष्णुमान्यायै । शिवमान्यायै । इंद्रमानितायै । देवर्षिमान्यायै । ब्रह्मर्षिमान्यायै । राजर्षिमानितायै । जगन्मान्यायै ।

जगद्धात्र्यै । त्र्यंबकायै । त्र्यंबकांगनायै । गुहेभवक्त्रजनन्यै । भद्रकाल्यै । अभयङ्कर्यै । सत्यै । दाक्षायण्यै । दक्षायै नमः ।। ६६०

ओं दक्षाध्वरनिषूदिन्यै नमः । उमायै । हिमाद्रिजायै । अपर्णायै । कर्णपूरांचितानलायै । क्षोणीधरनितंबांबायै । बिंबाभरदनच्छदायै । कुंदकोरकनीकाशरदपङ्क्त्यै । सुनासिकायै । नासिकामौक्तिकमणिप्रभामलरदच्छदायै । सुमंदहसितालोकविमुह्यच्छंभुमानसायै । मानसौकोगत्यै । सिंजन्मंजीरादिविभूषणायै । कांचीक्कणत्क्षुद्रघंटायै । कलधौतघटस्तन्यै । मुक्ताविद्रुमहारश्रीराजत्कुचतटस्थल्यै । ताटंकयुगसत्कांतिविलसद्गंडदर्पणायै । धम्मिल्लप्रोतसौवर्णकेतकीदलमंडितायै । शिवार्पितस्वलावण्यतारुण्यकिलिकिंचितायै । सग्रैवेयकचिंताकविभ्राजत्कंबुकंधरायै नमः ।। ६८०

ओं सखीस्कंधासक्तबाहुलतासुललितांगिकायै । नितंबकुचभारार्तकृशमध्यसुमध्यमायै । नाभीसरोवरोद्भूतरोमावलिविराजितायै । त्रिवलीराजललितगौरवर्णतलोदर्यै । चामरग्राहिणीवीज्यमानेंदुद्युतिचामरायै । महाकुरबकाशोकपुष्पावचयलालसायै । स्वतपःसुफलीभूतवरोत्तममहेश्वर्यै । हिमाचलतपःपुण्यफलभूतसुताकृतये । त्रैलोक्यरमणीरत्नायै । शिवचित्तचंद्रचंद्रिकायै । कीर्तिज्योत्स्नाधवलितानेकब्रह्मांडगोलिकायै । शिवजीवातुगुलिकालसदंगुलिमुद्रिकायै । प्रीतिलालितसत्पुत्रगजाननषडाननायै । गंगासापत्न्यजनितेर्ष्यायितेक्षणशोणिमायै । शिववामाङ्कपर्यङ्ककृतासनपरिग्रहायै । शिवदृष्टिचकोरीष्टमुखपूर्णेन्दुमंडलायै । उरोजशैलयुगलभ्रमच्छिवमनोमृगायै । ब्रह्मविष्णुमुखाशेषवृंदारकनमस्कृतायै । अपांगांगणसंतिष्ठन्निग्रहानुग्रहद्वय्यै । सनत्कुमारदुर्वासःप्रमुखोपासकार्थितायै नमः ।। ७००

ओं हादिकूटत्रयोपास्यायै नमः । कादिकूटत्रयार्चितायै । मृद्वीकमधुपानाद्युद्बोधघूर्णितलोचनायै । अव्यक्तभाषणायै । चेटीदत्तवीटीग्रहालसायै। गायंत्यै। विलसंत्यै। लिखंत्यै। प्रियलेखनायै । उल्लसंत्यै । लसन्त्यै । दोलांदोलनतुष्टिभाजे । विपंचीवादनरतायै । सप्तस्वरविभेदविदे । गंधर्वीकिन्नरीविद्याधरीयक्षसुरीनुतायै। अमरीकबरीभृंगीस्थगितांघ्रिसरोरुहायै। गांधर्वगानश्रवणानंदांदोलितमस्तकायै। तिलोत्तमोर्वशीरंभानृत्यदर्शनजातमुदे । अचिंत्यमहिमायै। अचिंत्यगरिमायै नमः ।। ७२०

ओं अचिंत्यलाघवायै नमः । अचिंत्यविभवायै । अचिंत्यविक्रमायै । अचिंत्यसद्गुणायै। स्तुत्यै। स्तव्यायै। नत्यै। नम्यायै। गत्यै। गम्यायै । महासत्यै। अनसूयायै। अरुंधत्यै। लोपामुद्रायै। अदित्यै । दित्यै। सप्तसंस्थास्वरूपायै। अरण्यै। स्रुचे। वेदिकायै नमः ।। ७४०

ओं ध्रुवायै नमः । इडायै । प्रणीतायै । पात्र्यै । स्वधायै । स्वाहायै । आहुत्यै। वपायै। कव्यरूपायै। हव्यरूपायै। यज्ञपात्रस्वरूपिण्यै। शंकराहोपुरुषिकायै। गायत्रीगर्भवल्लभायै। चतुर्विंशत्यक्षरात्मपरोरजसिसावदों । वेदप्रसुवे । वेदगर्भायै । विश्वामित्रर्षिपूजितायै । ऋग्यजुःसामत्रिपदायै । महासवितृदेवतायै । द्विजत्वसिद्धिदात्र्यै नमः ।। ७६०

ओं सांख्यायनसगोत्रिकायै नमः । गातृदुर्गतिसंहर्त्र्यै । गातृस्वर्गापवर्गदायै । भृगुवल्लयै । ब्रह्मवल्ल्यै । कठवल्ल्यै । परात्परायै । कैवल्योपनिषदे । ब्रह्मोपनिषदे । मुण्डकोपनिषदे । छान्दोग्योपनिषदे। सर्वोपनिषदात्मिकायै। तत्वमादिमहावाक्यरूपाखंडार्थबोधकृते । उपक्रमादिषड्लिंगमहातात्पर्यबोधिन्यै । जहत्स्वार्थाजहत्स्वार्थभागत्यागाख्यलक्षणायै । असत्ख्यात्यै । सत्ख्यात्यै। मिथ्याख्यात्यै । प्रभायै। अप्रभायै नमः ।। ७८०

ओं अस्तिभातिप्रियात्मने नमः । नामरूपस्वरूपिण्यै । षण्मतस्थापनाचार्यमहादेवकुटुंबिन्यै । भ्रांत्यै । भ्रांतिहर्यै । भ्रांतिदायिन्यै । भ्रांतिकारिण्यै । विकृत्यै । निकृत्यै । कृत्यै । उपकृत्यै । सकृत्यै । सत्कृत्यै । पापकृत्यै । सुकृत्यै । उत्कृत्यै । आकृत्यै । व्याकृत्यै । प्रायश्चित्त्यै । वित्त्यै नमः ॥ ८००

ओं स्थित्यै नमः । गत्यै । नवकुंड्यै । पंचकुंड्यै । चतुष्कुंड्यै । एककुंडिकायै । देवसेनादैत्यसेनारक्षःसेनादिभेदभाजे । महिषास्योद्गतोद्दंडदैत्यवेतंडरुंडहृते । दैत्यसेनातृणारण्यज्वालायै । ज्योतिःस्वरूपिण्यै । चंडमुंडमहादैत्यरुंडकंदुकखेलकृते । पशुदेहासृक्पललतृप्तायै । दक्षिणकालिकायै । तदंचत्प्रेततद्रुण्डमालायै । व्यालविभूषणायै । हलदंष्ट्रायै । शंकुरदायै । पीतानेकसुराघटायै । नेत्रभ्रमिपराभूतरथचक्रद्वयभ्रम्यै । व्यायामाग्राह्यवक्षोजन्यक्कृतेभेद्रकुंभिकायै नमः ॥ ८२०

ओं मातृमंडलमध्यस्थायै नमः । मातृमंडलपूजितायै । घंटाघणघणध्वानप्रीतायै । प्रेतासनस्थितायै । महालसायै । मार्तंडभैरवप्राणवल्लभायै । राजविद्यायै । राजसत्यै । राजस्त्रियै । राजसुन्दर्यै । गजराजादये । अलकापुरीस्थायै । यक्षदेवतायै । मत्स्यमूर्तये । कूर्ममूर्तये । स्वीकृतक्रोडविग्रहायै । नृसिंहमूर्त्यै । अत्युग्रायै । धृतवामनविग्रहायै । श्रीजामदग्निमूर्त्यै नमः ॥ ८४०

ओं श्रीराममूर्त्यै नमः । हतास्रपायै । कृष्णमूर्त्यै । बुद्धमूर्त्यै । कल्किमूर्त्यै । अमूर्तिकायै विराण्मूर्त्यै । जगन्मूर्त्यै । जगज्जन्मादिकारिण्यै । आधाराधेयसंबंधहीनायै । तदुभयात्मिकायै । निर्गुणायै । निष्क्रियायै । असंगायै । धर्माधर्मविवर्जितायै । मायासंबंधरहितायै । सच्चिदानंदविग्रहायै । जगत्तरंगजलधिरूपायै । चीत्कृतिभेदभाजे । महातत्त्वात्मिकायै । वैकाराहंकारस्वरूपिण्यै नमः ॥ ८६०

ओं रजोहंकाररूपायै नमः। तमोहंकाररूपिण्यै। आकाश-रूपिण्यै । वायुरूपिण्यै । अग्निस्वरूपिण्यै । अंबात्मिकायै । भूस्वरूपायै । पंचज्ञानेंद्रियात्मिकायै । कर्मेंद्रियात्मिकायै । प्राणापानव्यानादिरूपिण्यै । नागकूर्मादिरूपायै । सर्वनाडी-विहारिण्यै । आधारचक्राधिष्ठात्र्यै । स्वाधिष्ठान-प्रतिष्ठितायै । मणिपूरकसंस्थानायै । अनाहताब्जाधिदेवतायै । विशुद्धचक्र-पीठस्थायै । आज्ञाचक्रपरमेश्वर्यै । द्विपत्र्यै । षोडशदल्यै नमः ।। ८८०

ओं द्वादशपत्रिकायै नमः । प्रदलदशपत्र्यै । षड्दल्यै । चतुर्दल्यै । वासांतमातृकायै । बादिलांतवर्णाधिदेवतायै । डादिफांताक्षरवत्यै । कादिठांताक्षरेश्वर्यै । षोडशस्वरबीजेश्यै । स्पर्शोष्मांतःस्थदेवतायै । हक्षाक्षरद्वयीरूपायै । पंचाशन्मातृ-केश्वर्यै । सहस्राराब्जपीठस्थायै । शिवशक्त्यै । विमुक्तिदायै । पंचाम्नायशिवप्रोक्तायै । मंत्रबीजाधिदेवतायै । सौःक्लींह्रींबीज-फलदायै । महाप्लक्षसरस्वत्यै । नवार्णवायै नमः ।। ९००

ओं सप्तशत्यै नमः । मालामंत्रस्वरूपिण्यै । अर्गलेश्यै । कीलकेश्यै । कवचेश्यै । त्रिमूर्तिकायै । सकारादिहकारांत-महामंत्राधिदेवतायै। सकृत्सप्तशतीपाठप्रीतायै। प्रोक्तफलप्रदायै। कुमारीपूजनोद्यन्मुदे। चिरंटीपूजनोत्सुकायै। विप्रपूजनसंतुष्टायै। नित्यश्रियै । नित्यमंगलायै । जयदादिमचारित्रायै । श्रीदमध्य-चरित्रिकायै । विद्यात्तमचारित्रायै । कामितार्थप्रदायिकायै । इष्टकृष्णाष्टम्यै। इष्टनवम्यै नमः ।। ९२०

ओं भूतपूर्णिमायै नमः। इष्टशुक्रारदिवसायै। घृतदीपद्वयो-त्सुकायै । नवरात्रोत्सवासक्तायै । पूजाहोमबलिप्रियायै । इष्टेक्षुकूष्माण्डफलाहुत्यै । इष्टफलाहुत्यै । प्रतिमासोत्कृष्टपुण्यायै ।

महायन्त्रार्चनाविधये। कात्यायन्यै। कामदोग्ध्र्यै। खेचर्यै। खड्ग-चर्मधृते । गजास्यमात्रे। घटिकायै। चण्डिकायै। चक्रधारिण्यै। छायायै। छविमय्यै। छन्नायै नमः ।। ९४०

ओं जरामृत्युविवर्जितायै नमः । झल्लीझङ्कारमुदितायै । झञ्झावातझणत्कृत्यै। टंकहस्तायै। टणच्चापठद्ध्य्यै। पल्लवोन्मन्वै। डमरुध्वनिमुदितायै। डाकिनीशाकिनीश्वर्यै। दुंढिराजस्य जनन्यै। ढक्कावाद्यविलासिन्यै । तरिकायै । तारिकायै । तारायै । तन्वंग्यै । तनुमध्यमायै । धूपीकृतासुरायै । दीर्घवेण्यै । दृप्तायै । सुरार्तिहृते । धूम्रवर्णायै नमः ।। ९६०

ओं धूम्रकेश्यै नमः । धूम्राक्षप्राणहारिण्यै । नगेशतनयायै । नार्यै । मतल्लच्यै । पट्टिहेतिकायै । पाताललोकाधिष्ठात्र्यै । फेरूकृतमहासुरायै। फणींद्रशयनायै। बोधदायिन्यै । बहुरूपिण्यै । भामिन्यै । भासिन्यै । भ्रांतिकर्यै । भ्रांतिविनाशिन्यै । मातंग्यै । मदिरामत्तायै। माधव्यै। माधवप्रियायै । यायजूकार्चितायै नमः ।। ९८०

ओं योगिध्येयायै नमः । योगीशवल्लभायै। राकाचंद्रमुख्यै। रामायै। रेणुकायै। रेणुकात्मजायै। लोकाक्ष्यै। लोहितायै। लज्जायै। वामाक्ष्यै । वास्तुशांतिदायै । शातोदर्यै । शाश्वतिकायै । शातकुंभविभूषणायै । षडास्यमात्रे । षट्चक्रवासिन्यै । सर्वमंगलायै । स्मेराननायै। सुप्रसन्नायै। हरवामांकसंस्थितायै नमः ।। १०००

ओं हरिवन्दितपादाब्जायै नमः । ह्रींबीजायै। भुवनेश्वर्यै। क्षौमांबरायै । इंदुगोक्षीरधवलायै। वनशंकर्यै नमः ।। १००६

*—*—*

## शाकंभरी (वनशंकरी) अष्टोत्तर शतनामावलिः

अस्य श्री शाकंभरी अष्टोत्तर शतनामावलि महामंत्रस्य ब्रह्मा ऋषिः, अनुष्टुप्छंदः। शाकंभरी देवता।। सौः बीजं। क्लीं शक्तिः। ह्रीं कीलकम्। श्री शाकम्भरीप्रसादसिद्ध्यर्थे श्रीशाकंभर्यष्टोत्तरशत नाममन्त्र पारायणे (अर्चने) विनियोगः

शान्ता शारदचन्द्रसुन्दरमुखी शाल्यन्नभोज्यप्रिया
शाकैः पालितविष्टपा शतदृशा शाकोल्लसद्विग्रहा।
श्यामांगी शरणागतार्तिशमनी शक्रादिभिः शंसिता
शंकर्यष्टफलप्रदा भगवती शाकंभरी पातु माम्।।

ओं शाकंभर्यै नमः। महालक्ष्म्यै। महाकाल्यै। महाकांत्यै। महासरस्वत्यै। महागौर्यै। महादेव्यै। भक्तानुग्रहकारिण्यै। स्वप्रकाशात्मरूपिण्यै। महामायायै। माहेश्वर्यै। वागीश्वर्यै। जगद्धात्र्यै। कालरात्र्यै। त्रिलोकेश्वर्यै। भद्रकाल्यै। कराल्यै। पार्वत्यै। त्रिलोचनायै। सिद्धलक्ष्म्यै नमः।। २०

ओं क्रियालक्ष्म्यै नमः। मोक्षप्रदायिन्यै। अरूपायै। बहुरूपायै। स्वरूपायै। विरूपायै। पंचभूतात्मिकायै। देव्यै। देवमूर्त्यै। सुरेश्वर्यै। दारिद्र्यध्वंसिन्यै। वीणापुस्तकधारिण्यै। सर्वशक्त्यै। त्रिशक्त्यै। ब्रह्मविष्णुशिवात्मिकायै। अष्टाङ्गयोगिन्यै। हंसगामिन्यै। नवदुर्गायै। अष्टभैरवायै। गंगायै नमः।। ४०

ओं वेण्यै नमः। सर्वशस्त्रधारिण्यै। समुद्रवसनायै। ब्रह्मांडमेखलायै। अवस्थात्रयनिर्मुक्तायै। गुणत्रयविवर्जितायै। योगध्यानैकसंन्यस्तायै। योगध्यानैकरूपिण्यै। वेदत्रयरूपिण्यै। वेदांतज्ञानरूपिण्यै। पद्मावत्यै। विशालाक्ष्यै। नागयज्ञोपवीतिन्यै।

सूर्यचंद्रस्वरूपिण्यै । ग्रहनक्षत्ररूपिण्यै । वेदिकायै । वेदरूपिण्यै । हिरण्यगर्भायै । कैवल्यपददायिन्यै । सूर्यमंडलसंस्थितायै नमः ॥ ६०

ओं सोममंडलमध्यस्थायै नमः । वायुमंडलसंस्थितायै । वह्निमंडलमध्यस्थायै । शक्तिमंडलसंस्थितायै । चित्रिकायै । चक्रमार्गप्रदायिन्यै । सर्वसिद्धांतमार्गस्थायै । षड्वर्गवर्णवर्जितायै । एकाक्षरप्रणवयुक्तायै । प्रत्यक्षमातृकायै । दुर्गायै । कलाविद्यायै । चित्रसेनायै । चिरंतनायै । शब्दब्रह्मात्मिकायै । अनंतायै । ब्राह्म्यै । ब्रह्मसनातनायै । चिंतामण्यै । उषादेव्यै नमः ॥ ८०

ओं विद्यामूर्तिसरस्वत्यै नमः । त्रैलोक्यमोहिन्यै । विद्यादायै । सर्वाधायै । सर्वरक्षाकर्त्र्यै । ब्रह्मस्थापितरूपायै । कैवल्यज्ञान-गोचरायै । करुणाकारिण्यै । वारुण्यै । धात्र्यै । मधुकैटभमर्दिन्यै । अचिंत्यलक्षणायै । गोप्त्र्यै । सदाभक्ताघनाशिन्यै । परमेश्वर्यै । महारवायै । महाशांत्यै । सिद्धलक्ष्म्यै । सद्योजात-वामदेवाघोर-तत्पुरुषेशानरूपिण्यै । नगेशतनयायै नमः ॥ १००

ओं सुमंगल्यै नमः । योगिन्यै । योगदायिन्यै । सर्वदेवादि-वंदितायै । विष्णुमोहिन्यै । शिवमोहिन्यै । ब्रह्ममोहिन्यै । श्रीवनशंकर्यै नमः ॥ १०८

## शाकंभरीनामाष्टकम्

श्रीशाकंभर्यै नमः । अन्नपूर्णायै । शताक्ष्यै । बहुशक्त्यै । दुर्गमासुरहन्त्र्यै । दुर्गायै । उत्कृष्टतनवे । चित्स्वरूपिण्यै नमः ॥

## श्री शारिकासहस्रनामस्तोत्रम्

श्री भैरव उवाच—

या सा देवी पुररा ख्याता शारिकारूपधारिणी।
जालन्धरराक्षसघ्नी प्रद्युम्नशिखरे स्थिता ॥ १

तस्या नामसहस्रं ते मन्त्रगर्भं जयावहम्।
कथयामि परां विद्यां सहस्राख्याभिधां शिवे ॥ २

शिलायाः शारिकाख्यायाः परसर्वस्वरूपिणीम्।
विना नित्यक्रियां देवि विना न्यासं विनाऽर्चनम् ॥ ३

विना पुरस्क्रियां जाप्यं विना होमं च तर्पणम्।
विना श्मशानगमनं विना समयपूजनम् ॥ ४

यया लभेत् फलं सर्वं तां विद्यां शृणु पार्वति।
या देवी चेतना लोके शिलारूपास्ति शारिका ॥ ५

सृजत्यवति विश्वं तु संहरिष्यति तामसी।
सैव संसारिणां देवि परमैश्वर्यदायिनी ॥ ६

परं पदं प्रदाप्यान्ते महाविद्यात्मिका शिला।
तस्या नामसहस्रं ते वर्णयामि रहस्यकम् ॥ ७

रहस्यं मम सर्वस्वं सकलाचारवल्लभम्।
यो जपेत् परमां विद्यां पठेदाख्यासहस्रकम् ॥ ८

धारयेत् कवचं दिव्यं पठेत् स्तोत्रेश्वरं परम्।
किं तस्य दुर्लभं लोके नाप्नुयाद् यद्यदीश्वरि ॥ ९

अस्य नाम्नां सहस्रस्य महादेव ऋषिः स्मृतः।
छन्दोऽनुष्टप् देवता च शारिका परिकीर्तिता ॥ १०

शर्म बीजं रमा शक्तिः सिन्धुरः कीलकं स्मृतम्।
धर्मार्थकाममोक्षार्थे विनियोगः प्रकीर्तितः ।।
ध्यानमस्याः प्रवक्ष्यामि शृणु पर्वतनन्दिनि ।। ११

अस्य श्रीशारिकाभगवतीसहस्रनामस्तोत्रस्य श्रीमहादेव ऋषिः, अनुष्टुप् छन्दः, श्रीशारिका भगवती देवता, शां बीजं श्रीं शक्तिः फ्रां कीलकं धर्मार्थकाममोक्षार्थे विनियोगः ।
शांशीमित्यादिना कराङ्गन्यासौ ।।

ध्यानम्——

बालार्ककोटिसदृशीमिन्दुचूडां कराम्बुजैः ।
वरचक्राभयासींश्च धारयन्तीं हसन्मुखीम् ।।

सिंहारूढां रक्तवस्त्रां रक्ताभरणभूषिताम् ।
वामदेवाङ्कनिलयां हृत्पद्मे शारिकां भजे ।।

बालार्ककोटिद्युतिमिन्दुचूडां वरासिचक्राभयबाहुमाद्याम्।
सिंहाधिरूढां शिववामदेहलीनां भजे चेतसि शारिकेशीम् ।।

ओं ह्रीं श्रीं हूं फ्रां आं शां श्रीशारिका श्यामसुन्दरी ।
शिला शारी शुकी शान्ता शान्तमानसगोचरा ।। १

शान्तिस्था शान्तिदा शान्तिः श्यामा श्यामपयोधरा ।
देवी शशाङ्कबिम्बाभा शशाङ्ककृतशेखरा ।। २

शशाङ्कशोभिलावण्या शशाङ्कमध्यवासिनी ।
शार्दूलवाहा देवेशी शार्दूलस्थितिरुत्तमा ।। ३

शार्दूलचर्मवसना शक्तिः शार्दूलवाहना ।
गौरी पद्मावती पीना पीनवक्षोजकुट्मला।। ४

पीताम्बरा रक्तदन्ता दाडिमीकुसुमोपमा।
स्फुरद्रत्नांशुखचिता रत्नमण्डलविग्रहा॥ ५

रक्ताम्बरधरा देवी रत्नमालाविभूषणा।
रत्नसंमूर्च्छितात्मा च दीप्ता दीप्तशिखा दया॥ ६

दयावती कल्पलता कल्पान्तदहनोपमा।
भैरवी भीमनादा च भयानकमुखी भगा॥ ७

कारा कारुण्यरूपा च भगमालाविभूषणा।
भगेश्वरी भगस्था च कुरुकुल्ला कृशोदरी॥ ८

कादम्बरी पटोत्कृष्टा परमा परमेश्वरी।
सती सरस्वती सत्या सत्यासत्यस्वरूपिणी॥ ९

परम्परा पटाकारा पाटला पाटलप्रभा।
पद्मिनी पद्मवदना पद्मा पद्माकरा शिवा॥ १०

शिवाश्रया शरच्छान्ता शची रम्भा विभावरी।
द्युमणिस्तरणा पाठा पीठेशी पीवराकृतिः॥ ११

अचिन्त्या मुसलाधारा मातङ्गी मधुरस्वना।
वीणागीतप्रिया गाथा गारुडी गरुडध्वजा॥ १२

अतीव सुन्दराकारा सुन्दरी सुन्दरालका।
अलका नाकमध्यस्था नाकिनी नाकिपूजिता॥ १३

पातालेश्वरपूज्या च पातालतलचारिणी।
अनन्ताऽनन्तरूपा च ह्यज्ञाता ज्ञानवर्धिनी॥ १४

अमेया ह्यप्रमेया च ह्यनन्तादित्यरूपिणी।
द्वादशादित्यसंपूज्या शमी श्यामाकबीजिनी॥ १५

विभासा भासुरवर्णा समस्तासुरघातिनी ।
सुधामयी सुधामूर्तिः सुधा सर्वप्रियङ्करी ।। १६

सुखदा च सुरेशानी कृशानुवल्लभा हविः ।
स्वाहा स्वाहेशनेत्रा च ह्यग्निवक्त्राऽग्नितर्पिता ।। १७

सोमसूर्याग्निनेत्रा च भूर्भुवःस्वःस्वरूपिणी ।
भूमिर्भूदेवपूज्या च स्वयम्भूः स्वात्मपूजका ।। १८

स्वयम्भू पुष्पमालाढ्या स्वयम्भू पुष्पवल्लभा ।
आनन्दकन्दली कन्दा स्कन्दमाता शिलालया ।। १९

चेतना चिद्भवाकारा भवपत्नी भयापहा ।
विघ्नेश्वरी गणेशानी विघ्नविध्वंसिनी निशा ।। २०

वश्या वशिजनस्तुत्या स्तुतिः श्रुतिधरा श्रुतिः ।
शास्त्रविधानविज्ञा च वेदशास्त्रार्थकोविदा ।। २१

वेद्या विद्यामयी विद्या विधातृवरदा वधूः ।
वधूरूपा वधूपूज्या वधूपानप्रतर्पिता ।। २२

वधूपूजनसन्तुष्टा वधूमालाविभूषणा ।
वामा वामेश्वरी वाम्या कुलाकुलविचारिणी ।। २३

वितर्कतर्कनिलया प्रलयानलसन्निभा ।
यज्ञेश्वरी यज्ञमुखा याजका यज्ञपात्रका ।। २४

यक्षेश्वरी यक्षधात्री पार्वती पर्वताश्रया ।
पिलम्पिला पदस्थाना पददा नरकान्तका ।। २५

नारी नर्मप्रिया श्रीदा श्रीदश्रीदा शरायुधा ।
कामेश्वरी रतिर्हूतिराहुतिर्हव्यवाहना ।। २६

हरेश्वरी हरिवधूर्हाटकाङ्गदमण्डिता।
हपुषा स्वर्गतिर्वैद्या सुमुखा च महौषधिः ।। २७

सर्वरोगहरा माध्वी मधुपानपरायणा।
मधुस्थिता मधुमयी मधुदानविशारदा ।। २८

मधुतृप्ता मधुरूपा मधूककुसुमप्रभा।
माधवी माधवीवल्ली मधुमत्ता मदालसा ।। २९

मारप्रिया मारपूज्या मारदेवप्रियङ्करी।
मारेशी च मृत्युहरा हरिकान्ता मनोन्मना ।। ३०

महावैद्यप्रिया वैद्या वैद्याचारा सुरार्चिता।
सामन्ता पीनवपुषी गुटी गुर्वी गरीयसी ।। ३१

कालान्तका कालमुखी कठोरा करुणामयी।
नीला नाभी च वागीशी दूर्वा नीलसरस्वती ।। ३२

अपारा पारगा गम्या गतिः प्रीतिः पयोधरा।
पयोदसदृशच्छाया पारदाकृतिलालसा ।। ३३

सरोजनिलया नीतिः कीर्तिः कीर्तिकरी कथा।
काशी काम्या कपर्दीशा काशपुष्पोपमा रमा ।। ३४

रामा रामप्रिया रामभद्रदेवसमर्चिता।
रामसंपूजिता रामसिद्धिदा रामराज्यदा ।। ३५

रामभद्रार्चिता रेवा देवकी देववत्सला।
देवपूज्या देववन्द्या देवदानवचर्चिता।। ३६

दूती द्रुतगतिर्दम्भा दामिनी विजया जया।
अशेषसुरसंपूज्या निःशेषासुरसूदिनी ।। ३७

वटिनी वटमूलस्था लास्यहास्यैकवल्लभा।
अरूपा निर्गुणा सत्या सदा सन्तोषवर्धिनी।। ३८

सौम्या यजुर्वहा याम्या यमुना यामिनी यमी।
दक्षा दया च वरदा दाल्भ्यसेव्या पुरन्दरी।। ३९

पौरन्दरी पुलोमेशी पौलोमी पुलकाङ्कुरा।
पुरस्था वनभूर्वन्या वानरी वनचारिणी।। ४०

समस्तवर्णनिलया समस्तवर्णपूजिता।
समस्तवरवर्णाढ्या समस्तगुरुवल्लभा।। ४१

समस्तमुण्डमालाढ्या मालिनी मधुपस्वना।
कोशप्रदा कोशवासा चमत्कृतिरलम्बुसा।। ४२

हासदा सदसद्रूपा सर्ववर्णमयी स्मृतिः।
सर्वाक्षरमयी विद्या मूलविद्येश्वरीश्वरी।। ४३

अकारा षोडशाकारा काराबन्धविमोचिनी।
ककारव्यञ्जना क्रान्ता सर्वमन्त्राक्षरालया।। ४४

अणुरूपाऽप्यमाला च त्रैगुण्याऽप्यपराजिता।
अम्बिकाऽम्बालिका चाम्बा अनन्तगुणमेखला।। ४५

अपर्णा पर्णशाला च साट्टहासा हसन्तिका।
अद्रिकन्याऽप्यट्टहासाऽप्यजराऽस्वाऽप्यरुन्धती।। ४६

अब्जाक्षी चाब्जिनी देवी ह्यम्बुजासनपूजिता।
अब्जहस्ता ह्यब्जपादा चाब्जपूजनतोषिता।। ४७

अकारमातृका देवी सर्वानन्दकरी कला।
आनन्दसुन्दरी आद्या आघूर्णारुणलोचना।। ४८

आदिदेवान्तकाऽक्रूरा आदित्यकुलभूषणा।
आम्बीजमण्डना देवी चाकारमातृकावलिः ॥ ४९

इन्दुस्तुतेन्दुबिम्बास्या इनकोटिसमप्रभा।
इन्दिरा मन्दुराशाला चेतिहासकथास्मृतिः ॥ ५०

इला चेक्षुरसास्वादा इकाराक्षरभूषिता।
इन्द्रस्तुता चेन्द्रपूज्या इनभद्रा इनेश्वरी ॥ ५१

इभगतिरिभगीतिरिकाराक्षरमातृका।
ईश्वरी वैभवप्रख्या चेशानीश्वरवल्लभा ॥ ५२

ईशा कामकला देवी ईकाराश्रितमातृका।
उग्रप्रभोग्रचित्ता च उग्रवामाङ्गवासिनी ॥ ५३

उषा वैष्णवपूज्या च उग्रतारोल्मुकानना।
उमेश्वरीश्वरी श्रेष्ठा उदकस्था ह्युदेश्वरी ॥ ५४

उदकाऽच्छोदकदा च उकारोद्भासमातृका।
ऊष्मा प्यूषा ऊषणा च तथोचितवरप्रदा ॥ ५५

ऋणहर्त्री ऋकारेशी ऋलृवर्णा लृवर्णभाक्।
लृकारभ्रुकुटिर्बाला बालादित्यसमप्रभा ॥ ५६

एणाङ्कमुकुटा चैहा एकाराक्षरबीजिता।
एणप्रिया एणमध्यवासिनी एणवत्सला ॥ ५७

एणाङ्कमध्यसंस्था च एकारोद्भासकूटिनी।
ओङ्कारशेखरा देवी औचित्यपदमण्डिता ॥ ५८

अम्भोजनिलयस्थाना अःस्वरूपा च स्वर्गतिः।
षोडशस्वररूपा च षोडशस्वरगायिनी ॥ ५९

षोडशी षोडशाकारा कमला कमलोद्भवा।
कामेश्वरी कलाभिज्ञा कुमारी कुटिलालका।। ६०

कुटिला कुटिलाकारा कुटुम्बसंयुता शिवा।
कुला कुलपदेशानी कुलेशी कुब्जिका कला।। ६१

कामा कामप्रिया कीरा कमनीया कपर्दिनी।
कालिका भद्रकाली च कालकामान्तकारिणी।। ६२

कपालिनी कपालेशी कर्पूरचयचर्चिता।
कादम्बरी कोमलाङ्गी काश्मीरी कुङ्कुमद्युतिः।। ६३

कुन्ता कुचार्णबीजाढ्या कमनीया कुलाऽकुला।
करालास्या करालाक्षी विकरालस्वरूपिणी।। ६४

काम्यालका कामदुधा कामिनी कामपालिनी।
कन्थाधरा कृपाकर्त्री ककाराक्षरमातृका।। ६५

खड्गहस्ता खर्परेशी खेचरी खगगामिनी।
खेचरीमुद्रया युक्ता खेचरत्वप्रदायिनी।। ६६

खगासना खलोलाक्षी खेटेशी खलनाशिनी।
खेटकायुधहस्ता च खरांशुद्युतिसन्निभा।। ६७

खान्ता खबीजनिलया खकारोल्लासमातृका।
वैखरी बीजनिलया खरा खेचरवल्लभा।। ६८

गुण्या गजास्यजननी गणेशवरदा गया।
गोदावरी गदाहस्ता गङ्गाधरवरप्रदा।। ६९

गोधा गोवाहनेशानी गरलाशनवल्लभा।
गाम्भीर्यभूषणा गङ्गा गकारार्णविभूषणा।। ७०

घृणा घोणाकरस्तुत्या घुर्घुरा घोरनादिनी।
घटस्था घटजासेव्या घनरूपा घुणेश्वरी ।। ७१

घनवाहनसेव्या च घकाराक्षरमातृका।
ङान्ता ङवर्णनिलया ङाणुरूपा ङणालया ।। ७२

ङेशा ङेन्ता ङनाजाप्या ङवर्णाक्षरभूषणा।
चामीकररुचिश्चान्द्री चन्द्रिका चन्द्ररागिणी ।। ७३

चला चलश्चला चेला चन्द्रा चन्द्रकरा चली।
चञ्चुरीकस्वनालापा चमत्कारस्वरूपिणी ।। ७४

चटुली चाटुकी चार्वी चम्पा चम्पकसन्निभा।
चीनांशुकधरा चाद्वी चकारार्णविभूषणा ।। ७५

छत्री च्छत्रधरा च्छिन्ना च्छिन्नमस्ता छटच्छविः।
छायासुतप्रिया च्छाया छवर्णामलमातृका ।। ७६

जगदम्बा जगज्ज्योतिर्ज्योतीरूपा जटाधरा।
जयदा जयकर्त्री च जयस्था जयहासिनी ।। ७७

जगत्प्रिया जगत्पूज्या जगत्कर्त्री जरातुरा।
ज्वरघ्नी जम्भदमनी जगत्प्राणा जयावहा ।। ७८

जम्भारवरदा जैत्री जीवना जीववाक्प्रदा।
जाग्रती च जगन्निद्रा जगद्योनिर्जलन्धरा ।। ७९

जालन्धरधरा जाया जकाराक्षरमातृका।
झम्पा झिंझेश्वरी झान्ता झकाराक्षरमातृका ।। ८०

ञाणुरूपा ञिणावासा ञकोरेशी ञणायुधा।
ञवर्गबीजभूषाढ्या ञकाराक्षरमातृका ।। ८१

टङ्कायुधा टकाराढ्या टोटाक्षी टसुकुन्तला।
टङ्कायुधा टलीरूपा टकाराक्षरमातृका ॥ ८२

ठकुरा ठकुरेशानी ठकारत्रितयेश्वरी।
ठः स्वरूपा ठवर्णाढ्या ठकाराक्षरमातृका ॥ ८३

डक्का डक्केश्वरी डिम्भा डवर्णाक्षरमातृका।
ढिणी ढेहा ढिल्लहस्ता ढकाराक्षरमातृका ॥ ८४

णेशा णान्ता णवर्गान्ता णकाराक्षरभूषणा।
तुरी तुर्या तुलारूपा त्रिपुरा तामसप्रिया ॥ ८५

तोतुला तारिणी तारा सप्तविंशतिरूपिणी।
त्रिपुरा त्रिगुणा ध्येया त्र्यम्बकेशी त्रिलोकधृत् ॥ ८६

त्रिवर्गेशी त्रयी त्र्यक्षी त्रिपदा वेदरूपिणी।
त्रिलोकजननी त्राता त्रिपुरेश्वरपूजिता ॥ ८७

त्रिकोणस्था त्रिकोणेशी कोणत्रयनिवासिनी।
त्रिकोणपूजनतुष्टा त्रिकोणपूजनश्रिता ॥ ८८

त्रिकोणदानसंलग्ना सर्वकोणशुभार्थदा।
वसुकोणस्थिता देवी वसुकोणार्थवादिनी ॥ ८९

वसुकोणपूजिता च षट्चक्रक्रमवासिनी।
नागपत्रस्थिता शारी त्रिवृत्तपूजनार्थदा ॥ ९०

चतुर्द्वाराग्रगा चक्रबाह्यान्तरनिवासिनी।
तामसी तोमरप्रख्या तुम्बुरुस्वननादिनी ॥ ९१

तुलाकोटिस्वना तापी तपसां फलवर्धिनी।
तरलाक्षी तमोहर्त्री तारकासुरघातिनी ॥ ९२

तरी तरणिरूपा च तकाराक्षरमातृका।
स्थली स्थविररूपा च स्थूला स्थाली स्थलाब्जिनी ।। ९३

स्थावरेशा स्थूलमूखी थकाराक्षरमातृका।
दूतिका शिवदूती च दण्डायुधधरा द्युतिः ।। ९४

दया दीनानुकम्पा च दम्भोलिधरवल्लभा।
देशानुचारिणी द्रेक्का द्राविडेशी दवीयसी ।। ९५

दाक्षायणी द्रुमलता देवमाताऽधिदेवता।
दधिजा दुर्लभादेवी देवता परमाक्षरा ।। ९६

दामोदरसुपूज्या च दामोदरवरप्रदा।
दनुपुत्रीविनाशा च दनुपुत्रकुलार्चिता ।। ९७

दण्डहस्ता दण्डिपूज्या दमदा च दमस्थिता।
दशधेनुसुरूपा च दकाराक्षरमातृका ।। ९८

धर्म्या धर्मप्रसूर्धन्या धनदा धनवर्धिनी।
धृतिर्धूती धन्यवधूर्धकाराक्षरमातृका ।। ९९

नलिनी नालिका नाप्या नाराचायुधधारिणी।
नीपोपवनमध्यस्था नागरेशी नरोत्तमा ।। १००

नरेश्वरी नृपाराध्या नृपपूज्या नृपार्थदा।
नृपसेव्या नृपवन्द्या नरनारायणप्रसूः ।। १०१

नर्तकी नीरजाक्षी च नवर्णाक्षरभूषणा।
पद्मेश्वरी पद्ममुखी पत्रयाना परापरा ।। १०२

पारावरासुता पाठा परवर्गविमर्दिनी।
पूः पुरारिवधूः पम्पा पत्नी पत्रीशवाहना ।। १०३

पीवरांसा पतिप्राणा पीतलाक्षी पतिव्रता।
पीठा पीठस्थिताऽपीठा पीतालङ्कारभूषणा ॥ १०४

पुरूरवःस्तुता पात्री पुत्रिका पुत्रदा प्रजा।
पुष्पोत्तंसा पुष्पवती पुष्पमालाविभूषणा ॥ १०५

पुष्पमालातिशोभाढ्या पकाराक्षरमातृका।
फलदा स्फीतवक्त्रा च फेरवारावभीषणा ॥ १०६

फल्गुनी फल्गुतीर्थस्था फवर्णकृतमण्डला।
बलदा बालखिल्या च बाला बलरिपुप्रिया ॥ १०७

बाल्यावस्था बर्बरेशी बकाराकृतिमातृका।
भद्रिका भीमपत्नी च भीमा भर्गशिखा भया ॥ १०८

भयघ्नी भीमनादा च भयानकमुखेक्षणा।
भिल्लीश्वरी भीतिहरा भद्रदा भद्रकारिणी ॥ १०९

भद्रेश्वरी भद्रधरा भद्राख्या भाग्यवर्धिनी।
भगमाला भगावासा भवानी भवतारिणी ॥ ११०

भगयोनिर्भगाकारा भगस्था भगरूपिणी।
भगलिङ्गामृतप्रीता भकाराक्षरमातृका ॥ १११

मान्या मानप्रदा मीना मीनकेतनलालसा।
मदोद्धता मनोन्मान्या मेना मैनाकवत्सला ॥ ११२

मधुमत्ता मधुपूज्या मधुदा मधु माधवी।
मांसाहारा मांसप्रीता मांसभक्ष्या च मांसदा ॥ ११३

मारार्ता मत्स्यरूपा च मत्स्यधाता महत्तरा।
मेरुशृङ्गाग्रतुङ्गास्या मोदकाहारपूजिता ॥ ११४

मातङ्गिनी मधुमत्ता मदमत्ता मदेश्वरी।
मञ्जा मुग्धानना मुग्धा मकाराक्षरभूषणा।। ११५

यशस्विनी यतीशानी यत्नकर्त्री यजुःप्रिया।
यज्ञधात्री यज्ञफला यजुर्वेदऋचांफला।। ११६

यशोदा यतिसेव्या च यात्रा यात्रिकवत्सला।
योगेश्वरी योगगम्या योगेन्द्रजनवत्सला।। ११७

यदुपुत्री यमघ्नी च यकाराक्षरमातृका।
रत्नेश्वरी रमानाथसेव्या रथ्या रजस्वला।। ११८

राज्यदा राजराजेशी रोगहर्त्री रजोवती।
रत्नाकरसुता रम्या रात्री रात्रिपतिप्रभा।। ११९

रक्षोघ्नी राक्षसेशानी रक्षोनाथसमर्चिता।
रतिप्रिया रतिमुख्या रकाराकृतिशेखरा।। १२०

लम्बोदरी ललज्जिह्वा लास्यतत्परमानसा।
लूतातन्तुवितानास्या लक्ष्मीर्लज्जा लयालिनी।। १२१

लोकेश्वरी लोकधात्री लाटस्था लक्षणाकृतिः।
लम्बा लम्बकचोल्लासा लकाराकारवर्धिनी।। १२२

लिङ्गेश्वरी लिङ्गलिङ्गा लिङ्गमाला लसद्द्युतिः।
लक्ष्मीरूपा रसोल्लासा रामा रेवा रजस्वला।। १२३

लयदा लक्षणा लोला लकाराक्षरमातृका।
वाराही वरदात्री च वीरसूर्वीरदायिनी।। १२४

वीरेश्वरी वीरजन्या वीरचर्वणचर्चिता।
वरायुधा वराका च वामना वामनाकृतिः।। १२५

वधूता वधका वध्या वध्यभूर्वाणिजप्रिया।
वसन्तलक्ष्मीर्वटुकी वटुका वटुकेश्वरी॥ १२६

वटुप्रिया वामनेत्रा वामाचारैकलालसा।
वार्ता वाम्या वरारोहा वेदमाता वसुन्धरा॥ १२७

वयोयाना वयस्या च वकाराक्षरमातृका।
शम्भुप्रिया शरच्चर्या शाद्वला शशिवत्सला॥ १२८

शीतद्युतिः शीतरसा शोणोष्ठी शीकरप्रदा।
श्रीवत्सलाञ्छना शर्वा शर्ववामाङ्गवासिनी॥ १२९

शशाङ्कामललक्ष्मीश्च शार्दूलतनुरद्रिजा।
शोषहर्त्री शमीमूला शकाराकृतिशेखरा॥ १३०

षोडशी षोडशीरूपा षढा षोढा षडानना।
षट्कूटा षड्रसास्वादा षडशीतिमुखाम्बुजा॥ १३१

षडास्यजननी षष्ठा षवर्णाक्षरमातृका।
सारस्वतप्रसूः सर्वा सर्वगा सर्वतोमुखा॥ १३२

समा सीता सती माता सागराभयदायिनी।
समस्तशापशमनी सालभञ्जी सुदक्षिणा॥ १३३

सुषुप्तिः सुरसा साध्वी सामगा सामवेदजा।
सत्यप्रिया सोममुखी सूत्रस्था सूतवल्लभा॥ १३४

सनकेशी सुनन्दा च स्ववर्गस्था सनातनी।
सेतुभूता समस्ताशा सकाराक्षरवल्लभा॥ १३५

हालाहलप्रिया हेला हाहारावविभूषणा।
हाहाहूहूस्वरूपा च हलधात्री हलिप्रिया॥ १३६

हरिनेत्रा घोररूपा हविष्या हूतिवल्लभा।
हं क्षं लं क्षः स्वरूपा च सर्वमातृकपूजिता ॥ १३७

ओं ऐं सौः ह्रीं महाविद्या आं शां फ्रां हूं स्वरूपिणी।
इति श्री शारिकादेव्या मन्त्रनामसहस्रकम् ॥ १३८

पुण्यं पुण्यजनस्तुत्यं नुत्यं वैष्णवपूजितम्।
इदं यः पठते देवि श्रावयेद्यः शृणोति च ॥ १३९

स एव भगवान् देवः सत्यं सत्यं सुरेश्वरि।
एककालं द्विकालं वा त्रिकालं पठते नरः ॥ १४०

वामाचारपरो देवि तस्य पुण्यफलं शृणु।
मूकत्वं बधिरत्वं च कुष्ठं हन्याच्च श्वित्रिकाम् ॥ १४१

वातपित्तकफान् गुल्मान् रक्तस्रावं विषूचिकाम्।
सद्यः शमयते देवि श्रद्धया च पठेन्निशि ॥ १४२

अपस्मारं कर्णपीडां शूलं रौद्रं भगन्दरम्।
मासमात्रं पठेद्यस्तु स रोगैर्मुच्यते ध्रुवम् ॥ १४३

भौमे शनिदिने वापि चक्रमध्ये पठेद्यदि।
सद्यस्तस्य महेशानि शारिका वरदा भवेत् ॥ १४४

रुद्रयामलतः।

—*—

# श्रीशारिकासहस्रनामावलिः

ओं ह्रीं श्रीं हूं फ्रां आं शां नमः। श्रीशारिकायै। श्यामसुन्दर्यै। शिलायै। शार्यै। शुक्यै। शान्तायै। शान्तमानसगोचरायै। शान्तिस्थायै। शान्तिदायै। शान्त्यै। श्यामायै। श्यामपयोधरायै। देव्यै। शशाङ्कबिम्बाभायै। शशाङ्ककृतशेखरायै। शशाङ्कशोभि-लावण्यायै। शशाङ्कमध्यवासिन्यै। शार्दूलवाहायै। देवेश्यै नमः॥ २०

ओं शार्दूलस्थित्यै नमः। उत्तमायै। शार्दूलचर्मवसनायै। शक्त्यै। शार्दूलवाहनायै। गौर्यै। पद्मावत्यै। पीनायै। पीनवक्षोज-कुट्मलायै। पीतांबरायै। रक्तदन्तायै। दाडिमीकुसुमोपमायै। स्फुरद्रत्नांशुखचितायै। रत्नमण्डलविग्रहायै। रक्तांबरधरायै देव्यै। रत्नमालाविभूषणायै। रत्नसंमूर्च्छितात्मने। दीप्तायै। दीप्तशिखायै। दयायै नमः॥ ४०

ओं दयावत्यै नमः। कल्पलतायै। कल्पान्तदहनोपमायै। भैरव्यै। भीमनादायै। भयानकमुख्यै। भगायै। कारायै। कारुण्यरूपायै। भगमालविभूषणायै। भगेश्वर्यै। भगस्थायै। कुरुकुल्लायै। कृशोदर्यै। कादंबर्यै। पटोत्कृष्टायै। परमायै। परमेश्वर्यै। सत्यै। सरस्वत्यै नमः॥ ६०

ओं सत्यायै नमः। सत्यासत्यस्वरूपिण्यै। परंपरायै। पटाकारायै। पाटलायै। पाटलप्रभायै। पद्मिन्यै। पद्मवदनायै। पद्मायै। पद्माकरायै। शिवायै। शिवाश्रयायै। शरदे। शान्तायै। शच्यै। रंभायै। विभावर्यै। द्युमण्यै। तरणायै। पाठायै नमः॥ ८०

ओं पीठेश्यै नमः । पीवराकृत्यै । अचिन्त्यायै । मुसलाधारायै । मातङ्ग्यै । मधुरस्वनायै । वीणागीतप्रियायै । गाथायै । गारुड्यै । गरुडध्वजायै । अतीवसुन्दराकारायै । सुन्दर्यै । सुन्दरालकायै । अलकायै । नाकमध्यस्थायै । नाकिन्यै । नाकिपूजितायै । पातालेश्वरपूज्यायै । पातालतलचारिण्यै । अनन्तायै नमः ।। १००

ओं अनन्तरूपायै नमः । अज्ञातायै । ज्ञानवर्धिन्यै । अमेयायै । अप्रमेयायै । अनन्तादित्यरूपिण्यै । द्वादशादित्यसंपूज्यायै । शम्यै । श्यामाकबीजिन्यै । विभासायै । भासुरवर्णायै । समस्तासुरघातिन्यै । सुधामय्यै । सुधामूर्त्यै । सुधायै । सर्वप्रियंकर्यै । सुखदायै । सुरेशान्यै । कृशानुवल्लभायै । हविषे नमः ।। १२०

ओं स्वाहायै नमः । स्वाहेशनेत्रायै । अग्निवक्त्रायै । अग्नितर्पितायै । सोमसूर्याग्निनेत्रायै । भूर्भुवःस्वःस्वरूपिण्यै । भूम्यै । भूदेवपूज्यायै । स्वयंभ्वै । स्वात्मपूजकायै । स्वयंभूपुष्पमालाढ्यायै । स्वयंभूपुष्पवल्लभायै । आनन्दकन्दल्यै । कन्दायै । स्कन्दमात्रे । शिलालयायै । चेतनायै । चिदे । भवाकारायै । भवपल्यै नमः ।। १४०

ओं भयापहायै नमः । विघ्नेश्वर्यै । गणेशान्यै । विघ्नविध्वंसिन्यै । निशायै । वश्यायै । वशिजनस्तुत्यायै । स्तुत्यै । श्रुतिधरायै । श्रुत्यै । शास्त्रविधानविज्ञायै । वेदशास्त्रार्थकोविदायै । वेद्यायै । विद्यामय्यै । विद्यायै । विधातृवरदायै । वध्वै । वधूरूपायै । वधूपूज्यायै । वधूपानप्रतर्पितायै नमः ।। १६०

ओं वधूपूजनसन्तुष्टायै नमः । वधूमालाविभूषणायै । वामायै । वामेश्वर्यै । वाम्यायै । कुलाकुलविचारिण्यै । वितर्कतर्कनिलयायै । प्रलयानलसन्निभायै । यज्ञेश्वर्यै । यज्ञमुखायै । याजकायै । यज्ञपात्रकायै । यक्षेश्वर्यै । यक्षधात्र्यै । पार्वत्यै । पर्वताश्रयायै । पिलंपिलायै । पदस्थानायै । पददायै । नरकान्तकायै नमः ।। १८०

ओं नार्यै नमः । नर्मप्रियायै । श्रीदायै । श्रीदश्रीदायै । शरायुधायै । कामेश्वर्यै । रत्यै । हूत्यै । आहुत्यै । हव्यवाहनायै । हरेश्वर्यै । हरिवध्वै । हाटकाङ्गदमण्डितायै । हपुषायै । स्वर्गत्यै । वेद्यायै । सुमुखायै । महौषध्यै । सर्वरोगहरायै । माध्व्यै नमः ।। २००

ओं मधुपानपरायणायै नमः । मधुस्थितायै । मधुमय्यै । मधुदानविशारदायै । मधुतृप्तायै । मधुरूपायै । मधूककुसुमप्रभायै । माधव्यै । माधवीवल्लयै । मधुमत्तायै । मदालसायै । मारप्रियायै । मारपूज्यायै । मारदेवप्रियंकर्यै । मारेश्यै । मृत्युहरायै । हरिकान्तायै । मनोन्मनायै । महावैद्यप्रियायै । वैद्यायै नमः ।। २२०

ओं वैद्याचारायै नमः । सुरार्चितायै । सामन्तायै । पीनवपुष्यै । गुर्व्यै । गुर्व्यै । गरीयस्यै । कालान्तकायै । कालमुख्यै । कठोरायै । करुणामय्यै । नीलायै । नाभ्यै । वागीश्यै । दूर्वायै । नीलसरस्वत्यै । अपारायै । पारगायै । गम्यायै । गत्यै नमः ।। २४०

ओं प्रीत्यै नमः । पयोधरायै । पयोदसदृशच्छायायै । पारदाकृतिलालसायै । सरोजनिलयायै । नीत्यै । कीर्त्यै । कीर्तिकर्यै । कथायै । काश्यै । काम्यायै । कपर्दीशायै । काशपुष्पोपमायै । रमायै । रामायै । रामप्रियायै । रामभद्रदेवसमर्चितायै । रामसंपूजितायै । रामसिद्धिदायै । रामराज्यदायै नमः ।। २६०

ओं रामभद्रार्चितायै नमः । रेवायै । देवक्यै । देववत्सलायै । देवपूज्यायै । देववन्द्यायै । देवदानवचर्चितायै । दूत्यै । द्रुतगत्यै । दंभायै । दामिन्यै । विजयायै । जयायै । अशेषसुरसंपूज्यायै । निःशेषासुरसूदिन्यै । वटिन्यै । वटमूलस्थायै । लास्यहास्यैक-वल्लभायै । अरूपायै । निर्गुणायै नमः ।। २८०

ओं सत्यायै नमः । सदासन्तोषवर्धिन्यै । सोम्यायै । यजुर्वहायै । याम्यायै । यमुनायै । यामिन्यै । यम्यै । दक्षायै । दयायै । वरदायै । दाल्भ्यसेव्यायै । पुरन्दर्यै । पौरन्दर्यै । पुलोमेभ्यै । पौलोम्यै । पुलकाङ्कुरायै । पुरस्थायै । वनभुवे । वन्यायै नमः ।। ३००

ओं वानर्यै नमः । वनचारिण्यै । समस्तवर्णनिलयायै । समस्तवर्णपूजितायै । समस्तवरवर्णाढ्यायै । समस्तगुरुवल्लभायै । समस्तमुण्डमालाढ्यायै । मालिन्यै । मधुपस्वनायै । कोशप्रदायै । कोशवासायै । चमत्कृत्यै । अलंबुसायै । हासदायै । सदसद्रूपायै । सर्ववर्णमय्यै । स्मृत्यै । सर्वाक्षरमय्यै । विद्यायै । मूलविद्येश्वर्यै नमः ।। ३२०

ओं ईश्वर्यै नमः । अकारायै । षोडशाकारायै । काराबन्ध-विमोचन्यै । ककारव्यञ्जनायै । क्रान्तायै । सर्वमन्त्राक्षरालयायै । अणुरूपायै । अमालायै । त्रैगुण्यायै । अपराजितायै । अंबिकायै । अंबालिकायै । अंबायै । अनन्तगुणमेखलायै । अपर्णायै । पर्णशालायै । साट्टहासायै । हसन्तिकायै । अद्रिकन्यायै नमः ।। ३४०

ओं अट्टहासायै नमः । अजरायै । अस्वायै । अरुन्धत्यै । अब्जाक्ष्यै । अब्जिन्यै देव्यै । अंबुजासनपूजितायै । अब्जहस्तायै । अब्जपादायै । अब्जपूजनतोषितायै । अकारमातृकायै देव्यै । सर्वानन्दकर्यै । कलायै । आनन्दसुन्दर्यै । आद्यायै । आघूर्णारुण-लोचनायै । आदिदेवायै । अन्तकायै । अक्रूरायै । आदित्यकुलभूषणायै नमः ।। ३६०

ओं आंबीजमण्डनायै देव्यै नमः । आकारमातृकावल्यै । इन्दुस्तुतायै । इन्दुबिम्बास्यायै । इनकोटिसमप्रभायै । इन्दिरायै ।

मन्दुराशालायै । इतिहासकथास्मृत्यै । इलायै । इक्षुरसास्वादायै । इकाराक्षरभूषितायै । इन्द्रस्तुतायै । इन्द्रपूज्यायै । इनभद्रायै । इनेश्वर्यै । इभगत्यै । इभगीत्यै । इकाराक्षरमातृकायै । ईश्वर्यै । वैभवप्रख्यायै नमः ।। ३८०

ओं ईशान्यै नमः । ईश्वरवल्लभायै । ईशायै । कामकलादेव्यै । ईकाराश्रितमातृकायै । उग्रप्रभायै । उग्रचित्तायै । उग्रवामाङ्ग-वासिन्यै । उषायै । वैष्णवपूज्यायै । उग्रतारायै । उल्मुकाननायै । उमेश्वर्यै । ईश्वर्यै । श्रेष्ठायै । उदकस्थायै । उदेश्वर्यै । उदकायै । अच्छोदकदायै । उकारोद्धासमातृकायै नमः ।। ४००

ओं ऊष्मणे नमः । ऊषायै । ऊषणायै । उचितवरप्रदायै । ऋणहर्त्र्यै । ऋकारेश्यै । ऋलृवर्णायै । लृवर्णभाजे । लृकारभ्रुकुट्यै । बालायै । बालादित्यसमप्रभायै । एणाङ्कमकुटायै । एहायै । एकाराक्षरबीजितायै । एणप्रियायै । एणमध्यवासिन्यै । एणवत्स-लायै । एणाङ्कमध्यसंस्थायै । एकारोद्धासकूटिन्यै । ओंकारशेखरायै देव्यै नमः ।। ४२०

ओं औचित्यपदमण्डितायै नमः । अंभोजनिलयस्थानायै । अःस्वरूपायै । स्वर्गत्यै । षोडशस्वररूपायै । षोडशस्वरगायिन्यै । षोडश्यै । षोडशाकारायै । कमलायै । कमलोद्भवायै । कामेश्वर्यै । कलाभिज्ञायै । कुमार्यै । कुटिलालकायै । कुटिलायै । कुटिलाकारायै । कुटुम्बसंयुतायै । शिवायै । कुलायै । कुलपदेशान्यै नमः ।। ४४०

ओं कुलेश्यै नमः । कुब्जिकायै । कलायै । कामायै । कामप्रियायै । कीरायै । कमनीयायै । कपर्दिन्यै । कालिकायै । भद्रकाल्यै । कालकामान्तकारिण्यै । कपालिन्यै । कपालेश्यै । कर्पूरचयचर्चितायै । कादंबर्यै । कोमलांग्यै । काश्मीर्यै । कुंकुमद्युत्यै । कुन्तायै । कुचार्णबीजाढ्यायै नमः ।। ४६०

ओं कमनीयायै नमः । कुलायै । अकुलायै । करालास्यायै । करालाक्ष्यै । विकरालस्वरूपिण्यै । काम्यालकायै । कामदुघायै । कामिन्यै । कामपालिन्यै । कन्थाधरायै । कृपाकर्त्र्यै । ककाराक्षर-मातृकायै । खड्गहस्तायै । खर्परेश्यै । खेचर्यै । खगगामिन्यै । खेचरीमुद्रया युक्तायै । खेचरत्वप्रदायिन्यै । खगासनायै नमः ।। ४८०

ओं खलोलाक्ष्यै नमः । खेटेश्यै । खलनाशिन्यै । खेटकायुध-हस्तायै । खरांशुद्युतिसन्निभायै । खान्तायै । खबीजनिलयायै । खकारोल्लासमातृकायै । वैखर्यै । बीजनिलयायै । खरायै । खेचरवल्लभायै । गुण्यायै । गजास्यजनन्यै । गणेशवरदायै । गयायै । गोदावर्यै । गदाहस्तायै । गङ्गाधरवरप्रदायै । गोधायै नमः ।। ५००

ओं गोवाहनेशान्यै नमः । गरलाशनवल्लभायै । गांभीर्य-भूषणायै । गङ्गायै । गकारार्णविभूषणायै । घृणायै । घोणाकर-स्तुत्यायै । घुर्घुरायै । घोरनादिन्यै । घटस्थायै । घटजासेव्यायै । घनरूपायै । घुणेश्वर्यै । घनवाहनसेव्यायै । घकाराक्षरमातृकायै । ङान्तायै । ङवर्णनिलयायै । ङाणुरूपायै । ङणालयायै । ङेशायै नमः ।। ५२०

ओं ङेन्तायै नमः । ङनाजाप्यायै । ङवर्णाक्षरभूषणायै । चामीकररुच्यै । चान्द्र्यै । चन्द्रिकायै । चन्द्ररागिण्यै । चलायै । चलञ्चलायै । चेलायै । चन्द्रायै । चन्द्रकरायै । चल्यै । चञ्चुरीक-स्वनालापायै । चमत्कारस्वरूपिण्यै । चटुल्यै । चाटुक्यै । चार्व्यै । चंपायै । चंपकसन्निभायै नमः ।। ५४०

ओं चीनांशुकधरायै नमः । चाङ्च्यै । चकारार्णविभूषणायै । छत्र्यै । छत्रधरायै । छिन्नायै । छिन्नमस्तायै । छटच्छट्यै । छायासुतप्रियायै । छायायै । छवर्णामलमातृकायै । जगदंबायै ।

जगज्ज्योतिषे । ज्योतीरूपायै । जटाधरायै । जयदायै । जयकर्त्र्यै । जयस्थायै । जयहासिन्यै । जगत्प्रियायै नमः ।। ५६०

ओं जगत्पूज्यायै नमः । जगत्कर्त्र्यै । जरातुरायै । ज्वरघ्न्यै । जंभदमन्यै । जगत्प्राणायै । जयावहायै । जंभारवरदायै । जैत्र्यै । जीवनायै । जीववाक्प्रदायै । जाग्रत्यै । जगन्निद्रायै । जगद्योन्यै । जलन्धरायै । जालन्धरधरायै । जायायै । जकाराक्षरमातृकायै । झंपायै । झिञ्झेश्वर्यै नमः ।। ५८०

ओं झान्तायै नमः । झकाराक्षरमातृकायै । ञाणुरूपायै । ञिणावासायै । ञकारेश्यै । ञणायुधायै । ञवर्गबीजभूषाढ्यायै । ञकाराक्षरमातृकायै । टङ्कायुधायै । टकाराढ्यायै । टोटाक्ष्यै । टसुकुन्तलायै । टङ्कायुधायै । टलीरूपायै । टकाराक्षरमातृकायै । ठक्कुरायै। ठक्कुरेशान्यै। ठकारत्रितयेश्वर्यै। ठःस्वरूपायै। ठवर्णाढ्यायै नमः ।। ६००

ओं ठकाराक्षरमातृकायै नमः । डक्कायै। डक्केश्वर्यै। डिंभायै। डवर्णाक्षरमातृकायै । ढिण्यै । ढेहायै । ढिल्लहस्तायै । ढकाराक्षर-मातृकायै । णेशायै। णान्तायै। णवर्गान्तायै। णकाराक्षरभूषणायै । तुर्यै। तुर्यायै। तुलारूपायै। त्रिपुरायै। तामसप्रियायै। तोतुलायै। तारिण्यै नमः ।। ६२०

ओं तारायै नमः । सप्तविंशतिरूपिण्यै। त्रिपुरायै। त्रिगुणायै । ध्येयायै । त्र्यंबकेश्यै । त्रिलोकधृते । त्रिवर्गेश्यै । त्रय्यै । त्र्यक्ष्यै । त्रिपदायै । वेदरूपिण्यै । त्रिलोकजनन्यै । त्रातायै । त्रिपुरेश्वर-पूजितायै । त्रिकोणस्थायै । त्रिकोणेश्यै । कोणत्रयनिवासिन्यै । त्रिकोणपूजनतुष्टायै। त्रिकोणपूजनश्रितायै नमः ।। ६४०

ओं त्रिकोणदानसंलग्नायै नमः । सर्वकोणशुभार्थदायै । वसुकोणस्थितायै देव्यै । वसुकोणार्थवादिन्यै । वसुकोणपूजितायै । षट्चक्रक्रमवासिन्यै । नागपत्रस्थितायै । शार्यै । त्रिवृत्तपूजनार्थदायै । चतुर्द्वाराग्रगायै । चक्रबाह्यान्तरनिवासिन्यै । तामस्यै । तोमरप्रख्यायै । तुंबुरुस्वरनादिन्यै । तुलाकोटिस्वनायै । ताप्यै । तपसां फलवर्धिन्यै । तरलाक्ष्यै । तमोहर्त्र्यै । तारकासुरघातिन्यै नमः ॥ ६६०

ओं तर्यै नमः । तरणिरूपायै । तकाराक्षरमातृकायै । स्थल्यै । स्थविररूपायै । स्थूलायै । स्थाल्यै । स्थलाब्जिन्यै । स्थावरेशायै । स्थूलमुख्यै । थकाराक्षरमातृकायै । दूतिकायै । शिवदूत्यै । दण्डायुधधरायै । द्युत्यै । दयायै । दीनानुकंपायै । दंभोलिधरवल्लभायै । देशानुचारिण्यै । द्रेकायै नमः ॥ ६८०

ओं द्राविडेश्यै नमः । दवीयस्यै । दाक्षायण्यै । द्रुमलतायै । देवमात्रे । अधिदेवतायै । दधिजायै । दुर्लभायै देव्यै । देवतायै । परमाक्षरायै । दामोदरसुपूज्यायै । दामोदरवरप्रदायै । दनुपुत्रीविनाशायै । दनुपुत्रकुलार्चितायै । दण्डहस्तायै । दण्डिपूज्यायै । दमदायै । दमस्थितायै । दशधेनुसुरूपायै । दकाराक्षरमातृकायै नमः ॥ ७००

ओं धर्म्यायै नमः । धर्मप्रसुवे । धन्यायै । धनदायै । धनवर्धिन्यै । धूत्यै । धूत्यै । धन्यवध्वै । धकाराक्षरमातृकायै । नलिन्यै । नालिकायै । नाप्यायै । नाराचायुधधारिण्यै । नीपोपवनमध्यस्थायै । नागरेश्यै । नरोत्तमायै । नरेश्वर्यै । नृपाराध्यायै । नृपपूज्यायै । नृपार्थदायै नमः ॥ ७२०

ओं नृपसेव्यायै नमः । नृपवन्द्यायै । नरनारायणप्रसुवे । नर्तक्यै । नीरजाक्ष्यै । नवर्णाक्षरभूषणायै । पद्मेश्वर्यै । पद्ममुख्यै ।

पत्रयानायै। परापरायै। पारावारसुतायै। पाठायै। परवर्गविमर्दिन्यै । पुरे। पुरारिवध्वै। पंपायै। पल्व्यै। पत्रीशबाहनायै। पीवरांसायै। पतिप्राणायै। नमः ।। ७४०

ओं पीतलाक्ष्यै नमः। पतिव्रतायै। पीठायै। पीठस्थितायै। अपीठायै। पीतालंकारभूषणायै। पुरूरवःस्तुतायै। पात्र्यै। पुत्रिकायै। पुत्रदायै। प्रजायै। पुष्पोत्तंसायै। पुष्पवत्यै। पुष्पमाला-विभूषणायै। पुष्पमालातिशोभाढ्यायै। पकाराक्षरमातृकायै। फलदायै। स्फीतवस्त्रायै। फेरवारावभीषणायै। फल्गुन्यै नमः ।। ७६०

ओं फल्गुतीर्थस्थायै नमः। फवर्णकृतमण्डलायै। बलदायै। बालखिल्यायै। बालायै। बलरिपुप्रियायै। बाल्यावस्थायै। बर्बरेश्यै। बकाराकृतिमातृकायै। भद्रिकायै। भीमपत्न्यै। भीमायै। भर्गशिखायै। भयायै। भयघ्न्यै। भीमनादायै। भयानकमुखे-क्षणायै। भिल्लीश्वर्यै। भीतिहरायै। भद्रदायै नमः ।। ७८०

ओं भद्रकारिण्यै नमः। भद्रेश्वर्यै। भद्रधरायै। भद्राख्यायै। भाग्यवर्धिन्यै। भगमालायै। भगावासायै। भवान्यै। भवतारिण्यै। भगयोन्यै। भगाकारायै। भगस्थायै। भगरूपिण्यै। भगलिङ्गा-मृतप्रीतायै। भकाराक्षरमातृकायै। मान्यायै। मानप्रदायै। मीनायै। मीनकेतनलालसायै। मदोद्धतायै नमः ।। ८००

ओं मनोन्मान्यायै नमः। मेनायै। मैनाकवत्सलायै। मधुमत्तायै। मधुपूज्यायै। मधुदायै। मधुने। माधव्यै। मांसाहारायै। मांसप्रीतायै। मांसभक्ष्यायै। मांसदायै। मारार्त्यै। मत्स्यरूपायै। मत्स्यधात्रे। महत्तरायै। मेरुशृङ्गाग्रतुङ्गास्यायै। मोदकाहार-पूजितायै। मातङ्गिन्यै। मधुमत्तायै नमः ।। ८२०

ओं मदमत्तायै नमः । मदेश्वर्यै । मञ्जायै । मुग्धाननायै । मुग्धायै । मकाराक्षरभूषणायै । यशस्विन्यै । यतीशान्यै । यत्नकर्त्र्यै । यजुःप्रियायै । यज्ञधात्र्यै । यज्ञफलायै । यजुर्वेदऋचांफलायै । यशोदायै । यतिसेव्यायै । यात्रायै । यात्रिकवत्सलायै । योगेश्वर्यै । योगगम्यायै । योगेन्द्रजनवत्सलायै नमः ।। ८४०

ओं यदुपुत्र्यै नमः । यमघ्न्यै । यकाराक्षरमातृकायै । रत्नेश्वर्यै । रमानाथसेव्यायै । रथ्यायै । रजस्वलायै । राज्यदायै । राजराजेश्यै । रोगहर्त्र्यै । रजोवत्यै । रत्नाकरसुतायै । रम्यायै । रात्र्यै । रात्रिपति-प्रभायै । रक्षोघ्न्यै । राक्षसेशान्यै । रक्षोनाथसमर्चितायै । रतिप्रियायै । रतिमुख्यायै नमः ।। ८६०

ओं रकाराकृतिशेखरायै नमः । लंबोदर्यै । ललज्जिह्वायै । लास्यतत्परमानसायै । लूतातन्तुवितानास्यायै । लक्ष्म्यै । लज्जायै । लयालिन्यै । लोकेश्वर्यै । लोकधात्र्यै । लाटस्थायै । लक्षणाकृत्यै । लंबायै । लंबकचोल्लासायै । लकाराकारवर्धिन्यै । लिङ्गेश्वर्यै । लिङ्गलिङ्गायै । लिङ्गमालायै । लसद्घृत्यै । लक्ष्मीरूपायै नमः ।। ८८०

ओं रसोल्लासायै नमः । रामायै । रेवायै । रजस्वलायै । लयदायै । लक्षणायै । लोलायै । लकाराक्षरमातृकायै । वाराह्यै । वरदात्र्यै । वीरसुवे । वीरदायिन्यै । वीरेश्वर्यै । वीरजन्यायै । वीरचर्वणचर्चितायै । वरायुधायै । वराकायै । वामनायै । वामनाकृत्यै । वधूतायै नमः ।। ९००

ओं वधकायै नमः । वध्यायै । वध्यभुवे । वाणिजप्रियायै । वसन्तलक्ष्म्यै । वटुक्यै । वटुकायै । वटुकेश्वर्यै । वटुप्रियायै । वाम-नेत्रायै । वामाचारैकलालसायै । वार्तायै । वाम्यायै । वरारोहायै । वेदमात्रे । वसुन्धरायै । वयोयानायै । वयस्यायै । वकाराक्षरमातृकायै । शंभुप्रियायै नमः ।। ९२०

ओं शरच्चर्यायै नमः । शाद्वलायै । शशिवत्सलायै । शीतद्युत्यै । शीतरसायै । शोणोष्ठ्यै । शीकरप्रदायै । श्रीवत्सलाञ्छनायै । शर्वायै । शर्ववामाङ्गवासिन्यै । शशाङ्कामललक्ष्म्यै । शार्दूलतन्व्यै । अद्रिजायै । शोषहर्त्र्यै । शमीमूलायै । शकाराकृतिशेखरायै । षोडश्यै । षोडशीरूपायै । षढायै । षोढायै नमः ।। ९४०

ओं षडाननायै नमः । षट्कूटायै । षड्रसास्वादायै । षडशीतिमुखांबुजायै । षडास्यजनन्यै । षष्ठायै । षवर्णाक्षरमातृकायै । सारस्वतप्रसुवे । सर्वायै । सर्वगायै । सर्वतोमुखायै । समायै । सीतायै । सत्यै । मात्रे । सागराभयदायिन्यै । समस्तशापशमन्यै । सालभंज्यै । सुदक्षिणायै । सुषुप्त्यै नमः ।। ९६०

ओं सुरसायै नमः । साध्व्यै । सामगायै । सामवेदजायै । सत्यप्रियायै । सोममुख्यै । सूत्रस्थायै । सूतवल्लभायै । सनकेश्यै । सुनन्दायै । स्ववर्गस्थायै । सनातन्यै । सेतुभूतायै । समस्ताशायै । सकाराक्षरवल्लभायै । हालाहलप्रियायै । हेलायै । हाहाराव-विभूषणायै । हाहाहूहूस्वरूपायै । हलधात्र्यै नमः ।। ९८०

ओं हलिप्रियायै नमः । हरिनेत्रायै । घोररूपायै । हविष्यायै । हूतिवल्लभायै । हं । क्षं । लं । क्षःस्वरूपायै । सर्वमातृकपूजितायै । ओं । ऐं । सौः । ह्रीं । महाविद्यायै । आं । शां । फ्रां । हूं स्वरूपिण्यै । श्रीशारिकायै नमः ।। १०००

# तुलसीसहस्रनामावलिः

ओं तुलस्यै नमः । श्रीप्रदायै। भद्रायै। श्रीविष्णुप्रियकारिण्यै । क्षीरवारिधिसंभूतायै। भूतानामभयङ्कर्यै। महेश्वराप्लवायै। सिद्धये। सिद्धिदायै । सिद्धपूजितायै । सिद्धान्तगम्यायै । सिद्धेशप्रियायै । सिद्धजनार्थदायै । नारदानुग्रहायै । देव्यै । भक्ताभद्रप्रणाशिन्यै । श्यामजायै। चपलायै। श्यामायै। श्यामांग्यै नमः ।। २०

ओं सर्वसुन्दर्यै नमः । कामदायै । चामुण्ड्यै । त्रैलोक्य-विजयप्रदायै। कृष्णरोमायै। कृष्णवेण्यै। बृन्दावन-विलासिन्यै । हृद्धचेयायै । पञ्चमहिष्यै । ईश्वर्यै । सरस्वत्यै । करालविक्रमायै । कामायै । गौर्यै । काल्यै । शांभव्यै । नित्यायै । निगमवेद्यायै । निखिलागमरूपिण्यै। निरंजनायै नमः ।। ४०

ओं नित्यसुखायै नमः । चन्द्रवक्त्रायै । मत्यै । मह्यै । चन्द्रहासायै । चन्द्रलिप्तायै । चन्दनाक्तस्तनद्वयायै । वैष्णव्यै । विष्णुवनितायै । विष्ण्वाराधनलालसायै । उमायै । चण्ड्यै । ब्रह्मविद्यायै । मारमात्रे । वरद्युतये । द्वादशीपूजितायै । रम्यायै । द्वादशीसुप्रियायै। रत्यै। धृत्यै नमः ।। ६०

ओं कृत्यै नमः । नत्यै । शान्त्यै । शान्तिदायै । त्रिफलायै । शुचये। शुभानुरागायै। हरिद्वर्णायै। शुभावहायै। शुभायै। शुभान-नायै । सुभ्रुवे। भूर्भुवःस्वःस्थवन्दितायै। पञ्जिकायै। काशिकायै । पंक्त्यै। मुक्त्यै। मुक्तिप्रदायै। वरायै। दिव्यशाखायै नमः ।। ८०

ओं भव्यरूपायै नमः । मीमांसायै । भव्यरूपिण्यै । दिव्यवेण्यै । हरिद्रूपायै । सृष्टिदात्र्यै । स्थितिप्रदायै । काल्यै । करालनेपथ्यायै । ब्रह्मरूपायै । शिवात्मिकायै । पर्वमानायै । पूर्णातारायै। राकायै। राकास्ववर्णभासे। सुवर्णवेद्यै। सौवर्णरत्न-पीठसमाश्रितायै। विशालायै। निष्कलायै। वृष्ट्यै नमः ।। १००

ओं वृक्षवेद्यायै नमः । पदात्मिकायै । विष्णुपादाश्रितायै । वेद्यै । विधिसूतायै । महालिकायै । सूतिकायै । सुहितायै । सूरि-गम्यायै । सूर्यप्रकाशिकायै । काशिन्यै । काशितनयायै । काशिराज-वरप्रदायै । क्षीराब्धिपूजाविरतायै । आद्यायै । क्षीरप्रियायै । अमृतायै । क्षीरकंण्ठ्यै । सहस्राक्ष्यै । शोणायै नमः ॥ १२०

ओं भुजगपादुकायै नमः । उषसे । बुद्धायै । त्रियामायै । श्यामलायै । श्रीप्रदायै । तनवे । सरस्वतीड्यायै । शर्वाण्यै । शर्वाणीशप्रियंकर्यै । आद्यलक्ष्म्यै । अन्त्यलक्ष्म्यै । सुगुणायै । निर्गुणायै । सत्यै । निर्वाणमार्गदायै । देव्यै । क्षीरिण्यै । हसिन्यै । क्षमायै नमः ॥ १४०

ओं क्षमावत्यै नमः । क्षमानाथायै । निर्विद्यायै । नीरजायै । विद्यकायै । क्षित्यै । ब्रह्माण्यै । रात्रिरूपायै । शाखायै । बालात्मिकायै । बलायै । भारत्यै । विशिखायै । पद्मायै । गरिम्णे । हंसगामिन्यै । गौर्यै । भूत्यै । विरक्तायै । भूधात्र्यै । भूतिदायै नमः ॥ १६०

ओं भूत्यै नमः । प्रभञ्जन्यै । सुपुष्टांग्यै । माहेन्द्र्यै । जाल-रूपिण्यै । पद्मार्चितायै । पद्मजेड्यायै । पथ्यायै । पद्माननायै । अद्भुतायै । पुण्यायै । पुण्यप्रदायै । वेद्यायै । लेख्यायै । वृक्षात्मिकायै । स्थिरायै । गोमत्यै । जाह्नव्यै । गम्यायै । गंगायै नमः ॥ १८०

ओं सप्तशिखात्मिकायै नमः । लक्षणायै । सर्ववेदार्थसंपत्त्यै । कल्पकायै । अरुणायै । कलिकायै । कुड्मलाग्रायै । मायायै । अनन्तायै । विराधिकायै । अविद्यावासनानाग्यै (श्यै) । नागकन्यायै । कलाननायै । बीजालीनायै । मन्त्रफलायै । सर्वलक्षणलक्षितायै । वने स्ववृक्षरूपेण रोपितायै । नाकिवन्दितायै । वनप्रियायै । वनचरायै नमः ॥ २००

ओं सद्धरायै नमः । पर्वलक्षणायै । मञ्जरीभिर्विराजन्त्यै । सुगन्धायै । सुमनोहरायै । सत्यै । आधारशक्त्यै । चिच्छक्त्यै । वीरशक्तिकायै । आग्नेय्यै तन्वै । पार्थिवायै तन्वै । आप्यायै तन्वै । वायव्यै तन्वै । स्वरिन्यै तन्वै । नित्यायै । नियतकल्याणायै । शुद्धायै । शुद्धात्मिकायै । परायै । संसारतारिकायै नमः ।। २२०

ओं भैम्यै नमः । क्षत्रियान्तकर्यै । क्षत्यै । सत्यगर्भायै । सत्यरूपायै । सव्यासव्यपरायै । अद्भुतायै । सव्यार्थिन्यै । सर्वदात्र्यै । सव्येशानप्रियायै । अंबिकायै । अश्वकर्णायै । सहस्रांशुप्रभायै । कैवल्यतत्परायै । यज्ञार्थिन्यै । यज्ञदात्र्यै । यज्ञभोक्त्र्यै । दुरुद्धरायै । परश्वथधरायै । राधायै नमः ।। २४०

ओं रेणुकायै नमः । भीतिहारिण्यै । प्राच्यै । प्रतीच्यै । गरुडायै । विष्वक्सेनायै । धनंजयायै । कामाक्ष्यै । क्षीरकण्ठायै । कामदायै । उद्दामकाण्डगायै । चामुण्डायै । लोकमात्रे । पार्वत्यै । परमाद्भुतायै । ब्रह्मविद्यायै । मन्त्रविद्यायै । मोक्षविद्यायै । महाचित्यै । कामुकायै नमः ।। २६०

ओं कामदात्र्यै नमः । काम्यशफायै । दिवा । निशा । घटिकायै । कलायै । काष्ठायै । मासरूपायै । शरद्धरायै । रुद्रात्मिकायै । रुद्रधात्र्यै । रौद्र्यै । रुद्रप्रभाधिकायै । करालवदनायै । दोषायै । निर्दोषायै । साकृत्यै । परायै । तेजोमय्यै । वीर्यवत्यै नमः ।। २८०

ओं वीर्यातीतायै नमः । परायणायै । क्षुरप्रवारिण्यै । अक्षुद्रायै । क्षुरधारायै । सुमध्यमायै । औदुंबर्यै । तीर्थकर्यै । विकृतायै । अविकृतायै । समायै । तोषिण्यै । तुकारेणवाच्यायै । सर्वार्थ-सिद्धिदायै । उद्दामचेष्टायै । आकारवाच्यायै । सर्वायै । प्रभाकर्यै । लक्ष्मीरूपायै । लकारेण वाच्यायै नमः ।। ३००

ओं नृणां लक्ष्मीप्रदायै नमः । शीतलायै । सीकारवाच्यायै । सुखरूपिण्यै । गुकारवाच्यायै । श्रीरूपायै । श्रुतिरूपायै । सदाशिवायै । भव्यायै । भवस्थितायै । भावाधारायै । भवहितङ्कर्यै । भवायै । भावुकदात्र्यै । भवाभवविनाशिन्यै । भववन्द्यायै । भगवत्यै । भगवद्भासरूपिण्यै । दाताभाग्वं भूजनीलायै (दातृभावे पूजनीयायै) । शान्त्यै नमः ।। ३२०

ओं भागवत्यै नमः । प्रियायै । महादेव्यै । महेशानायै । महीपालायै । महेश्वर्यै । गहनादिस्थितायै । शक्त्यै । कमलायै । कलिनाशिन्यै । कालकेयप्रहर्त्र्यै । सकलाकलनक्षमायै । कलधौता-कृत्यै । काल्यै । कालकालप्रवर्तिन्यै । कल्यग्रायै । सकलायै । भद्रायै । कालकालगलप्रियायै । मंगलायै नमः ।। ३४०

ओं जृंभिण्यै नमः । जृंभायै । भंजिन्यै । कर्णिकाकृतये । मन्त्राराध्यायै । वारुण्यै । शारदायै । परिघायै । सरिते । वैनायक्यै । रत्नमालायै । शरभायै । वर्तिकाननायै । मैत्रेयायै । कामिन्यै । भैष्म्यै । धनुर्नाराचधारिण्यै । कमनीयायै । रंभोरवे । रंभाराध्यपदायै नमः ।। ३६०

ओं शुभातिथ्यायै नमः । पण्डितकायै । सदानन्दायै । प्रपंचिकायै । वाममल्लस्वरूपायै । (.....) । सद्योजातायै । शाकभक्षायै । अदित्यै । देवतामय्यै । ब्रह्मण्यायै । ब्रह्मणागम्यायै । वेदवाचे । सुरेश्वर्यै । गायत्र्यै । व्याहृत्यै । पुष्ट्यै । ताटङ्कद्वयशोभिन्यै । भैरव्यै । चारुरूपायै नमः ।। ३८०

ओं स्वर्णस्वच्छकपोलिकायै नमः । सुपर्व(वर्ण)ज्यायै । युद्धशूरायै । चारुभोज्यायै । सुकामिन्यै । भृगुवासरसंपूज्यायै । भृगुपुत्र्यै । निरामयायै । त्रिवर्गदायै । त्रिसुखदायै । तृतीयसवन-प्रियायै । भाग्यप्रदायै । भाग्यरूपायै । भगवद्भक्तिदायिन्यै ।

स्वाहा । स्वधा । क्षुधारूपायै । स्तोत्राक्षरनिरूपिकायै । मार्यै । कुमार्यै नमः ।। ४००

ओं मारारिभञ्जन्यै नमः । शक्तिरूपिण्यै । कमनीयतरश्रोण्यै ।रमणीयस्तन्यै। कृशायै। अचिन्त्यरूपायै। विश्वाक्ष्यै। विशालाक्ष्यै । विरूपाक्ष्यै । प्रियंकर्यै । विश्वस्यै । विश्वप्रदायै । विश्वभोक्त्र्यै। विश्वाधिकायै। शुचये। करवीरेश्वर्यै। क्षीरनायक्यै। विजयप्रदायै। उष्णिगे। त्रिष्टुभे नमः ।। ४२०

ओं अनुष्टुभे नमः । जगत्यै। बृहत्यै। क्रियायै। क्रियावत्यै। वेत्रवत्यै । सुभगायै । धवलांबरायै । शुभ्रद्विजायै । भासुराक्ष्यै । दिव्यकंचुकभूषितायै । नूपुराढ्यायै । झणझणच्छिञ्जानमणिभूषितायै । शचीमध्यायै । बृहद्बाहुयुगायै । मन्थरगामिन्यै । मन्दरोद्धारकरण्यै। प्रियकारिविनोदिन्यै। ब्राह्म्यै। सुधात्र्यै नमः ।। ४४०

ओं ब्रह्माण्यै नमः । अपर्णायै । वारुण्यै । प्रभा(मा)यै । सौपर्ण्यै। शेषविनुतायै । गारुड्यै । गरुडासनायै । धनञ्जयायै । विजयायै। पिङ्गायै। लीलाविनोदिन्यै। कौशांब्यै। कान्तिदात्र्यै। कुसुंभायै। लोकपावन्यै। पिङ्गाक्ष्यै। पिङ्गरूपायै। पिशंगवदनायै। वसवे नमः ।। ४६०

ओं त्र्यक्षायै नमः । त्रिशूलायै । धरण्यै । सिंहारूढायै । मृगेक्षणायै । ईषणात्रयनिर्मुक्तायै । नित्यमुक्तायै । सर्वार्थदायै । शिवनन्द्यायै । शांकर्यै । हरेःपदसुवहिकायै । हारिण्यै । हारकेयूरकनकांगदभूषणायै। वाराणस्यै। दानशीलायै। शोभायै। अशेषकलाश्रयायै। वाराह्यै। श्यामलायै। महासुन्दप्रपूजितायै नमः ।। ४८०

ओं अणिमावत्यै नमः । त्रयीविद्यायै । महिमोपेतलक्षणायै । गरिमायुतायै । सुभगायै । लघिमालक्षणैर्युतायै । जिह्वायै । जिह्वाग्ररम्यायै । श्रुतिभूषायै । मनोरमायै । रञ्जन्यै । रंगनित्यायै । चाक्षुष्यै । श्रुतिकृद्धलायै । रामप्रियायै । श्रोत्रियायै । उपसर्गभृतायै । भुज्यै । अरुन्धत्यै । शच्यै नमः ।। ५००

ओं भामायै नमः । सर्ववन्द्यायै । विलक्षणायै । एकरूपायै । अनन्तरूपायै । त्रयीरूपायै । समाकृत्यै । समासायै । तद्धिताकारायै । विभक्त्यै । व्यञ्जनात्मिकायै । स्वराकारायै । निराकारायै । गंभीरायै । गहनोपमायै । गुहायै । गुह्यायै । ज्योतिर्मय्यै । तन्त्र्यै । शकर्यै नमः ।। ५२०

ओं बलाबलायै नमः । सद्रूपायै । सूक्तिपरायै । श्रोतव्यायै । वञ्जुलायै । अध्वरायै । विद्याधरीप्रियायै । सौर्यै । सूरिगम्यायै । सुरेश्वर्यै । यन्त्रविद्यायै । प्रदात्र्यै । मोहितायै । श्रुतिगर्भिण्यै । व्यक्त्यै । विभावर्यै । जात्यै । हृदयग्रन्थिभेदिन्यै । दारिद्र्यध्वंसिन्यै । काशायै नमः ।। ५४०

ओं मातृकायै नमः । चण्डरूपिण्यै । नवदुर्गायै । विशालाक्ष्यै । विपञ्च्यै । कुब्जिकायै । कामायै । इडारूपायै । मृणाल्यै । दक्षिणायै । पिङ्गलास्थितायै । दूतिन्यै । मौनिन्यै । मायायै । यामाताकरसंज्ञिकायै । कृतान्ततापिन्यै । तारायै । ताराधिपनिभाननायै । रक्षोघ्न्यै । विरूपाक्ष्यै नमः ।। ५६०

ओं पूर्णिमायै नमः । अनुमत्यै । कुह्वै । अमावास्यायै । सिनीवाल्यै । वैजयन्त्यै । मरालिकायै । क्षीराब्धितनयायै । चन्द्रसौदर्यै । अमृतसेविन्यै । ज्योत्स्नानामधिकायै । गुर्व्यै । यमुनायै । रेवत्यै । ज्येष्ठायै । जनो(लो)दर्यै । विश्वंभरायै । शबरसूदिन्यै । प्रबोधिन्यै । महाकन्यायै नमः ।। ५८०

ओं कमठायै नमः । प्रसूतिकायै । मिहिराभायै । तटिद्रूपायै । भूत्यै । हिमवतीकरायै । सुनन्दायै । मानव्यै । घण्टायै । छायादेव्यै । महेश्वर्यै । स्तंभिन्यै । भ्रमर्यै । दूत्यै । सप्तदुर्गायै । अष्टभैरव्यै । बिन्दुरूपायै । कलारूपायै । नादरूपायै । कलात्मिकायै नमः ।। ६००

ओं अजरायै नमः । कलशायै । पुण्यायै । कृपाढ्यायै । चक्रवासिन्यै । शुंभायै । निशुंभायै । दाशार्हायै । हरिपादसमाश्रयायै । त्रिसन्ध्यायै । सहस्राक्ष्यै । शंखिन्यै । चित्रिण्यै । श्रितायै । अश्वत्थधारिण्यै । ईशानायै । पञ्चपत्रायै । वरूथिन्यै । वायुमण्डल-मध्यस्थायै । पदातये नमः ।। ६२०

ओं पंक्तिपावन्यै नमः । हिरण्यवर्णायै । हरिण्यै । लेखायै । कोशात्मिकायै । ततायै । पदव्यै । पंक्तिविज्ञानायै । पुण्यपंक्ति-विराजितायै । निस्त्रिंशायै । पीठिकायै । सोमायै । पक्षिण्यै । किन्नरेश्वर्यै । केतक्यै । अष्टभुजाकारायै । मल्लिकायै । अन्तर्बहिष्कृतायै । तपस्विन्यै । शनैष्कार्यै नमः ।। ६४०

ओं गद्यपद्यात्मिकायै नमः । क्षरायै । तमःपरायै । पुराणज्ञायै । जाड्यहन्त्र्यै । प्रियंकर्यै । नारायण्यै । मूर्तिमय्यै । तत्पदायै । पुण्यलक्षणायै । कपालिन्यै । महादंष्ट्रायै । सर्वावासायै । सुन्दर्यै । ब्राह्मण्यै । ब्रह्मसंपत्त्यै । मातंग्यै । अमृताकरायै । जाग्रते । सुप्तायै नमः ।। ६६०

ओं सुषुप्तायै नमः । मूर्च्छायै । स्वप्नप्रदायिन्यै । सांख्यायन्यै । महाज्वालायै । विकृत्यै । सांप्रदायिकायै । लक्ष्यायै । सानुमत्यै । नीत्यै । दण्डनीत्यै । मधुप्रियायै । आख्याधिकायै । आख्यालवत्यै । मधुविदे । विधिवल्लभायै । माध्व्यै । मधुमदास्वादायै । मधुरास्यायै । दवीयस्यै नमः ।। ६८०

ओं वैराज्यै नमः । विन्ध्यसंस्थानायै । काश्मीरतलवासिन्यै । योगनिद्रायै । विनिद्रायै । द्वासुपर्णाश्रुतिप्रियायै । मातृकायै । पञ्चसामेड्यायै । कल्याण्यै । कल्पनायै । कृत्यै । पंचस्तंभात्मिकायै । क्षौमवस्त्रायै । पञ्चाग्निमध्यगायै । आदिदेव्यै । आदिभूतायै । अश्वात्मने । ख्यातिरंजितायै । उद्दामन्यै । संहिताख्यायै नमः ॥ ७००

ओं पञ्चपक्षायै नमः । कलावत्यै । व्योमप्रियायै । वेणुबन्धायै । दिव्यरत्नगलप्रभायै । नाडीदृष्टायै । ज्ञानदृष्टिदृष्टायै । तन्द्राजिन्यै । दृढायै । द्रुतायै (हुतायै) । पञ्चवत्यै । पञ्चग्रासायै । प्रणवसंयत्यै । त्रिशिखायै । प्रमदारत्नाय (त्कायै) । सपञ्चास्यायै । प्रमादिन्यै । गीतज्ञेयायै । चञ्चरीकायै । सर्वान्तर्यामिरूपिण्यै नमः ॥ ७२०

ओं समयायै नमः । सामवल्लभ्यायै । ज्योतिश्चक्रायै । प्रभाकर्यै । सप्तजिह्वायै । महाजिह्वायै । महादुर्गायै । महोत्सवायै । स्वरसायै । मानव्यै । पूर्णायै । इष्टिकायै । वरूथिन्यै । सर्वलोकानां निर्मात्र्यै । अव्ययायै । श्रीकरांबरायै । प्रजावत्यै । प्रजादक्षायै । शिक्षारूपायै । प्रजाकर्यै नमः ॥ ७४०

ओं सिद्धलक्ष्म्यै नमः । मोक्षलक्ष्म्यै । रञ्जनायै । निरञ्जनायै । स्वयंप्रकाशायै । मायै । आशास्यदात्र्यै । अविद्याविदारिण्यै । पद्मावत्यै । मातुलंगधारिण्यै । गदाधरायै । खेयात्रायै । पात्रसंविष्टायै । कुष्ठामयनिवर्तिन्यै । कृत्स्नं व्याप्य स्थितायै । सर्वप्रतीकायै । श्रवणाक्षमायै । आयुष्यदायै । विमुक्त्यै । सायुज्यपदवीप्रदायै नमः ॥ ७६०

ओं सनत्कुमार्यै नमः । वैधात्र्यै । घृताच्यास्तु वरप्रदायै । श्रीसूक्तसंस्तुतायै । बाह्योपासनाश्च प्रकुर्वत्यै । जगत्सख्यै ।

सख्यदात्र्यै । कंबुकण्ठायै । महोर्मिण्यै । योगध्यानरतायै । विष्णुयोगिन्यै । विष्णुसंश्रितायै । निःश्रेयस्यै । निःश्रेयःप्रदायै । सर्वगुणाधिकायै । शोभाढ्यायै । शांभव्यै । शंभुवन्द्यायै । वन्दारुबन्धुरायै । हरेर्गुणानुध्यायन्त्यै नमः ।। ७८०

ओं हरिपादार्चने रतायै नमः । हरिदासोत्तमायै । साध्व्यै । हर्यधीनायै । सदाशुचये । हरिण्यै । हरिपद्ब्यै । शुद्धसत्वायै । तमोतिगायै । शुनासीरपुराराध्यायै । सुनासायै । त्रिपुरेश्वर्यै । धर्मदायै । कामदायै । अर्थदात्र्यै । मोक्षप्रदायिन्यै । विरजायै । तारिण्यै । लिङ्गभङ्गदात्र्यै । त्रिदशेश्वर्यै नमः ।। ८००

ओं वासुदेवं दर्शयन्त्यै नमः । वासुदेवपदाश्रयायै । अम्लानायै । अवनसर्वज्ञायै । ईशायै । सावित्रिकप्रदायै । अवृद्धिह्रासविज्ञानायै । लोभत्यक्तसमीपगायै । देवेशमौलिसंबद्ध-पादपीठायै । तमो घ्नत्यै । ईशभोगाधिकरणायै । यज्ञेश्यै । यज्ञमानिन्यै । हर्यंगगायै । वक्षःस्थायै । शिरःस्थायै । दक्षिणा-त्मिकायै । स्फुरच्छक्तिमय्यै । गीतायै । पुंविकारायै नमः ।। ८२०

ओं पुमाकृत्यै नमः । ईशावियोगिन्यै । पुंसा समायै । अतुलवपुर्धरायै । वटपत्रात्मिकायै । बाह्याकृत्यै । कीलालरूपिण्यै । तमोभिदे । मानव्यै । दुर्गायै । अल्पसुखार्थिभिरगम्यायै । कराग्रवारिनीकाशायै । करवारिसुपोषितायै । गोरूपायै । गोष्ठमध्यस्थायै । गोपालप्रियकारिण्यै । जितेन्द्रियायै । विश्व-भोक्त्र्यै । यन्त्र्यै । यानायै नमः ।। ८४०

ओं चिकित्विष्यै नमः । पुण्यकीर्त्यै । चेतयित्र्यै । मत्यापिस्मारहारिण्यै । स्वर्गवर्त्मकर्यै । गाथायै । निरालंबायै । गुणाकरायै । शश्वद्रूपायै । शूरसेनायै । वृष्ट्यै । वृष्टिप्रवर्षिण्यै ।

प्रमदात्तायै । अप्रमत्तायै । प्रमादघ्न्यै । प्रमोददायै । ब्राह्मण्यै । क्षत्रियायै । वैश्यायै । शूद्रायै नमः ॥ ८६०

ओं जात्यै नमः । मसूरिकायै । वानप्रस्थायै । तीर्थरूपायै । गृहस्थायै । ब्रह्मचारिण्यै । आत्मक्रीडायै । आत्मरत्यै । आत्मवत्यै । असितेक्षणायै । अनीहायै । मौनिन्यै । हानिशून्यायै । काश्मीर-वासिन्यै । अन्यथायै । विजयायै । राज्यै । मृणालतुलितांशुकायै । गुहाशयायै । धीरमत्यै नमः ॥ ८८०

ओं अनाथायै नमः । अनाथरक्षिण्यै । यूपात्मिकायै । वेदिरूपायै । स्रुग्रूपायै । स्रुवरूपिण्यै । ज्ञानोपदेशिन्यै । पट्टसूत्रांकायै । ज्ञानमुद्रिकायै । विधिवेद्यायै । मन्त्रवेद्यायै । अर्थवादप्ररोचितायै । क्रियारूपायै । मन्त्ररूपायै । दक्षिणायै । ब्राह्मणात्मिकायै । अन्नेशायै । अन्नदायै । अन्नोपासिन्यै । परमान्नभुजे नमः ॥ ९००

ओं सभायै नमः । सभावत्यै । सभ्यायै । सभ्यानां जीवनप्रदायै । लिप्सायै । बडबायै । अश्वत्थायै । जिज्ञासायै । विषयात्मिकायै । स्वररूपायै । वर्णरूपायै । दीर्घायै । ह्रस्वायै । स्वरात्मिकायै । धर्मरूपायै । धर्मपुण्यायै । आद्यायै । ईशान्यै । शार्ङ्गिवल्लभायै । चलन्त्यै नमः ॥ ९२०

ओं छत्रिण्यै नमः । इच्छायै । जगन्नाथायै । अजरायै । अमरायै । झषांकसुप्रियायै । रम्यायै । रत्यै । रतिसुखप्रदायै । नवाक्षरात्मिकायै । कादिसर्ववर्णात्मिकायै । लिप्यै । रत्नकुंकुम-फालाढ्यायै । हरिद्राञ्चितपादुकायै । दिव्याङ्गरागायै । दिव्याङ्गायै । सुवर्णलतिकोपमायै । सुदेव्यै । वामदेव्यै । सप्तद्वीपात्मिकायै नमः ॥ ९४०

ओं भृत्यै नमः । गजशुण्डाद्वयभृतसुवर्णकलशप्रियायै । तपनीयप्रभायै । लिकुचायै । लिकुचस्तन्यै । कान्तारसुप्रियायै । कान्तायै । अरातिव्रातान्तदायिन्यै । पुराणायै । कीटकाभासायै । बिंबोष्ठ्यै । पुण्यचर्मिण्यै । ओंकारघोषरूपायै । नवमीतिथि-पूजितायै । क्षीराब्धिकन्यकायै । वन्यायै । पुण्डरीकनिभांबरायै । वैकुण्ठरूपिण्यै । हरिपादाब्जसेविन्यै । कैलासपूजितायै नमः ॥ ९६०

ओं कामरूपायै नमः । हिरण्मय्यै । कण्ठसूत्रस्थितायै । सौमङ्गल्यप्रदायिन्यै । काम्यमानायै । उपेन्द्रदूत्यै । श्रीकृष्णतुलस्यै । घृणायै । श्रीरामतुलस्यै । मित्रायै । आलोलविलासिन्यै । सर्वतीर्थायै । आत्ममूलायै । देवतामयमध्यगायै । सर्ववेदमयाग्रायै । श्रीमोक्ष-तुलस्यै । दृढायै । शिवजाड्यापहन्त्र्यै । शैवसिद्धान्तकाशिन्यै । काकासुरस्यार्तिहन्त्र्यै नमः ॥ ९८०

ओं महिषासुरमर्दिन्यै नमः । पीयूषपाण्यै । पीयूषायै । कामं वादिविनोदिन्यै । कमनीयश्रोणितटायै । तटिन्निभवरद्युत्यै । भाग्यलक्ष्म्यै । मोक्षदात्र्यै । तुलसीतरुरूपिण्यै । बृन्दावन शिरोरोहत्पादद्वयसुशोभितायै । सर्वत्रव्याप्ततुलस्यै । कामधुक्तुलस्यै । मोक्षतुलस्यै । भव्यतुलस्यै । सदा संसृतितारिण्यै । भवपाशा-विनाशिन्यै । मोक्षसाधनदायिन्यै । स्वदलैःपरमात्मनः पदद्वन्द्वं शोभयित्र्यै । रागबन्धादसंसक्तरजोभिः कृतदूतिकायै । भगवच्छब्दसंसेव्यपाद सर्वार्थदायिन्यै नमः ॥ १०००

नमो नमो नमस्तस्यै सदा तस्यै नमो नमः ॥

# अखिलाण्डेश्वरीपञ्चशतीस्तोत्रम्

(शङ्करभगवत्पादकृतम्)

(मातृकापुष्पमाला - अक्षरमालिका)

अध्वातीतपदे अलंकृतशिवे अर्थान्तरर्थेऽपरे
अत्यर्थे अमलाशये अतिदये अर्धेन्दुभूषोज्ज्वले।
अध्यक्षे अमराङ्गनापरिवृते अध्यात्मविद्यामये
अव्यक्ते अचलाधिराजतनये वन्देऽखिलाण्डेश्वरि ॥ १

आद्ये आगमसंप्रदायनिपुणे आचार्यवर्यार्चिते
आधारादिसरोजपीठनिलये आलोलनीलालके।
आताम्राधरचारुमन्दहसिते आपीनवक्षोरुहे
आब्रह्माच्युतशङ्करार्चितपदे वन्देऽखिलाण्डेश्वरि ॥ २

इच्छाज्ञानसमस्तशक्तिसहिते इन्दीवरश्यामले
इन्द्रोपेन्द्रवरप्रदे इभवनाधीशे इनाराधिते।
इज्ये इन्दुनिभानने इभनुते इष्टार्थसिद्धिप्रदे
इन्द्राणीनमिते इभाननुते वन्देऽखिलाण्डेश्वरि ॥ ३

ईशे ईशविरिञ्चिशौरिवरदे ईड्यालि ईशात्मिके
ईर्ष्यादूषितचित्तदूरचरणे ईशप्रिये ईश्वरि।
ईड्ये ईश्वरवामभागनिलये ईङ्कारकूसोदये
ईशित्वादिमहाविभूतिनिलये वन्देऽखिलाण्डेश्वरि ॥ ४

उद्यद्भानुसहस्रकोटिकिरणे उर्वीधरेन्द्रात्मजे
उत्फुल्लाम्बुजलोचने उभयकावेर्यन्तरालाश्रये।
उद्यच्चन्द्रनिभानने उरुतरे उच्चासने उज्ज्वले
उद्दामद्युतिपुञ्जमञ्जुलतरे वन्देऽखिलाण्डेश्वरि ॥ ५

ऊहापोहविवेकबाह्यनिलये ऊनातिरिक्तोज्ज्वले
ऊर्जस्वन्मणिमेखलाविलसिते ऊरीकृतार्थप्रिये।

ऊर्ध्वाधोभवयोगमूलनिलये ऊष्मापहारोज्ज्वले
ऊधःक्षीरसुधाधृतत्रिभुवने वन्देऽखिलाण्डेश्वरि ॥ ६

ऋग्वेदादिनिषेविते ऋजुनते ऋद्धानुकम्पावहे
ऋद्ध्यामोदमुखेप्सिते ऋतुनुते ऋक्षौघसंसेविते ।
ऋक्षाधीशकलान्विते ऋणतमोभास्वत्पदाम्भोरुहे
ऋद्ध्यापूरितविष्टपत्रयनुते वन्देऽखिलाण्डेश्वरि ॥ ७

ॠषा ॠप सदाशिवान्तरगते ॠपे सदा ॠपिणि
ॠपातीतपरापरार्थनिलये ॠढप्र ॠढात्मिके ।
नॄणां जन्मजरापहारनिलये नॄत्राणकल्पद्रुमे
नॄणां पापविमोचनाद्यफलदे वन्देऽखिलाण्डेश्वरि ॥ ८

क्लृप्ताशेषजगन्महेशनिलये क्लृप्ताङ्गरागोज्ज्वले
क्लृप्ताक्लृप्तविशङ्क्यमानविलसन्मध्यावलीरञ्जिते ।
लिङ्गाराधनतत्परे लिकुचराजत्पाणिपङ्केरुहे
क्लृप्ताकल्पमनोहराङ्गलतिके वन्देऽखिलाण्डेश्वरि ॥ ९

लूताधीशगजेन्द्रपूजितपदे लूनाहितेशान्विते
क्लीङ्काराङ्कितबिन्दुपीठनिलये क्लीङ्काररूपेडिते ।
लूतातन्तुजडीकृतेशनिलये लूनाहिवल्लीदले
लूताक्ष्मापतिमुक्तिदातृमहिळे वन्देऽखिलाण्डेश्वरि ॥ १०

एके एकमहाम्बुराशिनिलये एकान्तक्लृप्तोदये
एकानेकतया विभक्तभुवने एकातपत्रोज्ज्वले ।
एणीचारुविलोललोचनयुगे एकावलीभूषणे
एतत्तत्त्वमयाणिमादिवरदे वन्देऽखिलाण्डेश्वरि ॥ ११

ऐङ्कारासनमध्यपीठनिलये ऐन्द्रादिलोकप्रदे
ऐरावत्युपमानदेहलतिके ऐन्द्र्यादिशक्तीडिते ।

ऐंकाराक्षरवेदवेद्यविभवे ऐश्वर्यदानेक्षणे
ऐमैमित्यनुसन्दधानभुवने वन्देऽखिलाण्डेश्वरि ॥ १२

ओमित्येकपदावलीडितपदे ओजोविशेषान्विते
ओष्ठाधावितबिम्बविद्रुमलते ओघत्रयाराधिते ।
ओघैरप्सरसां सदा परिवृते ओताखिलार्थाधिपे
ओजोराजितवाग्विभूतिविनुते वन्देऽखिलाण्डेश्वरि ॥ १३

औशीरादिसुगन्धिशोभनकचे औत्पत्तिजालप्रिये
औदासीन्यविभिन्नदैत्यविभवे औपाधिकोपान्विते ।
औदार्याकरपादपङ्कजयुगे औपम्यहीनानने
औमाकान्तपदप्रदर्शितपदे वन्देऽखिलाण्डेश्वरि ॥ १४

अम्भोजासनमुख्यसेवितपदे अम्भोधरश्यामले
अङ्गाकल्पितरत्नभूषणशते अण्डौघसंसेविते ।
अम्ब्वाकाशतया विभक्तभुवने अम्भोरुहांघ्रिद्वये
अह्वायान्तकसूदनप्रियतमे वन्देऽखिलाण्डेश्वरि ॥ १५

अस्ताघे अवनम्रदेवनिवहे अस्तोकभाग्योदये
अर्घाधिक्यमनोहरे अचलजे अष्टाक्षरैरर्चिते ।
अर्घातीतमनोज्ञभूषणशते अक्षीणसौभाग्यदे
अर्काम्भोरुहवैरिवह्निनयने वन्देऽखिलाण्डश्वरि ॥ १६

कावेरीपुलिनालये कमलजे कामारिवामालये
कारुण्यामृतलेचने कविनुते कन्दर्पकान्तिप्रदे ।
कल्याणि क्षितिलोककल्पलतिके कारुण्यवाराम्निधे
कालाम्भोधरकम्रकुण्डलधरे वन्देऽखिलाण्डेश्वरि ॥ १७

खर्वाटे खगकेतनानुजवरे खट्वाङ्गपाणिस्तुते
खर्वाखर्वविवर्जिते खगमयूखाराधिते खड्गिनि ।

खद्योतेशवरप्रदे खगनुते खद्योतकोटिप्रभे
खण्डेन्दूज्ज्वलशेखरे खगचरे वन्देऽखिलाण्डेश्वरि ॥ १८

गङ्गावर्तसमाननाभिकुहरे गण्डोज्ज्वलत्कुण्डले
गन्धर्वासुरसिद्धकिन्नरनुते गन्धोत्तमालेपिते ।
गम्भीरामृतसिन्धुमध्यनिलये गाम्भीर्यधैर्यात्मिके
गङ्गोत्तुङ्गतरङ्गशेखरयुते वन्देऽखिलाण्डेश्वरि ॥ १९

गीतानन्दमये गिरीशनमिते गीतप्रियाराधिते
गीतोल्लासिनि गीयमानचरिते गीर्नाथिसंसेविते ।
गीष्पद्मावरदे गिरीन्द्रनिलये गीर्वाणबृन्दाश्रिते
गीते गीतमनोहरे गिरिसुते वन्देऽखिलाण्डेश्वरि ॥ २०

गुप्ते गुप्तव(त)रे गुहेशवरदे गुच्छोज्ज्वलन्मल्लिके
गुह्याचारगते गुरुस्तनभरे गुच्छार्थहारोज्ज्वले ।
गुल्फस्थे गुणमन्दिरे गुरुवरे गुल्फोल्लसन्नूपुरे
गूढार्थान्तगते गुरूत्तमनुते वन्देऽखिलाण्डेश्वरि ॥ २१

घण्टाघोरनिनादघातितमहादैत्ये घनश्यामले
घर्माघर्ममयूखवह्निनयने घर्मप्रशान्तिप्रदे ।
घोरे घोरविघोषदानवगणप्रोद्घुष्टघोरारवे
घोराघौघनिवारणे घननिभे वन्देऽखिलाण्डश्वरि ॥ २२

चातुर्वर्ग्यफलप्रदे सुचरिते चामुण्डिरूपोत्तरे
चक्राधिष्ठितपादपद्मचतुरे चन्द्रानने चण्डिके ।
चन्द्रोपेन्द्रचराचरात्मकजगद्रूपे चलत्कुण्डले
चञ्चल्लोचनवञ्चितेश्वरशिवे वन्देऽखिलाण्डेश्वरि ॥ २३

छिद्रघ्नस्मितचन्द्रिकाधवलिते छायेश्वरद्योतिते
छन्दान्दोलितभूषणाङ्कितगले छन्दःश्रियालङ्कृते ।

छायाधीशधनञ्जयेन्दुनयने छन्नान्धकारारुणे
छन्दोबृन्दमहस्सुकान्तिनिलये वन्देऽखिलाण्डेश्वरि ॥ २४

जम्बूमूलनिधे जनार्दननुते जम्भारिसंभाविते
जम्बूद्वीपमनोज्ञकल्पलतिके जह्न्वात्मजाशेखरे ।
जन्मव्याधिजरापहे जलमये जाम्बूनदालंकृते
जम्बूनाथमनोहरे जननुते वन्देऽखिलाण्डेश्वरि ॥ २५

झञ्झावाततरङ्गितप्रविमल श्रीनिर्झराप्लाविते
झङ्कारीकृतषट्पदालकभरे झाटित्यबुद्धिप्रदे ।
झर्झारारवभूषणे झलझलन्मञ्जीरपादाम्बुजे
झल्लीमद्दलझर्झरस्वरनुते वन्देऽखिलाण्डेश्वरि ॥ २६

ज्ञानानन्दमहासमुद्रतरणे ज्ञानात्मरूपापरे
ज्ञानज्ञेयमये त्वदङ्घ्रि भजतां ज्ञानप्रदेऽज्ञानिनाम् ।
ज्ञानाज्ञानमयस्वरूपिणि शिवे ज्ञानप्रकाशात्मिके
ज्ञातिक्षेत्रकळत्रधान्यधनदे वन्देऽखिलाण्डेश्वरि ॥ २७

टङ्काद्यायुधभूषणोज्ज्वलकरे ठावेक्ष्यमाणानने
डिम्भाहुंकृतढंकृतासुरवरे डोलाडिढेशस्मिते ।
डिम्भाकारतया सुपालितजने ढक्कारवोद्घोषिते
ढंढण्डेति झटिकणादिमहिते वन्देऽखिलाण्डेश्वरि ॥ २८

तत्त्वार्थप्रतिपाद्यमानचरणे तत्त्वत्रयोद्दीपिके
तत्त्वातीतपदे तपोधननुते तारेशचूडामणे ।
तारुण्यामृत सिन्धुमध्यलतिके तार्क्ष्यध्वजाराधिते
तापिञ्छस्तबकद्युते तनुलते वन्देऽखिलाण्डेश्वरि ॥ २९

स्थाणुप्रेमनिधे स्थितीशमहिते स्थैर्यस्थिते स्थापिके
स्थानास्थानकृतार्थदेहिनिवहे स्थित्यन्तसर्गोद्यते ।

स्थानाधिक्यमनोहरे स्थिरतरे स्थाण्वन्तरालाश्रये
स्थूलागोचरदर्शने स्थितिमये वन्देऽखिलाण्डश्वरि ।। ३०

द(दा)क्षाचारवरप्रदे दमयुते दक्षे दयाङ्कूरिते
दान्ते द्रष्टमनोहरे द्विजवरे दन्तावलाराधिते।
दानादान विधानचोदनपरे दातृस्वरूपापरे
दैन्याध्यात्मिक तापहारि चरणे वन्देऽखिलाण्डेश्वरि ।। ३१

दिव्यज्ञानमये दिवाकरनिभे दिव्याम्बरालंकृते
दिव्यस्त्रीजनसेविते द्विजमये दीक्षाप्रदानोद्यते।
दीप्ते दीप्तशशांकवह्निनयने दीनादिमुक्तिप्रदे
दिक्पालादि दिगम्बरार्चितपदे वन्देऽखिलाण्डेश्वरि ।। ३२

दुर्भिक्षादि समस्त दुःखहरणे दुःशीलतापापहे
दुर्गाद्यावृति देवतार्चितपदे दूर्वांकुरश्यामले।
दुर्लक्ष्यागम चित्तदूरचरिते दुर्गादिवस्यापरे
दुर्वासादि मुनीश्वरस्तुतिपदे वन्देऽखिलाण्डश्वरि ।। ३३

धर्मिष्ठे धरणीधरेन्द्रतनये धाराधरोद्यत्प्रभे
धम्मिल्लाञ्चित मल्लिकादि कुसुमे धर्मादिसंसेविते।
धर्माद्यर्थ चतुष्टय स्थितिपदे धामत्रयाराधिते
धन्ये धार्मिकचित्त नित्यनिलये वन्देऽखिलाण्डेश्वरि ।। ३४

नानारत्न विभूषणे नवघनश्यामे नटेशप्रिये
नक्षत्रेशधरे नगेन्द्रनिलये नागारिवाहानुजे।
नानादेववृते नरोत्तमनुते नाथे नृमुक्तिप्रदे
नाकौकोगण नम्यमान चरणे वन्देऽखिलाण्डेश्वरि ।। ३५

नीहाराचलकन्यके निगमगे नित्यात्मिके निर्मले
निःशेषाण्डसुमातृके निशिचराराध्ये निशेशाङ्किते।

नीपारण्य निवासनित्यरसिके निर्निद्रपद्मेक्षणे
निःशोकाकृतिके निरञ्जनपदे वन्देऽखिलाण्डेश्वरि ॥ ३६

पद्मे पद्मनिभानने परतरे पद्मार्चितांघ्रिद्वये
पद्मस्थे परदानवारिविनुते पद्मासनाराधिते ।
पद्मास्ये परलोकसाधनपरे पद्मा(श्वा)क्षरालंकृते
पक्षापक्षविवर्जिते परशिवे वन्देऽखिलाण्डेश्वरि ॥ ३७

फुल्लाम्भोजदलेक्षणेन्दुविकृतालीकाभिरामानने
फूत्काराहि फणाधरेन्द्र रमणीनृत्तान्तरालस्थिते ।
स्फायत्पण्डित सूक्तिमर्म विभवे स्फाटिक्य तेजोमये
स्फूर्जत्कान्तिमये फणीन्द्रवरदे वन्देऽखिलाण्डेश्वरि ॥ ३८

बालेऽबालपराक्रमे बहुविधे बालप्रबालाधरे
बालादित्य समप्रभे बहुनुते बालेन्दु भूषोज्ज्वले ।
बन्धूकारुण विग्रहे बहुविध ब्रह्माण्ड भाण्डोदरि
ब्रह्मागस्त्य सुरेन्द्र वन्दितपदे वन्देऽखिलाण्डेश्वरि ॥ ३९

भावातीतपदप्रवर्तितगुणे भाषे भवाराधिते
भावाद्ये भवरोगभञ्जनकरे भद्रे भयच्छेदिनि ।
भव्ये भाग्यवदुत्तमेड्यचरणे भागीरथीशान्विते
भास्वच्चन्द्रविलोचनार्चितपदे वन्देऽखिलाण्डेश्वरि ॥ ४०

माये मन्मथसेविते मरकतश्यामे मनोज्ञामले
मायामोहविवर्जिते मणिमयाकल्पे महामञ्जुले ।
मायातीतमहामुनीन्द्रवरदे माणिक्यकेयूरके
मालालङ्करणे मतङ्गतनये वन्देऽखिलाण्डेश्वरि ॥ ४१

मित्राग्नीन्दुविलोचने मिहिरभे मीनोल्लसल्लोचने
मिथ्याज्ञानमनोतिदूरचरणे मीनध्वजाराधिते ।

मीमांसादिसमस्तशास्त्रमहिते मृष्टान्नदानोद्यमे
मित्रोद्भासिनि मित्रवह्निविनुते वन्देऽखिलाण्डेश्वरि ।। ४२

मुग्धे मुग्धशशाङ्कशेखरयुते मूलागमार्थोदये
मुक्ते मूषिकवाहनार्चितपदे मूर्तित्रयाराधिते ।
मूलाधारगते मुखाब्जविलसन्मुग्धस्मिते मुक्तिदे
मुद्रामोदितमानसे मुनिनुते वन्देऽखिलाण्डेश्वरि ।। ४३

यज्ञे यज्ञफलप्रदे यमनुते यक्षेश्वराराधिते
यक्ष्मघ्ने यमसूदनप्रियतमे यज्ञेशसंपूजिते ।
यन्त्रस्थे यतिपूजिते यतिकृत श्रीचक्रभूषोज्ज्वले
यक्षिण्यादिसमस्तशक्तिविनुते वन्देऽखिलाण्डेश्वरि ।। ४४

रामे रामवरप्रदे रसकले राजीवपत्रार्चिते
राकाचन्द्रनिभे रमार्चितपदे राजाधिराजानते ।
रम्ये राजतशैलशृङ्गनिलये रत्याप्तपत्या नुते
रागद्वेषविहीनचित्तसुलभे वन्देऽखिलाण्डेश्वरि ।। ४५

लावण्याम्बुनिधे ललाटनयने लम्बोदराराधिते
लाक्षारञ्जितपादपद्मयुगले लम्बालकोद्भासिते ।
लङ्केशारिनुते लयोद्भवकरे लक्ष्मीपतीड्यप्रिये
लक्ष्ये लक्ष्यमनोज्ञमध्यलतिके वन्देऽखिलाण्डेश्वरि ।। ४६

वाच्ये(वामे) वारिजलोचनार्चितपदे वाग्देवताराधिते
वामाद्ये वरशैलराजतनये वामादिशक्त्यात्मिके ।
वश्याकर्षण सिद्धिमूल गुलिके वादित्रनादप्रिये
वाणीवल्लभवज्रपाणि वरदे वन्देऽखिलाण्डश्वरि ।। ४७

शान्ते शङ्करवल्लभे शशियुते शातोदरि श्यामले
शङ्काहीन विशोकदे शतमखाराध्ये शशाङ्कानने ।

शक्ते शक्तिधरार्चिते शमधनाधीशार्चिते शारदे
शैवाद्यागम पारगे शमधने वन्देऽखिलाण्डेश्वरि ॥ ४८

षट्चक्रान्तगते षडक्षरमये षट्त्रिंश तत्त्वात्मिके
षट्पद्मान्तपुरे षडाननुते षट्कोण संभाविते ।
षड्वक्त्रद्विपवक्त्र रामवरदे षड्ग्रन्थि वन्द्यात्मिके
षट्शक्ति प्रभवात्मनः प्रियतमे वन्देऽखिलाण्डेश्वरि ॥ ४९

सर्वाभीष्टफलप्रदे सुमतिभिः संसेविते सात्त्विकैः
सर्वालङ्करणे सदाशिवमये संपत्करे साक्षिणि ।
सादिस्थे सरसीयुगाक्षियुगले संघट्टवक्षोरुहे
साक्षात्कारिणि सर्वलोकवरदे वन्देऽखिलाण्डेश्वरि ॥ ५०

हाहाकाररवैस्त्रिभिः स्तुतपदे हाराभिरामेऽसमे
हं सोल्लासितरम्यविश्वविभवे हंबीजमूलांकुरे ।
हस्थे हस्तिवनालये हरिहरब्रह्मेन्द्र वन्द्येश्वरि
हंसातीतपदे हकारचरिते वन्देऽखिलाण्डश्वरि ॥ ५१

ळंबीजे ळकुळे ळतामृदुतनो ळङ्कारसंपूजिते
ळम्बीजेन सुलक्षितेड्यविभवे क्लींकार रूपान्विते ।
ळान्ते हान्तगरे(गरले) जवात्समुदिते त्रस्तान्सुरान्वीक्ष्य तत्
ळान्तेगे (गळे) विनियच्छदीशमहिळे वन्देऽखिलाण्डेश्वरि

क्षोणीशाग्र्यपदैकलक्षणविधि क्षेप प्रमाणेक्षणे
क्षिप्रादक्षिण कुक्षि शिक्षणमनः क्षेत्रज्ञ संरक्षिणि ।
त्र्यक्षालक्ष्यतितिक्षुदक्ष दमने क्षान्तान्त संवीक्षणे
क्षन्तव्यं क्षितिभृत्सुते स्तुतिवचः क्षुद्रं मदीयं शिवे ॥ ५३

इति गिरिवर पुत्री पादराजीव भूषा
भुवनममलयन्ती सूक्तिसौरभ्यसारैः ।
शिवपद मकरन्द स्यन्दिनी मन्निबद्धा
मदयतु कविभृङ्गान् मातृकापुष्पमाला ॥ ५४

# अखिलाण्डेश्वरीपञ्चशतीनामावलिः

## (अक्षरमालिकानामावलिः)

ओं ऐं ह्रीं श्रीं । अध्वातीतपदायै । अलंकृतशिवायै । अर्थान्तरर्थायै । अपरायै । अत्यर्थायै । अमलाशयायै । अतिदयायै । अर्धेन्दुभूषोज्ज्वलायै । अध्यक्षायै । अमराङ्गनापरिवृतायै । अध्यात्मविद्यामयायै । अव्यक्तायै । अचलाधिराजतनयायै । आद्यायै । आगमसंप्रदायनिपुणायै । आचार्यवर्यार्चितायै । आधारादिसरोजपीठनिलयायै । आलोलनीलालकायै । आताम्राधरचारुमन्दहसितायै । आपीनवक्षोरुहायै नमः ॥ २०

ओं आब्रह्माच्युतशङ्करार्चितपदायै नमः । इच्छाज्ञानसमस्तशक्तिसहितायै । इन्दीवरश्यामलायै । इन्द्रोपेन्द्रवरप्रदायै । इभवनाधीशायै । इनाराधितायै । इज्यायै । इन्दुनिभाननायै । इभनुतायै । इष्टार्थसिद्धिप्रदायै । इन्द्राणीनमितायै । इभाननन‍ुतायै । ईशायै । ईशविरिञ्चिशौरिवरदायै । ईड्यालयै । ईशात्मिकायै । ईर्ष्यादूषितचित्तदूरचरणायै । ईशप्रियायै । ईश्वर्यै । ईड्यायै नमः ॥ ४०

ओं ईश्वरवामभागनिलयायै नमः । ईंकारकूसोदयायै । ईशित्वादिमहाविभूतिनिलयायै । उद्यद्भानुसहस्रकोटिकिरणायै । उर्वीधरेन्द्रात्मजायै । उत्फुल्लांबुजलोचनायै । उभयकावेर्यन्तरालाश्रयायै । उद्यच्चन्द्रनिभाननायै । उरुतरायै । उच्चासनायै । उज्ज्वलायै । उद्दामद्युतिपुञ्जमञ्जुलतरायै । ऊहापोहविवेकबाह्यनिलयायै । ऊनातिरिक्तोज्ज्वलायै । ऊर्जस्वन्मणिमेखलाविलसितायै । ऊरीकृतार्थप्रियायै । ऊर्ध्वाधोभवयोगमूलनिलयायै । ऊष्मापहारोज्ज्वलायै । ऊधःक्षीरसुधाधृतत्रिभुवनायै । ऋग्वेदादिनिषेवितायै नमः ॥ ६०

ओं ऋजुनतायै नमः । ऋद्धानुकंपावहायै । ऋद्ध्यामोदमुखेप्सितायै । ऋतुनुतायै । ऋक्षौघसंसेविते । ऋक्षाधीशकलान्वितायै । ऋणतमोभास्वत्पदांभोरुहायै । ऋद्ध्यापूरितविष्टपत्रनुतायै । ऋ़पाऋ़प(रूपारूप)सदाशिवान्तरगतायै । ऋ़पायै (रूपायै) । सदाऋ़पिण्यै (रूपिण्यै) । ऋ़(रू)पातीतपरापरार्थनिलयायै । ऋ़ढप्रऋ़ (रूढप्ररू)ढात्मिकायै । नॄणांजन्मजरापहारनिलयायै । नॄत्राणकल्पद्रुमायै । नॄणांपापविमोचनाद्यफलदायै । क्लृप्ताशेषजगन्महेशनिलयायै । क्लृप्ताङ्गरागोज्ज्वलायै । क्लृप्ताक्लृप्तविशङ्क्यमानविलसन्मध्यावलीरञ्जितायै। लिङ्गाराधनतत्परायै नमः ।। ८०

ओं लिकुचराजत्पाणिपङ्केरुहायै नमः । क्लृप्ताकल्पमनोहराङ्गलतिकायै । लूताधीशगजेन्द्रपूजितपदायै । लूनाहितेशान्वितायै। क्लींकारांकितबिन्दुपीठनिलयायै। क्लींकाररूपेडितायै। लूतातन्तुजडीकृतेशनिलयायै। लूनाहिवल्लीदलायै। लूताक्ष्मापतिमुक्तिदातृमहिलायै । एकायै । एकमहांबुराशिनिलयायै । एकान्तक्लृप्तोदयायै। एकानेकलया विभक्तभुवनायै। एकातपत्रोज्ज्वलायै । एणीचारुविलोललोचनयुगायै। एकावलीभूषणायै। एतत्तत्वमयाणिमादिवरदायै। ऐंकारासनमध्यपीठनिलयायै। ऐन्द्रादिलोकप्रदायै। ऐरावत्युपमानदेहलतिकायै नमः ।। १००

ओं ऐन्द्र्यादिशक्तीडितायै नमः। ऐंकाराक्षरवेदवेद्यविभवायै । ऐश्वर्यदानेक्षणायै। ऐं ऐमित्यनुसन्दधानभुवनायै। ओमित्येकपदावलीडितपदायै । ओजोविशेषान्वितायै । ओष्ठाधावितबिम्बविद्रुमलतायै । ओघत्रयाराधितायै । अप्सरसां ओघैःसदा परिवृतायै । ओताखिलार्थाधिपायै । ओजोराजितवाग्विभूति-

विनुतायै। औशीरादिसुगन्धिशोभनकचायै। औत्पत्तिजालप्रियायै । औदासीन्यविभिन्नदैत्यविभवायै। औपाधिकोपान्वितायै। औदार्या-करपादपङ्कजयुगायै । औपम्यहीनाननायै । औमाकान्तपद-प्रदर्शितपदायै। अंभोजासनमुख्यसेवितपदायै। अंभोधरश्यामलायै नमः ॥ १२०

ओं अंगाकल्पितरत्नभूषणशतायै नमः । अण्डौघसं-सेवितायै । अंब्वाकाशतया विभक्तभुवनायै। अंभोरुहांघ्रिद्वयायै। अह्लायान्तकसूदनप्रियतमायै। अस्ताघायै। अवनम्रदेवनिबहायै। अस्तोकभाग्योदयायै । अर्घाधिक्यमनोहरायै । अचलजायै । अष्टाक्षरैरर्चितायै । अर्घातीतमनोज्ञभूषणशतायै । अक्षीण-सौभाग्यदायै। अर्काभोरुहवैरिवह्निनयनायै। कावेरीपुलिनालयायै । कमलजायै । कामारिवामालयायै । कारुण्यामृतलोचनायै । कविनुतायै । कन्दर्पकान्तिप्रदायै नमः ॥ १४०

ओं कल्याण्यै नमः । क्षितिलोककल्पलतिकायै । कारुण्यवारांनिधये । कालांभोधरकम्रकुण्डलधरायै । खर्वाटायै । खगकेतनानुजवरायै। खट्वांगपाणिस्तुतायै। खर्वाखर्वविवर्जितायै । खगमयूखाराधितायै। खड्गिन्यै। खद्योतेशवरप्रदायै। खगनुतायै । खद्योतकोटिप्रभायै । खण्डेन्दूज्ज्वलशेखरायै । खगच्चरायै । गंगावर्तसमाननाभिकुहरायै। गण्डोज्ज्वलत्कुण्डलायै। गन्धर्वासुर-सिद्धकिन्नरनुतायै । गन्धोत्तमालेपितायै । गंभीरामृतसिन्धु-मध्यनिलयायै नमः ॥ १६०

ओं गांभीर्यधैर्यात्मिकायै नमः । गंगोत्तुंगतरंगशेखरयुतायै। गीतानन्दमयायै । गिरीशनमितायै । गीतप्रियाराधितायै । गीतोल्लासिन्यै । गीयमानचरितायै । गीर्नाथसंसेवितायै । गीष्पद्मावरदायै। गिरीन्द्रनिलयायै। गीर्वाणबृन्दाश्रितायै। गीतायै ।

गीतमनोहरायै । गिरिसुतायै । गुप्तायै । गुप्तव(त)रायै । गुहेशवरदायै । गुच्छोज्ज्वलन्मल्लिकायै । गुह्याचारगतायै । गुरुस्तनभरायै नमः ।। १८०

ओं गुच्छार्थहारोज्ज्वलायै नमः । गुल्फस्थायै । गुणमन्दिरायै । गुरुवरायै । गुल्फोल्लसन्नूपुरायै । गूढार्थान्तगतायै । गुरूत्तमनुतायै । घण्टाघोरनिनादघातितमहादैत्यायै । घनश्यामलायै । घर्माघर्ममयूखवह्निनयनायै । घर्मप्रशान्तिप्रदायै । घोरायै । घोरविघोषदानवगणप्रोद्घुष्टघोरारवायै । घोराघौघनिवारणायै । घननिभायै । चातुर्वर्ग्यफलप्रदायै । सुचरितायै । चामुण्डिरूपोत्तरायै । चक्राधिष्ठितपादपद्मचतुरायै । चन्द्राननायै नमः ।। २००

ओं चण्डिकायै नमः । चन्द्रोपेन्द्रचराचरात्मकजगद्रूपायै । चलत्कुण्डलायै । चञ्चल्लोचनवञ्चितेश्वरशिवायै । छिद्रघ्नस्मितचन्द्रिकाधवलितायै । छायेश्वरद्योतितायै । छन्दान्दोलितभूषणांकितगलायै । छन्दःश्रियालंकृतायै । छायाधीशधनञ्जयेन्दुनयनायै । छन्नान्धकारारुणायै । छन्दोवृन्दमहःसुकान्तिनिलयायै । जंबूमूलनिधये । जनार्दननुतायै । जंभारिसंभावितायै । जंबूद्वीपमनोज्ञकल्पलतिकायै । जह्नुन्वात्मजाशेखरायै । जन्मव्याधिजरापहायै । जलमयायै । जांबूनदालंकृतायै । जंबूनाथमनोहरायै नमः ।। २२०

ओं जननुतायै नमः । झंझावाततरङ्गितप्रविमलश्रीनिर्झराप्लावितायै । झङ्कारीकृतषट्पदालकभरायै । झाटित्यबुद्धिप्रदायै । झर्झारारवभूषणायै । झलझलन्मञ्जीरपादांबुजायै । झल्लीमद्दलझर्झरस्वरनुतायै । ज्ञानानन्दमहासमुद्रतरणायै । ज्ञानात्मरूपापरायै । त्वदंघ्रिभजतां ज्ञानज्ञेयमयायै । अज्ञानिनां ज्ञानप्रदायै । ज्ञानाज्ञानमयस्वरूपिण्यै । शिवायै । ज्ञानप्रकाशात्मिकायै । ज्ञातिक्षेत्रकलत्रधान्यधनदायै । टंकाद्यायुधभूषणो-

ज्वलकरायै । ठावेक्ष्यमाणाननायै । डिंभाहुंकृतढं कृतासुरवरायै । डोलाडिढेशस्मितायै। डिंभाकारतया सुपालितजनायै नमः ।। २४०

ओं ढकारवोद्धोषितायै नमः । ढंढंढेतिझटि(रि)कणादिमहितायै। तत्त्वार्थप्रतिपाद्यमानचरणायै। तत्त्वत्रयोद्दीपिकायै। तत्त्वातीतपदायै। तपोधननुतायै। तारेशचूडामणये। तारुण्यामृतसिन्धुमध्यलतिकायै । तार्क्ष्यध्वजाराधितायै । तापिञ्छस्तबकद्युतये । तनुलतायै । स्थाणुप्रेमनिधये । स्थितीशमहितायै । स्थैर्यस्थित्यै । स्थापिकायै । स्थानास्थानकृतार्थदेहिनिवहायै । स्थित्यन्तसर्गोद्यतायै । स्थानाधिक्यमनोहरायै । स्थिरतरायै । स्थाण्वन्तरालाश्रयायै नमः ।। २६०

ओं स्थूलागोचरदर्शनायै नमः। स्थितिमयायै। द(दा)क्षाचारवरप्रदायै । दमयुतायै । दक्षायै । दयांकूरितायै । दान्तायै । द्रष्टृमनोहरायै । द्विजवरायै । दन्तावलाराधितायै । दानादानविधानचोदनपरायै । दातृस्वरूपापरायै । दैन्याध्यात्मिकतापहारिचरणायै । दिव्यज्ञानमयायै । दिवाकरनिभायै । दिव्यांबरालंकृतायै । दिव्यस्त्रीजनसेवितायै । द्विजमयायै । दीक्षाप्रदानोद्यतायै। दीप्तायै नमः ।। २८०

ओं दीप्तशशाङ्कवह्निनयनायै नमः । दीनादिमुक्तिप्रदायै । दिक्पालादिदिगंबरार्चितपदायै। दुर्भिक्षादिसमस्तदुःखहरणायै । दुःशीलतापापहायै। दुर्गाद्यावृतिदेवतार्चितपदायै। दूर्वांकुरश्यामलायै । दुर्लक्ष्यागमचित्तदूरचरितायै । दुर्गादिवस्यापरायै । दुर्वासादिमुनीश्वरस्तुतपदायै । धर्मिष्ठायै । धरणीधरेन्द्रतनयायै । धाराधरोद्यत्प्रभायै। धम्मिल्लांचितमल्लिकादिकुसुमायै। धर्मादिसंसेवितायै । धर्माद्यर्थचतुष्टयस्थितिपदायै । धामत्रयाराधितायै । धन्यायै। धार्मिकचित्तनित्यनिलयायै। नानारत्नविभूषणायै नमः ।। ३००

ओं नवघनश्यामायै नमः । नटेशप्रियायै । नक्षत्रेशधरायै । नगेन्द्रनिलयायै । नागारिवाहानुजायै । नानादेववृतायै । नरोत्त-मनुतायै । नाथायै । नृमुक्तिप्रदायै । नाकौकोगणनम्यमानचरणायै । नीहाराचलकन्यकायै । निगमगायै । नित्यात्मिकायै । निर्मलायै । निःशेषाण्डसुमातृकायै । निशिचराराध्यायै । निशेशांकितायै । नीपारण्यनिवासनित्यरसिकायै । निर्निद्रपद्मेक्षणायै । निःशोका-कृतिकायै नमः ।। ३२०

ओं निरञ्जनपदायै नमः । पद्मायै । पद्मनिभाननायै । परतरायै । पद्मार्चितांघ्रिद्वयायै । पद्मस्थायै । परदानवारिविनुतायै । पद्मासनाराधितायै । पद्मास्यायै । परलोकसाधनपरायै । पद्मा(श्वा)क्षरालंकृतायै । पक्षापक्षविवर्जितायै । परशिवायै । फुल्लांभाजदलेक्षणेन्दुविकृतालीकाभिरामाननायै । फूत्काराहिफणा-धरेन्द्ररमणीनृत्तान्तरालस्थितायै । स्फायत्पण्डितसूक्तिमर्मवि-भवायै । स्फाटिक्यतेजोमयायै । स्फूर्जत्कान्तिमयायै । फणीन्द्र-वरदायै । बालायै नमः ।। ३४०

ओं (अ)बालपराक्रमायै नमः । बहुविधायै । बालप्रवाला-धरायै । बालादित्यसमप्रभायै । बहुनुतायै । बालेन्दुभूषोज्ज्वलायै । बन्धूकारुणविग्रहायै । बहुविधब्रह्माण्डभाण्डोदर्यै । ब्रह्मागस्त्य-सुरेन्द्रवन्दितपदायै । भावातीतपदप्रवर्तितगुणायै । भाषायै । भवाराधितायै । भावाद्यायै । भवरोगभञ्जनकरायै । भद्रायै । भयच्छेदिन्यै । भव्यायै । भाग्यवदुत्तमेड्यचरणायै । भागीरथी-शान्वितायै । भास्वच्चन्द्रविलोचनार्चितपदायै नमः ।। ३६०

ओं मायायै नमः । मन्मथसेवितायै । मरकतश्यामायै । मनोज्ञामलायै । मायामोहविवर्जितायै । मणिमयाकल्पायै । महामञ्जुलायै । मायातीतमहामुनीन्द्रवरदायै । माणिक्यकेयूर-

कायै । मालालंकरणायै । मतङ्गतनयायै । मित्राग्नीन्दुविलोचनायै । मिहिरभायै । मीनोल्लसल्लोचनायै । मिथ्याज्ञानमनोतिदूरचरणायै । मीनध्वजाराधितायै । मीमांसादिसमस्तशास्त्रमहितायै । मृष्टान्नदानोद्यमायै । मित्रोद्भासिन्यै । मित्रवह्निविनुतायै नमः ।। ३८०

ओं मुग्धायै नमः । मुग्धशशांकशेखरयुतायै । मूलागमार्थोद-यायै । मुक्तायै । मूषिकवाहनार्चितपदायै । मूर्तित्रयाराधितायै । मूलाधारगतायै । मुखाब्जविलसन्मुग्धस्मितायै । मुक्तिदायै । मुद्रामोदितमानसायै । मुनिनुतायै । यज्ञायै । यज्ञफलप्रदायै । यमनुतायै । यक्षेश्वराराधितायै । यक्ष्मघ्न्यै । यमसूदनप्रियतमायै । यज्ञेशसंपूजितायै । यन्त्रस्थायै । यतिपूजितायै नमः ।। ४००

ओं यतिकृतश्रीचक्रभूषोज्ज्वलायै नमः । यक्षिण्यादिसमस्त-शक्तिविनुतायै । रामायै । रामवरप्रदायै । रसकलायै । राजीवपत्रार्चि-तायै । राकाचन्द्रनिभायै । रमार्चितपदायै । राजाधिराजानतायै । रम्यायै । राजतशैलशृङ्गनिलयायै । रत्याप्तपत्यानुतायै । रागद्वेषविही-नचित्तसुलभायै । अखिलाण्डेश्वर्यै । लावण्यांबुनिधये । ललाटनयनायै । लंबोदराराधितायै । लाक्षारञ्जितपादपद्मयुग-लायै । लंबालकोद्भासितायै । लंकेशारिनुतायै नमः ।। ४२०

ओं लयोद्भवकरायै नमः । लक्ष्मीपतीड्यप्रियायै । लक्ष्यायै । लक्ष्यमनोज्ञमध्यतिलकायै । अखिलाण्डेश्वर्यै । वाच्यायै (वामायै) । वारिजलोचनार्चिपदायै । वाग्देवताराधितायै । वामाद्यायै । वरशैलराजतनयायै । वामदिशक्त्यात्मिकायै । वश्याकर्षणसिद्धि-मूलगुलिकायै । वादित्रनादप्रियायै । वाणीवल्लभवज्रपाणिवरदायै । अखिलाण्डेश्वर्यै । शान्तायै । शङ्करवल्लभायै । शशियुतायै । शातोदर्यै । श्यामलायै नमः ।। ४४०

ओं शंकाहीनविशोकदायै नमः । शतमखाराध्यायै । शशाङ्काननायै। शक्तायै। शक्तिधरार्चितायै। शमधनाधीशार्चितायै । शारदायै । शैवाद्यागमपारगायै । शमधनायै । अखिलाण्डेश्वर्यै । षट्चक्रान्तगतायै । षडक्षरमयायै । षट्त्रिंशतत्त्वात्मिकायै । षट्पद्मान्तपुरायै । षडाननुतायै । षट्कोणसंभाणितायै । षड्वक्त्राद्विपवक्त्रामवरदायै । षड्ग्रन्थिवन्द्यात्मिकायै । षट्छक्तिप्रभवात्मनः प्रियतमायै । अखिलाण्डेश्वर्यै नमः ।। ४६०

ओं सर्वाभीष्टफलप्रदायै नमः । सुमतिभिःसात्त्विकैः संसेवितायै । सर्वालंकरणायै । सदाशिवमयायै । संपत्करायै । साक्षिण्यै। सादिस्थायै। सरसीयुगाक्षियुगलायै। संघट्टवक्षोरुहायै। साक्षात्कारिण्यै । सर्वलोकवरदायै । अखिलाण्डेश्वर्यै । हाहाकाररवैस्त्रिभिःस्तुतपदायै । हाराभिरामायै । अ(ह)समायै । हंसोल्लासितरम्यविश्वविभवायै । हंबीजमूलाङ्कुरायै । हस्थायै । हस्तिवनालयायै। हरिहरब्रह्मेन्द्रवन्द्येश्वर्यै नमः ।। ४८०

ओं हंसीतीतपदायै नमः । हकारचरितायै। अखिलाण्डेश्वर्यै। ळंबीजायै । ळकुलायै । ळतामृदुतनवे । ळङ्कारसंपूजितायै । ळंबीजेनसुलक्षितेड्यविभवायै। ळींकाररूपान्वितायै। ळान्तायै। हान्तगरे(गरले)सुरान् त्रस्तान्वीक्ष्यजवात्समुदितायै । ळान्ते गे (गले) विनियच्छदीशमहिलायै । अखिलाण्डेश्वर्यै । क्षोणीशाग्र्यपदैकलक्षणविधिक्षेपप्रमाणेक्षणायै । क्षिप्रादाक्षिण-कुक्षिशिक्षणमनसे । क्षेत्रज्ञसंरक्षिण्यै । त्र्यक्षालक्ष्यतिति-क्षुदक्षदमनायै । क्षान्तान्तसंवीक्षणायै। क्षितिभृत्सुतायै। शिवायै नमः ।। ५००

# उमात्रिशती

वासिष्ठगणपतिमुनिप्रणीता

उमा हैमवती देवी महादेवी महेश्वरी।
अजा धूम्रा सुरूपैका विश्वसूर्विश्वधारिणी ॥ १

शिवा भगवती भद्रा प्रकृतिर्विकृतिः कृतिः।
अनन्ताऽनादिरव्यक्ता दुर्गपारा दुरत्यया ॥ २

स्वधा स्वाहा सुधा पुष्टिः सुधा सोमस्वरूपिणी।
तुष्टिर्निद्रा विष्णुमाया जातिर्धीश्चेतना चितिः ॥ ३

माता शान्तिः क्षमा श्रद्धा ह्रीर्वृत्तिर्व्यापिनी स्मृतिः।
शक्तिस्तृष्णा क्षुधा भ्रान्तिः कान्तिश्छाया रमा दया ॥ ४

भवानी राजसी सृष्टिर्मृडानी सात्त्विकी स्थितिः।
रुद्राणी तामसी मृत्युः शर्वाणी त्रिगुणा परा ॥ ५

कृष्णा लक्ष्मीः कामधेनुरार्या दाक्षायणी सती।
गणेशजननी दुर्गा पार्वती ब्रह्मचारिणी ॥ ६

गंभीरनादवद्घण्टा कूष्माण्डा षण्मुखप्रसूः।
कात्यायनी कालरात्रिर्गौरी सिद्धिप्रदायिनी ॥ ७

अपर्णा तापसी बाला कन्या कान्तारचारिणी।
महर्षिस्तुतचारित्रा त्रिनेत्रार्धांगभागिनी ॥ ८

रमणीयतमा राज्ञी रजताद्रिनिवासिनी।
गीर्वाणमौलिमाणिक्यनीराजितपदाम्बुजा ॥ ९

सर्वागमस्तुतोपास्या विद्या त्रिपुरसुन्दरी।
कमलात्मा छिन्नमस्ता मातंगी भुवनेश्वरी ॥ १०

तारा धूमवती काली भैरवी बगळामुखी ।
अनुल्लंघ्यतमा संध्या सावित्री सर्वमंगळा ।। ११

छंदः सवित्री गायत्री श्रुतिर्नादस्वरूपिणी ।
कीर्तनीयतमा कीर्तिः पावनी परमाम्बिका ।। १२

उषा देव्यरुषी मैत्री भास्वती सूनृतार्जुनी ।
विभावरी बोधयित्री वाजिनी वाजिनीवती ।। १३

रात्रिः पयस्वती नम्या घृताची वारुणी क्षपा ।
हिमा निवेशिनी रौद्रा रामा श्यामा तमस्वती ।। १४

कपालमालिनी घोरा कराळाऽखिलमोहिनी ।
ब्रह्मस्तुता महाकाली मधुकैटभनाशिनी ।। १५

भानुपादाङ्गुलिर्ब्रह्मपादा पाश्यूरुजंघिका ।
भूनितम्बा शक्रमध्या सुधाकरपयोधरा ।। १६

वसुहस्तांगुलिर्विष्णुदोःसहस्रा शिवानना ।
प्रजापतिरदा वह्निनेत्रा वित्तेशनासिका ।। १७

संध्याभ्रूयुगला वायुश्रवणा कालकुन्तला ।
सर्वदेवमयी चंडी महिषासुरमर्दिनी ।। १८

कौशिकी धूम्रनेत्रघ्नी चंडमुंडविनाशिनी ।
रक्तबीजप्रशमनी निशुम्भमदशोषिणी ।। १९

शुंभविध्वंसिनी नन्दा नन्दगोकुलसंभवा ।
एकानंशा मुरारातिभगिनी विन्ध्यवासिनी ।। २०

योगीश्वरी भक्तवश्या सुस्तनी रक्तदन्तिका ।
विशाला रक्तचामुण्डा वैप्रचित्तनिषूदिनी ।। २१

शाकम्भरी दुर्गमघ्नी शताक्ष्यमृतदायिनी।
भीमैकवीरा भीमास्या भ्रामर्युरुणनाशिनी।। २२

ब्रह्माणी वैष्णवीन्द्राणी कौमारी सूकरानना।
माहेश्वरी नारसिंही चामुण्डा शिवदूतिका।। २३

गौर्भूर्मही द्यौरदितिर्देवमाता दयावती।
रेणुका रामजननी पुण्या वृद्धा पुरातनी।। २४

भारती दस्युजिन्माता सिद्धा सौम्या सरस्वती।
विद्युद्वज्रेश्वरी वृत्रनाशिनी भूतिरच्युता।। २५

दंडिनी पाशिनी शूलहस्ता खट्वांगधारिणी।
खड्गिनी चापिनी बाणधारिणी मुसलायुधा।। २६

सीरायुधांकुशवती शंखिनी चक्रधारिणी।
उग्रा वैरोचनी दीप्ता ज्येष्ठा नारायणी गतिः।। २७

महीश्वरी वह्निरूपा वायुरूपाऽम्बरेश्वरी।
द्युनायिका सूर्यरूपा नीरूपाऽखिलनायिका।। २८

रतिः कामेश्वरी राधा कामाक्षी कामवर्धिनी।
भंडप्रणाशिनी गुप्ता त्र्यंबका शंभुकामुकी।। २९

अराळनीलकुन्तला सुधांशुसुन्दरानना।
प्रफुल्लपद्मलोचना प्रवाललोहिताधरा।। ३०

तिलप्रसूननासिका लसत्कपोलदर्पणा।
अनङ्गचापझिल्लिका स्मितापहास्यमल्लिका।। ३१

विवस्वदिन्दुकुण्डला सरस्वतीजितामृता।
समानवर्जितश्रुतिः समानकंबुकंधरा।। ३२

अमूल्यमाल्यमंडिता मृणालचारुदोर्लता।
करोपमेयपल्लवा सुरोपजीव्यसुस्तनी ।। ३३

बिसप्रसूनसायकक्षुराभरोमराजिका।
बुधानुमेयमध्यमा कटीतटीभरालसा ।। ३४

प्रसूनसायकागमप्रवादचुंचुकाञ्चिका।
मनोहरोरुयुग्मका मनोजतूणजंघिका ।। ३५

क्वणत्सुवर्णहंसका सरोजसुन्दरांघिका।
मतंगजेन्द्रगामिनी महाबला कलावती ।। ३६

शुद्धा बुद्धा निस्तुला निर्विकारा
सत्या नित्या निष्कला निष्कलंका।
अज्ञा प्रज्ञा निर्भवा नित्यमुक्ता
ध्येया ज्ञेया निर्गुणा निर्विकल्पा ।। ३७

आगमाब्धिलोडनेन सारभूतमाहृतं
शैलपुत्रिकाभिधा-शतत्रयामृतं मया।
ये भजन्ति सूरयस्तरन्ति ते महद्भयं
रोगजं च वैरिजं च मृत्युजं च सर्वजम् ।। ३८

* * *

## उमात्रिशतीनामावलिः

ओं उमायै नमः। हैमवत्यै। देव्यै। महादेव्यै। महेश्वर्यै। अजायै । धूम्रायै। सुरूपायै। एकायै। विश्वसुवे। विश्वधारिण्यै। शिवायै। भगवत्यै। भद्रायै। प्रकृत्यै। विकृत्यै। कृत्यै। अनन्तायै। अनादये। अव्यक्तायै नमः ।। २०

ओं दुर्गपारायै नमः। दुरत्ययायै। स्वधायै। स्वाहायै। सुधायै। पुष्ट्यै। सुखायै। सोमस्वरूपिण्यै। तुष्ट्यै। निद्रायै। विष्णुमायायै। जात्यै। धियै। चेतनायै। चित्यै। मात्रे। शान्त्यै। क्षमायै। श्रद्धायै। ह्रियै नमः ॥ ४०

ओं वृत्त्यै नमः। व्यापिन्यै। स्मृत्यै। शक्त्यै। तृष्णायै। क्षुधायै। भ्रान्त्यै। कान्त्यै। छायायै। रमायै। दयायै। भवान्यै। राजस्यै। सृष्ट्यै। मृडान्यै। सात्विक्यै। स्थित्यै। रुद्राण्यै। तामस्यै। मृत्यवे नमः ॥ ६०

ओं शर्वाण्यै नमः। त्रिगुणायै। परायै। कृष्णायै। लक्ष्म्यै। कामधेन्वै। आर्यायै। दाक्षायण्यै। सत्यै। गणेशजनन्यै। दुर्गायै। पार्वत्यै। ब्रह्मचारिण्यै। गंभीरनादवद्घण्टायै। कूष्माण्डायै। षण्मुखप्रसुवे। कात्यायन्यै। कालरात्र्यै। गौर्यै। सिद्धिप्रदायिन्यै नमः ॥ ८०

ओं अपर्णायै नमः। तापस्यै। बालायै। कन्यायै। कान्तारचारिण्यै। महर्षिस्तुतचारित्रायै। त्रिनेत्रार्धाङ्गभामिन्यै। रमणीयतमायै। राज्ञ्यै। रजताद्रिनिवासिन्यै। गीर्वाणमौलिमाणिक्य नीराजितपदांबुजायै। सर्वागमस्तुतायै। उपास्यायै। विद्यायै। त्रिपुरसुन्दर्यै। कमलात्मने। छिन्नमस्तायै। मातंग्यै। भुवनेश्वर्यै। तारायै नमः ॥ १००

ओं धूमवत्यै नमः। काल्यै। भैरव्यै। बगलामुख्यै। अनुल्लंघ्यतमायै। सन्ध्यायै। सावित्र्यै। सर्वमङ्गलायै। छन्दसे। सवित्र्यै। गायत्र्यै। श्रुत्यै। नादस्वरूपिण्यै। कीर्तनीयतमायै। कीर्त्यै। पावन्यै। परमाम्बिकायै। उषायै। देव्यै। अरुण्यै नमः ॥ १२०

ओं मैत्र्यै नमः । भास्वत्यै । सूनृतार्जुन्यै । विभावर्यै । बोधयित्र्यै । वाजिन्यै । वाजिनीवत्यै । रात्र्यै । पयस्वत्यै । नम्यायै । घृताच्यै । वारुण्यै । क्षपायै । हिमायै । निवेशिन्यै । रौद्रायै । रामायै । श्यामायै । तमस्वत्यै । कपालमालिन्यै नमः ।। १४०

ओं घोरायै नमः । करालायै । अखिलमोहिन्यै । ब्रह्मस्तुतायै । महाकाल्यै । मधुकैटभनाशिन्यै । भानुपादांगुल्यै । ब्रह्मपादायै । पाश्यूरुजंघिकायै । भूनितंबायै । शक्रमध्यायै । सुधाकरपयोधरायै । वसुहस्तांगुलये । विष्णुदोःसहस्रायै । शिवाननायै । प्रजापतिरदायै । वह्निनेत्रायै । वित्तेशनासिकायै । सन्ध्याभ्रूयुगलायै । वायुश्रवणायै नमः ।। १६०

ओं कालकुन्तलायै नमः । सर्वदेवमय्यै । चण्ड्यै । महिषासुरमर्दिन्यै । कौशिक्यै । धूम्रनेत्रघ्न्यै । चण्डमुण्डविनाशिन्यै । रक्तबीजप्रशमन्यै । निशुंभमद शोषिण्यै । शुंभविध्वंसिन्यै । नन्दायै । नन्दगोकुलसंभवायै । एकानंशायै । मुरारातिभगिन्यै । विन्ध्य-वासिन्यै । योगीश्वर्यै । भक्तवश्यायै । सुस्तन्यै । रक्तदन्तिकायै । विशालायै नमः ।। १८०

ओं रक्तचामुण्डायै नमः । वैप्रचित्तनिषूदिन्यै । शाकंभर्यै । दुर्गमघ्न्यै । शताक्ष्यै । अमृतदायिन्यै । भीमायै । एकवीरायै । भीमास्यायै । भ्रामर्यै । उरुणनाशिन्यै । ब्रह्माण्यै । वैष्णव्यै । इन्द्राण्यै । कौमार्यै । सूकराननायै । माहेश्वर्यै । नारसिंह्यै । चामुण्डायै । शिवदूतिकायै नमः ।। २००

ओं गवे नमः । भुवे । मह्यै । दिवे । अदित्यै । देवमात्रे । दयावत्यै । रेणुकायै । रामजनन्यै । पुण्यायै । वृद्धायै । पुरातन्यै । भारत्यै । दस्युजिन्मात्रे । सिद्धायै । सौम्यायै । सरस्वत्यै । विद्युते । वज्रेश्वर्यै । वृत्रनाशिन्यै नमः ।। २२०

ओं भूत्यै नमः । अच्युतायै । दण्डिन्यै । पाशिन्यै । शूलहस्तायै । खट्वाङ्गधारिण्यै । खड्गिन्यै । चापिन्यै । बाणधारिण्यै । मुसलायुधायै । सीरायुधायै । अंकुशवत्यै । शंखिन्यै । चक्रधारिण्यै । उग्रायै । वैरोचन्यै । दीप्तायै । ज्येष्ठायै । नारायण्यै । गत्यै नमः ।। २४०

ओं महीश्वर्यै नमः । वह्निरूपायै । वायुरूपायै । अंबरेश्वर्यै । द्युनायिकायै । सूर्यरूपायै । नीरूपायै । अखिलनायिकायै । रत्यै । कामेश्वर्यै । राधायै । कामाक्ष्यै । कामवर्धिन्यै । भण्डप्रणाशिन्यै । गुप्तायै । त्र्यंबकायै । शंभुकामुक्यै । अरालनीलकुन्तलायै । सुधांशुसुन्दराननायै । प्रफुल्लपद्मलोचनायै नमः ।। २६०

ओं प्रवाललोहिताधरायै नमः । तिलप्रसूननासिकायै । लसत्कपोलदर्पणायै । अनंगचापझिल्लिकायै । स्मितापहास्य-मल्लिकायै । विवस्वदिन्दुकुण्डलायै । सरस्वतीजितामृतायै । समानवर्जितश्रुत्यै । समानकंबुकन्धरायै । अमूल्यमाल्यमण्डितायै । मृणालचारुदोर्लतायै । करोपमेयपल्लवायै । सुरोपजीव्यसुस्तन्यै । बिसप्रसूनसायकक्षुराभरोमराजिकायै । बुधानुमेयमध्यमायै । कटीतटीभरालसायै । प्रसूनसायकागमप्रवाद चुञ्चुकाञ्चिकायै । मनोहरोरुयुग्मकायै । मनोजतूणजंघिकायै । कणत्सुवर्णहंसकायै नमः ।। २८०

ओं सरोजसुन्दरांघ्रिकायै नमः । मतङ्गजेन्द्रगामिन्यै । महाबलायै । कलावत्यै । शुद्धायै । बुद्धायै । निस्तुलायै । निर्विकारायै । सत्यायै । नित्यायै । निष्कलायै । निष्कलङ्कायै । अज्ञायै । प्रज्ञायै । निर्भवायै । नित्यमुक्तायै । ध्येयायै । ज्ञेयायै । निर्गुणायै । निर्विकल्पायै नमः ।। ३००

# श्री दुर्गाष्टोत्तर शतनामावलिः

ओं दुर्गायै नमः । कामकलायै । कान्तायै । कपालि प्राणनायिकायै । हर्यक्षवाहनारूढायै । हतारये । हरिसोदर्यै । कमलाक्ष्यै । कार्मुकधृते । कनत्कनकमेखलायै । तेजस्विन्यै । त्र्यक्षयुतायै । तृतीयस्थानगोचरायै । महिषासुरमूर्ध्निस्थायै । मातङ्गवरकन्यकायै । विरूपाक्ष्यै । विश्ववन्द्यायै । विराज्यै । विश्वमोहिन्यै । सुरासुरार्चितायै नमः ।। २०

ओं सूर्यायै नमः । शुंभासुरनिषूदिन्यै । रम्भास्थानायै । आरम्भफलायै । शिवसौख्यकर्यै । ईश्वर्यै । यज्ञवेद्युद्भवायै । यज्ञायै । यतीड्यायै । यत्नपूजितायै । सुरतेजस्समुद्भूतायै । सुरायुधवरा-युधायै । शम्भुमोहिन्यै । नित्यायै । नियत्यै । नमतां हितायै । नाथायै । नारायण्यै । नेयायै । नामरूपविवर्जितायै नमः ।। ४०

ओं शान्तायै नमः । शान्तिकर्यै । शान्तये । शाश्वत्यै । शशिशेखरायै । वेदान्तवेद्यायै । वेदात्मने । वाण्यै । वीणाविनोदिन्यै । समर्थायै । सुरथाराद्ध्यायै । सुरनाथार्चितायै । सुधायै । समाधिनिष्ठध्येयात्मने । समाधिपरदेवतायै । असमानाधिकायै । कर्काभायै । अनङ्गानुग्रहोन्मुख्यै । अपञ्चीकृतभूतात्मने । पञ्चीकरण तत्परायै नमः ।। ६०

ओं साधुसेव्यायै नमः । सावधानायै । लीलाविग्रहधारिण्यै । शक्तिप्रियायै । शक्तिरूपायै । शास्त्र्यै । शक्तिमत्यै । शिवायै । रूपिण्यै । रोगसंहर्त्र्यै । रुरुहन्त्र्ये । रुचिप्रदायै । हतदैत्यायै । हर्षमय्यै । हेयोपादेयवर्जितायै । यशोदानन्दिन्यै । याच्ञादैन्यनाशन तत्परायै । विद्वत् प्रियायै । विशेषज्ञायै । विश्वसुवे नमः ।। ८०

ओं विन्ध्यवासिन्यै नमः । योगनिद्रायै । योगिवन्द्यायै । योनिचक्रप्रपूजितायै । यतदैत्यायै । हैमवत्यै । हंसात्मने । हंससेवितायै । त्रिनेत्रायै । त्रिपुरायै । त्रात्र्यै । तृतीयगुणवर्जितायै । गर्भसङ्कर्षणकर्यै । जाग्रत्स्वप्नसुषुप्त्याख्यावस्थानेकस्थलोककायै । जाग्रत्स्वप्नसुषुप्त्याख्यावस्था त्रितयसाक्षिण्यै । निरुपाधये । निराक्षेपायै । निष्कळङ्कायै । निराकृतये । सगुणायै नमः ॥ १००

ओं निर्गुणायै नमः । सान्द्रानन्दायै । अपारदयानिधये । वाराह्यै । नारसिंह्यै । कौमार्यै । वैष्णव्यै । वरायै नमः ॥ १०८

## शूलिन्यष्टोत्तरशतनामस्तोत्रम्

महासंमोहिनी देवी सुन्दरी भुवनेश्वरी ।
एकाक्षरी महामाया एकाकिन्येकनायिका ॥ १

एकरूपा महारूपा स्थूलसूक्ष्मपरायणा ।
शिवरूपा विष्णुरूपा क्षमारूपा सुवासिनी ॥ २

पुराणी पूर्णरूपा च पवित्रा पद्मधारिणी ।
रुद्राणी पार्वतीन्द्राणी शंकरार्धशरीरिणी ॥ ३

नारायणी महालक्ष्मीर्महादेवी शुभङ्करी ।
अकारादिक्षकारान्ता अष्टत्रिंशत्कलाधरी ॥ ४

सप्तमातृगणा नारीशरीरोत्पत्तिकारिणी ।
मनोजवा महाज्ञाना दिव्यमाता महेश्वरी ॥ ५

योगेश्वरी पद्मवती हंसिनी जननी तथा ।
मृत्युञ्जया सुमाता तत्पुरुषा पीतवासिनी ॥ ६

अघोराणी महारौद्री हेमाचलकुलेश्वरी।
सद्योजाता कलारूपा सोमसूर्याग्निमण्डली ।। ७

गुणत्रयी पराशक्तिः रौद्री त्रिपुरभैरवी।
सिंहासनस्था योगीन्द्रा पद्मारूढा सुखासिनी ।। ८

लोभा दुर्गा महालक्ष्मीः कंकाली भुवनेश्वरी।
कामाक्षी करुणानेत्री कन्यानेत्री सुरेश्वरी ।। ९

त्रियंबकी त्रिशक्तिस्त्रिशूली त्रिपुरसुन्दरी।
दिगंबरी जटाधारी चन्द्रार्धकृतशेखरा ।। १०

अंबिका लोकरक्षार्थं पिनाकिरूपधारिणी।
वज्रशक्तिस्त्रिकाधारा शुद्धपांसुप्रसारिणी ।। ११

शूलिनी पाशहस्ता च डमर्वङ्कुशधारिणी।
शंखिनी चक्रिणी खट्वाङ्गिनी खड्ग गदाधरी ।। १२

महाशूलधरा शक्तिस्त्रिकोणा सर्वतो मुखी।
सहस्रवदना पद्मा हुंकारा दुरितापहा ।। १३

शूलदुर्गा शूलहरा शुभा शरभशूलिनी।
कलिदोषहरा क्षीरपायिनी विप्रपूजिता ।। १४

अरूपा बहुरूपा च स्तंभिनी कालवञ्चिनी।
चतुर्भुजा त्रिणेत्रा च हृल्लेखा परमेश्वरी ।। १५

एवमष्टोत्तरशतं नाम्नां ईश्वरभाषितम्।
भक्तियुक्तः पठेन्नित्यं सर्वसिद्धिमवाप्नुयात् ।। १६

## शूलिन्यष्टोत्तरशतनामावलिः

ओं महासंमोहिन्यै नमः । देव्यै । सुन्दर्यै । भुवनेश्वर्यै । एकाक्षर्यै । महामायायै । एकाकिन्यै । एकनायिकायै । एकरूपायै । महारूपायै । स्थूलसूक्ष्मपरायणायै । शिवरूपायै । विष्णुरूपायै । क्षमारूपायै । सुवासिन्यै । पुराण्यै । पूर्णरूपायै । पवित्रायै । पद्मधारिण्यै । रुद्राण्यै नमः ॥ २०

ओं पार्वत्यै नमः । इन्द्राण्यै । शंकरार्धशरीरिण्यै । नारायण्यै । महालक्ष्म्यै । महादेव्यै । शुभंकर्यै । अकारादिक्षकारान्तायै । अष्टत्रिंशत्कलाधर्यै । सप्तमातृगणायै । नारीशरीरोत्पत्तिकारिण्यै । मनोजवायै । महाज्ञानायै । दिव्यमात्रे । महेश्वर्यै । योगेश्वर्यै । पद्मवत्यै । हंसिन्यै । जनन्यै । मृत्युञ्जयायै नमः ॥ ४०

ओं सुमात्रे नमः । तत्पुरुषायै । पीतवासिन्यै । अघोराण्यै । महारौद्र्यै । हेमाचलकुलेश्वर्यै । सद्योजातायै । कलारूपायै । सोमसूर्याग्निमण्डल्यै । गुणत्रय्यै । परायै शक्त्यै । रौद्र्यै । त्रिपुरभैरव्यै । सिंहासनस्थायै । योगीन्द्रायै । पद्मारूढायै । सुखासिन्यै । लोभायै । दुर्गायै । महालक्ष्म्यै नमः ॥ ६०

ओं कंकाल्यै नमः । भुवनेश्वर्यै । कामाक्ष्यै । करुणानेत्र्यै । कन्यानेत्र्यै । सुरेश्वर्यै । त्रियंबक्यै । त्रिशक्त्यै । त्रिशूल्यै । त्रिपुरसुन्दर्यै । सुरेश्वर्यै । जटाधार्यै । चन्द्रार्धकृत-शेखरायै । अंबिकायै । लोकरक्षार्थं पिनाकिरूपधारिण्यै । वज्रशक्त्यै । त्रिकाधारायै । शुद्धपांसुप्रसारिण्यै । शूलिन्यै । पाशहस्तायै नमः ॥ ८०

ओं डमर्वङ्कुशधारिण्यै नमः । शंखिन्यै । चक्रिण्यै । खट्वाङ्गिन्यै । खड्गगदाधर्यै । महाशूलधरायै । शक्त्यै । त्रिकोणायै । सर्वतोमुख्यै । सहस्रवदनायै । पद्मायै । हुंकारायै । दुरितापहायै । शूलदुर्गायै । शूलहरायै । शुभायै । शरभ-शूलिन्यै । कलिदोषहरायै । क्षीरपायिन्यै । विप्रपूजितायै नमः ॥ १००

ओं अरूपायै नमः । बहुरूपायै । स्तंभिन्यै । कालवञ्चिन्यै । चतुर्भुजायै । त्रिणेत्रायै । हृल्लेखायै । परमेश्वर्यै नमः ॥ १०८

## गौर्यष्टोत्तरशतनामस्तोत्रम्

(त्रिपुरारहस्ये माहात्म्यखण्डतः)

अथ श्रुत्वा कथां पुण्यां गौरीवीर्यविचित्रिताम् ।
अपृच्छद्भार्गवो भूयो दत्तात्रेयं महामुनिम् ॥ १

भगवन्नद्भुततमं गौर्या वीर्यमुदाहृतम् ।
शृण्वतो न हि मे तृप्तिः कथां ते मुखनिःसृताम् ॥ २

गौर्या नामाष्टशतकं यच्छच्यै धिषणो जगौ ।
तन्मे कथय तच्छ्रोतुं मनो मेऽत्यन्तमुत्सुकम् ॥ ३

भार्गवेणेत्थमापृष्टो योगिराडत्रिनन्दनः ।
अष्टोत्तरशतं नाम्नां प्राह गौर्या दयनिधिः ॥ ४

जामदग्न्य शृणु स्तोत्रं गौरीनामभिरंकितम् ।
मनोहरं वाञ्छितदं महापद्विनिवारणम् ॥ ५

स्तोत्रस्यास्य ऋषिः प्रोक्त अंगिराश्छन्द ईरितम् ।
अनुष्टुप् देवता गौरी आपन्नाशाय यो जपेत् ॥ ६

ह्रां ह्रीं इत्यादि विन्यस्य ध्यात्वा स्तोत्रमुदीरयेत्।
सिंहसंस्थां मेचकाभां कौसुंभांशुकशोभिताम्॥ ७

खड्गं खेटं त्रिशूलं च मुद्गरं बिभ्रतीं करैः।
चन्द्रचूडां त्रिनयनां ध्यायेद्गौरीमभीष्टदाम्॥ ८

ओं। गौरी गोजननी विद्या शिवा देवी महेश्वरी।
नारायणानुजा नम्रभूषणा नुतवैभवा॥ ९

त्रिनेत्रा त्रिशिखा शंभुसंश्रया शशिभूषणा।
शूलहस्ता श्रुतधरा शुभदा शुभरूपिणी॥ १०

उमा भगवती रात्रिः सोमसूर्याग्निलोचना।
सोमसूर्यात्मताटङ्का सोमसूर्यकुचद्वयी॥ ११

अम्बाऽम्बिकाऽम्बुजधराऽम्बुरूपाऽऽप्यायिनी स्थिरा।
शिवप्रिया शिवांकस्था शोभना शुंभनाशिनी॥ १२

खड्गहस्ता खगा खेटधरा खाच्छनिभाकृतिः।
कौसुंभचेला कौसुंभप्रिया कुन्दनिभद्विजा॥ १३

काली कपालिनी क्रूरा करवालकरा क्रिया।
काम्या कुमारी कुटिला कुमाराऽम्बा कुलेश्वरी॥ १४

मृडानी मृगशाबाक्षी मृदुदेहा मृगप्रिया।
मृकण्डुपूजिता माध्वीप्रिया मातृगणेडिता॥ १५

मातृका माधवी माद्यन्मानसा मदिरेक्षणा।
मोदरूपा मोदकरी मुनिध्येया मनोन्मनी॥ १६

पर्वतस्था पर्वपूज्या परमा परमार्थदा।
परात्परा परामर्शमयी परिणताऽखिला॥ १७

पाशिसेव्या पशुपतिप्रिया पशुवृषस्तुता।
पश्यन्ती परचिद्रूपा परीवादहरा परा॥ १८

सर्वज्ञा सर्वरूपा सा संपत्तिः संपदुन्नता।
आपन्निवारिणी भक्तसुलभा करुणामयी॥ १९

कलावती कलामूला कला कलितविग्रहा।
गणसेव्या गणेशाना गतिर्गमनवर्जिता॥ २०

ईश्वरीशानदयिता शक्तिः शमितपातका।
पीठगा पीठिकारूपा पृषत्पूज्या प्रभामयी॥ २१

महामाया मतङ्गेष्टा लोकालोका शिवाङ्गना।
एतत्तेऽभिहितं राम स्तोत्रमत्यन्तदुर्लभम्॥ २२

गौर्या अष्टोत्तरशतनामभिः सुमनोहरम्।
आपदंभोधितरणे सुदृढप्लवरूपकम्॥ २३

एतत्प्रपठतां नित्यमापदो यान्ति दूरतः।
गौरीप्रसादजननमात्मज्ञानप्रदं नृणाम्॥ २४

भक्त्या प्रपठतां पुंसां सिद्ध्यत्यखिलमीरितम्।
अन्ते कैवल्यमाप्नोति सत्यं ते भार्गवेरितम्॥ २५

## गौर्यष्टोत्तरशतनामावलिः

ओं ह्रीं। गौर्यै नमः। गोजनन्यै। विद्यायै। शिवायै। देव्यै। महेश्वर्यै। नारायणानुजायै। नम्रभूषणायै। नुतवैभवायै। त्रिनेत्रायै। त्रिशिखायै। शंभुसंश्रयायै। शशिभूषणायै। शूलहस्तायै। श्रुतधरायै। शुभदायै। शुभरूपिण्यै। उमायै। भगवत्यै। राज्यै नमः॥ २०

ओं सोमसूर्याग्निलोचनायै नमः । सोमसूर्यात्मताटङ्कायै । सोमसूर्यकुचद्वय्यै । अंबायै । अंबिकायै । अम्बुजधरायै । अम्बुरूपायै । आप्यायिन्यै । स्थिरायै । शिवप्रियायै । शिवाङ्कस्थायै । शोभनायै । शुंभनाशिन्यै । खड्गहस्तायै । खगायै । खेटधरायै । खाच्छनिभाकृत्यै । कौसुंभचेलायै । कौसुंभप्रियायै । कुन्दनिभद्विजायै नमः ॥ ४०

ओं काल्यै नमः । कपालिन्यै । क्रूरायै । करवालकरायै । क्रियायै । काम्यायै । कुमार्यै । कुटिलायै । कुमारांबायै । कुलेश्वर्यै । मृडान्यै । मृगशाबाक्ष्यै । मृदुदेहायै । मृगप्रियायै । मृकण्डुपूजितायै । माध्वीप्रियायै । मातृगणेडितायै । मातृकायै । माधव्यै । माद्यन्मानसायै नमः ॥ ६०

ओं मदिरेक्षणायै नमः । मोदरूपायै । मोदकर्यै । मुनिध्येयायै । मनोन्मन्यै । पर्वतस्थायै । पर्वपूज्यायै । परमायै । परमार्थदायै । परात्परायै । परामर्शमय्यै । परिणतायै । अखिलायै । पाशिसेव्यायै । पशुपतिप्रियायै । पशुवृषस्तुतायै । पश्यन्त्यै । परचिद्रूपायै । परीवादहरायै । परायै नमः ॥ ८०

ओं सर्वज्ञायै नमः । सर्वरूपायै । संपत्त्यै । संपदे । उन्नतायै । आपन्निवारिण्यै । भक्तसुलभायै । करुणामय्यै । कलावत्यै । कलामूलायै । कलायै । कलितविग्रहायै । गणसेव्यायै । गणेशानायै । गत्यै । गमनवर्जितायै । ईश्वर्यै । ईशानदयितायै । शक्त्यै । शमितपातकायै नमः ॥ १००

ओं पीठगायै नमः । पीठिकारूपायै । पृषत्पूज्यायै । प्रभामय्यै । महामायायै । मतङ्गेष्टायै । लोकालोकायै । शिवाङ्गनायै नमः ॥ १०८

# लक्ष्मी-अष्टाविंशतिनामस्तोत्रम्

(त्रिपुरारहस्ये माहात्म्य खण्डतः)

अथ ते पुरुहूताद्याः तुहिनाद्रितटे स्थिताः ।
स्वर्धुनीसविधे पद्मां तुष्टुवुर्हरिवल्लभाम् ।। १

नमो लक्ष्म्यै महादेव्यै पद्मायै सततं नमः ।
नमो विष्णुविलासिन्यै पद्मस्थायै नमो नमः ।। २

त्वं साक्षाद्धरिवक्षःस्था सुरज्येष्ठा वरोद्भवा ।
पद्माक्षी पद्मसंस्थाना पद्महस्ता परामयी ।। ३

परमानन्ददाऽपाङ्गहृतसंश्रितदुर्गतिः ।
अरुणा नन्दिनी लक्ष्मीः महालक्ष्मीस्त्रिशक्तिका ।। ४

साम्राज्य सर्वसुखदा निधिनाथा निधिप्रदा ।
निधीशपूज्या निगमस्तुता नित्यमहोन्नतिः ।। ५

संपत्तिसंमता सर्वसुभगा संस्तुतेश्वरी ।
रमा रक्षाकरी रम्या रमणी मण्डलोत्तमा ।। ६

एवमिन्द्रमुखा देवा नामाष्टाविंशतिं पठन् ।
उपतस्थुर्हरेः कान्तां ब्रह्मशक्तिं समाहिताः ।। ७

## लक्ष्मी-अष्टाविंशतिनामावलिः

ओं श्रीं हरिवक्षःस्थायै नमः । सुरज्येष्ठायै । वरोद्भवायै । पद्माक्ष्यै । पद्मसंस्थानायै । पद्महस्तायै । परामय्यै । परमानन्ददायै । अपाङ्गहृतसंश्रितदुर्गत्यै । अरुणायै । नन्दिन्यै । लक्ष्म्यै । महालक्ष्म्यै । त्रिशक्तिकायै । साम्राज्यसर्वसुखदायै । निधिनाथायै । निधिप्रदायै । निधीशपूज्यायै । निगमस्तुतायै । नित्यमहोन्नत्यै । संपत्तिसंमतायै । सर्वसुभगायै । संस्तुतायै । ईश्वर्यै । रमायै । रक्षाकर्यै । रम्यायै । रमणीमण्डलोत्तमायै नमः ।। २८

## सिद्धसारस्वतम्

(सरस्वत्यष्टोत्तरशतनामस्तोत्रम्)

सिद्धसारस्वतं नाम स्तोत्रं वक्ष्येऽहमुत्तमम्।
उमा च भारती भद्रा वामेशी विजया जया॥ १

वाणी सर्वगता गौरी वामाक्षी कमलप्रिया।
सरस्वती च कमला मातङ्गी चापराजिता॥ २

क्षेमङ्करी शिवा चण्डी कुण्डली वैष्णवी क्रिया।
ऐन्द्री मधुमती लक्ष्मीर्गिरिजा शांभवांबिका॥ ३

राका पद्मवती हंसा पद्मवासा मनोन्मनी।
अपर्णा ललिता धात्री कैमारी शांबरी स्थिरा॥ ४

शांभवी सुमुखी नेत्री त्रिणेत्रा विश्वरूपिणी।
आर्या मृडानी ह्रींकारी कैशिकी सुभगा चला॥ ५

सूक्ष्मा पराऽवरा शान्ता सर्ववर्णा हरिप्रिया।
ज्वालिनी मालिनी चर्चा कन्यका कमलासना॥ ६

महालक्ष्मीर्महासिद्धिः स्वधा स्वाहा सुधा मही।
त्रिलोकपालिनी माता त्रिसन्ध्या त्रिपुरा त्रयी॥ ७

त्रिशक्तिस्त्रिपुरा दुर्गा ब्राह्मी त्रैलोक्यमोहिनी।
त्रिपुष्करा त्रिवर्गा गौस्त्रिवर्णा त्रिस्वराऽमला॥ ८

त्रिगुणा निर्गुणा नित्या निर्विकल्पा निरञ्जना।
कामाक्षी कामिनी कान्ता कामदा कलहंसका॥ ९

सहजा कालजा प्राज्ञा प्रभा मङ्गलसुन्दरी।
वाग्विशाला विशालाक्षी सर्वविद्या सुमङ्गला॥ १०

काली कामेश्वरी शक्तिर्भानवी भुवनेश्वरी।
अष्टोत्तरशतं नाम्नां वाग्देवीप्रीतिदं शुभम्॥ ११

त्रिसन्ध्यं कीर्तयेद्यस्तु सर्वसिद्धिं लभेन्नरः।
आयुरारोग्यमैश्वर्यं सर्वसंपद्विवर्धनम्॥ १२

षट्कर्मसिद्धिदं प्रोक्तं साक्षात्त्रैलोक्यमोहनम्।
सर्वसारस्वतं चैव विषनिर्वासनं भवेत्॥ १३

## सरस्वत्यष्टोत्तरशतनामावलिः

ओं ऐं उमायै नमः। भारत्यै। भद्रायै। वामायै। ईश्यै। विजयायै। जयायै। वाण्यै। सर्वगतायै। गौर्यै। वामाक्ष्यै। कमलप्रियायै। सरस्वत्यै। कमलायै। मातङ्ग्यै। अपराजितायै। क्षेमङ्कर्यै। शिवायै। चण्ड्यै। कुण्डल्यै नमः॥ २०

ओं वैष्णव्यै नमः। क्रियायै। ऐन्द्र्यै। मधुमत्यै। लक्ष्म्यै। गिरिजायै। शांभवायै। अंबिकायै। राकायै। पद्मवत्यै। हंसायै। पद्मवासायै। मनोन्मन्यै। अपर्णायै। ललितायै। धात्र्यै। कौमार्यै। शांबर्यै। स्थिरायै। शांभव्यै नमः॥ ४०

ओं सुमुख्यै नमः। नेत्र्यै। त्रिणेत्रायै। विश्वरूपिण्यै। आर्यायै। मृडान्यै। ह्रींकार्यै। कौशिक्यै। सुभगायै। चलायै। सूक्ष्मायै। परायै। अवरायै। शान्तायै। सर्ववर्णायै। हरिप्रियायै। ज्वालिन्यै। मालिन्यै। चर्चायै। कन्यकायै नमः॥ ६०

ओं कमलासनायै नमः। महालक्ष्म्यै। महासिद्ध्यै। स्वधायै। स्वाहायै। सुधायै। मह्यै। त्रिलोकपालिन्यै। मात्रे। त्रिसन्ध्यायै। त्रिपुरायै। त्रय्यै। त्रिशक्त्यै। त्रिपुरायै। दुर्गायै। ब्राह्म्यै। त्रैलोक्यमोहिन्यै। त्रिपुष्करायै। त्रिवर्गायै। गवे नमः॥ ८०

ओं त्रिवर्णायै नमः। त्रिस्वरायै। अमलायै। त्रिगुणायै। निर्गुणायै। नित्यायै। निर्विकल्पायै। निरञ्जनायै। कामाक्ष्यै। कामिन्यै। कान्तायै। कामदायै। कलहंसकायै। सहजायै। कालजायै। प्राज्ञायै। प्रभायै। मङ्गलसुन्दर्यै। वाचे। विशालायै नमः ॥ १००

ओं विशालाक्ष्यै नमः। सर्वविद्यायै। सुमङ्गलायै। काल्यै। कामेश्वर्यै। शक्त्यै। भानव्यै। भुवनेश्वर्यै नमः ॥ १०८

## मातृकादेवीचतुर्विंशतिनामस्तोत्रम्

(त्रिपुरारहस्ये माहात्म्यखण्डतः)

मेधा वाणी भारती त्वं विद्या माता सरस्वती।
ब्राह्मी माया वर्णमयी पराऽऽद्या कृतिरव्यया ॥ १

विकल्पा निर्विकल्पाऽजा कला नादमयी क्रिया।
कालशक्तिः सर्वरूपा शिवा श्रुतिरनुत्तरा ॥ २

रक्षास्मांस्त्वं महादेवि सर्वलोकमहेश्वरि।
पतितांस्त्वच्चरणयोः रक्ष देवि नमोऽस्तु ते ॥ ३

इति स्तुता सा परमा मातृका विश्वरूपिणी।
प्राह देवान्विधिमुखान् प्रसन्ना तत्कृतार्चना ॥ ४

मातृकास्तुतिरित्येषा विख्याताऽस्तु समन्ततः।
त्रिसन्ध्यं यः पठेदेनां तस्याहं वाङ्मयी हृदि ॥ ५

चतुर्विंशतिनामानि भवद्भिः पठितानि तु।
प्रत्यहं त्रिषु कालेषु पठेद्वेदाक्षि(२४)वारकम् ॥ ६

ततो धारयति श्लोकसहस्रमपि प्रत्यहम्।
बुद्धिः कुशाग्रसदृशी सूक्ष्मार्थप्रविबोधिनी।
जायते नात्र सन्देहः सत्यमेतन्मयेरितम् ॥ ७

## मातृकादेवीचतुर्विंशतिनामावलिः

ओं मेधायै नमः । वाण्यै । भारत्यै । विद्यायै । मात्रे । सरस्वत्यै । ब्राह्म्यै । मायायै । वर्णमय्यै । परायै । आद्यायै । कृत्यै । अव्ययायै । विकल्पायै । निर्विकल्पायै । अजायै । कलायै । नादमय्यै । क्रियायै । कालशक्त्यै । सर्वरूपायै । शिवायै । श्रुत्यै । अनुत्तरायै नमः ॥ (२४)

## सरस्वतीद्वादशनामस्तोत्रम्

सरस्वतीमहं वन्दे वीणापुस्तकधारिणीम् ।
हंसवाहसमायुक्तां विद्यादानकरीं मम ॥ १

प्रथमं भारती नाम द्वितीयं च सरस्वती ।
तृतीयं शारदा देवी चतुर्थं हंसवाहिनी ॥ २

पञ्चमं जगति ख्याता षष्ठं वाणीश्वरी तथा ।
कौमारी सप्तमं प्रोक्ता अष्टमं ब्रह्मचारिणी ॥ ३

नवमं बुद्धिदात्री च दशमं वरदायिनी ।
एकादशं क्षुद्रघण्टा द्वादशं भुवनेश्वरी ॥ ४

ब्राह्मी द्वादशनामानि त्रिसन्ध्यं यः पठेन्नरः ।
सर्वसिद्धिकरी तस्य प्रसन्ना परमेश्वरी ।
सा मे वसतु जिह्वाग्रे ब्रह्मरूपा सरस्वती ॥ ५

## सरस्वतीद्वादशनामावलिः

ओं ऐं भारत्यै नमः । सरस्वत्यै । शारदायै । हंसवाहिन्यै । जगतिख्यातायै । वाणीश्वर्यै । कौमार्यै । ब्रह्मचारिण्यै । बुद्धिदात्र्यै । वरदायिन्यै । क्षुद्रघण्टायै । भुवनेश्वर्यै नमः ॥ (१२)

# शिवकामसुन्दर्यष्टोत्तरशतनामस्तोत्रम्

द्विभुजां उत्पलकरां त्रिभंगीमधुरां भजे।
चारुभूषां सभानेत्रीं नटराड् वामसंस्थिताम् ॥ १

ओं। शिवप्रिया शिवाराध्या शिवेष्टा शिवकोमला।
शिवोत्सवा शिवरसा शिवदिव्यशिखामणिः ॥ २

शिवपूज्या शिवघना शिवस्था शिववल्लभा।
शिवाभिन्ना शिवार्धाङ्गी शिवश्रीदा शिवङ्करी ॥ ३

शिवात्मिका शिवासक्ता शिवकामेश्वरी शिवा।
शिवश्रीः शिवकल्याणी शिवात्मा शिवयोगिनी ॥ ४

शिवयोगीशनाथा च शिवाज्ञा शिवसुन्दरी।
शिवसिद्धिः शिवनिधिः शिवदा(धा)शिवमङ्गला ॥ ५

शिवाधीशा शिवाध्यक्षा शिवान्तःस्था शिवाश्रया।
शिवलीला शिवकला शिवकान्ता शिवांकुरा ॥ ६

शिवकामा शिवश्यामा शिवधाम्नी शिवोत्तमा।
शिवलिङ्गार्चनपरा शिवालिङ्गनतत्परा ॥ ७

शिवालोकन सन्तुष्टा शिवलोकनिवासिनी।
शिवकैलासनगरस्वामिनी शिवरञ्जिनी ॥ ८

शिवस्याहोपुरुषिका शिवसंकल्पपूरिका।
शिवसुन्दरसर्वाङ्गा शिवसुन्दरभामिनी ॥ ९

शिवशब्दैकनिरता शिवध्यानपरायणा।
शिवभक्त्येकसुलभा शिवभक्तजनप्रिया ॥ १०

शिवकल्याणसंपूर्णा शिवानन्दरसार्णवा।
शिवप्रकाशसंपूर्णा शिवशैलकुमारिका ।। ११

शिवास्यपंकजभवा शिवशंभुविमोहिनी।
शिवकामेशमहिषी शिवान्तः पुरवासिनी ।। १२

शिवजैवातृकलता शिवपुण्यपरंपरा।
शिवसौभाग्यनिलया शिवनित्यमनोहरा ।। १३

शिवविज्ञानसंपूर्णा शिवदिव्यविलासिनी।
शिवसंमोहनकरी शिवसाम्राज्यदायिनी ।। १४

शिवदिव्यब्रह्मविद्या शिवताण्डवसाक्षिणी।
शिवैश्वर्यैकसर्वस्वा शिवसत्या शिवात्मगा ।। १५

शिवकार्यैकचतुरा शिवशास्त्रप्रवर्तका।
शिवप्रसादसंपन्ना शिवेच्छाश्रितकामिनी ।। १६

शिवलक्ष्मीः शिवस्यांगे क्षणिकारूपिणी तथा।
शिवातिमोहनकरी शिवनामैकवल्लरी ।। १७

शिवप्रेममहारत्नकाठिन्यकलशास्तनी।
शिवलालित लाक्षार्द्र चरणांबुजकोमला ।। १८

शिवचित्तैकशरणव्यामोहघनवेणिका।
शिवाभीष्टप्रदानश्रीकल्पवल्लीकरांबुजा ।। १९

शिवाक्षिकुमुदज्योत्स्ना शिवश्रीकरुणामयी।
शिववामा शिवज्योतिः शिवैकहृदयास्पदा ।। २०

शिवचिन्तामणिपरा शिवैकनयनामृता।
शिवसंपूर्णविमलज्ञान दुग्धाब्धिचन्द्रिका ।। २१

शिवेतरमहादेवनिर्मलामृतवर्षिणी।
शिवानन्दरसाधारा शिवभाग्याब्धिचन्द्रिका।। २२
शिवकामकला चैव शिवकल्याण दायिनी।
शिवशक्त्यैक्यललिता शिवक्रीडारसोज्ज्वला।। २३
शिवासक्तपरानन्द प्रकाशावृतचिद्धना।
शिवगौरी शिवसौन्दर्यमोहिनी शिवभोगदा।। २४
य इदं शिवकामायाः नाम संकीर्तयेच्छुभम्।
देव्याः प्रसादाच्छ्रीकीर्तिमंगलायतनो भवेत्।। २५

## शिवकामसुन्दर्यष्टोत्तरशतनामावलिः

ओं शिवप्रियायै नमः । शिवाराध्यायै । शिवेष्टायै । शिवकोमलायै । शिवोत्सवायै । शिवरसायै । शिवदिव्य-शिखामणये । शिवपूज्यायै । शिवघनायै । शिवस्थायै । शिववल्लभायै । शिवाभिन्नायै । शिवार्धाङ्ग्यै । शिवश्रीदायै । शिवंकर्यै । शिवात्मिकायै। शिवासक्तायै। शिवकामेश्वर्यै। शिवायै । शिवश्रियै नमः ।। २०

ओं शिवकल्याण्यै नमः । शिवात्मने । शिवयोगिन्यै । शिवयोगीशनाथायै । शिवाज्ञायै । शिवसुन्दर्यै । शिवसिद्ध्यै । शिवनिध्यै । शिवदा(धा)यै । शिवमङ्गलायै । शिवाधीशायै । शिवाध्यक्षायै । शिवान्तःस्थायै । शिवाश्रयायै । शिवलीलायै । शिवकलायै । शिवकान्तायै । शिवांकुरायै । शिवकामायै । शिवश्यामायै नमः ।। ४०

ओं शिवधाम्न्यै नमः । शिवोत्तमायै । शिवलिङ्गार्चनपरायै । शिवालिङ्गनतत्परायै । शिवालोकनसन्तुष्टायै । शिवलोकनि-वासिन्यै । शिवकैलासनगरस्वामिन्यै। शिवरञ्जिन्यै। शिवस्याहो-पुरुषिकायै । शिवसंकल्पपूरकायै । शिवसुन्दरसर्वाङ्गायै ।

शिवसुन्दरभामिन्यै। शिवशब्दैकनिरतायै। शिवध्यानपरायणायै। शिवभक्त्येकसुलभायै। शिवभक्तजनप्रियायै। शिवकल्याण-संपूर्णायै। शिवानन्दरसार्णवायै। शिवप्रकाशसंपूर्णायै। शिवशैलकुमारिकायै नमः ॥ ६०

ओं शिवास्यपङ्कजभवायै नमः। शिवशंभुविमोहिन्यै। शिवकामेशमहिष्यै। शिवान्तःपुरवासिन्यै। शिवजैवातृकलतायै। शिवपुण्यपरंपरायै। शिवसौभाग्यनिलयायै। शिवनित्यमनोहरायै। शिवविज्ञानसंपूर्णायै। शिवदिव्यविलासिन्यै। शिवसंमोहनकर्यै। शिवसाम्राज्यदायिन्यै। शिवदिव्यब्रह्मविद्यायै। शिवताण्डव-साक्षिण्यै। शिवैश्वर्यैकसर्वस्वायै। शिवसत्यायै। शिवात्मगायै। शिवकार्यैकचतुरायै। शिवशास्त्रप्रवर्तकायै। शिवप्रसादसंपन्नायै नमः ॥ ८०

ओं शिवेच्छाश्रितकामिन्यै नमः। शिवलक्ष्म्यै। शिवस्यांगेक्षणिकारूपिण्यै। शिवातिमोहनकर्यै। शिवनामै-कवल्लयै। शिवप्रेममहारत्नकाठिन्यकलशस्तन्यै। शिवलालितला-क्षार्द्रचरणांबुजकोमलायै। शिवचित्तैकशरणव्यामोहघनवेणिकायै। शिवाभीष्टप्रदानश्रीकल्पवल्लीकरांबुजायै। शिवाक्षिकुमुदज्योत्स्नायै। शिवश्रीकरुणामय्यै। शिववामायै। शिवज्योतिषे। शिवैक-हृदयास्पदायै। शिवचिन्तामणिपरायै। शिवैकनयनामृतायै। शिवसंपूर्णविमलज्ञानदुग्धाब्धिचन्द्रिकायै। शिवेतरमहादेव-निर्मलामृतवर्षिण्यै। शिवानन्दरसाधारायै। शिवभाग्याब्धिचन्द्रिकायै नमः ॥ १००

ओं शिवकामकलायै नमः। शिवकल्याणदायिन्यै। शिवशक्त्यैकललितायै। शिवक्रीडारसोज्ज्वलायै। शिवासक्तपरानन्द-प्रकाशामृतचिद्घनायै। शिवगौर्यै। शिवसौन्दर्यमोहिन्यै। शिवभोगदायै नमः ॥ १०८

# श्रीललिताऽष्टोत्तरशतनामस्तोत्रम्

(शिवकामसुन्दरीनामावलितः ईषद्भिन्नम्)

शिवप्रिया शिवाराध्या शिवेष्टा शिवकोमला।
शिवोत्सवा शिवरसा शिवदिव्यशिखामणिः ॥ १

शिवपूर्णा शिवघना शिवस्था शिववल्लभा।
शिवाभिका शिवार्धाङ्गी शिवाधीना शिवंकरी ॥ २

शिवनामज्जपासक्ता शिवसांनिध्याकारिणी।
शिवशक्तिः शिवाध्यक्षा शिवकामेश्वरी शिवा ॥ ३

शिवभोगीश्वरी देवी शिवाज्ञावशवर्तिनी।
शिवविद्यातिनिपुणा शिवपञ्चाक्षरप्रिया ॥ ४

शिवसौभाग्यसंपन्ना शिवकैङ्कर्यकारिणी।
शिवाङ्कस्था शिवासक्ता शिवकैवल्यदायिनी ॥ ५

शिवक्रीडा शिवनिधिः शिवाश्रयसमन्विता।
शिवलीला शिवकला शिवक्रान्ता शिवप्रदा ॥ ६

शिवश्रीललितादेवी शिवस्य नयनामृता।
शिवचिन्तामणिपदा शिवस्य हृदयोज्ज्वला ॥ ७

शिवोत्तमा शिवाकारा शिवकामप्रपूरिणी।
शिवलिङ्गार्चनपरा शिवालिङ्गनाकौतुकी ॥ ८

शिवालोकनसंतुष्टा शिवलोकनिवासिनी।
शिवकैलासनगरस्वामिनी शिवरञ्जिनी ॥ ९

शिवस्याहोपुरुषिका शिवसंकल्पपूरका।
शिवसौन्दर्यसर्वाङ्गी शिवसौभाग्यदायिनी ॥ १०

शिवशब्दैकनिरता शिवध्यानपरायणा।
शिवभक्तैकसुलभा शिवभक्तजनप्रिया ॥ ११

शिवानुग्रहसंपूर्णा शिवानन्दरसार्णवा।
शिवप्रकाशसंतुष्टा शिवशैलकुमारिका ॥ १२

शिवास्यपङ्कजार्काभा शिवान्तःपुरवासिनी।
शिवजीवातुकलिका शिवपुण्यपरम्परा ॥ १३

शिवाक्षमालासंतृप्ता शिवनित्यमनोहरा।
शिवभक्तशिवज्ञानप्रदा शिवविलासिनी ॥ १४

शिवसंमोहनकरी शिवासाम्राज्यशालिनी।
शिवसाक्षद्ब्रह्मविद्या शिवताण्डवसाक्षिणी ॥ १५

शिवागमार्थतत्त्वज्ञा शिवमान्या शिवात्मिका।
शिवकार्यैकचतुरा शिवशास्त्रप्रवर्तका ॥ १६

शिवप्रसादजननी शिवस्य हितकारिणी।
शिवोज्ज्वला शिवज्योतिः शिवभोगसुखंकरी ॥ १७

शिवस्य नित्यतरुणी शिवकल्पकवल्लरी।
शिवबिल्वार्चनकरी शिवभक्तार्तिभञ्जनी ॥ १८

शिवाक्षिकुमुदज्योत्स्ना शिवश्रीकरुणाकरा।
शिवानन्दसुधापूर्णा शिवभाग्याब्धिचन्द्रिका ॥ १९

शिवशक्त्यैक्यललिता शिवक्रीडारसोज्ज्वला।
शिवप्रममहारत्नकाठिन्यकलशस्तनी ॥ २०

शिवलालितलाक्षार्द्रचरणाम्बुजकोमला।
शिवच्चित्तैकहरणव्यालोलघनवेणिका ॥ २१

शिवाभीष्टप्रदानश्रीकल्पवल्लीकराम्बुजा।
शिवेतरमहातापनिर्मूलामृतवर्षिणी॥ २२

शिवयोगीन्द्रदुर्वाससमहिम्नस्तुतितोषिता।
शिवसंपूर्णविमलज्ञानदुग्धाब्धिशायिनी॥ २३

शिवभक्ताग्रगण्येशाविष्णुब्रह्मेन्द्रवन्दिता।
शिवमायासमाक्रान्तमहिषासुरमर्दिनी।
शिवदत्तबलोन्मत्तशुम्भाद्यसुरनाशिनी॥ २४

शिवद्विजार्भकस्तन्याज्ञानक्षीरप्रदायिनी।
शिवातिप्रियभक्तादिनन्दिभृङ्गिरिटिस्तुता॥ २५

शिवानलसमुद्भूतभस्मोद्धूलितविग्रहा।
शिवज्ञानाब्धिपारज्ञमहात्रिपुरसुन्दरी॥ २६

इत्येतल्ललितानाम्नामष्टोत्तरशतं मुने।
अनेकजन्मपापघ्नं ललिताप्रीतिदायकम्॥ २७

सर्वैश्वर्यप्रदं नॄणामाधिव्याधिनिवारणम्।
यो मर्त्यः पठते नित्यं सर्वान्कामानबाप्नुयात्॥ २८

श्रीललितोपाख्यानतः

## ललिताऽष्टोत्तरशतनामावलिः

ओं शिवप्रियायै नमः। शिवाराध्यायै। शिवेष्टायै। शिवकोमलायै। शिवोत्सवायै। शिवरसायै। शिवदिव्या-शिखामण्यै। शिवपूर्णायै। शिवघनायै। शिवस्थायै। शिववल्लभायै। शिवाभिन्नायै। शिवार्धाङ्ग्यै। शिवाधीनायै। शिवंकर्यै। शिवनामजपासक्तायै। शिवसान्निध्यकारिण्यै। शिवशक्त्यै। शिवाध्यक्षायै। शिवकामेश्वर्यै नमः॥ २०

ओं शिवायै नमः । शिवयोगीश्वरीदेव्यै । शिवाज्ञावशवर्तिन्यै । शिवविद्यातिनिपुणायै । शिवपञ्चाक्षरप्रियायै । शिवसौभाग्य-संपन्नायै । शिवकैङ्कर्यकारिण्यै । शिवाङ्कस्थायै । शिवासक्तायै । शिवकैवल्यदायिन्यै । शिवक्रीडायै । शिवनिधये । शिवश्रयसमन्वितायै । शिवलीलायै । शिवकलायै । शिवकान्तायै । शिवप्रदायै । शिवश्रीललितादेव्यै । शिवस्य नयनामृतायै । शिवचिन्तामणिपदायै नमः । ४०

ओं शिवस्य हृदयोज्ज्वलायै नमः । शिवोत्तमायै । शिवाकारायै । शिवकामप्रपूरिण्यै । शिवलिङ्गार्चनपरायै । शिवालिङ्गनकौतुक्यै । शिवालोकनसंतुष्टायै । शिवलोकनिवासिन्यै । शिवकैलासनगरस्वामिन्यै । शिवरञ्जिन्यै । शिवस्योहोपुरुषिकायै । शिवसंकल्पपूरकायै । शिवसौन्दर्यसर्वाङ्गयै । शिवसौभाग्य-दायिन्यै । शिवशब्दैकनिरतायै । शिवध्यानपरायणायै । शिवभक्तक-सुलभायै । शिवभक्तजनप्रियायै । शिवानुग्रहसंपूर्णायै । शिवानन्दर-सार्णवायै नमः ।। ६०

ओं शिवप्रकाशसंतुष्टायै नमः । शिवशैलकुमारिकायै । शिवास्यपङ्कजार्काभायै । शिवान्तःपुरवासिन्यै । शिवजीवातु-कलिकायै । शिवपुण्यपरंपरायै । शिवाक्षमालासंतृप्तायै । शिवनित्य-मनोहरायै । शिवभक्तशिवज्ञानप्रदायै । शिवबिलासिन्यै । शिवसं-मोहनकर्यै । शिवसाम्राज्यशालिन्यै । शिबसाक्षाद्ब्रह्मविद्यायै । शिवताण्डवसाक्षिण्यै । शिवागमार्थतत्त्वज्ञायै । शिवमान्यायै । शिवात्मिकायै । शिवकार्यैकचतुरायै । शिवशास्त्रप्रवर्तकायै । शिवप्रसादजनन्यै नमः ।। ८०

ओं शिवस्य हितकारिण्यै नमः । शिवोज्ज्वलायै । शिवज्योतिषे । शिवभोगसुखंकर्यै । शिवस्य नित्यतरुण्यै । शिवकल्पकवल्लर्यै । शिवबिल्वार्चनकर्यै । शिवभक्तार्तिभञ्जन्यै । शिवाक्षिकुमुदज्योत्स्नायै । शिवश्रीकरुणाकरायै । शिवानन्दसुधापूर्णायै । शिवभाग्यब्धिचन्द्रिकायै । शिवशक्त्यैक्यललितायै । शिवक्रीडारसोज्ज्वलायै । शिवप्रेममहारत्नकाठिन्यकलशस्तन्यै । शिवलाललिताक्षार्द्रचरणाम्बुजकोमलायै । शिवचित्तैकहरणव्यालोलघनवेणिकायै । शिवाभीष्टप्रदानश्रीकल्पवल्लीकराम्बुजायै । शिवेतरमहातापनिर्मूलामृतवर्षिण्यै । शिवयोगीन्द्रदुर्वासमहिम्नस्तुतितोषितायै नमः ।। १००

ओं शिवसंपूर्णविमलज्ञानदुग्धाब्धिशायिन्यै नमः । शिवभक्ताग्रगण्येशविष्णुब्रह्मेन्द्रवन्दितायै । शिवमायासमाक्रान्तमहिषासुरमर्दिन्यै । शिवदत्तबलोन्मत्तशुम्भाद्यसुरनाशिन्यै । शिवद्विजार्भकस्तन्यज्ञानक्षीरप्रदायिन्यै । शिवातिप्रियभक्तादिनन्दिभृङ्गिरिटिस्तुतायै । शिवानलसमुद्भूतभस्मोद्धूलितविग्रहायै । शिवज्ञानाब्धिपारज्ञमहात्रिपुरसुन्दर्यै नमः ।। १०८

## उमाष्टोत्तरशतनामस्तोत्रम्

पातु नः पार्वती दुर्गा हैमवत्यंबिला शुभा ।
शिवा भवानी रुद्राणी शंकरार्धशरीरिणी ।। १

ओं । उमा कात्यायनी गौरी काली हैमवतीश्वरी ।
शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला ।। २

अपर्णा पार्वती दुर्गा मृडानी चण्डिकाऽम्बिका ।
आर्या दाक्षायणी चैव गिरिजा मेनकात्मजा ।। ३

स्कन्दामाता दयाशीलासुन्दरी भक्तरक्षको।
भक्तवश्या च लावण्यनिधिः सर्वसुखप्रदा॥ ४

महादेवी भक्तमनोह्लादिनी कठिनस्तनी।
कमलाक्षी दयासारा कामाक्षी नित्ययौवना॥ ५

सर्वसंपत्प्रदा कान्ता सर्वसंमोहिनी मही।
शुभप्रिया कंबुकण्ठी कल्याणी कमलप्रिया॥ ६

सर्वेश्वरी च कमलहस्ता विष्णुसहोदरी।
वीणावादप्रिया सर्व देवसंपूजितांघ्रिका॥ ७

कदंबारण्यनिलया विन्ध्याचलनिवासिनी।
हरप्रिया कामकोटिपीठस्था वाञ्छितार्थदा॥ ८

श्यामाङ्गा चन्द्रवदना सर्ववेदस्वरूपिणी।
सर्वशास्त्रस्वरूपाच सर्वदेवमयी तथ॥ ९

पुरुहूतस्तुता देवी सर्ववेद्या गुणप्रिया।
पुण्यस्वरूपिणी वेद्या पुरुहूतस्वरूपिणी॥ १०

पुण्यो दया निराधारा शुनासीरादि पूजिता।
नित्यपूर्णा मनोगम्या निर्मलाऽऽनन्दपूरित॥ ११

वागीश्वरी नीतिमती मञ्जुला मंगलप्रदा।
वाग्मिनी वञ्जुला वन्द्या वयोऽवस्थाविवर्जिता॥ १२

वाचस्पतिर्महालक्ष्मीर्महामंगलनायिका।
सिंहासनमयी सृष्टिस्थितिसंहारकारिणी॥ १३

महायज्ञा नेत्ररूपा सावित्री ज्ञानरूपिणी।
वररूपधरायोगा मनोवाचामगोचरा॥ १४

दयारूपा च कालज्ञा शिवधर्मपरायणा।
वज्रशक्तिधरा चैव सूक्ष्मांगी प्राणधारिणी ।। १५

हिमशैलकुमारी च शरणागतरक्षिणी।
सर्वागमस्वरूपा च दक्षिणा शंकरप्रिया ।। १६

दयाधारा महानागधारिणी त्रिपुरभैरवी।
नवीनचन्द्रचूडस्य प्रिया त्रिपुरसुन्दरी ।। १७

नाम्नामष्टोत्तरशतं उमायाः कीर्तितं सकृत्।
शान्तिदं कीर्तिदं लक्ष्मीयशोमेधाप्रदायकम् ।। १८

## उमाष्टोत्तरशतनामावलिः

ओं उमायै नमः । कात्यायन्यै । गौर्यै । काल्यै । सोमवत्यै । ईश्वर्यै । शिवायै । भवान्यै । रुद्राण्यै । शर्वाण्यै । सर्वमङ्गलायै । अपर्णायै । पार्वत्यै । दुर्गायै । मृडान्यै । चण्डिकायै । अंबिकायै । आर्यायै । दाक्षायण्यै । गिरिजायै नमः ।। २०

ओं मेनकात्मजायै नमः । स्कन्दमात्रे । दयाशीलायै । भक्तरक्षकायै । सुन्दर्यै । भक्तवश्यायै । लावण्यनिधये । सर्वसुखप्रदायै । महादेव्यै । भक्तमनोह्लादिन्यै । कठिनस्तन्यै । कमलाक्ष्यै । दयासारायै । कामाक्ष्यै । नित्ययौवनायै । सर्वसंपत्प्रदायै । कान्तायै । सर्वसंमोहिन्यै । मह्यै । शुभप्रियायै नमः ।। ४०

ओं कंबुकण्ठ्यै नमः । कल्याण्यै । कमलप्रियायै । सर्वेश्वर्यै । कमलहस्तायै । विष्णुसहोदर्यै । वीणावादप्रियायै । सर्वदेव-संपूजितांघ्रिकायै । कदम्बारण्यनिलयायै । विन्ध्याचलनिवासिन्यै ।

हरप्रियायै। कामकोटिपीठस्थायै। वाञ्छितार्थदायै। श्यामाङ्गायै। चन्द्रवदनायै । सर्ववेदस्वरूपिण्यै । सर्वशास्त्रस्वरूपायै । सर्वदेवमय्यै । पुरुहूतस्थितायै नमः ॥ ६०

ओं सर्ववेद्यायै नमः। गुणप्रियायै। पुण्यस्वरूपिण्यै। वेद्यायै । पुरुहूतस्वरूपिण्यै । पुण्योदयायै । निराधारायै । शुनसिरादि-पूजितायै । नित्यपूर्णायै । मनोगम्यायै । निर्मलायै । आनन्दपूरितायै । वागीश्वर्यै । नीतिमय्यै । मञ्जुलायै । मंगलप्रदायै । वाग्मिन्यै । वञ्जुलायै । वन्द्यायै । वयोऽवस्थाविवर्जितायै नमः ॥ ८०

ओं वाचस्पतये नमः । महालक्ष्म्यै । महामङ्गलनायिकायै । सिंहासनमय्यै । सृष्टिस्थितिसंहारकारिण्यै । महायज्ञायै । नेत्ररूपायै । सावित्र्यै। ज्ञानरूपिण्यै। वररूपधरायै। योगायै। मनोवाचामगोचरायै । दयारूपायै । कालज्ञायै । शिवधर्मपरायणायै । कणाशक्तिधरायै। सूक्ष्मांग्यै। प्राणधारिण्यै । हिमशैलकुमार्यै। शरणागतरक्षिण्यै नमः ॥ १००

ओं सर्वागमस्वरूपायै नमः । दक्षिणायै । शंकरप्रियायै । दयाधारायै। महानागधारिण्यै। पुरभैरव्यै। नवीनचन्द्रचूडप्रियायै। त्रिपुरसुन्दर्यै नमः ॥ १०८

## श्रीकाल्यष्टोत्तरशतनामस्तोत्रम्

काली कराली कंकाली कंकालरसनावृता।
कपालहस्ता कल्याणी कर्वीरसुमप्रिया ॥ १

नीलालका नीलनी च नीलाञ्जनसम्रप्रभा।
मांसाशना दीर्घजिह्वा तारकस्यान्तकारिणी ॥ २

ज्वलन्नेत्री रक्तपाणिः खङ्गिनी योगिनीश्वरी।
मातङ्गिनी डाकिनी च काकिनी कालरात्रिका।। ३

मालिनी मातृकासेव्या भूतभेतालसंवृता।
मनोन्मनी महाघोरा महारौद्री महाध्वनिः।। ४

दीप्तज्वालामुखी बाला माया त्रिपुरसुन्दरी।
पानाशना शत्रुवीरनाशिनी चाट्टहासिनी।। ५

सौभाग्यदाननिरता कुमारी परमेश्वरी।
हुंकारी सर्वजननी देवी पञ्चदशाक्षरी।। ६

त्रैलोक्यवशकर्त्रीच स्वरचारुसुपूरा।
मोहिनी स्तंभिनी पूर्णा। द्वेषिणी भुवनेश्वरी।। ७

चक्रनाथ च संविद्या आनन्दलहरी तथा।
श्यामवर्णा रक्तवस्त्राऽष्टभुजा वीरोर्ध्वकेशिनी।। ८

व्याघ्रासना मयूरस्था गरुडस्था गजासना।
महिषस्था भस्मलिप्ता नागाभरणभूषिता।। ९

राजेश्वरी चन्द्रचूडा श्रीविद्या त्रिपुरेश्वरी।
आधारवीथीपथिका सर्वसिद्धिप्रदायिनी।। १०

अनाहताब्जनिलया मणिपूरकसुन्दरी।
द्वादशादित्यसंकाश प्रणवस्थाऽमरावती।। ११

संभाव्योरगभूषाढ्या देवी ह्रीं काररूपिणी।
ज्ञानविद्या ज्ञानरूपा सुवस्त्रा सूक्ष्मरूपिणी।। १२

कन्दुप्रिया जगद्धात्री त्रिणेत्र्याधारशक्तिका।
महाप्रख्या च त्रिजगद्रूपिणी भुवनेश्वरी।। १३

एकाक्षरी धर्मिणी च सर्वाभरणभूषिता।
त्रिशूलिनी सिंहवाहा अतिघोरस्वरूपिणी।। १४

उग्राकान्ता कृतयुगा त्रेता च द्वापरापकलिः ।
सृष्टविप्रा महाकाली मषिसुरमर्दिनी ।। १५

सुभद्रदायिनी वीरदायिनी कालिकेश्वरी ।
इति साष्टशतं नाम्नां काल्या दुष्टारिनाशनम् ।।
पापक्रोधग्रहप्रेताभीतिहं पठनान्नृणाम् ।। १६

## काल्यष्टोत्तरशतनामावलिः

ओं काल्यै नमः । कराल्यै । कंकालयै । कंकालरसनावृतायै । कपालहस्तायै । कल्याण्यै । करवीरसुमप्रियायै । नीलालकायै । नीलिन्यै । नीलाञ्जनसमप्रभायै । मांसाशनायै । दीर्घजिह्वायै । तारकस्यन्तकारिण्यै । ज्वलन्नेत्र्यै । रक्तपाण्यै । खड्गिन्यै । योगिनीश्वर्यै । मातङ्गिन्यै । डाकिन्यै । काकिन्यै नमः ।। २०

ओं कालारात्रिकायै नमः । मालिन्यै । मातृकासेव्यायै । भूतभेतालसंवृतायै । मनोन्मन्यै । महाघोरायै । महारौद्र्यै । महाध्वन्यै । दीप्तज्वालामुख्यै । बालायै । मायायै । त्रिपुरसुन्दर्यै । पानाशनायै । शत्रुवीरनाशिन्यै । अट्टहासिन्यै । सौभाग्यदान-निरतायै । कुमार्यै । परमेश्वर्यै । हुंकार्यै । सर्वजनन्यै नमः ।। ४०

ओं देव्यै पञ्चदशाक्षर्यै नमः । त्रैलोक्यवशकर्त्र्यै । स्वरच्चारुसुनूपुरायै । मोहिन्यै । स्तंभिन्यै । पूर्णायै । द्वेषिण्यै । भुवनेश्वर्यै । चक्रनाथायै । संविद्यायै । आनन्दलहर्यै । श्यामवर्णायै । रक्तवस्त्रायै । अष्टभुजायै । वीरायै । ऊर्ध्वकेशिन्यै । व्याघ्रासनायै । मयूरस्थायै । गरुडस्थायै । गजासनायै नमः ।। ६०

ओं महिषस्थायै नमः । भस्मलिप्तायै । नागाभरणभूषितायै । राजेश्वर्यै । चन्द्रचूडायै । श्रीविद्यायै । त्रिपुरेश्वर्यै । आधारवीथी-पथिकायै । सर्वसिद्धिप्रदायिन्यै । अनाहताब्जनिलयायै ।

मणिपूरकसुन्दर्यै । द्वादशादित्यसंकाशायै । प्रणवस्थायै । अमरावत्यै । संभाव्यायै । उरगभूषाढ्यायै । देव्यै । ह्रींकाररूपिण्यै । ज्ञानविद्यायै । ज्ञानरूपायै नमः ।। ८०

ओं स्वस्त्रायै नमः । सूक्ष्मरूपिण्यै । कुन्दप्रियायै । जगद्धात्र्यै । त्रिणेत्र्यै । आधारशक्तिकायै । महाप्रख्यायै । त्रिजगद्रूपिण्यै । भुवनेश्वर्यै । एकाक्षर्यै । धर्मिण्यै । सर्वाभरणभूषितायै । त्रिशूलिन्यै । सिंहवाहायै । अतिघोरस्वरूपिण्यै । उग्रायै । कान्तायै । कृतयुगायै । त्रेतायै । द्वापरायै नमः ।। १००

ओं कलये नमः । सृष्टविप्रायै । महाकाल्यै । महिषासुर-मर्दिन्यै । सुभद्रदायिन्यै । वीरदायिन्यै । कालिकायै । ईश्वर्यै नमः ।। १०८

## श्रीकालीशतनामस्तोत्रम्

शिव उवाच—

ओं करालवदना काली कामिनी कमलालया ।
क्रियावती कोटराक्षी कामाक्षा कामसुन्दरी ।। १

कपोला च कराला च काशी कात्यायनी कुहूः ।
कङ्काली कालदमनी करुणा कमलार्चिता ।। २

कादम्बरी कालहरा कौतुकी कारणप्रिया ।
कृष्णा कृष्णप्रिया कृष्णपूजिता कृष्णवल्लभा ।। ३

कृष्णाऽपराजिता कृष्णप्रिया च कृष्णरूपिणी ।
कालिका कालरात्रिश्च कुलजा कुलपण्डिता ।। ४

कुलधर्मप्रिया कामा काम्यकर्मविभूषिता ।
कुलप्रिया कुलरता कुलीनपरिपूजिता ।। ५

कुलज्ञा कमला पूज्या कैलाशनगभूषिता।
कुटजा केशिनी कामा कामदा कामपण्डिता ॥ ६

करालास्या च कन्दर्प- कामिनी रूपशोभिता।
केलम्बका केलरता केलिनी केलभूषिता ॥ ७

केशवस्य प्रिया केशा काश्मीरा केशवार्चिता।
कामेश्वरी कामरूपा कामदानविभूषिता ॥ ८

कामहन्त्री कूर्ममांसप्रिया कूर्मादिपूजिता।
केलिनी करककारा करकूर्म्मनिषेविनी ॥ ९

कटकेशरमध्यस्था कटकी कटकार्चिता।
कटप्रिया कटरता कटकूर्म- निवेशिनी ॥ १०

कुमारीपूजनरता कुमारीवनसेविता।
कुलाचारप्रिया कौलप्रिया गुलनिषेविनी ॥ ११

कुलीना कुलधर्मज्ञा कुलभीति- विमर्दिनी।
कामधर्मप्रियाऽकामा नित्या कामस्वरूपिणी ॥ १२

कामरूपा कामहरा काममन्दिरपूजिता।
कामागारस्वरूपा च कामाख्या काम- भूषिता ॥ १३

क्रिया भक्तिरता कामा काञ्चनी चैव कामदा।
कोलपुष्पाम्बरा कोला निष्कोला कलहान्तका ॥ १४

कौषिकी केतिकी कुम्भी कुन्तिला दिवि भूषिता।
इत्येवं शृणु चार्वङ्गि ! रहस्यं सर्वमङ्गलम् ॥ १५

यः पठेत् परया भक्त्या स शिवो नाऽत्र संशयः।
रात्रावपि दिवाभागे सन्ध्यायां वा सुरेश्वरि ॥ १६

प्रजपेत् भक्तिभावेन रहस्यं स्तवमुत्तमम् ।
शतनामप्रसादेन मन्त्रसिद्धिः प्रजायते ॥ १७

कुजवारे चतुर्दश्यां निशाभागे पठेत्तु यः ।
स कृती सर्वशास्त्रज्ञः स कुलीनः सदा शुचिः ॥ १८

रात्रौ बिल्वतलेऽश्वत्थ-मूलेऽपराजितातले ।
प्रपठेत् कालिकास्तोत्रं यथाभक्त्या महेश्वरि ।
शतवारप्रपठनान्मन्त्रसिद्धिर्भवेद्ध्रुवम् ॥ १९

## कालीशतनामावलिः

ओं । करालवदनायै नमः । काल्यै । कामिन्यै । कमलालयायै । क्रियावत्यै । कोटराक्ष्यै । कामाक्षायै । कामसुन्दर्यै । कपोलायै । करालायै । काश्यै । कात्यायन्यै । कुह्वै । कंकाल्यै । कालदमन्यै । करुणायै । कमलार्चितायै । कादंबर्यै । कालहरायै । कौतुक्यै नमः ॥ २०

ओं कारणप्रियायै नमः । कृष्णायै । कृष्णप्रियायै । कृष्णपूजितायै । कृष्णवल्लभायै । कृष्णायै । अपराजितायै । कृष्णप्रियायै । कृष्णरूपिण्यै । कालिकायै । कालरात्र्यै । कुलजायै । कुलपण्डितायै । कुलधर्मप्रियायै । कामायै । काम्यकर्मविभूषितायै । कुलप्रियायै । कुलरतायै । कुलीनपरिपूजितायै नमः ॥ ४०

ओं कुलज्ञायै नमः । कमलायै । पूज्यायै । कैलासनगभूषितायै । कुटजायै । केशिन्यै । कामायै । कामदायै । कामपण्डितायै । करालास्यायै । कन्दर्पकामिन्यै । रूपशोभितायै । कलंबकायै । केलरतायै ।

केलिन्यै । केलभूषितायै । केशवस्य प्रियायै । केशायै । काश्मीरायै । केशवार्चितायै नमः ।। ६०

ओं कामेश्वर्यै नमः । कामरूपायै । कामदाननिभूषितायै । कामहन्त्र्यै । कूर्ममांसप्रियायै । कूर्मादिपूजितायै । केलिन्यै । करकायै । कारायै । करकूर्मनिषेविन्यै । कटकेशरमध्यस्थायै । कटक्यै । कटकार्चितायै । कटप्रियायै । कटरतायै । कटकूर्मनिवेशिन्यै । कुमारीपूजनरतायै । कुमारीवनसेवितायै । कुलाचारप्रियायै । कौलप्रियायै नमः ।। ८०

ओं कुलनिषेविन्यै नमः । कुलीनायै । कुलधर्मज्ञायै । कुलभीतिविमर्दिन्यै । कामधर्मप्रियायै । अकामायै । नित्यायै । कामस्वरूपिण्यै । कामरूपायै । कामहरायै । काममन्दिरपूजितायै । काम गारस्वरूपायै । कामाख्यायै । कामभूषितायै । क्रियायै । भक्तिरतायै । कामायै । काञ्चन्यै । कामदायै । कौलपुष्पांबरायै नमः ।। १००

ओं कोलायै नमः । निष्कोलायै । कलहान्तकायै । कौषिक्यै । केतिक्यै । कुंभ्यै । कुन्तिलायै । दिविभूषितायै नमः ।। १०८

## कावेर्यष्टोत्तरशतनामस्तोत्रम्

अच्छस्वच्छलसद्दुकूलवसनां पद्मासनाध्यासिनीं
हस्तन्यस्तवराभयकलाशां राकेन्दुकोटिप्रभाम् ।
भास्वद्भूषणगन्धमाल्यरूचिरां चारुप्रसन्नाननां
श्रीगंगादिसमस्ततीर्थनिलयां ध्यायामि कावेरिकाम् ।। १

ओं। अनन्तगुणगंभीरा अर्कपुष्करसेविता।
अमृतस्वादुसलिला अगस्त्यमुनिनायिका॥ २

आशान्तकीर्तितिलका आशुयानविवर्धिनी।
इतिहासपुराणोक्ता ईतिबाधानिवारिणी॥ ३

उन्मत्तजनदूरस्था ऊर्जितानन्ददायिनी।
ऋषिसंघसुसंवीता ऋणत्रयविमोचिनी॥ ४

लुप्तधर्मजनोद्धारा लूनभावविवर्जिता।
एधिताखिललोकश्रीः ऐहिकामुष्मिकप्रदा॥ ५

ओंकारनादनिनदा ओषधीकृतजीवना।
औदार्यगुणनिर्दिष्टा औदासीन्यनिवारिणी॥ ६

अन्तःकरणसंसेव्या अच्छस्वच्छजलाश्रया।
कपिलाख्यनदीस्निग्धा करुणापूर्णमानसा॥ ७

कावेरीनामविख्याता कामितार्थफलप्रदा।
कुंभघोणक्षेत्रनाथा कौतुकप्रथमप्रभा॥ ८

खगराजरथोत्सहारंगस्थलसुशोभिता।
खगावलीसमाक्रान्त कल्लोलावलिमण्डिता॥ ९

गजारण्यसुविस्तीर्णप्रवाहजनमोहिनी।
गायत्र्याख्यशिलामध्या गरुडासनभक्तिदा॥ १०

घनगंभीरनिनद निर्जरप्राप्तनिर्झरा।
चन्द्रपुष्कर मध्यस्था चतुराननपुत्रिका॥ ११

पोलदेशजनोद्धार ग्रीष्मकालप्रवाहिनी।
चंचुक्षेत्र समानीता छाद्मदोषनिवारिणी॥ १२

जंबूद्वीपसरिच्छ्रेष्ठनदीनदगरीयसी ।
झंकारनाद संमृष्टषद्धदालिसमाकुला ।। १३

ज्ञानैकसाधनपरा ज्ञप्तिमात्रार्तिहारिणी ।
टिट्टिभारावसव्याजदिविजस्तुतिपात्रिणी ।। १४

ठङ्कारनादसंभेदझर्झरीकृत पर्वता ।
डाकिनीशाकिनी संघनिवारणसरित्तय ।। १५

ढक्कानिनाद पारीणपार्वतीशसमाश्रिता ।
णान्तवाच्यद्विजाष्टाङ्गयोगसाधनतत्परा ।। १६

तरङ्गावलिसंविद्धमृदुवल्लकशोभिता ।
तपस्विजनसत्कारनिवेशितशिलासना ।। १७

तापत्रयतरून्मूलगंगादिभिरभिष्टुता ।
थान्तप्रथमसंसेव्य सांबसान्निध्यकारिणी ।। १८

दयादाक्षिण्यसत्कारशीललोकसुभाविता ।
दाक्षिण्य सुजनोद्धारनिर्विंचारदयान्विता ।। १९

धनमानमदान्धादिमर्त्यनिर्वर्तनप्रिया ।
नमज्जनोद्धारशीला निमज्जज्जनपावना ।। २०

नाकारिकेतुनिलया नानातीर्थधिदेवता ।
नारीजन मनोल्लासा नानारूपफलप्रदा ।। २१

नारायण कृपारूपा नाद ब्रह्मस्वरूपिणी ।
पराभूत समस्ताधा पशुपक्ष्यादिजीवना ।। २२

पापतूलाग्नि सदशा पापिष्ठजनपावना ।
फणीन्द्रकीर्तित कला फलदान परायणा ।। २३

बहुजन्मतमोयोगफलसंप्राप्तदर्शना।
बाहुरूपद्विपार्श्वस्थ स्वमातृकजलार्थिनाम्।। २४

कलमक्षेत्रशाल्यन्नदाननिर्जितवित्तया।
भगवत्कृतसन्तोषा भास्करक्षेत्रगामिनी।। २५

भागीरथी समाक्रान्त तुलामासजलाश्रया।
मज्जद्दुर्जनप्राग्जन्मदुर्जयांहः प्रमार्जिनी।। २६

माधवे शाखादिमासा स्नानस्मरण सौख्यदा।
यज्ञदानतपः कर्म कोटिपुण्यफलप्रदा।। २७

यक्षगन्धर्वसिद्धाद्यैरभिष्टुत पदद्वया।
रघुनाथपदद्वन्द्वविराजित शिलातला।। २८

रामनाथपुरक्षेत्रकामधेनु समाश्रिता।
लवोदकस्पर्शमात्रनिर्वाणपददायिनी।। २९

लक्ष्मीनिवाससदना ललनारत्नरूपिणी।
लघूकृतस्वर्गभोगा लावण्यगुणसागरा।। ३०

वह्निपुष्करसान्निध्या वन्दिताखिललो कपा।
व्याघ्रपादक्षेत्रपरा व्योमयानसमावृता।। ३१

षट्कालवन्द्यचरणा षट्कर्मनियतप्रिया।
षडास्यमातृसंसेव्या षडूर्मिजितसोर्मिका।। ३२

सकृत्स्मरण संशुद्ध तापत्रयजनाश्रिता।
सज्जनोद्धार सन्धानसमर्थ स्वप्रवाहिनी।। ३३

सरस्वत्यादिदेवीभि रभिवन्दितनिर्झरा।
सह्यशैलसमुद्भूता सह्यासहजनप्रिया।। ३४

सङ्गमक्षेत्रसामीप्या स्वदर्शार्थचतुष्टया।
सौभरिक्षेत्रनिलया सौभाग्यफलदायिनी ।। ३५

संशयाविष्ट दूरस्था सांगोपाङ्गफलोदया।
हरिब्रह्मेशलोकेशसिद्धबृन्दारवन्दिता ।। ३६

क्षेत्रतीर्थादिसीमान्ता क्षपानाथसुशीतला।
क्षमातलाखिलानन्दक्षेमश्रीविजयावहा ।। ३७

सरिद्वरायाः कावेर्या नामस्मृतिरभीष्टदा।
क्ष्मातलेऽलभ्यनिखिलक्षेमश्रीविजयावहा ।। ३८

## कावेर्यष्टोत्तरशतनामावलिः

ओं अनन्तगुणगंभीरायै नमः । अर्कपुष्करसेवितायै । अमृतस्वादुसलिलायै । अगस्त्यमुनिनायिकायै । आशान्तकीर्तितिलकायै । आशुयानविवर्धिन्यै । इतिहासपुराणोक्तायै । ईतिबाधानिवारिण्यै । उन्मत्तजनदूरस्थायै । ऊर्जितानन्ददायिन्यै । ऋषिसंघसुसंवीतायै । ऋणत्रयविमोचिन्यै । लुप्तधर्मजनोद्धारायै । लूनभावविवर्जितायै । एधिताखिललोकश्रियै । ऐहिकामुष्मिकप्रदायै । ओंकारनादनिनदायै। ओषधीकृतजीवनायै । औदार्यगुणनिर्दिष्टायै। औदासीन्यनिवारिण्यै नमः ।। २०

ओं अन्तःकरणसंसेव्यायै नमः । अच्छस्वच्छजलाश्रयायै । कपिलाख्यनदीस्निग्धायै । करुणापूर्णमानसायै । कावेरीनामविख्यतायै । कामितार्थफलप्रदायै । कुंभघोणक्षेत्रनाथायै । कौतुकप्रथमप्रभायै । खगराजरथोत्साहरङ्गस्थलसुशोभितायै । खगावलीसमाक्रान्तकल्लोलावलिमण्डितायै। गजारण्यसुविस्तीर्ण प्रवाहजनमोहिन्यै । गायत्र्याख्यशिलामध्यायै । गरुडासन-

भक्तिदायै । घनगंभीरनिनदनिर्जरप्राप्तनिर्झरायै । चन्द्रपुष्कर-मध्यस्थायै । चतुराननपुत्रिकायै । चोलदेशजनोद्धारग्रीष्म-कालप्रवाहिन्यै । चक्षुक्षेत्रसमानीतायै । छद्मदोषनिवारिण्यै । जंबूद्वीपसरिच्छ्रेष्ठनदीनदगरीयस्यै नमः ॥ ४०

ओं झंकारनादसंमृष्टषद्पदालिसमाकुलायै । ज्ञानैकसाधनपरायै। ज्ञप्तिमात्रार्तिहारिण्यै। टिट्टिभारावसव्यानदि-विजस्तुतिपात्रिण्यै । ठंकारनाद संभेद झर्झरीकृतपर्वतायै । डाकिनीशाकिनीसंघनिवारणसरित्तटायै । ढक्कानिनादपारीण-पार्वतीशसमाश्रितायै। णान्तवाच्यद्विजाष्टांगयोगसाधनतत्परायै। तरंगावलिसंविद्धमृदुवालुकशोभितायै। तपस्विजनसत्कारनिवेशित-शिलासनायै। तापत्रयतरून्मूलगंगादिभिरभिष्टुतायै। थान्तप्रथम-संसेव्यसांबसान्निध्यकारिण्यै । दयादाक्षिण्यसत्कारशीललोक-सुभावितायै । दाक्षिण्यसुजनोद्धारनिर्विचारदयान्वितायै । धनमानमदान्धादिमर्त्यनिर्वर्तनप्रियायै । नमज्जनोद्धारशीलायै । निमज्जज्जनपावनायै। नाकारिकेतुनिलयायै। नानातीर्थाधिदेवतायै । नारीजनमनोल्लासायै नमः ॥ ६०

ओं नानारूपफलप्रदायै नमः । नारायणकृपारूपायै । नादब्रह्मस्वरूपिण्यै। पराभूतसमस्ताघायै। पशुपक्ष्यादिजीवनायै । पापतूलाग्निसहशायै । पापिष्ठजनपावनायै । फणीन्द्रकीर्ति-तकलायै । फलदानपरायणायै । बहुजन्मतपोयोगफलसंप्राप्त-दर्शनायै । बहुरूपद्विपार्श्वस्थस्वमातृकजलार्थिनां कलमक्षेत्रशा-ल्यन्नदाननिर्जितवित्तपायै । भगवत्कृतसन्तोषायै । भास्करक्षेत्र-गामिन्यै। भागीरथीसमाक्रान्ततुलामासजलाश्रयायै। मज्जदुर्जन-प्राग्जन्मदुर्जयांहःप्रमार्जिन्यै । माघवैशाखादिमासस्नानस्मरण-सौख्यदायै । यज्ञदानतपःकर्मकोटिपुण्यफलप्रदायै । यक्षगन्धर्व-

सिद्धाद्यैरभिष्टुतपदद्वयायै। रघुनाथपदद्वन्द्वविराजितशिलातलायै। रामनाथपुरक्षेत्रकामधेनुसमाश्रितायै नमः ॥ ८०

ओं लवोदकस्पर्शमात्रनिर्वाणपददायिन्यै नमः । लक्ष्मी-निवाससदनायै । ललनारत्नरूपिण्यै । लघूकृतस्वर्गभोगायै । लावण्यगुणसागरायै । वह्निपुष्करसान्निध्यायै । वन्दिताखिल-लोकपायै। व्याघ्रपादक्षेत्रपरायै। व्योमयानसमावृतायै। षड्काल-वन्द्यचरणायै । षट्कर्मनियतप्रियायै । षडास्यामातृसंसेव्यायै । षडूर्मिजितसोर्मिकायै । सकृत्स्मरणसंशुद्धतापत्रयजनाश्रितायै । सज्जनोद्धारसन्धानसमर्थस्वप्रवाहिन्यै । सरस्वत्यादिदेवीभिर-भिवन्दितनिर्झरायै । सह्यशैलसमुद्भूतायै। सह्यासहजनप्रियायै। संगमक्षेत्रसामीप्यायै। स्वदर्शार्थचतुष्टयायै नमः ॥ १००

ओं सौभरिक्षेत्रनिलयायै नमः । सौभाग्यफलदायिन्यै । संशयाविष्टदूरस्थायै। साङ्गोपाङ्गफलोदयायै। हरिब्रह्मेशलोकेशसिद्ध-बृन्दारवन्दितायै। क्षेत्रतीर्थादिसीमान्तायै। क्षपानाथसुशीतलायै । क्षमातलाखिलानन्दक्षेमश्रीविजयावहायै नमः ॥ १०८

## STOTRA SERIES

Compiled and Edited by Vaidya **S.V.RADHAKRISHNA SASTRI**
SRIRANGAM, TIRUCHY-620 006 Tele : 0431 - **2432564/2431843**

**Published by SRI MAHAPERIYAVAL TRUST, BANGALORE**

Available at :— **Bhagavannama Publications,** 2/3, Vinayakam Street, West Mambalam, Chennai - 600 033, Tele : **044-24893736**

Mrs.**P.Vijaya,** Door No : 11, Plot NO : 7, Ganapathi Street, St.Thomas Nagar, Madipakkam, Chennai - 600 091, Tele : **044-22422622**

1-2. **DEVINAMA STOTRA MANJARI** Part I & II Rs.**151/-** each

The Sahasranama Stotras and Namavalis of Sri KALI, TARA, SHODASI, BHUVANESWARI, CHINNAMASTA, TRIPURABHAIRAVI, DHUMAVATI, BAGALAMUKHI, MATANGI, KAMALA, DURGA, SARASWATHI, KAMAKSHI and BALA, AAMNAYA STOTRA, TRIPURASTAVARAJA.

3. **SRI NATARAJA NAMA MANJARI** Rs.**90/-**

On Presiding deity of Chidambaram, Sahasranama stotras, Namavalis and stotras

4. **SRI NATARAJA STAVA MANJARI** Rs.**51/-**

On Presiding deity of Chidambaram, Sahasranama stotras Namavalis and stotras.

5. **SRI BALA SAPARYA** Rs.**160/-**

The detailed upasanakramas, sahasranama stotras, namavalis and stotras on Sri Bala Tripurasundari.

6. **SRI SIVA NAMA MANJARI** Rs.**250/-**

10000, 1000, 300, 100 Namavalis on Sri Siva and his different kalas ie. Sri Dakshinamurthi, Arunachaleswara, Kalyanasundara, Bhairava, Tyagaraja, Mrityunjaya, Rudra, Sarabha, etc.,

